**८४ शश्छोऽटि ८ । ४ । ६३ ॥**

पदान्तात् झयः परस्य शस्य छो वा स्यादटि । तच्छिवः[1] । तच्शिवः । पदान्तात्किम् । विरप्शम्[2] । (छत्वममीति वाच्यम्) । तच्छ्लोकेन[3] ।

**८५ मोऽनुस्वारः ८ । ३ । २३ ॥**

मान्तस्य पदस्यानुस्वारो हलि । हरिं[4] वन्दे । पदस्य किम् । गम्यते[5] ।

**८६ नश्चापदान्तस्य झलि ८ । ३ । २४ ॥**

नस्य मस्य चापदान्तस्य झल्यनुस्वारः । यशांसि[6] । आक्रंस्यते । झलि किम् । मन्यते[7] ।

**८७ अनुस्वारस्य ययि परसवर्णः[8] ८ । ४ । ५८ ॥**

शान्तः[9] । अङ्कितः ।

**८८ वा पदान्तस्य[10] ८ । ४ । ५९ ॥**

त्वङ्करोषि[11] । त्वं करोषि ।

**८९ मो राजि समः क्वौ ८ । ३ । २५ ॥**

१–तद्+शिवः=तच्छिवः । २–नात्र पदान्तो झय् इति न शस्य छत्वम् । ३–तद्+श्लोकेन=तच्छ्लोकेन । एवम् एतद्+शान्तम्=एतच्छान्तम् । ४–हरिम्+वन्दे । ५–अत्र मस्य पदान्तत्वाभावान्नानुस्वारः । अन्यथा 'गंम्यते' इति अनिष्टं रूपं स्यात् । ६–यशान्+सि । आक्रम्+स्यते, एवं वासान्+सि=वासांसि । प्रणम्+स्यते=प्रणंस्यते, इत्यादि बोध्यम् । ७–मन्+यते । अत्र मस्य झल्परकत्वाभावादनेन नानुस्वारः । अपदान्तत्वाच्च न पूर्वेण । ८–(अपदान्तस्य) अनुस्वारस्य ययि परे (नित्यं) परसवर्णः स्यादित्यर्थः । ९–शाम्+त(:)=शान्तः । एवम्, अङ्कितः, अञ्चितः, कुण्ठितः, ग्रन्थः, दान्तः, गुम्फितः । १०–पदान्तस्यानुस्वारस्य ययि परे परसवर्णो वा स्यादिति सूत्रार्थः । पदान्ते विकल्पः, अपदान्ते नित्यमिति फलितम् । ११–त्वम्+करोषि, "मोऽनुस्वारः" त्वं+करोषि, पाक्षिकपरसवर्णः—त्वङ्करोषि । एवं-त्वं+पचसि, त्वम्पचसि त्वं पचसि वा, मृत्युं+जय मृत्युञ्जय=मृत्युंजय । दानं+यच्छति=दानँय्यच्छति—दानं यच्छति वा । सं+वत्सरः=सँव्वत्सरः=संवत्सरः । सुन्दरं+लिखति=सुन्दरँल्लिखति=सुन्दरं-लिखति । अहं+लिखामि=अहँल्लिखामि,=अहं लिखामि । इत्यादि ।

क्विबन्ते राजतौ परे समो मस्य मे एव स्यात् । सम्राट् ।

**९० हे मपरे वा ८ । ३ । २६ ॥**

मपरे हकारे मस्य मो वा । किम्ह्मलयति । किं ह्मलयति । (यवलपरे यवला वेति वक्तव्यम्) किं ह्यः, किय्ँह्यः । किं ह्वलयति । किव्ँह्वलयति । किं ह्लादयति । किल्ँह्लादयति ।

**९१ नपरे नः ८ । ३ । २७ ॥**

नपरे हकारे मस्य नो वा । किन्ह्नुते । किं ह्नुते ॥

**९२ ङः सि धुट् ८ । ३ । २९ ॥**

ङात्परस्य सस्य धुड् वा ।

**९३ आद्यन्तौ टकितौ १ । १ । ४६ ॥**

टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः । षट्त्सन्तः । षट्सन्तः ।

**९४ ङ्णोः कुक् टुक् शरि ८ । ३ । २८ ॥**

वा स्तः । कुक्-टुकोरसिद्धत्वान्न जश्त्वम् । (चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम् *) प्राङ् ख् षष्ठः । प्राङ्क्षष्ठः । प्राङ्षष्ठः । सुगण्ट्षष्ठः । सुगण्ठ्षष्ठः । सुगण्षष्ठः ।

**९५ नश्च ८ । ३ । ३० ॥**

नान्तात्परस्य सस्य धुड्वा । सन्त्सः ।

१-मकारस्य मकारविधानम् अनुस्वार-बाधनार्थम्, एवमग्रिमसूत्रेऽपि । २-सम्+राट । अज्झीनं परेण संयोज्यम् । ३-किम्+ह्मलयति, पक्षेऽनुस्वारः । ४-मकारस्येति सम्बन्धः, हे, इत्यस्यानुवृत्तिः, तथा चायमर्थः—य व ल परके हकारे परे मकारस्य क्रमशो यवला वा भवन्ति, पक्षेऽनुस्वारः । ५-किम्+ह्यः । किम्+ह्वलयति । किम्+ह्लादयति । सर्वत्र पक्षेऽनुस्वारः । ६- किम्+ह्नुते । ७-षड्+सन्तः, "खरि च" इति चर्त्वम्, षट्त्सन्तः । ८-प्राङ्+षष्ठः । कुक्पक्षे कषसंयोगे क्षः । सुगण्+षष्ठः । ९-सन्+सः=सन्त्सः, एवं विद्यार्थिन्+सहस्व=विद्यार्थिन्त्सहस्व, छात्रान्+स्वापय=छात्रान्त्स्वापय, इत्यादि ।

* पौष्करसादिराचार्यस्तस्य मते शरि परे चयः=(चय्प्रत्याहारघटितस्य कचटतपाम्), खयः=ख छ ठ थ फाः स्युरिति वक्तव्यमित्यर्थः ।

**९६ शि तुक् ८ । ३ । ३१ ॥**

नस्य पदान्तस्य शे तुक् वा । सञ्छम्भुः । सञ्च्छम्भुः । सञ्च्शम्भुः सञ्शम्भुः ।

'अछौ अचछा अचशा अशाविति चतुष्टयम् ।
रूपाणामिह तुक्-छत्व-चलोपानां विकल्पनात्' ॥

**९७ ङमो ह्रस्वादचि ङमुण्नित्यम् ८ । ३ । ३२ ॥**

ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो नित्यं ङमुट् । प्रत्यङ्ङात्मा । सुगण्णीशः । सन्नच्युतः ।

**९८ समः सुटि ८ । ३ । ५ ॥**

समो रुः सुटि ।

**९९ अत्रानुनासिकः पूर्वस्य तु वा ८ । ३ । २ ॥**

अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा ।

**१०० अनुनासिकात्परोऽनुस्वारः ८ । ३ । ४ ॥**

अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः ।

---

१-सन्+शम्भुः, इत्यत्र नस्य विकल्पेन तुगागमे सन्त्+शम्भुः, "शश्छोटि" इति शस्य वा छत्वे सन्तछम्भुः । "स्तोश्चुना श्चुः" इति श्चुत्वेन 'त,-स्य चः, 'न,-स्य' 'ञः' सञ्च्शम्भुः । "झरो झरि सवर्णे" इति वा चलोपे १ 'सञ्छम्भुः' । लोपाभावे २ सञ्च्छम्भुः । छत्वाभावे तुकि च सति ३ सञ्च्शम्भुः । तुगभावे ४ सञ्शम्भुः । एवं—बालाञ्छास्ति बालाञ्च्छास्ति, बालाञ्शास्ति । इत्यादि । २-ङमुट्, ङम् । (ङणनम्) । प्रत्याहारः, तदन्ते 'उट्, प्रत्येकान्वयी, "सञ्ज्ञायां कृतं टित्वं सञ्ज्ञिभिः सह सम्बध्यते" इति तेन ङुट्-णुट् नुट् इति त्रय आगमाः । ३-प्रत्यङ्+आत्मा । सुगण्+ईशः । सन्+अच्युतः । एवं तिङ्+अतिङः=तिङ्ङतिङः । तस्मिन्+ इति=तस्मिन्निति । पठन्+एति=पठन्नेति । इत्यादयो बोध्याः । अस्मिन् सूत्रे नित्यशब्दो "नित्यप्रहसितः" इत्यादाविव प्रायिकत्व-बोधकः तेन क्वचिन्न यथा-तिङ्+अन्तम्=तिङन्तम् । सन्+आदिः=सनादिः । तथा च सूत्रनिर्देशः "सुप्तिङन्तं पदम्" "सना द्यन्ता धातवः" इति । ४-रोः पूर्वस्मात् वर्णात् परः । अर्थात्-रोः (पञ्चमी) पूर्वस्य स्वरस्योपरि—'अनुस्वारः' ।

**१०१ खरवसानयोर्विसर्जनीयः ८। ३। १५॥**

खरि अवसाने च पदान्तस्य रेफस्य विसर्गः। (संपुंकानां सो[1] वक्तव्यः) संस्कर्ता[2]।

**१०२ पुमः खय्यम्परे ८। ३। ६॥**

अम्परे खयि पुमो रुः स्यात्। पुँस्कोकिलः। पुंस्कोकिलः[3]।

**१०३ नश्छव्यप्रशान् ८। ३। ७॥**

अम्परे छवि नान्तस्य पदस्य रुः स्यात्।

**१०४ विसर्जनीयस्य सः ८। ३। ३४॥**

खरि। चक्रिँस्त्रायस्व[4]। चक्रिंस्त्रायस्व। अप्रशान् किम्। प्रशान्तनोति[5] पदस्य किम्। हन्ति[6]। अम्परे किम्। सन्त्सरुः=खड्गमुष्टिः।

**१०५ नॄन्पे ८। ३। १०॥**

नॄनित्यस्य रुर्वा पे[7]।

**१०६ कुप्वोः ≍क≍पौ च ८। ३। ३७॥**

कवर्गे पवर्गे च परे विसर्गस्य ≍क≍पौ* स्तः। चाद्विसर्गः। नॄँ≍पाहि[8]। नॄँः पाहि। नॄं≍पाहि। नॄंः पाहि। नॄन्पाहि।

**१०७ सोऽपदादौ ८। ३। ३८॥**

विसर्गस्य सः स्यादपदाद्योः कुप्वोः। (पाश्—कल्प—क—काम्येष्विति

---

१—सम्—पुम्—कान्, इत्येतेषां विसर्गस्य सकारः स्यादित्यर्थः। 'विसर्जनीयस्य सः, इत्यस्यापवादे वा शरि, इति पाक्षिके विसर्गे प्राप्ते नित्यसत्वार्थमिदं वचनम्। २—(सम्+कर्ता "सम्परिभ्याम्..." इति सुट्) सम्+स्कर्ता संस्कर्ता—सँस्कर्ता, एवं संस्कारः, संस्कृतम्, संस्करोति। ३—पुम्+कोकिलः=पुँस्कोकिलः। एवं पुँस्पुत्रः पुंस्पुत्रः। पुंश्चरित्रम्, पुंस्तिलकम्। पुंष्टीका। ४—चक्रिन्+त्रायस्व। अनुनासिकानुस्वारौ पाक्षिकौ। चक्रिंस्त्रायस्व—चक्रिँस्त्रायस्व। एवं कस्मिंश्चित्—कस्मिँश्चित्। भक्तांस्तारय—भक्ताँस्तारय। विद्वांश्छात्रः, विद्वाँश्छात्रः। वेदांष्टीकस्व, वेदाँष्टीकस्व। ५—अन्यथा 'प्रशाँस्तनोति,, इति स्यात्। ६—अन्यथा 'हंस्ति, इति स्यात्। ७—पकारे। ८—नॄन्+पाहि। एवम्—'नॄन्+पालयस्व,' इत्यादावपि।

* जिह्वामूलीयोपध्मानीयौ—इत्यर्थः।

वाच्यम्) पयस्पाशम् । पयस्कल्पम् । यशस्काम्यति । (अनव्ययस्येति वाच्यम्) प्रातःकल्पम् । (काम्ये रोरेवेति वाच्यम् । ) नेह । गीःकाम्यति ।

**१०८ इणः षः ८ । ३ । ३९ ॥**

इणः परस्य विसर्गस्य षः स्यात् पूर्वविषये । सर्पिष्पाशम् । सर्पिष्कल्पम् । सर्पिष्कम् । सर्पिष्काम्यति ।

**१०९ कस्कादिषु च ८ । ३ । ४ ॥**

एष्विण उत्तरस्य विसर्गस्य षः स्याद्[1]न्यस्य तु सः । कस्कः । कौतस्कुतः । सर्पिष्कुण्डिका । धनुष्कपालमित्यादि । आकृतिगणोऽयम् ।

**११० तस्य परमाम्रेडितम् ८ । १ । २ ॥**

द्विरुक्तस्य परमाम्रेडितं स्यात् ।

**१११ कानाम्रेडिते ८ । ३ । १२ ॥**

कान्नकारस्य रुः स्यादाम्रेडिते परे । काँस्कान्[3] । कांस्कान् ।

**११२ छे च ६ । १ । ७३ ॥**

ह्रस्वस्य छे तुक्[4] । स्वच्छाया[5] । शिवच्छाया ।

**११३ *आङ्माङोश्च ६ । १ । ७४ ॥**

तुक् छे । आच्छादयति । माच्छिदत् ।

**११४ दीर्घात् ६ । १ । ७५ ॥**

तुक् छे । म्लेच्छति ।

**११५ पदान्ताद्वा ६ । १ । ७६ ॥**

---

१-विसर्गस्य तु इण्परत्वाभावान्न षत्वम् । किन्तु सत्वमित्यर्थः । २-परं रूपमित्यर्थः । ३-कान्+कान् । अनुनासिकानुस्वारौ पाक्षिकौ "सं पुं काना" मिति सः । ४-"ह्रस्वस्य पिति कृति तुक्" इत्यतः 'ह्रस्वस्य, 'तुक्, इति चानुवर्तते । ५-शिव+छाया । अत्र तुकि शिवत्=छाया, इति स्थितौ श्चुत्वस्याऽसिद्धत्वाज्जश्त्वेन दः, ततश्चर्त्वस्याऽसिद्धत्वात्पूर्वं श्चुत्वेन चः "शिवच्छाया" नचात्र "चोः कुः" इति कुत्वं स्यादिति वाच्यम्-श्चुत्वस्याऽसिद्धत्वात् । एवं वृक्ष=छाया=वृक्षच्छाया । स्व+छात्रः=स्वच्छात्रः ।

* 'पदान्ताद्वा, इति विकल्पापवादोऽयम् ।

दीर्घात्पदान्ताच्छे तुग्वा । लक्ष्मीच्छाया[1] । लक्ष्मीछाया ।

इति हल्सन्धिः ॥

## अथ विसर्गसन्धिः

**११६ विसर्जनीयस्य सः ८ । ३ । ३४ ॥**

खरि । विष्णुस्त्राता[2] ।

**११७ शर्परे विसर्जनीयः ८ । ३ । ३४ ॥**

शर्परे खरि विसर्गस्य विसर्गो न त्वन्यत् (सकारादि) । कः त्सरुः । घनाघनः क्षोभणः ।

**११८ वा शरि ८ । ३ । ३६ ॥**

शरि विसर्गस्य विसर्गो वा । हरिः[3] शेते । हरिश्शेते । (खर्परे शरि वा विसर्गस्य लोपो वक्तव्यः) । हरिस्फुरति । हरिः स्फुरति । इति विसर्गसन्धिः ॥

## अथ स्वादिसन्धिः ।

**११९ स-सजुषो रुः ८ । २ । ६६ ॥**

पदान्तस्य सस्य सजुष्शब्दस्य च रुः स्यात् ।

**१२० अतो रोरप्लुतादप्लुते ६ । १ । ११३ ॥**

अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति । शिवोऽर्च्यः[4] । अतः किम् ।

---

१–लक्ष्मी+छाया, एवं नदी+छन्ना,=नदीच्छन्ना, नदीछन्ना ।

इति हल्सन्धिः ।

२–विष्णुः+त्राता, एवं छात्रः+तिष्ठति=छात्रस्तिष्ठति, गौः+चरति=गौश्चरति, कृष्णः+छिनत्ति=कृष्णश्छिनत्ति, इत्यादि । ३–हरिः+शेते । पक्षे सत्वे, "स्तोश्चुना......" इति शकारे हरिश्शेते, एवं छात्राः+सन्ति=छात्राःसन्ति, छात्रास्सन्ति । रसाः+षट्=रसाःषट्, रसाष्षट्, इत्यादयः । ४–शिवस्+अर्च्यः । अत्र रुत्वे कृते उत्वं गुणः पररूपं च । उत्वं प्रति रुत्वस्याऽसिद्धत्वं न भवति रुत्वमनूद्य उत्वविधानसामर्थ्यात्, शिवोऽर्च्यः, एवं शुद्धोऽहम् । बुद्धोऽस्मि । छात्रोऽयम्, इत्यादि ।

देवा अत्र। अतीति किम्। श्व आगन्ता। अप्लुतात्किम्¹। एहि सुश्रोत ३ अत्र स्नाहि। प्लुतस्यासिद्धत्वादतः परोऽयम्। अप्लुतादिति विशेषणे तु तत्सामर्थ्यान्नासिद्धत्वम्। तपरकरणस्य तु न सामर्थ्यम्। दीर्घनिवृत्त्या चरितार्थत्वात्। अप्लुत इति किम्। तिष्ठतु पय अ३ग्निदत्त।

**१२१ हशि च ६। १। ११४॥**

तथा²। शिवो³ वन्द्यः।

**१२२ भो-भगो अघो-अ-पूर्वस्य योऽशि ८। ३। १७॥**

एतत्पूर्वस्य रोर्यादेशोऽशि। देवा⁴ इह। देवायिह। भोस् भगोस् अघोस् इति सान्ता निपाताः। तेषां रुत्वे यत्वे च कृते।

**१२३ व्योर्लघुप्रयत्नतरः⁵ शाकटायनस्य ८। ३। १८॥**

अशि पदान्ते।

**१२४ ओतो गार्ग्यस्य ८। ३। २०॥**

---

१-**अप्लुतात्किम्?** अत इति तपरकरणादेव प्लुतस्यापि निवृत्तिसिद्धेः—'अप्लुतादिति' व्यर्थमिति प्रष्टुराशयः। तत्रोत्तरम्—'**एहि सुश्रोत३ अत्र स्नाहि**'। अत इति तपरकरणस्य दीर्घनिवृत्त्या चरितार्थत्वेन प्लुत-निवृत्तौ सामर्थ्याभावात् प्लुतेऽपि रुत्वं मा भूदिति—अप्लुतादिति ग्रहण-मिति-उत्तरयितुराकूतम्। नचात्र अतः परत्वाभावात्प्रकृतसूत्रप्राप्तिरेव नास्तीति वाच्यम्। प्लुतस्य त्रैपादिकत्वेनाऽसिद्धत्वात् (भवति प्रकृतेऽतः परत्वम्)। अप्लुतादितिविशेषणे तु तत्सामर्थ्यान्नासिद्धत्वम्। २-अप्लुतादतः परस्य रोः उः स्यात्, हशि। ३-शिवस्+वन्द्यः=शिवो वन्द्यः, एवं रामो वदति, छात्रो गच्छति, कृष्णो जयति, काको डीयते, कर्णो ददाति, व्यासो ब्रूते-इत्यादयः। ४-देवास्+इह, रोर्यादेशे "लोपः शाकल्यस्य" इति विकल्पेन यलोपः, देवा इह देवायिह, एवं छात्रा आगच्छन्ति, वीरा उत्सहन्ते, देवा एते। धार्मिका वधन्ते, भक्ता भजन्ति, हया हेषन्ति। याज्ञिका यान्ति। बाला रमन्ते। विप्रा दयन्ते। हलि सर्वत्र, हलि सर्वेषामिति नित्यं 'य, लोपः'। ५-यस्योच्चारणे जिह्वाग्रोपाग्रमूलानां शैथिल्यं जायते स लघूच्चा-रणः। लघुः प्रयत्नो यस्योच्चारणे स लघुप्रयत्नः। अतिशयितो लघुप्रयत्नो लघुप्रयत्नतर इति।

ओकारात्परस्य पदान्तस्यालघुप्रयत्नस्य यस्य नित्यं लोपः। भोअच्युत। लघुप्रयत्नपक्षे। भोयच्युत। पदान्तस्य किम्। तोयम्[1]।

**१२५ हलि सर्वेषाम् ८। ३। २२॥**

भो-भगो-अघो-अ-पूर्वस्य यस्य नित्यं लोपः स्याद्धलि। भो देवाः[2]। भगो नमस्ते। अघो यहि। देवा यान्ति।

**१२६ रोऽसुपि ८। २। ६९॥**

अह्नो रेफादेशो न तु सुपि। अहरहः[3]। अहर्गणः। असुपि किम्। अहोभ्याम्। अत्र "अहन्" इति रुत्वम्। (रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्)। अहो रूपम्। गतमहो रात्रिरेषा। एकदेशविकृतन्यायेनाहोरात्रः[4]। अहोरथन्तरम्। (अहरादीनां पत्यादिषु वा रेफः)। विसर्गापवादः। अहर्पतिः[5]। गीर्पतिः। धूर्पतिः। पक्षे विसर्गोपध्मानीयौ।

**१२७ रो रि ८। ३। १४॥**

रेफस्य रेफे परे लोपः।

**१२८ ढ्रलोपे[6] पूर्वस्य दीर्घोऽणः ६। ३। १११॥**

---

१—अत्र यकारस्य पदान्तत्वाभावाद् "ओतो गार्ग्यस्य" इति यलोपो न भवति। अत्र पदान्तो मकारो न तु यकारः। २—भोस्+देवाः। भगोस्+नमस्ते। अघोस्+याहि। एषु नित्यं यलोपः। ३—अहन्+अहः। अहन्+गणः, अत्र क्रमेण—"अतोरोर..." "हशि च" इति सूत्राभ्यामुत्वं न 'रु' इत्यस्यैव—उत्वविधानात् अत एव प्रातरत्र, भ्रातर्देहि, अहर्भाति, इत्यादि सिद्ध्यति। ४—नहि छिन्नपुच्छः श्वा—अश्वो गर्दभो वा भवति। प्रकृते च रात्रशब्दस्याऽपि रात्रिरूपत्वाद् रुत्वमिति भावः। अहश्च रात्रिश्चेति विग्रहः। अहश्च रथन्तरश्चेति द्वन्द्वः। रथन्तरम्=सामविशेषः। ५—अह्नां पतिरिति विग्रहः। गिरां पतिः, धुरां पतिः, इति विग्रहः। उभयत्रापि "र्वोरुपधाया" इति दीर्घः। ६—ढरेफौ लोपयतीति तथा, तस्मिन् वर्णेऽर्थाद्—ढकारे रेफात्मके च वर्णे परे पूर्वस्याऽणो दीर्घः स्यादित्यर्थः। अत्र सूत्रेऽण् ग्रहणं पूर्वेण, तथा चोक्तम्—

"परणैवेण् ग्रहाः सर्वे पूर्वेणैवाण्ग्रहा मताः।
ऋतेऽणुदित्सवर्णस्येत्येतदेकं परेण तु"॥ इति।

ढरेफयोर्लोपनिमित्तयोः । पुना रमते । हरी रम्यः । शम्भू राजते ।

**१२९ ढो ढे लोपः ८ । ३ । १३ ॥**

लीढः । अणः किम् । तृढः । वृढः । मनस्+रथ इत्यत्र रुत्वे कृते हशि चेत्युत्वे रोरीति लोपे च प्राप्ते ।

**१३० विप्रतिषेधे परं कार्यम् १ । ४ । २ ॥**

तुल्यबलविरोधे परं कार्यं स्यात् । इति लोपे प्राप्ते । पूर्वत्रासिद्धमिति रोरीत्यस्यासिद्धत्वादुत्वमेव । मनोरथः ।

**१३१ एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ६ । १ । १३२ ॥**

अककारयोरेतत्तदोर्यः सुस्तस्य लोपो हलि नतु नञ्समासे । एष विष्णुः । स शंभुः । अकोः किम् । एषको रुद्रः । अनञ्समासे किम् । असः शिवः । हलि किम् । एषोऽत्र ।

**१३२ सोऽचि लोपे चेत्पादपूरणम् ६ । १ ११४ ॥**

स इत्यस्य सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्येत । सेमामविड्ढि

---

१–पुनर्+रमते । हरिस् (र्)+रम्यः । शम्भुस (र्)+राजते । एवंनिर्+रसः=नीरसः, लिढ्+ढे=लीढे, अजर्घर्+र्=अजर्घाः । प्रातर्+रमते=प्रातारमते । २–लिह्+तस्, इत्यत्र "होढः" इति हकारस्य ढकारे "झषस्तथोर्धोऽधः" इति तकारस्य धकारे "ष्टुना ष्टुः" इति ष्टुत्वे—'लिढ्+ढस्' इति स्थितेऽनेन लोपे सति पूर्वेण दीर्घः । ३–तृढ्+ढ (:) । वृढ्+ढ (:) "ढो ढे लोपः" इति पूर्वढकारलोपः । अणोऽभावान्न दीर्घप्रवृत्तिः । ४–"अन्यत्रान्यत्र लब्धावकाशयोरेकत्र समावेशस्तुल्यबलविरोधः" यथा चात्रैव "रोरीति" सूत्रे हरीरम्य इत्यादौ लब्धावकाशं "हशि च" इति च 'शिवो वन्द्यः, इत्यत्र लब्धावकाशं, तयोर्द्वयोश्च "मनोरथः" इत्यत्र समावेशः । अत्र सूत्रे अपरं कार्यमित्यपि च्छेदः । अत एव तत्तद्दिष्टस्थलेषु पूर्वविप्रतिषेधोऽपि भवति । ५–एषस्=विष्णुः । सस्=शम्भुः । एवम् एष शोभते, एष ददाति, स चलति, स च । ६–एषकस्=रुद्रः । अत्र अकच् प्रत्ययः 'हशि च" इति रोरुत्वे सिद्धिः । ७–असस्=शिवः । ८–एसस्=अत्र=एषोऽत्र, एवम्=एषोऽहम्, सोऽहम् । ९–'लोपे सत्येव, इत्यवधारणेन–इह न "सोऽहमाजन्मशुद्धानाम्" लोपे सत्यसत्यपि च छन्दःपूर्तेः १०–सस्+इमामविड्ढि...
." ।

प्रभृतिम् । सैषं दाशरथी रामः ।

॥ इति स्वादिसन्धिः ॥ ४ ॥

# अथाजन्ताः पुंलिङ्गाः

**१३३ अर्थवद्धातुरप्रत्ययः प्रातिपदिकम् १ । २ । ४५ ॥**

धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वा अर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात् ।

**१३४ कृत्तद्धितसमासाश्च १ । २ । ४६ ॥**

१–सस्+एष दाशरथी रामः । अत्र सकारलोपे वृद्धिः, अत्रायं समग्रः श्लोकः—

सैष दाशरथी रामः, सैष राजा युधिष्ठिरः ।
सैष कर्णो महादानी, सैष भीमो महाबलः ॥
इति श्रीप्रभाकरी-विवृतौ मध्यसिद्धान्तकौमुदीटीकायां
पञ्चसन्धिप्रकरणं सम्पूर्णम् ॥

२–अर्थवत्त्वं च वृत्तिमत्त्वम् । तेन धनं वनमित्यादौ प्रतिवर्णं सञ्ज्ञा न । सत्यां च तस्यां स्वादयः स्युः, "सुपो धातु......." इति लोपेऽपि पदसंज्ञायां जश्त्व-नलोपादयो दुर्वाराः । अधातुरिति किम्—? 'अहन्' इत्यत्र "सुपो धातु" इति नलोपो माभूत् । अप्रत्यय इति किम् ?— 'हरिषु' 'करोषि' इत्यत्र सुप्सिपोर्माभूत् । अप्रत्ययान्त॰ इति किम् ?— तत्रैव विभक्तिविशिष्टयोर्माभूत् । एतत्सूत्रं सुभाषितस्थैतस्योत्तरम्—

तत्र प्रश्नः—

(१) विद्वान् कीदृग् वचो ब्रूते, (२) को रोगी (३) कश्च नास्तिकः ॥
(४) कीदृक् चन्द्रं न पश्यन्ति, सूत्रं तत्पाणिनेर्वद ॥ १ ॥

अत्रोत्तरम्—क्रमशः–(१) अर्थवत्=सार्थकम् । (२) अधातुः=निर्वीर्यः । (३) अप्रत्ययः=विश्वासहीनः । (४) प्रातिपदिकम्,=प्रतिपत्तिथौ भवम् इति ।

३–कृतः तद्धिताश्च प्रत्ययास्तेन तदन्ता ग्राह्याः । प्रत्ययान्तत्वेनाऽप्राप्तौ सूत्रमिदम् । समासग्रहणं तु नियमार्थम्, स चायं नियमः—

"यत्रार्थवति संघाते पूर्वो भागस्तथोत्तरः ।
स्वातन्त्र्येण प्रयोगार्हः समासस्यैव तस्य चेत् ॥" इति ।

कृत्तद्धितान्तौ समासाश्च तथा स्युः ।

**१३५ स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्यांभ्यसूङसिभ्यांभ्यसूङसोसांङ्योस्सुप् ४ । १ । २ ॥**

सु औ जस्-प्रथमा । अम् औट् शस्-द्वितीया । टा भ्यां भिस्-तृतीया ङे भ्यां भ्यस्-चतुर्थी । ङसि भ्यां भ्यस्-पञ्चमी । ङस् ओस् आम्-षष्ठी । ङि ओस् सुप्-सप्तमी ।

**१३६ ङ्याप्प्रातिपदिकात् ४ । १ । १ ॥**

ङ्यन्तादावन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः ।[1]

**१३७ सुपः १ । ४ । १०३ ॥**

सुपस्त्रीणि त्रीणि वचनान्येकश एकवचन-द्विवचन-बहुवचनसंज्ञानि स्युः ।

**१३८ द्व्येकयोर्द्विवचनैकवचने १ । ४ । २२ ॥**

द्वित्वैकत्वयोरेते स्तः ।[2]

**१३९ विरामोऽवसानम् १ । ४ । ११० ॥**

वर्णानामभावोऽवसानसंज्ञः स्यात् । रुत्व-विसर्गौ । रामः ।[3] (अयोगवाहानामस्योपरि शर्षु * चेति वाच्यम्) । यमानुस्वारविसर्गजिह्वामूलीयोपध्मानीया अयोगवाहाः ।[4] तेनेह विसर्गस्य यत्वादनचि चेति द्वित्वपक्षे राम्ः ।

**१४० सरूपाणामेकशेष एकविभक्तौ १ । २ । ६४ ॥**

एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते ।

**१४१ प्रथमयोः पूर्वसवर्णः ६ । १ । १०२ ॥**

अकः प्रथमाद्वितीययोरचि परे पूर्वसवर्णदीर्घ एकादेशः स्यात् । इति प्राप्ते ।

**१४२ नादिचि ६ । १ । १०४ ॥**

---

१–सूत्रत्रयस्य समुदितोऽयमर्थः । २–एकत्वविवक्षायाम् एकवचनम्, द्वित्वविवक्षायां द्विवचनम् । ३–"ससजुषो रुः" इति रुत्वम् । "खरवसानयोर्वि ...." इति विसर्गः । रमन्ते योगिनो यस्मिन्निति रामः=परमात्मा (तदवतारो दाशरथिः) । ४–नास्ति योगः=सम्बन्धो (वर्णसमाम्नाये) येषां तेऽयोगाः, वहन्तीति वाहाः, अयोगाश्च ते वाहाश्चेत्ययोगवाहाः । यद्वा–ते–अयुक्ताः= अनुपदिष्टाः, प्रहणकशास्त्रेण चाऽप्रत्यायिताः प्रयोगं निर्वाहयन्तीत्यन्वर्थिकेयं सञ्ज्ञा । * 'पाठः' इति शेषः ।

आदिचि न पूर्वसवर्णदीर्घः । वृद्धिरेचि । रामौ[1] ।

**१४३ बहुषु बहुवचनम्[2] १ । ४ । २१ ॥**

**१४४ चुटू १ । ३ । ७ ॥**

प्रत्ययाद्यौ चुटू[3] इतौ स्तः ।

**१४५ विभक्तिश्च १ । ४ । १०४ ॥**

सुप्तिङौ विभक्तिसंज्ञौ स्तः ।

**१४६ न विभक्तौ तुस्माः १ । ३ । ४ ॥**

विभक्तिस्थास्तु-र्स-मा[4] नेतः । इति सस्य नेत्वम् । रामाः ।

**१४७ एकवचनं सम्बुद्धिः २ । ३ । ४९ ॥**

संबोधने प्रथमाया एकवचनं संबुद्धिसंज्ञं स्यात् ।

**१४८ यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् १ । ४ । १३ ॥**

यः प्रत्ययो यस्मात्क्रियते तदादिशब्दस्वरूपं तस्मिन्[5]नङ्गं स्यात् ।

**१४९ एङ्ह्रस्वात्संबुद्धेः ६ । १ । ६९ ॥**

एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते संबुद्धेश्चेत्[6] । हे राम ! । हे रामौ ! । हे रामाः ! ।

**१५० अमि पूर्वः ६ । १ । १०७ ॥**

अकोऽम्यचि पूर्वरूपमेकादेशः स्यात् । रामम्[7] । रामौ ।

**१५१ लशक्वतद्धिते १ । ३ । ८ ॥**

तद्धितवर्जप्रत्ययाद्या ल-श-कवर्गा इतः स्युः ।

**१५२ तस्माच्छसो नः पुंसि ६ । १ । १०३ ॥**

पूर्वसवर्णदीर्घात्परो[8] यः शसः सस्तस्य नः स्यात्पुंसि ।

१--राम+औ, "वृद्धिरेचि" इति वृद्धिः । २--बहुत्वविवक्षायां बहुवचनं स्यादित्यर्थः । ३--चुः=चवर्गः ( च छ ज झ ञाः ) टवर्गश्च टुः=(ट ठ ड ढ णाः) इत्यर्थः । ४--तवर्ग--सकार--मकारा इत्यर्थः ५--प्रत्यये इत्यर्थः । ६--सम्बुध्याक्षिप्तस्याङ्गस्य 'एङ्ह्रस्वा'भ्यां सम्बन्धः । ७--राम+अम् । ८--अत्र तच्छब्देन सन्निहितस्य=समीपस्थस्य पूर्वसवर्णदीर्घस्यैव परामर्शः । नतु दीर्घमात्रस्य परामर्शः । अन्यथा=दीर्घमात्रपरामर्शे 'एतान् गाः पश्य' इत्यत्रापि नत्वप्रसङ्गापत्तिः "औतोऽम्शसो" रिति कृताऽत्वात् ।

**१५३ अट्कुप्वाङ्नुम्व्यवायेऽपि ८ । ४ । २ ॥**

अट् कवर्गः पवर्ग आङ् नुम् एतैर्व्यस्तैर्यथासंभवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः स्यात् समानपदे[1] । इति प्राप्ते ।

**१५४ पदान्तस्य ८ । ४ । ३७ ॥**

नस्य णो न । रामान्[2] ।

**१५५ टा-ङसि-ङसामिनात्स्याः ७ । १ । १२ ॥**

अदन्ताट्टादीनामिनादयः[3] स्युः । णत्वम् । रामेण[4] ।

**१५६ सुपि च ७ । ३ । १०२ ॥**

यञादौ सुप्यतोऽङ्गस्य[5] दीर्घः । रामाभ्याम् ।

**१५७ अतो भिस् ऐस् ७ । १ । ६ ॥**[6]

"अनेकाल् शित्सर्वस्य" । रामैः ।

**१५८ ङेर्यः ७ । १ । १३ ॥**

अतोऽङ्गात्परस्य ङेर्यादेशः[7] स्यात् ।

**१५९ स्थानिवदादेशोऽनल्विधौ[8] १ । १ । ५६ ॥**

आदेशः स्थानिवत्स्यान्नतु स्थान्यलाश्रयविधौ । इति स्थानिवत्त्वात्सुपि

१–समानपदम्=अखण्डपदम्, तेन "रघुनाथः" इत्यत्र न णत्वम्, एवं रमानाथ-रामनामादयः । २–राम+(श) अस् । पूर्वसवर्णदीर्घे सस्य नः । ३–'टा' इत्यस्य 'इन' । 'ङसि' इत्यस्य 'आत्' 'ङस्' इत्यस्य 'स्य' इति । ४–राम+(टा) इनः । गुणो णत्वं च । ५–अदन्तस्याङ्गस्येत्यर्थः । ६–अदन्तादङ्गाद् 'भिस्' इत्यस्य 'ऐस्' स्यादिति सूत्रार्थः, इति सर्वस्य भिसः 'ऐस्' वृद्धि–विसर्गौ–रामैः । ७–'ङे' इति चतुर्थ्येकवचनस्य ग्रहणम् । नतु–सप्तम्येकवचनस्य 'ङि' इत्यस्य, व्याख्यानात् । ८–"अनल्विधौ" इति न–अल्विधिः=अनल्विधिः, तस्मिन् अनल्विधौ । अल्विधिश्च=अलाश्रितो विधिः, एकवर्णाश्रितो विधिरित्यर्थः । अल् चेह स्थान्यवयव एव गृह्यते तदाह–स्थान्यलाश्रयविधाविति यथा—"क इष्टः" इत्यत्र यज्धातोः क्तप्रत्यये सम्प्रसारणे पूर्वरूपे च 'इष्ट' इति रूपम् । नात्र स्थानिवद्भावाद् यकारं मत्वा "हशि च" इत्युत्वं स्थान्यलाश्रयविधित्वात् ।

चेति दीर्घः । रामाय[1] । रामाभ्याम् ।

**१६० बहुवचने झल्येत्[2] ७ । ३ । १०३ ॥**

झलादौ बहुवचने सुप्यतो[3]ऽङ्गस्यैकारः । रामेभ्यः ।

**१६१ वावसाने ८ । ४ । ५६ ॥**

अवसाने झलां चरो वा । रामात्, रामाद् । रामाभ्याम् । रामेभ्यः । रामस्य ।

**१६२ ओसि च ७ । ३ । १०४ ॥**

अतोऽङ्गस्यैकारः । रामयोः[4] ।

**१६३ ह्रस्वनद्यापो नुट् ७ । १ । ५४ ॥**

ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः ।

**१६४ नामि ६ । ४ । ३ ॥**

अजन्ताङ्गस्य दीर्घः । रामाणाम् । रामे[5] । रामयोः । सुपि एत्वे कृते ।

**१६५ आदेश-प्रत्यययोः ८ । ३ । ५९ ॥**

इण्कुभ्यां परस्यापदान्तस्य—आदेशः प्रत्ययावयवश्च यः सः स्तस्य मूर्धन्यादेशः । ईषद्विवृतस्य सस्य तादृश एव षः । रामेषु । एवं कृष्ण-मुकुन्दादयः[6] ।

**१६६ सर्वादीनि सर्वनामानि १ । १ । २७ ॥**

---

१–राम+(ङे) य । अत्र दीर्घे कर्तव्ये सन्निपातपरिभाषा तु न प्रवर्तते "कष्टाय क्रमणे" इति निर्देशात् । २–"सुपि च" इति दीर्घस्यापवादोऽयम् । ३–सुपि किम् ? पचध्वम् । अन्यथा 'पचेध्वम्' इति स्यात् । नात्र सुप् किन्तु ( ध्वम् ) तिङ् । अदन्तस्याङ्गस्य एकारादेशः स्याद् ओसि परे इत्यर्थः सूत्रस्य । ४–राम+ओस्, एत्वे "एचोऽयवायावः" इति 'अय्'—आदेशः । ५–राम+(ङि) इ, गुणः । ६–अकारान्ताः सर्वेऽपि पुंल्लिङ्गाः शब्दाः, इत्यर्थः ।

**रामशब्दस्य सप्तविभक्तिषु प्रयोगाः—**

**रामो** राजमणिः सदा विजयते **रामं** रमेशं भजे
**रामेणा**ऽभिहता निशाचरचमू **रामाय** तस्मै नमः ।
**रामान्ना**स्ति परायणं परतरं **रामस्य** दासोऽस्म्यहम्
**रामे** चित्तलयः सदा भवतु मे **हे राम!** मां पालय ॥ १ ॥

७–सर्वादिगणपठितानि सर्वनामसञ्ज्ञानि भवन्तीत्यर्थः । सर्वस्य नाम 'सर्वनाम' इत्यन्वर्थेयं सञ्ज्ञा, 'सर्वनाम' इति महासञ्ज्ञाकरणसामर्थ्यात्,

सर्वादीनि शब्दस्वरूपाणि सर्वनामसंज्ञानि स्युः । सर्व । विश्व । उभ । उभय । डतर । डतम । अन्य । अन्यतर । इतर । त्वत् । त्व । नेम । सम । सिम । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः । त्यद् । तद् । यद् । एतद् । इदम् । अदस् । एक । द्वि । युष्मद् । अस्मद् । भवतु । किम् । एते पञ्चत्रिंशच्छब्दाः सर्वादयः ।

**१६७ जसः शी ७ । १ । १७ ॥**

अदन्तात्सर्वनाम्नो जसः शी स्यात् । अनेकाल्त्वात्सर्वादेशः । सर्वे ।

**१६८ सर्वनाम्नः स्मै ७ । १ । १४ ॥**

अतः सर्वनाम्नो ङेः स्मै ।

**१६९ ङसिङ्योः स्मात्स्मिनौ ७ । १ । १५ ॥**

अतः सर्वनाम्न एतयोरेतौ स्तः । सर्वस्मात् ।

**१७० आमि सर्वनाम्नः सुट् ७ । १ । ५२ ॥**

अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः स्यात् । एत्व-षत्वे । सर्वेषाम् । सर्वस्मिन् । शेषं रामवत् । एवं विश्वादयोऽप्यदन्ताः । उभशब्दो नित्यं द्विवचनान्तः । उभौ २ । उभाभ्याम् ३ । उभयोः २ । तस्येह पाठो-

तेन सर्वो नाम कश्चित् तस्मै 'सर्वाय' (नतु सर्वस्मै) । सर्वमतिक्रान्तोऽतिसर्वस्तस्मै 'अतिसर्वाय' इति । "संज्ञोपसर्जनीभूतास्तु न सर्वादयः" इति फलितम् ।

१-इमानि त्रीणि गणसूत्राणि । २-नतु शित्त्वात्सर्वादेशःसर्वादेशात्प्राक् शकारस्य-इत्संज्ञाया एवाभावात्, सर्वादेशे जाते-एव स्थानिवद् भावेन प्रत्ययत्वात् "लशक्वतद्धिते" इति—इत्संज्ञा । अत एव "नानुबन्धकृतमनेकाल्त्व" मित्यपि न प्रवर्तते । ३-एत्वम् "बहुवचने झल्येत्" इत्यनेन । षत्वम् "आदेशप्रत्यययोः" इत्यनेन ।

४-प्र० सर्वः सर्वौ, सर्वे
द्वि० सर्वम्, सर्वौ, सर्वान्,
तृ० सर्वेण, सर्वाभ्याम्, सर्वैः,
च० सर्वस्मै, सर्वाभ्याम्, सर्वेभ्य.
पं० सर्वस्मात्, सर्वाभ्याम्, सर्वेभ्यः,
ष० सर्वस्य, सर्वयोः, सर्वेषाम्,
स० सर्वस्मिन् " सर्वेषु,
सं० हे सर्व !, प्रथमावत् शेषम्

ऽकजर्थः । उभयशब्दस्य द्विवचनं नास्ति । डतरडतमौ प्रत्ययौ । प्रत्ययग्रहणे तदन्तग्रहणमिति तदन्ता ग्राह्याः । नेम इत्यर्धे । समः सर्वपर्यायः । तुल्य-पर्यायस्तु न । समानामिति ज्ञापकात् ।

**१७१ पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् १ । १ । ३४ ॥**

एषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणपाठात्सर्वत्र या प्राप्ता सा जसि वा स्यात् । पूर्वे, पूर्वाः । स्वाभिधेयापेक्षावधिनियमो व्यवस्था । व्यवस्थायां किम् । दक्षिणा गाथकाः, कुशला इत्यर्थः । असंज्ञायां किम् । उत्तराः कुरवः ।

**१७२ स्वमज्ञाति-धनाख्यायाम् १ । १ । ३५ ॥**

ज्ञातिधनान्यवाचिनः स्वशब्दस्य प्राप्ता संज्ञा जसि वा । स्वे । स्वाः । आत्मीया आत्मान इति वा । ज्ञातिधनवाचिनस्तु स्वाः, ज्ञातयोऽर्था वा ।

**१७३ अन्तरं बहिर्योगोपसंव्यानयोः १ । १ । ३६ ॥**

बाह्ये परिधानीये चार्थेऽन्तर-शब्दस्य प्राप्ता संज्ञा जसि वा । अन्तरे

---

१-अकच्-प्रत्ययार्थः, तथा च सूत्रम् "अव्ययसर्वनाम्नामकच् प्राक् टेः" इति, द्विवचनेऽन्यस्य तु कस्यापि सर्वनामसंज्ञाकार्यस्य नास्ति प्रसङ्गः । २-अस्ति, इति हरदत्तः । नास्ति इति कैयटः । ३-कतर-कतम-यतर-यतम ततर-ततम-एकतर-एकतमेत्यादयः । ४-सर्वनामसंज्ञ इति शेषः । ५-('यथासङ्ख्य-मनुदेशः समानाम् इति सूत्रे इति शेषः ।) अन्यथा समेषामिति स्यात् । ६-स्वस्य (पूर्वादिशब्दस्य) अभिधेयः ( दिग्देशकालरूपः ) तेन अपेक्ष्यते इति स्वाभिधेयापेक्षः ( अवधिः ) तस्य अवधेर्नियम इति 'स्वाभिधेयापेक्षावधि-नियमः,=( व्यवस्था ) । तथा च यत्र कस्मात् पूर्वं कस्मादपरमित्यवध्याकाङ्क्षाया नियमः स्यात् तत्रैव भवति सर्वनामसञ्ज्ञा । "दक्षिणा गाथका" इत्यत्र तु दक्षिणशब्दः चतुर-वाचक इति नावधेराकाङ्क्षा । —एवम् -"अधरे रागः" "उत्तरे प्रत्युत्तरे च शक्तः" इत्यादावपि-अवधिनियमा-भावात् (अधर-उत्तर शब्दयोः) न सर्वनामसंज्ञा । ७-स्वशब्दस्य चत्वारो ऽर्थाः (१) आत्मा (२) आत्मीयः (३) धनम् (४) ज्ञातिश्च ( जातिः ) । तत्रात्मात्मीयवाचिनः सर्वनामसंज्ञा, नतु ज्ञातिधनवाचिनः । ८-उपसंव्यानम् =परिधानीयम्=(वस्त्रादिकम्) ।

अन्तरा वा गृहाः । बाह्या इत्यर्थः । अन्तरे अन्तरा वा शाटकाः । परिधानीया इत्यर्थः ।

**१७४ पूर्वादिभ्यो नवभ्यो वा ७ । १ । १६ ॥**

एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः । पूर्वस्मात्, पूर्वात् । पूर्वस्मिन् । पूर्वे । एवं परादीनामपि । शेषं सर्ववत् । ( संज्ञोपसर्जनीभूतास्तु न सर्वादयः ) । सर्वो नाम कश्चित्तस्मै सर्वाय देहि । अतिक्रान्तः सर्वमतिसर्वस्तस्मै अतिसर्वाय । (अन्तरमिति गणसूत्रेऽपुरीति वक्तव्यम् )। अन्तरायां पुरि ।

**१७५ तृतीयासमासे १ । १ । ३० ॥**

सर्वनामता न। मासपूर्वाय। तृतीयासमासार्थवाक्येऽपि न। मासेन पूर्वाय ।

**१७६ द्वन्द्वे च १ । १ । ३१ ॥**

उक्ता संज्ञा न । वर्णाश्रमेतराणाम् ।

**१७७ विभाषा जसि १ । १ । ३२ ॥**

वर्णाश्रमेतरे । वर्णाश्रमेतराः ।

**१७८ प्रथम-चरम-तयाल्पार्ध-कतिपय-नेमाश्च १ । १ । ३३॥**

एते जस्युक्तसंज्ञा वा स्युः । प्रथमे । प्रथमाः । तयप्प्रत्ययः । द्वितये । द्वितयाः । शेषं रामवत् । नेमे । नेमाः । शेषं सर्ववत् । (तीयस्य ङित्सु वा)

---

१–महासंज्ञाकरणसामर्थ्यात् । २–इदं सञ्ज्ञाया उदाहरणम् । ३–इदमुदाहरणमुपसर्जनीभूतस्य । ४–स्त्रीत्वविशिष्टनगरार्थप्रतिपादकस्य विशेष्यत्वेऽन्तर–शब्दस्य विशेषणीभूतस्य सर्वनामसञ्ज्ञा न भवतीत्यर्थः । अयं भावः–यत्र पुरी, पूः, नगरी, इत्येतेषां स्त्रीत्वविशिष्टनगरार्थप्रतिपादकानां विशेष्यत्वं स्यात्तत्र सर्वनामसञ्ज्ञाकार्य न भविष्यति—यथा—'अन्तरायां पुर्याम्' 'अन्तरायां नगर्यां पुरि वा' इति । नगरं, पुरं, पत्तनम्, इत्यादीनां विशेष्यत्वे तु–अन्तरस्मिन् नगरे, अन्तरस्मिन् पुरे पत्तने वा' एवं सर्वनामसञ्ज्ञाकार्यं स्यादेव । ५–तेन तदन्ताः=(तयप्प्रत्ययान्ताः)=द्वितय–द्वय-त्रितय-त्रय-चतुष्टय-पञ्चतय-षट्-तय–सप्ततय-अष्टतय-नवतय-दशतयादयो ग्राह्याः, प्रत्ययग्रहणे तदन्तग्रहणमिति नियमात्, केवलप्रत्ययस्य सर्वनामत्वे प्रयोजनाभावात् । ६–तीयस्य=तीयप्रत्ययान्तस्य, ङित्सु=ङिद्वचनेषु (ङे-ङसि ङस्-ङि इत्येतेषु) ।

द्वितयिस्मै । द्वितीयायेत्यादि । एवं तृतीयः । निर्जरः[1] ।

**१७९ जराया जरसन्यतरस्याम् ७ । २ । १०१ ॥**

जराया जरस् वाऽजादौ विभक्तौ[2] । 'पदाङ्गाधिकारे तस्य तदन्तस्य च' । 'निर्दिश्यमानस्यादेशा[3] भवन्ति' । एकदेशविकृतस्यानन्यत्वाज्जरशब्दस्य[4] जरस् । निर्जरसौ । निर्जरसः । उपजीव्यविरोधान्न[5] जरस्—निर्जरैः । पक्षे हलादौ च रामवत् ।

**१८० पद्दन्नोमास्[6]-हृन्निशसन्-यूषन्दोषन्-यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु ६ । १ । ६३ ॥**

पाद दन्त नासिका मास हृदय निशा असृज् यूष् दोष् यकृत् शकृत् उदक आस्य एषां पदादय आदेशाः स्युः शसादौ वा । यत्तु आसन-शब्दस्यासन्नादेश इति काशिकायामुक्तं तत्प्रामादिकमेव[7] । पादः । पादौ । पादाः । पादम् । पादौ । पदः, पादान् । पदा, पादेन । इत्यादि । विश्वपाः[8] ।

**१८१ दीर्घाज्जसि च ६ । १ । १०५ ॥**

दीर्घाज्जसि इचि च न पूर्वसवर्णदीर्घः । वृद्धिः । विश्वपौ । विश्वपाः ।

१-निर्गतो जराया इति निर्जरः=देवः । "अमरा निर्जरा देवाः" इत्यमरः । २-जराशब्दस्य 'जरस्, आदेशः स्याद् वा-अजादौ विभक्तौ, इति सूत्रार्थः । (अत्राङ्गाधिकारः) तेन निर्जरस्यापि इति सिद्धम् । ३-सर्वस्य 'निर्जर,-शब्दस्यादेशप्राप्तौ वचनम्-**निर्दिश्यमानस्येति**, सूत्रे यावन्मात्रस्य स्थानित्वेन निर्देशस्तावन्मात्रस्येत्यर्थः । ४-'नहि छिन्नपुच्छोऽश्वो गर्दभो भवति, तेन । ५-उपजीव्यम्=कारणं निमित्तं तद्विरोधादित्यर्थः । यथा हि—अदन्तत्वं मत्वा भिसः स्थाने-ऐस् भवति । पुनश्च स (ऐस्) यदि—अदन्तत्वोपघाताय जरसादेशम्प्रति निमित्तं स्यात्तदा तु विस्पष्ट एवोपजीव्यविरोधः । तथा च 'यो यमाश्रित्य समुत्पन्नः स तस्य विघातको न भवति' इति सन्निपातपरिभाषात्र प्रवर्तते । ६-अत्र पदाद्या आदेशाः स्वानुरूपान्=आनुपूर्वीकल्पान् समानार्थानिति यावत्, स्थानिनः समाक्षिपन्ति । ७-भ्रान्तिमूलकमित्यर्थः । 'हव्या जुह्वान आसनि (मुखे)' 'आसन्यं प्राणमूचुः' इत्यादौ मुखार्थकत्वस्यैव दर्शनादिति भावः । ८-विश्वं पाति=रक्षति इति 'विश्वपाः, (परमात्मा) अत्र क्विप्-प्रत्ययः तस्य (क्विपः) लोपः ।

हे विश्वपाः !, हे विश्वपौ !, हे विश्वपाः ! ।

**१८२ सुडनपुंसकस्य १ । १ । ४३ ॥**

स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य ।

**१८३ स्वादिष्वसर्वनामस्थाने १ । ४ । १७ ॥**

कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं पदं स्यात् ।

**१८४ यचि भम् १ । ४ । १८ ॥**

यकारादिष्वजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं भ-संज्ञं स्यात् ।

**१८५ आकडारादेका संज्ञा १ । ४ । १ ॥**

इत ऊर्ध्वं कडाराः कर्मधारय इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया, या परानवकाशा च । तेन शसादावचि भ-संज्ञैव न पदसञ्ज्ञा ।

**१८६ आतो धातोः ६ । ४ । १४० ॥**

आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः । अलोऽन्त्यस्य । विश्वपः । विश्वपा । विश्वपाभ्यामित्यादि । एवं शङ्खध्मादयः । धातोः किम् । हाहान् । 'आत' इति योगविभागादधातोरप्याकारलोपः क्वचित् । (क्त्वः) । श्नः ।

---

१—पदसंज्ञं स्यात् । २—तेन व्यवस्थातः (सु-औ-जस्-अम्-औट् इति) सर्वनामस्थानभिन्नायाम् अजादौ (शसादौ) विभक्तौ 'भ' संज्ञा, हलादौ च 'पद' संज्ञा । ३—"क्विबन्ता विडन्ताः विजन्ताः शब्दा धातुत्वं न जहति" इति क्विबन्तस्यापि 'विश्वपा' शब्दस्य धातुत्वम् ।

| | | | | | |
|---|---|---|---|---|---|
| ४—प्र० | विश्वपाः, | विश्वपौ, | विश्वपाः, | | |
| द्वि० | विश्वपाम्, | ,, | विश्वपः, | | |
| तृ० | विश्वपा, | विश्वपाभ्याम्, | विश्वपाभिः | | |
| च० | विश्वपे | ,, | विश्वपाभ्यः | | |
| पं० | विश्वपः | ,, | ,, | | |
| ष० | ,, | विश्वपोः, | विश्वपाम्, | | |
| स० | विश्वपि, | ,, | विश्वपासु | | |
| सं० | हे विश्वपाः ! | | | | |

५—आकारान्ताः पुंल्लिङ्गाः । ६—'हाहा' शब्दोऽनुकरणम्, नतु धातुरूपः, ( हां जहातीति विग्रहे तु धातुरेव हाहाशब्दः, विश्वपावत् ) दीर्घत्वान्नुडभावः । हाहाम्, हाहे, हाहौः, हाहासु । शेषं विश्वपावत् । ७—'आतो धातोः' इत्यत्र—आत इति योगो विभज्यते, आकारान्तस्य भस्याङ्गस्य लोपः स्यादित्यर्थस्तस्य । तेन—क्त्वा—श्ना शब्दस्य क्त्वः, श्नः, इति शसिरूपं सिद्ध्यति ।

हरिः । हरी[1] ।

**१८७ जसि च ७ । ३ । १०९ ॥**

ह्रस्वान्तस्याङ्गस्य गुणः स्याज्जसि । हरयः ।

**१८८ ह्रस्वस्य गुणः ७ । ३ । १०८ ॥**

सम्बुद्धौ । हे हरे ! । हरिम् । हरीन् ।

**१८९ शेषो घ्यसखि १ । ४ । ७ ॥**

शेष इति स्पष्टार्थम् । अनदीसंज्ञौ ह्रस्वौ याविदुतौ तदन्तं सखिवर्ज घि-संज्ञं स्यात् ।

**१९० आङो नाऽस्त्रियाम् ७ । ३ । १२० ॥**

घेः परस्याङो ना स्यादस्त्रियाम् । आङिति टा-संज्ञा प्राचाम्[2] । हरिणा । हरिभ्याम् ३ । हरिभिः ।

**१९१ घेर्ङिति ७ । ३ । १११ ॥**

घिसंज्ञकस्य ङिति सुपि गुणः । हरये[3] । हरिभ्यः २ । गुणे कृते ।

**१९२ ङसिङसोश्च ६ । १ । ११० ॥**

एङो ङसिङसोरति परे पूर्वरूपमेकादेशः । हरेः[4] २ । हर्योः २ । हरीणाम् ।

**१९३ अच्च घेः ७ । ३ । ११९ ॥**

इदुद्भ्यां परस्य ङेरौत् घेरत् । हरौ[5] । हरिषु । एवं कव्यादयः[6] ।

**१९४ अनङ् सौ ७ । १ । ९३ ॥**

सख्युरङ्गस्यानङादेशोऽसम्बुद्धौ सौ ।

**१९५ अलोऽन्त्यात्पूर्व उपधा १ । १ । ६५ ॥**

अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः स्यात् ।

**१९६ सर्वनामस्थाने चासम्बुद्धौ ६ । ४ । ८ ॥**

१–हरि+औ, "प्रथमयोः पूर्वसवर्णः" इति सूत्रेण पूर्वसवर्णदीर्घः । २–'टा' इति तृतीयैकवचनस्य 'आङ्' इति संज्ञा–इत्यर्थः । ३–हरि+(ङे) ए, गुणे, अय्=हरये । ४–हरि+(ङसि) अस्, अत्र गुणे पूर्वरूपं विसर्गः=हरेः । ५–हरि+ङि, अच्च घेः=('हरि' इत्यस्य) अत् ('हर' इति)। 'ङि'इत्यस्य 'औत्', वृद्धिः=हरौ । ६–(ह्रस्व)–इकारान्ताः पुंल्लिङ्गाः कविरव्यादयः ।

नान्तस्योपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने।

**१९७ अपृक्त एकाल्प्रत्ययः १।२।४१॥**

**१९८ हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् ६।१।६८॥**

हलन्तात्परं दीर्घौ यो ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हल् लुप्यते।

**१९९ प्रत्ययलोपे प्रत्ययलक्षणम् १।१।६२॥**

प्रत्यये लुप्तेऽपि तदाश्रितं कार्यं स्यात्।

**२०० नलोपः प्रातिपदिकान्तस्य ८।२।७॥**

प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नस्य लोपः। सखा।

**२०१ सख्युरसम्बुद्धौ ७।१।९२॥**

सख्युरङ्गात्परं सबुद्धिवर्जं सर्वनामस्थानं णिद्वत्स्यात्।

**२०२ अचोऽञ्णिति ७।२।११५॥**

अजन्ताङ्गस्य वृद्धिर्ञिति णिति च। सखायौ। सखायः। हे सखे!। सखायम्। सखायौ। सखीन्। सख्या। सखिभ्याम्। सखिभिः। सख्ये।

**२०३ ख्यत्यात्परस्य ६।१।११२॥**

खि-तिशब्दाभ्यां खी-तीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसि-ङसोरत उत्। सख्युः।

**२०४ औत् ७।३।११८॥**

इदुद्भ्यां परस्य ङेरौत्। सख्यौ। शेषं हरिवत्।

**२०५ पतिः समास एव १।४।८॥**

---

१–सम्बुद्धिभिन्ने। २–एकाल्=एकवर्णरूपः प्रत्ययोऽपृक्त–संज्ञः स्यात्। ३–'सु'सम्बन्धि, 'ति' (तिप्) सम्बन्धि, तिपा साहचर्यात् 'सि'(सिप्) सम्बन्धि (नतु सिच् सम्बन्धि)। ४–सखि+सु, अनङ्, सखन्+सु (स्) सकारलोपः। नान्तस्योपधादीर्घे नस्य लोपः–'सखा'=मित्रम्। ५–सखि +ङसि (अस्) यणि कृते 'सख्यस्, उत्वे 'सख्युः'। षष्ठीविभक्तौ–सख्युः, सख्योः, सखीनाम्। शेष मुच्चारणं स्पष्टं मूले। ६–'पति' शब्दः समास एव 'घि' संज्ञ इत्यर्थः। तेन न घिसंज्ञाकार्याणि।

घिसंज्ञः । पत्या । पत्युः[1] २ । पत्यौ । शेषं हरिवत् । समासे[2] तु भूपतये । कतिशब्दो[3] नित्यं बहुवचनान्तः ।

**२०६ बहु[4]-गण-वतु-डतिसंख्या । १ । १ । २३ ॥**

**२०७ डति च १ । १ । २५ ॥**

डत्यन्ता संख्या षट्संज्ञा स्यात् ।

**२०८ षड्भ्यो लुक् ७ । १ । २२ ॥**

जश्शसोः[5] ।

**२०९ प्रत्ययस्य लुक्-श्लु-लुपः १ । १ । ६१ ॥**

लुक्-श्लु-लुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्यात् । जसि चेति गुणे प्राप्ते ।

**२१० न लुमताऽङ्गस्य १ । १ । ६३ ॥**

लुक् श्लु लुप् एते लुमन्तः । लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्यं[6] न स्यात् । कति २ । कतिभिः । कतिभ्यः । कतिभ्यः । कतीनाम् । कतिषु । अस्मद्युष्मत्-षट्संज्ञकास्त्रिषु सरूपाः[7] । त्रिशब्दो नित्यं बहुवचनान्तः । त्रयः[8] । त्रीन् । त्रिभिः । त्रिभ्यः २ ।

**२११ त्रेस्त्रयः[9] ७ । १ । ५३ ॥**

आमि । त्रयाणाम् । त्रिषु । गौणत्वेऽपि । प्रियत्रयाणाम्[10] । द्विशब्दो

---

१–"ख्यत्यात्परस्य" इत्यनेन 'उत्वम्' । २–समासे घिसंज्ञाकार्याणि भवन्त्येव । सर्वं हरिवत् । ३–"किमः सङ्ख्या परिमाणे डति च" इति 'डति' प्रत्यये टिलोपः, का सङ्ख्या येषां ते कति, नित्यं बहुवचनान्तोऽयम् । ४–बहुः–गणः–वतुः–डतिः, इत्येषां समाहारः=बहुगणवतुडति–सङ्ख्या=एते 'सङ्ख्या'–संज्ञाः स्युरित्यर्थः । वतु-डतिप्रत्ययौ तत्र तदन्ता ग्राह्याः—वत्वन्ता डत्यन्ता इति । ५–'षट्' संज्ञकेभ्यो जस्–शसोर्लुक् स्यात् । ६–लुक्–श्लु-लुप्–संज्ञमित्यर्थः । ७–सरूपाः=समानरूपाः, समानोच्चारणा इत्यर्थः । ८–त्रि+( जस् ) अस् "जसि च" इति गुणः, अयादेशः । ९–त्रिशब्दस्य त्रयादेशः स्यादामीत्यर्थः । १०–बहुव्रीहिसमासे ( अन्यपदार्थप्रधाने ) समागतानि समस्तानि-गौणानि=उपसर्जनानि वा उच्यन्ते, प्रियास्त्रयो यस्य स 'प्रियत्रिः', तेषां 'प्रियत्रयाणाम्' ।

नित्यं द्विवचनान्तः।

**२१२ त्यदादीनामः ७।२।१०२॥**

एषामकारो विभक्तौ। द्विपर्यन्तानामेवेष्टिः। द्वौ २। द्वाभ्याम् ३। द्वयोः २। द्विपर्यन्तानां किम्। भवान्। भवन्तौ। पाति लोकमिति-पपीः=सूर्यः। पप्यौ। पप्यः। हे पपीः!। पपीम्। पपीन्। पप्या। पपीभ्याम् ३। पपीभिः। पप्ये। पपीभ्यः २। पप्यः २। पप्योः २। पप्याम्। पप्यि। पपीषु। एवं वातप्रम्यादयः। बह्वयः श्रेयस्यो यस्य स बहुश्रेयसी।

**२१३ यू स्त्र्याख्यौ नदी १।४।३॥**

ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः। (प्रथमलिङ्गग्रहणं च)=पूर्वं स्त्र्याख्यस्योपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः।

**२१४ अम्बार्थनद्योर्ह्रस्वः ७।३।१०७॥**

अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात्सम्बुद्धौ। हे बहुश्रेयसि!।

**२१५ आण् नद्याः ७।३।११२॥**

नद्यन्तात्परेषां ङितामाडागमः।

**२१६ आटश्च ६।१।९०॥**

आटोऽचि परे वृद्धिरेकादेशः स्यात्। बहुश्रेयस्यै। बहुश्रेयस्याः। बहुश्रेयसीनाम्।

**२१७ ङेराम्नद्याम्नीभ्यः ७।३।११६।**

नद्यन्तादाबन्तान्नीशब्दाच्च परस्य ङेरामादेशः स्यात्। इह परत्वादाटा नुट्

---

१-'त्यद्' इत्यारभ्य 'द्वि, शब्दपर्यन्तमेव 'अ'-कारो भवति इति-इष्यते-इष्टिः। २-"पापोः किद् द्वे च" इत्युणादिसूत्रेण 'ई' प्रत्ययः, द्वित्वम्, -आलोपश्च, "आतो लोप इटि च" इत्यनेन। ३-आमि रूपमिदम्। ४-श्रेयस्यः=कल्याण्यः स्त्रियः। ५-ईश्च ऊश्च 'यू'=ईदूदन्तौ-इत्यर्थः, स्त्र्याख्यौ =नित्यस्त्रीलिङ्गौ, इत्यर्थः, स्त्रियम् आचक्षाते इति विग्रहात्, तदेवाह वृत्तौ। ६-यः शब्दः प्रथमं स्त्रीलिङ्गः स्यात्पश्चादुपसर्जनदशायां लिङ्गविपर्ययेऽपि तस्य नदीसंज्ञा भवतीति भावः। ७-ङिताम्=ङिद्वचनानाम् (ङे ङसि, ङस्, ङि इत्येतेषाम्)। ८-नुटः परत्वादाट्। न च कृतेऽपि-आडागमे नुट् कुतो नेति वाच्यम्। 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव, इतिन्यायात्।

बाध्यते । बहुश्रेयस्याम् । शेषं पपीवत् । अतिलक्ष्मीः[1] । शेषं बहुश्रेयसीवत् । प्रधीः[2] ।

**२१८ अचि श्नु-धातु-भ्रुवां य्वोरियङुवङौ ६ । ४ । ७७ ॥**

श्नुप्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोर्भ्रू इत्येतस्य चाङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये परे । इति प्राप्ते ।

**२१९ एरनेकाचोऽसंयोगपूर्वस्य ६ । ४ । ८२ ॥**

धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ प्रत्यये परे । प्रध्यौ । प्रध्यः । प्रध्यम् । प्रध्यः । प्रध्य । शेषं पपीवत् । एवं ग्रामणीः[3] । ङौ तु—ग्रामण्याम्[4] । अनेकाचः किम्—नीः, नियौ, नियः । नियम्[5] । असंयोगपूर्वस्य किम्—सुश्रियौ[6], यवक्रियौ ।

**२२० गतिश्च १ । ४ । ६० ॥**

प्रादयः क्रियायोगे गतिसंज्ञाः स्युः । (गतिकारकेतरपूर्वपदस्य यण्नेष्यते)[7] शुद्धधियौ । शुद्धधियः ।

**२२१ न भू-सुधियोः ६ । ४ । ८५ ।**

एतयोरचि सुपि यण्न । सुधीः । सुधियौ । सुधियः । इत्यादि । सुख-

१—"लक्षेर्मुट् च" इत्युणादिसूत्रेण 'ई' प्रत्ययः, मुडागमश्च, अत एव ङीबन्तत्वाभावाद् हल्ङ्याबिति सुलोपो न । २—प्रध्यायतीति-प्रधीः, इति विग्रहः । प्रकृष्टा धीर्यस्येति विग्रहे तु 'धी' शब्दस्य नित्यस्त्रीत्वात् यथायथं नदीकार्याणि भविष्यन्त्येव ( बहुश्रेयसीवत् ) । ३—ग्रामं नयति इति ग्रामणीः =ग्राममुख्यः, ( भाषायाम् 'नम्बरदार, इति ) । ४—"ङेराम् नद्याम्नीभ्यः" इत्याम् । ५—नी+अम्, अत्र "इको यणचि" इति प्राप्तं यणं बाधित्वा 'अमि पूर्वः' इति पूर्वरूपं प्राप्नोति, ततः परत्वात् "अचिश्नु" ....इति 'इयङ्' । "एरनेकाच्...." इति त्विह न प्रवर्ततेऽनेकाच्त्वाभावात् । ६—शोभनं श्रयतीति विग्रहः । शोभना श्रीर्यस्येति विग्रहे तु नदीत्वं स्यादेव । ७—गतिकारकपूर्वपदस्यैव यण् इति भावः, तेन शुद्धा धीर्यस्य स शुद्धधीः—शुद्धधियौ शुद्धधियः इत्यादौ शुद्धशब्दस्य गतिकारकत्वाभावान्न यण् किन्तु-इयङ् । उपसर्गाणामेव गतिसंज्ञा ।

मिच्छतीति सुखीः । सुतीः । सुख्युः २ । सुत्युः २ । शेषं प्रधीवत् । शम्भुर्हरिवत् । एवं भान्वादयः ।

**२२२ तृज्वत्क्रोष्टुः ७ । १ । ६५ ॥**

असम्बुद्धौ सर्वनामस्थाने । 'क्रोष्टु' इत्यस्य स्थाने 'क्रोष्टृ' इति प्रयोक्तव्य इत्यर्थः ।

**२२३ ऋतो ङिसर्वनामस्थानयोः ७ । ३ । ११० ॥**

गुणः । इति प्राप्ते ।

**२२४ ऋदुशनस्पुरुदंसोऽनेहसां च ७ । १ । ९४ ॥**

ऋदन्तानामुशनसादीनां चानङ् स्यादसम्बुद्धौ सौ ।

**२२५ अप्-तृन्-तृच्-स्वसृ-नप्तृ-नेष्टृ-त्वष्टृ-क्षत्तृ-होतृ-पोतृ-प्रशास्तॄणाम् । ६ । ४ । ११ ॥**

अबादीनामुपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने । क्रोष्टा । क्रोष्टारौ । क्रोष्टारः । क्रोष्टारम् । क्रोष्टारौ । क्रोष्टून् ।

**२२६ विभाषा तृतीयादिष्वचि ७ । १ । ९७ ॥**

अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत् । क्रोष्ट्रा । क्रोष्टुना । क्रोष्ट्रे, क्रोष्टवे ।

**२२७ ऋत उत् ६ । १ । १११ ॥**

ऋतो ङसिङसोरति परे पूर्वपरयोरुदेकादेशः स्यात् । रपरः ।

**२२८ रात्सस्य ८ । २ । २४ ॥**

रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य । विसर्गः । क्रोष्टुः २ । क्रोष्टोः

---

१- क्यजन्तात् क्विप्, क्यचि च, इति ईत्वम् । २-सुखी+(ङसि) अस्, सुती+(ङसि) अस्, यणि कृते 'ख्यत्यात्परस्य' इति-उत्वम् ।

३-

| | |
|---|---|
| १ भानुः, भानू, भानवः, | ५ भानोः, भानुभ्याम्, भानुभ्यः, |
| २ भानुम्, ,, भानून्, | ६ भानोः, भान्वोः, भानूनाम्, |
| ३ भानुना, भानुभ्याम्, भानुभिः, | ७ भानौ ,, भानुषु, |
| ४ भानवे, ,, भानुभ्यः, | (सं०) हे भानो ! शेषं प्रथमावत् |

एवं ह्रस्व-उकारान्ताः सर्वेऽपि पुंल्लिङ्गाः शब्दा बोध्याः ।

४-ऋदन्ताङ्गस्य गुणो ङौ सर्वनामस्थाने चेत्यर्थः । ५-उशना=शुक्राचार्यः । पुरुदंसा=मार्जारः । अनेहा=समयः ।

२। क्रोष्ट्रोः २। (नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन[1]) क्रोष्टूनाम्। क्रोष्टरि। पक्षे हलादौ च शम्भुवत्[2]। हूहूः। हूह्वौ, इत्यादि। अतिचमूशब्दे तु नदीकार्यं विशेषः[3]। हे अतिचमु!। अतिचम्वै। अतिचम्वाः २। अतिचमूनाम्। अतिचम्वाम्। खलपूः।

**२२९ ओः सुपि ६।४।८३॥**

धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्याऽनेकाचोऽङ्गस्य यण् स्यादचि सुपि। खलप्वौ। खलप्वः[4]। एवं सुल्वादयः। स्वयम्भूः। स्वयम्भुवौ[5]। स्वयम्भुवः। एवं स्वभूः। वर्षाभूः।

**२३० वर्षाभ्वश्च ६।४।८४॥**

अस्य यण् स्यादचि सुपि। वर्षाभ्वावित्यादि। दृन्भूः। (दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः)। दृन्भ्वौ। दृन्भ्वः। एवं करभूः। पुनर्भूः। दृग्भू-काराभूशब्दौ तु स्वयम्भूवत्। धाता। धातारौ। धातारः। हे धातः!। (ऋवर्णान्नस्य णत्वं वाच्यम्)। धातॄणाम्[6]। एवं नप्त्रादयः।

---

१—"विप्रतिषेधे परं कार्यम्" इत्यत्र—'अपरम्' इतिच्छेदादिति भावः। वारीणाम्। तिसृणाम्, क्रोष्टूनाम्, इति यथासङ्ख्यमुदाहरणानि ज्ञेयानि। "अचि र ऋतः" इति राऽऽदेशस्तु मद्विषये यद्यत्प्राप्तं तत्तन्मया सर्वं बाध्यमिति बाध्यसामान्यचिन्ताश्रयणात्। गुणदीर्घोत्वानामपवाद इति मूल एव स्फुटीभविष्यति इति।

| | | |
|---|---|---|
| २—१ क्रोष्टा, | क्रोष्टारौ, | क्रोष्टारः, |
| २ क्रोष्टारम्, | ,, | क्रोष्टून्, |
| ३ क्रोष्ट्रा=क्रोष्टुना, | क्रोष्टुभ्याम्, | क्रोष्टुभिः |
| ४ क्रोष्ट्रे=क्रोष्टवे, | ,, | क्रोष्टुभ्यः, |
| ५ क्रोष्टुः=क्रोष्टोः | ,, | ,, |
| ६ ,,=,, | क्रोष्ट्रोः=क्रोष्ट्वोः, | क्रोष्टूनाम्, |
| ७ क्रोष्टरि=क्रोष्टौ, | "=" | क्रोष्टुषु, |
| (सं) हे क्रोष्टो! शेषं प्रथमावत्। | | |

३—प्रथमलिङ्गग्रहणादिति भावः। ४—द्वितीयायाम्—खलप्वम्, खलप्वौ, खलप्वः। एवं सर्वत्राजादौ विभक्तौ यण्। ५—न भूसुधियोः" इतियणिनिषेधः।

| | | |
|---|---|---|
| ६—१ धाता, | धातारौ, | धातारः, |
| २ धातारम्, | ,, | धातॄन्, |
| ३ धात्रा, | धातृभ्याम्, | धातृभिः, |
| ४ धात्रे, | ,, | धातृभ्यः, |
| ५ धातुः, | धातृभ्याम्, | धातृभ्यः |
| ६ ,, | धात्रोः, | धातॄणाम्, |
| ७ धातरि, | ,, | धातृषु, |
| सं० हे धातः! शेषं प्रथमावत् | | |

अप्तृन्निति सूत्रे नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम्[1] । तेनेह न । पिता । पितरौ । पितरः । पितरम् । शेषं धातृवत् । एवं जामात्रादयः । ना[2] । नरौ । नरः ।

**२३१ नृ च ६ । ४ । ६ ॥**

अस्य नामि वा दीर्घः । नृणाम्, नॄणाम् ।

**२३२ गोतो[3] णित् ७ । १ । ९० ॥**

गोशब्दात्परं सर्वनामस्थानं णिद्वत् । गौः । गावौ । गावः ।

**२३३ औतोऽम्शसोः[5] ६ । १ । ९३ ॥**

ओकारादम्शसोरचि आकार एकादेशः । गाम् । गावौ । गाः । गवा । गवे । गोः[6] २ ।

- - - - - - - - - -

एवं ऋकारान्ताः कर्तृ-भर्तृ-सवित्रादयः ।

१-उणादिविषयेऽस्ति पक्षद्वयम् "उणादीनि-अव्युत्पन्नानि प्रातिपदिकानि"-इत्येकः । "व्युत्पन्नानि" इत्यपरः । व्युत्पन्नानीति पक्षे सर्वे एते शब्दा उणाद्यन्तर्गताः प्रकृतिप्रत्ययविभागवन्तः । अव्युत्पत्तिपक्षे च नैतेषु प्रकृतिप्रत्ययविभागः । तत्र व्युत्पत्तिपक्षे=व्युत्पन्नानि-इति मते नप्त्रादीनामपि तृन्-तृजन्तत्वेनैव दीर्घे सिद्धे पुनस्तेषां ग्रहणं नियमार्थम्-'सिद्धौ सत्यामारभ्यमाणो विधिर्नियमाय" इति न्यायात् । स नियमश्चायम् "उणादिनिष्पन्नानां तृन् तृच् प्रत्ययान्तानां संज्ञाशब्दानां चेदुपधादीर्घस्तर्हि नप्त्रादीनामेव" इति । तेन पित्रादीनां न, पिता पितरौ पितरः । अव्युत्पत्तिपक्षे तु तेषु सर्वत्र प्रकृतिप्रत्ययकल्पनाऽभावात् सूत्रे गृहीतानामेव भविष्यति दीर्घ इति पितृ-मात्रादीनां दीर्घप्राप्तिरेव नास्ति । २-नृ+सु+अनङ्, सुलोपः दीर्घः,-ना=पुरुषः । ३-ओतो णिदिति वाच्यम्, अत एवाऽऽह-वृत्तौ ओकाराद् विहितमित्यादि । तेन-सुद्यौः, सुद्यावौ, सुद्यावः, इत्यादि । विहित विशेषणत्वान्नेह । हे भानो ! । ४-णिद्वद्भावाद् "अचो ञ्णिति" इति वृद्धिः, रुत्वविसर्गौ । ५-'आ ओतः' इतिच्छेदः । शसा साहचर्यात्सुबेव अम् गृह्यते । तेनेह न-अचिनवम्, असुनवम् । ६-गोशब्द उभयलिङ्गः उच्चारणं समानमेव । सप्तम्याम्-गवि, गवोः, गोषु ।

**२३४ रायो हलि ७।२।८५॥**

रैशब्दस्याऽऽकारादेशो हलि विभक्तौ। राः। रायौ। रायः। राभ्यामित्यादि। ग्लौः। ग्लावौ। ग्लावः। ग्लौभ्यामित्यादि।

॥ इत्यजन्ताः पुंलिङ्गाः ॥

# अथाजन्तस्त्रीलिङ्गाः।

रमा।

**२३५ औङ आपः ७।१।१८॥**

आबन्तादौङः शी स्यात्। औङित्यौकारविभक्तेः संज्ञा। रमे। रमाः।

**२३६ सम्बुद्धौ च ७।३।१०६॥**

आप एकारः। हे रमे!। हे रमे!। हे रमाः!। रमाम्। रमाः।

**२३७ आङि चापः ७।३।१०५॥**

आङि ओसि चाप एकारः। रमया। रमाभ्याम्। रमाभिः।

**२३८ याडापः ७।३।११३॥**

आपो ङितो याट्। वृद्धिः। रमायै। रमाभ्यः। रमायाः। रमयोः।

---

१–रै-शब्दोऽयं धनवाची—तदुच्चारणम्—

| | | | | | | |
|---|---|---|---|---|---|---|
| १ राः, | रायौ, | रायः, | ५ रायः, | राभ्याम्, | राभ्यः, |
| २ रायम्, | ” | | ६ रायः, | रायोः, | रायाम् |
| ३ राया, | राभ्याम्, | राभिः | ७ रायि, | ” | रासु, |
| ४ राये, | ” | राभ्यः, | सं० हे राः! शेषं प्रथमावत्। | | |

२–ग्लौः=चन्द्रः। 'ग्लौर्मृगाङ्कः कलानिधिः' इत्यमरः। ३–रमते–इति रमा 'रम्' धातोः-पचाद्यचि टाप्। रमा+सु, "हल्ङ्याबि" ति सुलोपः। ४–रमा+औ, औङः शीभावे शकारस्येत्संज्ञायां लोपे च गुणः। ५–रमा +(जस्) अस्, यद्यपि पूर्वसवर्णदीर्घः प्राप्तः, परं "दीर्घाज्जसि चेति" निषेधात् न भवति, ततश्च "अकः सवर्णे......" इति दीर्घो भवति। शसि तु "प्रथमयो" रिति पूर्वसवर्णदीर्घ एव। ६–रमा+(टा) आ, आप एत्वे ऽयादेशः। ७–"वृद्धिरेचि" इत्यनेन। ८–आबन्तात्परस्य याडागमः स्यादित्यर्थः।

रमाणाम्[1] । रमायाम्[2] । रमासु । एवं दुर्गादयः[3] ।

**२३९ सर्वनाम्नः स्याड्ढ्रस्वश्च ७ । ३ । ११४ ॥**

आबन्तात्सर्वनाम्नो ङितः स्याडापश्च ह्रस्वः । सर्वस्यै[4] । सर्वस्याः २ । सर्वासाम् । सर्वस्याम् । शेषं रमावत् । एवं विश्वादयोऽप्याबन्ताः[5] ।

**२४० विभाषा दिक्समासे बहुव्रीहौ १ । १ । २८ ॥**

सर्वनामता वा स्यात् । उत्तरपूर्वस्यै[6] । उत्तरपूर्वायै । इत्यादि । अन्तरस्यै शालायै । अपुरीत्युक्तेर्नेह । अन्तरायै नगर्यै । तीयस्य ङित्सूपसंख्यानात्[7], द्वितीयस्यै । द्वितीयायै । एवं तृतीया । 'अम्बार्थनद्योर्ह्रस्वः' । हे अम्ब ! । हे अक्क ! । हे अल्ल ! । असंयुक्ता ये डलकास्तद्वतां ह्रस्वो न । हे अम्बाडे ! । हे अम्बाले ! । हे अम्बिके ! । जरा । जरसौ, जरे । इत्यादि । पक्षे हलादौ च रमावत् । गोपा[8] विश्वपावत् । मतीः[9] । मत्या[10] ।

**२४१ ङिति ह्रस्वश्च १ । ४ । ६ ॥**

इयङुवङ्स्थानौ[11] स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ च इ-उवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति । मत्यै[12] । मतये । मत्याः । मतेः । परत्वात्

---

१-रमा+आम्, आबन्तत्वात् "ह्रस्वनद्यापो नुट्" इति—आमो नुट् (आगमः) । नस्य णत्वं **रमाणाम्** २-रमा+ङि "ङेराम्नद्याम्नीभ्यः" इति ङेरामि, स्थानिवद्भावेन—आमो ङित्वमाश्रित्य "याडापः" इति याट् । ३-आकारान्ताः स्त्रीलिङ्गाः प्रायः सर्वे । ४-सर्वशब्दात् स्त्रीत्वे टाप्, सर्वा+(ङे) ए, याटोऽपवादः 'स्याट् पूर्वस्य-आप आकारस्य ह्रस्वः "वृद्धिरेचि" इति वृद्धिः, न तु "आटश्चेति", अत्राट एकदेशत्वेनाऽनर्थकत्वात् । ५-सर्वा-शब्दतुल्या इत्यर्थः । ६-उत्तरस्याः पूर्वस्याश्च दिशोऽन्तरालम्=उत्तरपूर्वा तस्यै 'उत्तरपूर्वस्यै ।' ७-"तीयस्य ङित्सु वा" इत्यनेन । ८-गाः पातीति गोपाः स्त्री नायं टाबन्तः किन्तु क्विबन्तः, तेन सुलोपो याट् च न । सर्वं चास्योच्चारणं पुंल्लिङ्ग-विश्वपा-शब्दवद् बोध्यम् । गोपशब्दस्य स्त्रीत्वे तु गोपी, इत्येव । ९-मति=(शस्) अस्, पूर्वसवर्णदीर्घे सस्य रुत्वविसर्गौ, स्त्रीत्वान्नत्वं न । १०-स्त्रीत्वात् 'ना, भावो न । ११-इयङुवङ्प्राप्तियोग्यौ इति भावः । १२-मति=(ङे) ए, नद्यन्तत्वादाट्, वृद्धौ यण्, **मत्यै** । नदीत्वाभावपक्षे घिसंज्ञाकार्यम्=गुणः, अय् । **मतये** ।

'औत्' इति प्राप्ते।

**२४२ इदुद्भ्याम् ७। ३। ११७॥**

नदीसंज्ञकाभ्यामिदुद्भ्यां परस्य ङेराम्। मत्याम्। मतौ[1]। शेषं हरिवत्। एवं बुद्ध्यादयः[2]।

**२४३ त्रिचतुरोः स्त्रियां तिसृ चतसृ ७। २। ९९।**

स्त्रीलिङ्गयोरेतयोरेतौ स्तो विभक्तौ।

**२४४ अचि र ऋतः ७। २। १००॥**

तिसृ-चतस्रोर्ऋतो रादेशोऽचि। गुणदीर्घोत्वानामपवादः[3]। तिस्रः[4] २। तिसृभिः। तिसृभ्यः २। आमि नुट्।

**२४५ न तिसृ-चतसृ ६। ४। ४४॥**

एतयोर्नामि दीर्घो न। तिसृणाम्। तिसृषु। द्वे[5] २। द्वाभ्याम् ३। द्वयोः २। गौरी। गौर्यौ[6]। गौर्यः। हे गौरि[7]!। गौर्यावित्यादि। एवं नद्या-

---

१-मति+ङि, नदीत्वाभावपक्षे 'घि' संज्ञायां "अच्च घेः" इति 'इ'-कारस्याऽकारः, ङेरौत्वे च "वृद्धिरेचि" इति वृद्धौ सत्याम्=मतौ।

| | | | |
|---|---|---|---|
| १ मतिः, मती, मतयः, | ५ मत्याः=मतेः, मतिभ्याम्, मतिभ्यः |
| २ मतिम्, मती, मतीः, | ६ " = " मत्योः मतीनाम्, |
| ३ मत्या, मतिभ्याम्, मतिभिः, | ७ मत्याम्=मतौ, " मतिषु, |
| ४ मत्यै=मतये, " मतिभ्यः, | सं० हे मते! इत्यादि। मतिः=बुद्धिः, |

२-(ह्रस्व) इकारान्ताः स्त्रीलिङ्गाः। ३-तिस्रः, इति जसि 'ऋतो ङि....' इति प्राप्तम् "जसि च" इति प्राप्तं वा गुणं बाधते। 'तिस्रः' इति शसि पूर्व-सवर्णदीर्घं बाधते। 'प्रियतिस्रः' इति ङसि "ऋत उत्" इति उत्वस्यापवाद-त्वादयं (र-भावः)बाधते-इत्यर्थः। ४-(त्रि) तिसृ=(जस्) अस्, ऋकारस्य रेफादेशः। शब्दोऽयं नित्यं बहुवचनान्तः। एवं (चतुर्) चतसृशब्दोऽपि बोध्यः। ५-'द्वि' शब्दो नित्यं द्विवचनान्तः। स्त्रीत्वे विभक्तौ 'त्यदादीनामः' इत्यत्वे टाप्, (द्वि) द्वा=औ, इति स्थितौ "औङ आपः" इत्यौकारस्य शीत्वे गुणः=द्वे। ६-गौरी=औ,=गौर्यौ, गौरी=अस् गौर्यः। उभयत्रापि "दीर्घाज्जसि च" इति निषेधात्पूर्वसवर्णदीर्घो न, किन्तु यण्। ७-हे गौरि! इत्यत्र "अम्बार्थनद्योर्ह्रस्वः" इति ह्रस्वः।

दयः। लक्ष्मीः[1]। शेषं गौरीवत्। एवं तरीतन्त्र्यादयः[2]। स्त्री। हे स्त्रि!।

**२४६ स्त्रियाः ६। ४। ७६॥**

अस्येयङजादौ प्रत्यये। स्त्रियौ। स्त्रियः।

**२४७ वाऽम्शसोः ६। ४। ८०॥**

अमि शसि च स्त्रियाः इयङ् वा। स्त्रियम्, स्त्रीम्। स्त्रियः। स्त्रीः। स्त्रिया। स्त्रियै। स्त्रियाः २। परत्वान्नुट्। स्त्रीणाम्[3]। स्त्रियाम्। स्त्रीषु। श्रीः। श्रियौ। श्रियः।

**२४८ नेयङुवङ्स्थानावस्त्री १। ४। ४॥**

इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तो न तु स्त्री। हे श्रीः!। श्रियै[4]। श्रिये। श्रियाः २। श्रियः २।

**२४९ वाऽऽमि १। ४। ५॥**

इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तो न तु स्त्री। श्रीणाम्[5]। श्रियाम् २। श्रियि। धेनुर्मतिवत्।

**२५० स्त्रियां च ७। १। २६॥**

स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते।

**२५१ ऋन्नेभ्यो ङीप् ४। १। ५॥**

---

१—"लक्षेर्मुट् च" इत्युणादिसूत्रेण 'ई' प्रत्ययो मुडागमश्च, अङ्यन्तत्वान्न सुलोपः।

२—अवी-तन्त्री-तरी-लक्ष्मी-धी-ह्री—श्रीणामुणादिषु।
सप्तस्त्रीलिङ्गशब्दानां न सुलोपः कदाचन॥

३—स्त्री+आम्, इत्यत्र 'स्त्रियाः' इति प्राप्तम् इयङादेशं परत्वाद् 'ह्रस्वनद्यापो नुट्' इति नुड् बाधते, **स्त्रीणाम्**। सप्तम्यां तु स्त्री=ङि, ङेरामि 'इयङ् एव, न तु नुट्, अत्र—आमो लाक्षणिकत्वात्—लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति न्यायात्। ४—'ङिति ह्रस्वश्च' इति ङित्सु (ङे ङसि ङस् ङि इत्येतेषु) वा नदीसंज्ञा। श्री+(ङे) ए। 'आण्नद्याः' इत्याट्, 'आटश्च' इति वृद्धिः, इयङ्। नच 'नेयङुवङ्स्थानावस्त्री' इति ङित्स्वपि नदीसंज्ञानिषेध इति वाच्यम्, 'हे श्रीः' इति सम्बोधने तस्य चरितार्थत्वात्, ङिति पृथग्विधानाच्च। ५—नदीत्वपक्षे नुट्।

अदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप्। क्रोष्ट्री। गौरीवत्। वधूः। शेषं नदीवत्। भ्रूः[1] श्रीवत्। स्वयम्भूः पुंवत्।

**२५२ न षट्स्वस्रादिभ्यः[2] ४। १। १०॥**

एभ्यो ङाप्टापौ न स्तः।

'स्वसा तिस्रश्चतस्रश्च ननान्दा[3] दुहिता[4] तथा।
याता[5] मातेति सप्तैते स्वस्रादय उदाहृताः॥

स्वसा। स्वसारौ। माता पितृवत्। शसि मातॄः। द्यौर्गोवत्। राः पुंवत्। नौर्ग्लौवत्। ॥ इत्यजन्ताः स्त्रीलिङ्गाः॥

# अथाजन्तनपुंसकलिङ्गाः।

**२५३ अतोऽम् ७। १। २४॥**

अतोऽङ्गात्क्लीबात् स्वमोरम्[6]। ज्ञानम्। एङ्ह्रस्वादिति सम्बुद्धिलोपः[7]। हे ज्ञान!।

**२५४ नपुंसकाच्च ७। १। १९॥**

क्लीबादौङः शी स्यात्। भसंज्ञायाम्[8]।

**२५५ यस्येति च ६। ४। १४८॥**

ईकारे तद्धिते च परे भस्येवर्णावर्णयोर्लोपः। इत्यकारलोपे प्राप्ते (औङः श्यां प्रतिषेधः[9]) ज्ञाने।

**२५६ जश्शसोः शिः ७। १। २०॥**

---

१–हे सुभ्रूः! २–षट् संज्ञकेभ्यः स्वस्रादिभ्यश्च ङीप् टापौ न स्त इति सूत्रार्थः। ३–ननान्दा, ननान्दरौ, ननान्दरः, ननान्दरम्, ननान्दरौ, ननान्दॄः। ननान्द्रा। ननान्द्रे। ननान्दुः २। ननान्द्रोः २। ननान्दरि। हे ननान्दः!। ४–दुहिता, दुहितरौ, दुहितरः। ५–याता, यातरौ, यातरः,(भ्रातृभार्याः परस्परं यातरः)। ६–अमोऽम् विधानम् "स्वमोर्नपुंसकात्" इति प्राप्तस्य लुको बाधनार्थम्। ७–मकारलोपः, लुको नित्यत्वेन सोरेव वा प्राग्लोपः। ८–"सुडनपुंसकस्य" इति नपुंसकवर्जमेव सुटः सर्वनामस्थानसंज्ञा। तेनात्र "यचि भम्" इति 'भ' संज्ञा। ९–औङ्स्थानिके शीभावेऽल्लोपो ("यस्येति च" इति प्राप्तः) न भवतीति वक्तव्यमित्यर्थः।

**५८१ लिङः सीयुट् ३ । ४ । १०२ ॥**

लिङः सलोपोऽनन्त्यस्येति सलोपः ।

**५८२ लोपो व्योर्वलि ६ । १ । ६६ ॥**

एधेत[1] । एधेयाताम्[2] ।

**५८३ झस्य रन् ३ । ४ । १०५ ॥**

लिङो झस्य रन् स्यात् । एधेरन् । एधेथाः । एधेयाथाम् । एधेध्वम् ।

**५८४ इटोऽत् ३ । ४ । १०६ ॥**

लिङादेशस्य इटोऽत् स्यात् । एधेय । एधेवहि । एधेमहि ।

**५८५ सुट् तिथोः ३ । ४ । १०७ ॥**

लिङस्तथोः सुट् । यलोपः । एधिषीष्ट । एधिषीयास्ताम् । एधिषीरन् । एधिषीष्ठाः । एधिषीयास्थाम् । एधिषीध्वम्[3] । एधिषीय । एधिषीवहि । एधिषीमहि । ऐधिष्ट[4] । ऐधिषाताम् ।

**५८६ आत्मनेपदेष्वनतः ७ । १ । ५ ॥**

अनकारात्परस्यात्मनेपदेषु झस्याऽत् स्यात् । ऐधिषत । ऐधिष्ठाः । ऐधिषाथाम् । ऐधिढ्वम् । ऐधिषि । ऐधिष्वहि । ऐधिष्महि । ऐधिष्यत । ऐधिष्येताम् । ऐधिष्यन्त । ऐधिष्यथाः । ऐधिष्येथाम् । ऐधिष्यध्वम् । ऐधिष्ये । ऐधिष्यावहि । ऐधिष्यामहि । कमु कान्तौ ।

**५८७ कमेर्णिङ् ३ । १ । ३० ॥**

स्वार्थे । कामयते ।

**५८८ अयामन्ताल्वाय्येत्न्विष्णुषु ६ । ४ । ५५ ॥**

एषु[6] णेरय् । कामयाञ्चक्रे । आयादय इति वा णिङ् । चकमे । चक-

१–'लोपो व्योर्वलि' इति यलोपः । २–सीयुटो यकारस्य लोपः । ३–एधिषीध्वम्, अत्र 'ध्वम्' इत्यस्य इणः परत्वेऽपि, अङ्गस्य–इणन्तत्वाभावात् 'इणः षीध्वंलुङ्....' इति ढत्वं न । 'ऐधिढ्वम्' इत्यत्र तु सिज्विशिष्टस्याऽङ्गसंज्ञा, सिजवयव इट् इति–अङ्गान्तर्भूतत्वेन ('धि च' इति सकारलोपे) इणन्ताङ्गत्वेन भवति ढत्वम् । ४–एध+(लुङ्) त, च्लेः सिच्, इट्, आट्, वृद्धिश्च । षत्वं ष्टुत्वम् ऐधिष्ट । ५–इच्छायामित्यर्थः । ६–आम्, अन्त, आलु, आय्य, इत्नु, इष्णु, इत्येषु णेरयोदशः स्यात् ।

माते । चकमिरे । चकमिषे । चकमाथे । चकमिध्वे । चकमे । चकमिवहे । चकमिमहे । कामयिता, कमिता । कामयिष्यते, कमिष्यते । कामयताम् । अकामयत । कामयेत । कामयिषीष्ट[1] । कमिषीष्ट ।

**५८९ णि-श्रि-द्रु-स्रुभ्यः कर्तरि चङ् ३ । १ । ४८ ॥**

ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ् कर्त्रर्थे लुङि । अकाम् इ अ त इति स्थिते ।

**५९० णेरनिटि ६ । ४ । ५१ ॥**

अनिडादावार्धधातुके परे णेर्लोपः ।

**५९१ णौ चङ्युपधाया ह्रस्वः ७ । ४ । १ ॥**

चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः । चङीति द्वित्वम् ।

**५९२ सन्वल्लघुनि चङ्परेऽनग्लोपे ७ । ४ । ९३ ॥**

चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्य सनीव कार्यं स्याण्णौ[3]-अग्लोपेऽसति ।

**५९३ सन्यतः ७ । ४ । ७९ ॥**

अभ्यासस्यात इत्सनि ।

**५९४ दीर्घो लघोः ७ । ४ । ९४ ॥**

लघोरभ्यासस्य दीर्घः सन्वद्भावविषये । अचीकमत । णिङभावपक्षे । (कमेश्च्लेश्चङ् वाच्यः) । अचकमत[4] । अकामयिष्यत, अकमिष्यत । **भाम** क्रोधे । भामते । बभामे[5] । **क्षमूष्** सहने । क्षमते । चक्षमे । चक्षमिषे, चक्षंसे । चक्षमिवहे । चक्षमिमहे ।

**५९५ म्वोश्च ८ । २ । ६५ ॥**

---

१–कामयिषीयास्ताम्, कामयिषीरन्, इत्यादि । २–'निरनुबन्ध-ग्रहणे सामान्यग्रहणम्' इति न्यायात् णेरिति णिङ्-णिचोरुभयोरपि ग्रहणम् । ३–णौ-अग्लोपो (णिज्निमित्तकोऽक्प्रत्याहारघटितवर्णलोपः) यदि न भूतः स्याद् इत्यर्थः । सति–अग्लोपे दीर्घसन्वद्भावौ न भवतः । यथा–अचकथत्, अजहलत्, इत्यादि । ४–'चङि' इति द्वित्वम् । अत्र णेरभावात् सन्वद्भावो न, तेन–इत्वं दीर्घश्चापि न । ५–भामिता । लुङि–अभामिष्ट, अभामि-

मान्तस्य धातोर्मस्य नः स्यान्म्वोः परयोः। चक्षणवहे। चक्षणमहे[1]। **गाधृ** प्रतिष्ठालिप्सयोर्ग्रन्थे च[2]। गाधते[3]। **बाधृ** लोडने। लोडनं=प्रतिघातः बाधते[4]। **नाथृ नाधृ** याच्ञोपतापैश्वर्याशीःषु[5]। (आशिषि नाथ इति वाच्यम्)। अस्याशिष्येवात्मनेपदं स्यात्। नाथते। अन्यत्र-नाथति। **दध** धारणे। दधते। **स्कुदि** आप्रवणे। आप्रवणमुत्प्लवनमुद्धरणं च। स्कुन्दते[6]। चुस्कुन्दे। **श्विदि** श्वैत्ये। श्विन्दते। शिश्विन्दे। **वदि** अभिवादनस्तुत्योः। वन्दते। ववन्दे[7]। **भदि** कल्याणे सुखे च। भन्दते बभन्दे **मदि** स्तुति-मोद-मद-स्वप्न-कान्ति-गतिषु। मन्दते। **स्पदि** किंचिच्चलने। स्पन्दते। पस्पन्दे[8]। **मुद** हर्षे। मोदते। मुमुदे[9]। **ऊर्द** माने क्रीडायां च। ऊर्दते। ऊर्दाञ्चक्रे[10]। **कुर्द खुर्द गुर्द गुद** क्रीडायामेव। कूर्दते[11]। खूर्दते। गूर्दते। गोदते। जुगुदे। **षूद** क्षरणे। सूदते। सुषूदे। **ह्राद** अव्यक्ते शब्दे। ह्रादते। जह्रादे। **ह्लादी** सुखे च। चादव्यक्ते शब्दे। ह्लादते। **स्वाद** आस्वादे। स्वादते। **पर्द** कुत्सिते शब्दे। गुदरव इत्यर्थः। पर्दते। पपर्दे। **यती** प्रयत्ने। यतते। येते[12]। **श्रथि** शैथिल्ये। श्रन्थते। **ग्रथि** कौटिल्ये। ग्रन्थते[13]। **कत्थ** श्लाघायाम्। कत्थते। चकत्थे। **श्लोकृ** सङ्घाते। सङ्घातो ग्रन्थः। स चेह ग्रथ्यमानस्य व्यापारो ग्रन्थितुर्वा। आद्येऽकर्मको द्वितीये सकर्मकः। श्लोकते। शुश्लोके। **शकि** शङ्कायाम्। शङ्कते। शशङ्के। **अकि** लक्षणे। अङ्कते। आनङ्के[14]। **ककि वकि श्वकि त्रकि ढौकृ त्रौकृ ष्वष्क वस्क मस्क टिकृ टीकृ तिकृ तीकृ रघि लघि** गत्यर्थाः। कङ्कते। वङ्कते। श्वङ्कते। त्रङ्कते। ढौकते। डुढौके[15]। त्रौकते।

---

१—क्षमिता, क्षन्ता। लुङि—अक्षमिष्ट, अक्षंस्त। २—प्रतिष्ठा=आधारे स्थितिः। ३—जगाधे। गाधिता। अगाधिष्ट। ४—बबाधे। बाधिता। अबाधिष्ट। ५—याच्ञोपातापैश्वर्याशीष्वर्थेषु। ६—'इदितो नुम् धातोः' इति नुम्। ७—वन्दिता। अवन्दिष्ट। ८—'शर्पूर्वाः खयः'। ९—मोदिता। अमोदिष्ट। १०—एवग्रहणेन धातूनामनेकार्थत्वं ज्ञाप्यते। ११—चुकूर्दे। कूर्दिता। अकूर्दिष्ट। 'उपधायाञ्चे' ति दीर्घः। १२—यतिता। अयतिष्ट। १३—जग्रन्थे। ग्रन्थिता। अग्रन्थिष्ट। १४—'तस्मान्नुड् द्विहलः' इति नुट्। १५-'एच इग्घ्रस्वादेशे' इति-अभ्यासे ह्रस्व उः।

तुत्रौके । (सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधः) । ष्वष्कते । षष्वष्के । वस्कते । ववस्के । मस्कते । ममस्के । टेकते । टीकते । तेकते । तीकते । रङ्घते । लङ्घते । **श्लाघृ** कत्थने[1] । श्लाघते । **पाचि** व्यक्तीकरणे । पञ्चते । पपञ्चे । **ऋज** गतिस्थानार्जनोपार्जनेषु । अर्जते । (नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्यते) । आनृजे[2] । **ऋजि भृजी** भर्जने । ऋञ्जाञ्चक्रे । भर्जते । **एजृ भ्रेजृ भ्राजृ** दीप्तौ । एजते । एजाञ्चक्रे । भ्रेजते । बिभ्रेजे । भ्राजते । बभ्राजे । **वेष्ट** वेष्टने । वेष्टते । विवेष्टे । **चेष्ट** चेष्टायाम् । चेष्टते । चिचेष्टे[3] । **स्फुट** विकसने । स्फोटते । पुस्फुटे । **टुवेपृ** कम्पने । वेपते । **कपि** चलने । कम्पते[4] । **भिक्ष** भिक्षायामलाभे लाभे च । भिक्षते । बिभिक्षे । **दीक्ष** मौण्ड्येज्योपनयन-नियम-व्रतोदेशेषु । दीक्षते । दिदीक्षे । **भाष** व्यक्तायां वाचि । भाषते । बभाषे । **वर्ष** स्नेहने । वर्षते । ववर्षे । **ईह** चेष्टायाम् । ईहते । ईहाञ्चक्रे । **गर्ह गल्ह** कुत्सायाम् । गर्हते । गल्हते **काशृ** दीप्तौ । काशते । **ऊह** वितर्के । ऊहते । ऊहाञ्चक्रे । कथम्- 'अनुक्रमप्यूहति पण्डितो जनः' इति । (अनुदात्तत्वलक्षणमात्मनेपदम-नित्यम्) । अनुदात्तेतश्चक्षिङो ङित्करणाज्ज्ञापकात्[5] । तेन-'उदयति यदि भानुः'[6] । 'स्फायन्निर्मोकसंधिः'[7] इत्यादि सिद्धमित्याहुः । **अय** गतौ । अयते ।

**५९६ उपसर्गस्यायतौ ८ । २ । १९ ॥**

अयतावुपसर्गरेफस्य लत्वम् । प्लायते[8] । पलायते[9] ।

**५९७ दयायासश्च ३ । १ । ३७ ॥**

दय अय आस् एभ्य आम्लिटि । अयाञ्चक्रे । अयिता । अयिष्यते । अयताम् । आयत । अयेत । अयिषीष्ट ।

**५९८ विभाषेटः ८ । ३ । ७९ ॥**

---

१-कत्थनम्=आत्मप्रशंसा । २-तेन द्विहल्त्वान्नुट् । ३-चेष्टिता । अचेष्टिष्ट । ४-चकम्पे । कम्पिता । अकम्पिष्ट । ५-चक्षिङोऽनुदात्तेत्वेनैवाऽऽत्मनेपदे सिद्धे ङित्करणं व्यर्थं सज् ज्ञापयति-'अनुदात्तत्वलक्षणमात्मने-पदमनित्यम् इति । ६-उत्पूर्वस्य 'अय्' धातोः परस्मैपदे-'उदयति' इति रूपम् । ७-स्फायी वृद्धौ-इत्यनुदात्तेतोधातोर्लटः शत्रादेशे स्फायन्निति रूपम् । ८-'प्र' उपसर्गः । ९-'परा' उपसर्गः ।

इणः परो य इट् ततः परेषां षीध्वं-लुङ्-लिटां धस्य वा ढः। अयिषीढ्वम्, अयिषीध्वम्। आयिष्ट। आयिढ्वम्। आयिध्वम्। आयिष्यत। **द्युत** दीप्तौ। द्योतते।

**५९९ द्युतिस्वाप्योः संप्रसारणम् ७। ४। ६७॥**

अभ्यासस्य। दिद्युते। द्योतिता। द्योतिष्यते। द्योतताम्। अद्योतत। द्योतेत। द्योतिषीष्ट।

**६०० द्युद्भ्यो लुङि १। ३। ९१॥**

द्युतादिभ्यः परस्मैपदं वा लुङि। पुषादीत्यङ्। अद्युतत्, अद्योतिष्ट। अद्योतिष्यत। एवं **श्विता** वर्णे। **ञिमिदा** स्नेहने। **ञिष्विदा** स्नेहनमोचनयोः। मोहनयोरित्येके। **रुच** दीप्तावभिप्रीतौ च। **घुट** परिवर्तने। **शुभ** दीप्तौ। **क्षुभ** संचलने। **णभ तुभ** हिंसायाम्। **स्रंसु ध्वंसु भ्रंसु** अवस्रंसने। **ध्वंसु** गतौ च। **स्रम्भु** विश्वासे। **वृतु** वर्तने। वर्तते। (ऋदुपधेभ्यो लिटः कित्वं गुणात्पूर्वविप्रतिषेधेन) ववृते। वर्तिता।

**६०१ वृद्भ्यः स्य-सनोः १। ३। ९२॥**

वृतादिभ्यः पञ्चभ्यो वा परस्मैपदं स्ये सनि च।

**६०२ न वृद्भ्यश्चतुर्भ्यः ७। २। ५९॥**

वृत्-वृध्-शृध्-स्यन्दूभ्यः सादेरार्धधातुकस्येण्न तङानयोरभावे। वर्त्स्य-

---

१—वा ढत्वम्। २-दिद्युताते, दिद्युतिरे-इत्यादि। द्योतिता। द्योतिष्यते। द्योतताम्। अद्योतत। द्योतेत। द्योतिषीष्ट। ३—श्वेतते। शिश्विते। श्वेतिता। श्वेतिष्यते। श्वेतताम्। अश्वेतत। श्वेतेत। श्वेतिषीष्ट। अश्वेतिष्ट, अश्वितत्। अश्वेतिष्यत। ४—मेदते। मिमिदे। (लुङि) अमिदत्, अमेदिष्ट। स्वेदते। सिष्विदे। (लुङि) अस्विदत्, अस्वेदिष्ट। ५—क्ष्वेदते। चिक्ष्विदे। इत्यादि। ६—रोचते। रुरुचे। (लुङि) अरुचत्, अरोचिष्ट। एवं घोटते। जुघुटे। अघुटत्, अघोटिष्ट, एवं लुङि सर्वत्र रूपद्वयम्। शोभते शुशुभे। क्षोभते, चुक्षुभे। नभते, नेभे। तोभते, तुतुभे। स्रंसते, सस्रंसे। भ्रंसते। बभ्रंसे। ध्वंसते, दध्वंसे। स्रम्भते, सस्रम्भे। एषां लुङि परस्मैपदेऽङि 'अनिदिताम्' इति नकारलोपः। अस्रसत्। अभ्रसत्, अध्वसत्। अस्रभत्। विपूर्वकः स्रम्भधातुर्विश्वासे प्रयुज्यते। ७—यत्र तङ् आनश्च (आत्मनेपदं) न स्यात्। अर्थात् परस्मैपदादिकं स्यात्।

ति, वर्तिष्यते । वर्तताम् । अवर्तत । वर्तेत । वर्तिषीष्ट । अवृतत्, अवर्तिष्ट[1] । अवर्त्स्यत्, अवर्तिष्यत । एवं **वृधु** वृद्धौ । **शृधु** शब्दकुत्सायाम् । **स्यन्दू** प्रस्रवणे । स्यन्दते । सस्यन्दे । सस्यन्दिषे, सस्यन्त्से । सस्यन्दिध्वे, सस्यन्ध्वे । स्यन्दिता, स्यन्ता । वृद्भ्यः स्यसनोरिति परस्मैपदे कृते ऊदित्लक्षणमन्तरङ्गमपि विकल्पं बाधित्वा चतुर्ग्रहणसामर्थ्यान्न वृद्भ्य इति निषेधः । स्यन्त्स्यति, स्यन्दिष्यते, स्यन्त्स्यते । स्यन्देत । स्यन्दिषीष्ट, स्यन्त्सीष्ट । द्युद्भ्यो लुङीति परस्मैपदपक्षेऽङ् । नलोपः[2] । अस्यदत्, अस्यन्दिष्ट, अस्यन्त । अस्यन्त्साताम् । अस्यन्त्सत । अस्यन्त्स्यत्, अस्यन्दिष्यत, अस्यन्त्स्यत ।

**६०३ अनु-वि-पर्यभि-निभ्यः स्यन्दतेरप्राणिषु ८ । ३ । ७२ ॥**

एभ्यः परस्याप्राणिकर्तृकस्य स्यन्दतेः सस्य षो वा । अनुष्यन्दते, अनुस्यन्दते वा जलम् । अप्राणिषु किम्-अनुस्यन्दते हस्ती । **कृपू** सामर्थ्ये ।

**६०४ कृपो रो लः ८ । २ । १८ ॥**

कृपः उ इति छेदः । कृपे रेफस्य लः । कृपेर्ऋकारस्यावयवो यो रेफसदृशस्तस्य च लकारसदृशः स्यात् । कल्पते । चक्लृपिषे, चक्लृप्से[3] । इत्यादि स्यन्दिवत् ।

**६०५ लुटि च क्लृपः १ । ३ । ९३ ॥**

लुटि स्यसनोश्च क्लृपेः परस्मैपदं वा ।

**६०६ तासि च क्लृपः ७ । २ । ६० ॥**

क्लृपेः परस्य तासेः सादेरार्धधातुकस्येण्न तङानयोरभावे । कल्प्तासि, कल्पितासे, कल्प्तासे । कल्प्स्यति, कल्पिष्यते, कल्प्स्यते । कल्पिषीष्ट ।

**६०७ लिङ्सिचावात्मनेपदेषु १ । २ । ११ ॥**

इक्समीपाद्धलः परौ झलादी लिङात्मनेपदपरः सिचश्चेत्येतौ कितौ स्तः[4] । क्लृप्सीष्ट । अक्लृपत्, अकल्पिष्ट, अक्लृप्त । अकल्प्स्यत्, अकल्पिष्यत, अकल्प्स्यत । इति द्युतादयः । **दद** दाने । ददते । दददे[5] । दददाते ।

---

१-'कृपू' धातुपर्यन्तोऽयं द्युतादिगणः, तेन पक्षे अवृतत् । २-'अनिदिताम्....' इत्यादिना । ३-ऊदित्वाद् वेट् । ४-तेन न गुणः । ५-'न शसददवादिगुणानाम्' इति-एत्वाभ्यासलोपयोर्निषेधः ।

ददतिरे। ददिता। ददिष्यते। ददताम्। अददत। ददेत। ददिषीष्ट। अददिष्ट। अददिष्यत। **त्रपूष्** लज्जायाम्। त्रपते।

**६०८ तॄ-फल-भज-त्रपश्च ६।४।१२२॥**

एषामत एत्वमभ्यासलोपश्च किति लिटि सेटि थलि च। त्रेपे। त्रपिता, त्रप्ता[1]। त्रपिष्यते, त्रप्स्यते। त्रपताम्। त्रपेत। त्रपिषीष्ट, त्रप्सीष्ट, अत्रपिष्ट, अत्रप्त[2]। अत्रपिष्यत। अत्रप्स्यत। **घट** चेष्टायाम्। घटते। जघटे। **व्यथ** भयसंचलनयोः।

**व्यथो लिटि ७।४।६८॥**

व्यथेरभ्यासस्य संप्रसारणं स्याल्लिटि। हलादिः शेषापवादः। विव्यथे। **प्रथ** प्रख्याने। प्रथते। पप्रथे। **प्रस** विस्तारे। प्रसते। **म्रद्** मर्दने। **स्खद्** स्खदने। स्खदनं=विद्रावणम्। स्खदते। **क्रप** कृपायां गतौ च। क्रपते। **ञित्वरा** संभ्रमे। त्वरते[3]। **टुभ्राजृ टुभ्राशृ टुभ्लाशृ** दीप्तौ। भ्राजते।

**६०९ फणां च सप्तानाम् ६।४।१२५॥**

फण, राजृ, भ्राजृ, भ्राशृ, भ्लाशृ, स्यमु, स्वन, एषां वा एत्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च। भ्रेजे। बभ्राजे। वा भ्राशेति श्यन्वा। भ्राश्यते, भ्राशते। भ्रेशे। बभ्लाशे। भ्लाश्यते। भ्लेशे। **रमु** क्रीडायाम्। रमते। रेमे[4]। रन्ता। **जभी जृभि** गात्रविनामे।

**६१० रधिजभोरचि ७।१।६१॥**

नुम्। जम्भते। जजम्भे। जृम्भते। जजृम्भे। इत्यात्मनेपदिनः।

~~**अथोभयपदिनः**~~।

**श्रिञ्** सेवायाम्। श्रयति। श्रयते। शिश्राय[5], शिश्रिये। श्रयितासि, श्रयितासे। श्रयिष्यति, श्रयिष्यते। श्रयतु, श्रयताम्। अश्रयत्, अश्रयत। श्रयेत्, श्रयेत। श्रीयात्[6], श्रयिषीष्ट। अशिश्रियत्[7], अशिश्रि-

---

१—ऊदित्वाद् वेट्। इडभावपक्षे रूपम्। २—'झलो झलि' इति सलोपः। ३—तत्वरे। त्वरिता। अत्वरिष्ट। ४—रेमाते, रेमिरे। लुङि—अरंस्त, अरंसाताम्, अरंसत। अरंस्थाः, अरंसाथाम्, अरन्ध्वम्। अरंसि, अरंस्वहि, अरंस्महि। ५—शिश्रियतुः, शिश्रियुः। शिश्रयिथ, शिश्रियथुः, इत्यादि। ६—अकृत् सार्वधातु···इति दीर्घः। ७—"णिश्रिद्रुस्रुभ्य कर्तरि···" इति चङ्, द्वित्वम्, इयङ्।

यत। अश्रयिष्यत्, अश्रयिष्यत। भृञ् भरणे। भरति, भरते। बभार। बभ्रतुः। बभ्रुः। बभर्थ। बभृम। बभ्रे। बभृषे। भर्तासि, भर्तासे। भरिष्यति, भरिष्यते। भरतु, भरताम्। अभरत्, अभरत। भरेत्, भरेत। भ्रियात्। 

**६११ उश्च १। २। १२॥**

ऋवर्णात्परौ झलादी लिङात्मनेपदपरः सिचेत्येतौ कितौ स्तः। भृषीष्ट। भृषीयास्ताम्। अभार्षीत्।

**६१२ ह्रस्वादङ्गात् ८। २। २७॥**

सिचो लोपो झलि। अभृत। अभरिष्यत्, अभरिष्यत। हृञ् हरणे हरति, हरते। जहार। जह्रतुः। जह्रुः। जहर्थ। जह्रिव। जह्रिम। जह्रे जह्रिषे। हर्तासि, हर्तासे। हरिष्यति, हरिष्यते। धृञ् धारणे। धरति, धरते। णीञ् प्रापणे। नयति, नयते। डुपचष् पाके। पचति। पचते। पपाच। पेचिथ, पपक्थ। पेचे। पक्ता। पक्ष्यति, पक्ष्यते। भज सेवायाम्। भजति, भजते। भेजे। भक्तासि। भक्ष्यति, भक्ष्यते। भजतु, भजताम्। अभाक्षीत्, अभक्त। अभक्षाताम्। यज देवपूजा-सङ्गतिकरण-दानेषु। यजति, यजते।

**६१३ लिट्यभ्यासस्योभयेषाम् ६। १। १७॥**

वच्यादीनां ग्रह्यादीनां चाभ्यासस्य संप्रसारणं स्याल्लिटि। इयाज।

---

१-थालि "कृसृभृ…" इतीड्निषेधः। २-ऋद्धनोः स्ये" इति 'इट्।' ३-"अकृत् सार्व…" इति दीर्घः प्राप्तः, 'रिङ्' इति ह्रस्वविधानसामर्थ्यान्न भवति। ४-तेन न गुणः। ५-"सिचि वृद्धिः" इति वृद्धिः। अभार्ष्टाम्, अभार्षुः। इत्यादि। ६-दधार। अधृत, अधार्षीत्। ७-लिटि-निनाय निन्यतुः, निन्युः। निनयिथ। निन्ये। निन्याते निन्यिरे। अनैषीत्, अनेष्ट, अनेषाताम्। ८-पक्ष्यति, पक्ष्यते। लुङि-अपाक्षीत्, अपाक्ताम्, अपाक्षुः। आत्मनेपदे-अपक्त, अपक्षाताम्, अपक्षत। इत्यादि। ९-भज्+स्यति। "चोः कुः" इति गः" "खरि च" इति कः। ककारात्परस्य सस्य षत्वम्। कषसंयोगे क्षः। एवमग्रेऽपि। (लुङि) अभक्ष्यत। १०-ययज्+अ, (अभ्यासस्य) सम्प्रसारणम्, पूर्वरूपम्, उपधावृद्धिः।

**६१४ वचि-स्वपि-यजादीनां किति ६ । १ । १५ ॥**

वचि-स्वप्योर्यजादीनां च संप्रसारणं किति ।

यजिर्वपिर्वहिश्चैव वसिर्वेञ् व्येञ् च इत्यपि ।
ह्वेञ्वदी श्वयतिश्चैव यजाद्याः स्युरिमे नव ॥ १ ॥

ईजतुः[1] । ईजुः । इयजिथ, इयष्ठ[2] । ईजे । यष्टा । यक्ष्यति । यक्ष्यते[3] । यजतु । यजताम् । अयजत् । अयजत । यजेत् । यजेत । इज्यात् । यक्षीष्ट । अयाक्षीत्[4] । अयष्ट । अयक्ष्यत् । अयक्ष्यत । **वह** प्रापणे । वहति । वहते । उवाह[5] । ऊहतुः । ऊहुः । उवहिथ । 'झषस्तथोर्धोऽधः' ।

**६१५ ढो ढे[6] लोपः ८ । ३ । १३ ॥**

**६१६ सहिवहोरोदवर्णस्य[7] ६ । ३ । ११२ ॥**

ढलोपे । उवोढ[8] । ऊहे । वोढा । वक्ष्यति[9] । वक्ष्यते । वहतु । उह्यात् । वक्षीष्ट । अवाक्षीत् । अवोढाम् । अवाक्षुः । अवाक्षीः । अवोढम् । अवोढ । अवाक्षम् । अवाक्ष्व । अवाक्ष्म । अवोढ । अवक्षाताम् । अवक्षत । अवोढाः । अवक्षाथाम् । अवोढ्वम् । अवक्षि । अवक्ष्वहि । अवक्ष्महि । **टुवप्** बीजसन्ताने । बीजसन्तानं=क्षेत्रे विकिरणं गर्भाधानं च । अयं छेदनेऽपि । केशान्वपति । वपते । उवाप । ऊपे । वप्ता । वप्स्यति ।

---

१–ययज्+अतुस् । अभ्यासयकारस्य पूर्वेण सम्प्रसारणम् । उत्तरखण्डस्थस्य च ( यकारस्य ) "वचिस्वपि....." इति सम्प्रसारणम् । उभयत्रापि–अकारस्य "सम्प्रसारणाच्च" इति पूर्वरूपम् । सवर्णदीर्घः । ईजतुः । २–इडभावपक्षे रूपमिदम् । ययज्+थ (ल्), अभ्यासस्य सम्प्रसारणम् । "व्रश्चभ्रस्जसृज ..." इति जकारस्य षत्वम् । ततः ष्टुत्वम् । ३–षस्य कत्वम्, कषसंयोगे क्षः । ४–अयाक्षीत्, अयाष्टाम्, अयाक्षुः, वदव्रजेति वृद्धिः । ५–उवाह, ऊहतुः, इत्यादि, इयाज, ईजतुः-इत्यादिवत् । ६–ढस्य ढे परे लोप इत्यर्थः । ७–अनयोरवर्णस्य 'ओत्' स्याद् ढलोपे सति–इति सूत्रार्थः । ८–उवह्+थ (ल्), थस्य धत्वे हस्य "हो ढः" इति ढत्वम्, ष्टुत्वेन धस्यापि ढत्वम्, शेषं मूले स्पष्टम् । ९–ढस्य "षढोः कः सि" इति कत्वम् । सस्य षत्वम् । क्षः ।

वप्स्यते । उप्यात् । वप्सीष्ट । प्रा[1]यवाप्सीत् । अवप्[2]त । वेञ् तन्तुसन्ताने । वयति । वयते ।

**६१७ वेञो वयिः २ । ४ । ४१ ॥**

वा स्यात् लिटि । इकार उच्चारणार्थः । उवाय ।

**६१८ ग्रहि-ज्या-वयि-व्यधि-वष्टि-विचति-वृश्चति-पृच्छति-भृज्जतीनां ङिति च ६ । १ । १६ ॥**

चात्किति संप्रसारणम् । इति यस्य प्राप्ते ।

**६१९ लिटि वयो यः ६ । १ । ३८ ॥**

वयो यस्य संप्रसारणं न स्याल्लिटि । ऊयतुः । ऊयुः ।

**६२० वश्चास्यान्यतरस्यां किति ६ । १ । ३९ ॥**

वयो यस्य वो वा स्यात्किति लिटि । ऊवतुः । ऊवुः । वयस्तासावभावात्थलि नित्यमिट् । उवयिथ । स्थानिवत्त्वेन ञित्वात् तङ् । ऊये । ऊवे । वयादेशाभावे ।

**६२१ वेञः ६ । १ । ४० ॥**

संप्रसारणं न स्यात् लिटि । ववौ । ववतुः । ववुः । वविथ, ववाथ । ववे । ववाते । वविरे । वाता । ऊयात् । वासीष्ट । अवासीत् । अवासिष्टाम् । अवासिषुः । व्येञ् संवरणे । व्ययति । व्ययते ।

**६२२ न व्यो लिटि ६ । १ । ४६ ॥**

आत्वं न । परमपि हलादिःशेषं बाधित्वा यस्य संप्रसारणम् । उभयेषां ग्रहणसामर्थ्यात् । अन्यथा वच्यादीनां ग्रह्यादीनां चानुवृत्त्यैव सिद्धे किं तेन । विव्याय । विव्यतुः । विव्युः ।

**६२३ इडत्त्यर्तिव्ययतीनाम् ७ । २ । ६६ ॥**

अद् ऋ व्येञ् एभ्यस्थलो नित्यमिट् । विव्ययिथ । विव्यथुः । विव्य । विव्याय, विव्यय । विव्यिय । विव्यिम । विव्ये । व्याता । व्यास्यति । वीया[3]त् । व्यासीष्ट । अव्यासीत् । अव्यास्त । ह्वेञ् स्पर्धायां शब्दे च ।

---

१-"नेर्गदणद···" इति णत्वम्, अवाप्ताम्, अवाप्सुः । इत्यादि । २-"झलो झलि" इति सिचो लोपः । अवप्साताम्, अवप्सत । ३-यजादित्वात्सम्प्रसारणे 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घः ।

ह्वयति । ह्वयते ।

**६२४ अभ्यस्तस्य च ६ । १ । ३३ ॥**

अभ्यस्तीभविष्यतो ह्वेञः संप्रसारणम् । जुहाव । जुहुवे । ह्वाता । ह्वास्यति । ह्वास्यते ।

**६२५ लिपिसिचिह्वश्च ३ । १ । ५३ ॥**

च्लेरङ् ।

**६२६ आत्मनेपदेष्वन्यतरस्याम् ३ । १ । ५४ ॥**

अह्वत् । अह्वत् । अह्वताम् । अह्वत, अह्वास्त । **राजृ** दीप्तौ । राजति । राजते । रराज । रेजतुः, रराजतुः । रेजुः, रराजुः । रेजे, रराजे । **ट्विक्क** अव्यक्ते शब्दे । ट्विक्कति । ट्विक्कते । **अञ्चु** गतौ पूजने च । अञ्चति । अञ्चते । अच इत्येके । अचीत्यपरे । **टुयाचृ** याच्ञायाम् । याचति । याचते । **बुधिर्** बोधने । बोधति । बोधते । अबुधत् , अबोधीत् । अबोधिष्ट । **खनु** अवदारणे । खनति । खनते । चखान । चख्नतुः । चख्नुः । चख्ने । खायात् , खन्यात् । **चीवृ** आदानसंवरणयोः । चीवते । चीवति । **चायृ** पूजानिशामनयोः । चायति । चायते । **व्यय** गतौ । व्ययति । व्ययते । **दाशृ** दाने । दाशति । दाशते । **भेषृ** भये । गतावित्येके । भेषति । भेषते । **अस** गतिदीप्त्यादानेषु । असति । असते । आस । आसे । अयं षान्तोऽपि । **स्पश** बाधनस्पर्शनयोः । स्पर्शनं=ग्रन्थनम् । स्पशति । स्पशते । **लष** कान्तौ । लष्यति, लषति । लषते, लष्यते । **चष** भक्षणे । चषति । चषते । **झष** आदानसंवरणयोः । झषति । झषते । **दासृ** दाने । दासति । दासते । **धावु** गतिशुद्ध्योः । धावति । धावते । इत्युभयपदिनः ।

इति भ्वादिः ।

---

१–'फणाञ्च सप्तानाम्' इति—एत्वाभ्यासलोपौ । २–याचिता । अयाचीत्, अयाचिष्टाम्, अयाचिषुः । आत्मनेपदे–अयाचिष्ट, अयाचिषाताम्, अयाचिषत । इत्यादि । ३–'इरितो वा' वैकल्पिकोऽङ् । ४–'गमहन...' इति-उपधालोपः । ५–'ये विभाषा' इति विकल्पेन नस्यात्वम् । लुङि—अखानीत्, अखनीत् । आत्मनेपदे—अखनिष्ट । इत्यादि । ६–'वा भ्रमु...' इति वैकल्पिकः श्यन् । ७–अधावीत्, अधाविष्टाम्, अधाविषुः । आत्मनेपदे—अधाविष्ट, अधाविषाताम्, अधाविषत । ॥ इति भ्वादयः ॥

# अथादादिगणः ॥२॥

**६२७ ऋतेरीयङ् ३ । १ । २९ ॥**

स्वार्थे । **ऋतिः** सौत्रः । जुगुप्सायामिति बहवः । कृपायां चेत्येके । ऋतीयते । ऋतीयाञ्चक्रे[1] । आयादय इति ईयङभावपक्षे । शेषात्कर्तरीति परस्मैपदम् । आनर्त । अर्तिता । अर्तिष्यतीत्यादि । **अद भक्षणे ।**

**६२८ अदिप्रभृतिभ्यः शपः २ । ४ । ७२ ॥**

लुक् स्यात् । अत्ति । अत्तः । अदन्ति । अत्सि । अत्थः । अत्थ । अद्मि । अद्वः । अद्मः ।

**६२९ लिट्यन्यतरस्याम् २ । ४ । ४० ॥**

अदो घस्लृ वा स्यात् । जघास । उपधालोपः[2] । घस्य चर्त्वे ।

**६३० शासि-वसि-घसीनां च ८ । ३ । ६० ॥**

इण्कुभ्यामेषां सस्य षः । जक्षतुः[3] । जक्षुः । जघसिथ[4] । आद । आदतुः । आदुः । आदिथ[5] । अत्ता । अत्स्यति । अत्तु, अत्तात् । अत्ताम् । अदन्तु ।

**६३१ हु-झल्भ्यो हेर्धिः ६ । ४ । १०१ ॥**

होर्झलन्तेभ्यश्च हेर्धिः स्यात् । अद्धि, अत्तात् । अत्तम् । अत्त । अदानि । अदाव । अदाम ।

**६३२ अदः सर्वेषाम् ७ । ३ । १०० ॥**

अदः परस्यापृक्तस्य सार्वधातुकस्याऽट् स्यात् । आदत् । आत्ताम् । आदन् । आदः । आत्तम् । आत्त । आदम् । आद्व । आद्म । अद्यात् ।

१–लङि आर्तीयत, आर्तीयेताम्, आर्तीयन्त । लिङि—ऋतीयेत । ऋतीयिषीष्ट । आर्तीयिष्ट । आर्तीयिष्यत । आर्धधातुकेषु—ईयङभावपक्षे शेषात्कर्त्तरि परस्मैपदम् । आनर्त । अर्तिता । अर्तिष्यति । ऋत्यात् । आर्तीत् । आर्तिष्यत् । २-(जघस्+अतुस्, इत्यत्र) 'गमहन...' इति सूत्रेण उपधालोपः । ३–सस्य षत्वे घस्य चर्त्वम् । कषसंयोगे क्षः । ४–'घस' इत्यस्य तासि प्रयोगाभावात् 'अचस्तास्वत्थल्यनिटो नित्यम्' इति निषेधाभावेन क्रादिनियमात् (क्राद्यन्यो लिटि सेट् भवेदित्युक्तेः) नित्यमिट् । ५–'घस्लृ' आदेशाभावपक्षे रूपाणि । ६–'इडत्यर्ति...' इति नित्यमिट् ।

अयाताम् । अयुः । अयात् । अयास्ताम् । अयासुः ।

**६३३ लुङ्सनोर्घस्लृ २ । ४ । ३७ ॥**

अदो घस्लृ स्याद् लुङि सनि च । लृदित्वादङ् । अघसत् । आत्स्यत् ।

**हन** हिंसागत्योः । हन्ति ।

**६३४ अनुदात्तोपदेश-वनति-तनोत्यादीनामनुनासिक-लोपो झलि क्ङिति ६ । ४ । ३७ ॥**

अनुनासिकान्तानामेषां लोपः । यमि–रमि–नमि–गमि–हनि–मन्यतयो ऽनुदात्तोपदेशाः । तनु–षणु–क्षणु–क्षिणु–ऋणु–तृणु–घृणु–वनु–मनु–तनोत्यादयः । हतः । घ्नन्ति । हंसि । हथः । हथ । हन्मि । हन्वः । हन्मः ।

**६३५ वमोर्वा ८ । ४ । २३ ॥**

उपसर्गस्थान्निमित्ताद्धन्तेर्नस्य णो वा । प्रहण्मि, प्रहन्मि । प्रहण्वः, प्रहन्वः । प्रहण्मः, प्रहन्मः । जघान[1] । जघ्नतुः[2] । जघ्नुः ।

**६३६ अभ्यासाच्च ७ । ३ । ५५ ॥**

हन्तेर्हस्य कुत्वं स्यात् । जघनिथ, जघन्थ । जघ्नथुः । जघ्न । जघान, जघन । जघ्निव । जघ्निम । हन्ता । हनिष्यति[3] । हन्तु, हतात् । हताम् । घ्नन्तु ।

**६३७ हन्तेर्जः ६ । ४ । ३६ ॥**

हौ ।

**६३८ असिद्धवदत्राभात् ६ । ४ । २२ ॥**

इत ऊर्ध्वमापादपरिसमाप्तेराभीयम्[4] । समानाश्रये तस्मिन्कर्तव्ये तद[5]-सिद्धं स्यात् । इति जस्यासिद्धत्वान्न हेर्लुक्[6] । जहि, हतात् । हतम् । हत हनानि । हनाव । हनाम । अहन्[7] । अहताम् । अघ्नन् । अहन् । अहतम् । अहत । अहनम् । अहन्व । अहन्म । हन्यात् ।

---

१–लिटि द्वित्वे हलादिशेषे 'हहन्+अ' अभ्यासस्य 'कुहोश्चुः' इति चुत्वम् । 'हो हन्तेः...इति हस्य घत्वम् । 'अत उपधायाः' इति वृद्धिः । २–'गमहन ...' इति उपधालोपः । नकारे परे "हो हन्तेः" इति घत्वम् । ३-'ऋद्धनोः स्ये' इति 'इट्' । ४–आभीये । ५–पूर्वकृतम् आभीयम् । ६–'अतो हेः' इति हेर्लुक् प्राप्त आसीत् । ७–अत्र 'हल्ङ्याब्भ्यो' इति तिपस्तकारस्य लोपः ।

**६३६ आर्धधातुके ६ । ४ । ४६ ॥**

इत्यधिकृत्य ।

**६४० हनो वध लिङि २ । ४ । ४२ ॥**

**६४१ लुङि च ६ । ४ । ४३ ॥**

वध्यात् । वध्यास्ताम् । अवधीत् । अहनिष्यत् । **यु** मिश्रणामिश्रणयोः

**६४२ उतो वृद्धिर्लुकि हलि ७ । ३ । ८६ ॥**

लुग्विषये उतो वृद्धिः स्यात्पिति हलादौ सार्वधातुके न त्वभ्यस्तस्य । यौति । युतः । युवन्ति । यौषि । युथः । युथ । यौमि । युवः । युमः । युयाव । युयुवतुः । युयुवुः । युयविथ, युयोथ । युयुवथुः । युयुव । युयाव, युयव । युयुविव । युयुविम । यविता । यविष्यति । यौतु, युतात् । अयौत् । अयुताम् । अयुवन् । युयात् । इह वृद्धिर्न[1] । भाष्ये पिच्च ङिन्न ङिच्च पिन्नेति व्याख्यानात् । युयाताम् । युयुः । यूयात्[2] । यूयास्ताम् । यूयासुः । अयावीत् । अयविष्यत् । **या** प्रापणे[3] । याति । यातः । यान्ति । ययौ[4] । याता । यास्यति । यातु । अयात् । अयाताम् ।

**६४३ लङः शाकटायनस्यैव ३ । ४ । १११ ॥**

आदन्ताल्लङो झेर्जुस् वा । अयुः, अयान् । यायात् । यायाताम् । यायुः । यायात् । यायास्ताम् । यायासुः । अयासीत् । अयास्यत् । एवं **वा**[5] गतिगन्धनयोः । **भा** दीप्तौ । **ष्णा** शौचे । वान्यस्य संयोगादेरित्येत्वम् । स्नेयात्, स्नायात् ।

---

१—यासुटो ङित्वात् । तत्र पित्, साक्षादुक्तेन ङित्वेनाऽऽतिदेशिकस्य पित्वस्य बाधात् । २—आशीर्लिङि 'अकृत्सार्वधातुकयोः' इति दीर्घः । ३—गमने प्रसिद्धः । ४—'आत औ णलः' इति णल औत्वम् । ययौ, ययतुः, ययुः । ययिथ, ययाथ । ययथुः—इत्यादि । ५—वाति । ववौ । भाति । बभौ । स्नाति । सस्नौ । श्राति । शश्रौ । द्राति । दद्रौ । प्साति । पप्सौ । राति । ररौ । लाति । ललौ । दाति । ददौ । पाति । पपौ । ख्याति । सर्वत्र लुङि 'यमरमनमातां सक् च' इति इट्सकौ' अवासीत्, अवासिष्टाम्, अवासिषुः-इत्यादिरूपाणि ज्ञेयानि । स्ना—श्रा—द्रा—प्सा' एषां चतुर्णाम् आशीर्लिङि 'वान्यस्य संयोगादेः' इति विकल्पेन एत्वम्—स्नेयात्—स्नायात् । श्रेयात्, श्रायात् । द्रेयात्, द्रायात् । प्सेयात्, प्सायात् । इत्यादि ।

**श्रा** पाके। **द्रा** कुत्सायां गतौ। **प्सा** भक्षणे। **पा** रक्षणे। **रा** दाने। **ला** आदाने। **दाप्** लवने। **ख्या** प्रकथने। अयं सार्वधातुक एव प्रयोक्तव्यः। **विद्** ज्ञाने।

**६४४ विदो लटो वा ३। ४। ८३॥**

वेत्तेर्लटः परस्मैपदानां णलादयो वा। वेद। विदतुः। विदुः। वेत्थ। विदथुः। विद। वेद। विद्व। विद्म। पक्षे—वेत्ति। वित्तः। विदन्ति।

**६४५ उष-विद-जागृभ्योऽन्यतरस्याम् ३। १। ३८॥**

एभ्यो लिट्याम् वा। विदेरदन्तत्वप्रतिज्ञानादामि न गुणः। विदाञ्चकार। विवेद। वेदिता। वेदिष्यति।

**६४६ विदाङ्कुर्वन्त्वित्यन्यतरस्याम् ३। १। ४१॥**

वेत्तेर्लोट्याम्, गुणाभावो लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते। पुरुषवचने न विवक्षिते इति शब्दात्।

**६४७ तनादिकृञ्भ्य उः ३। १। ७९॥**

शपोऽपवादः। विदाङ्करोतु।

**६४८ अत उत्सार्वधातुके ६। ४। ११०॥**

उप्रत्ययान्तस्य कृञोऽत उत्सार्वधातुके क्ङिति। विदाङ्कुरुतात्। विदाङ्कुरुताम्। विदाङ्कुर्वन्तु। विदाङ्कुरु। विदाङ्करवाणि। वेत्तु। अवेत्। अवित्ताम्। अविदुः।

**६४९ दश्च ८। २। ७५॥**

धातोः पदान्तस्य दस्य सिपि रुर्वा। अवेः, अवेत्। विद्यात्। विद्याताम्। विद्युः। विद्यात्। विद्यास्ताम्। विद्यासुः। अवेदिष्यत्। **अस्** भुवि। अस्ति।

**६५० असोरल्लोपः ६। ४। १११॥**

---

१—लघूपधत्वाभावान्न गुणः। २—आमोऽभावपक्षे रूपम्। ३—अनिट्कारिकासु तु श्यन्निर्देशेन सत्तार्थकस्य दिवादेर्विदो ग्रहणं तेनाऽयं सेट्। ४—प्रथमपुरुषो बहुवचनं च न विवक्षितमित्यर्थः 'इति' शब्दोपादानात्। सर्वस्मिन्नपि लोटि—उक्तानिपातनमिति भावः। ५—'उतश्च' इति हेर्लुक्। ६—सत्तायामित्यर्थः।

श्नस्यास्तेश्चातो लोपः सार्वधातुके क्ङिति । स्तः । सन्ति । असि । स्थः । स्थ । अस्मि । स्वः । स्मः ।

६५१ अस्तेर्भूः ६ । ४ । ५६ ॥

आर्धधातुके । बभूव । भविता । भविष्यति । अस्तु, स्तात् । स्ताम् । सन्तु ।

६५२ घ्वसोरेद्धावभ्यासलोपश्च ६ । ४ । ११९ ॥

घोरस्तेश्चैत्वं हौ अभ्यासलोपश्च । आभीयत्वाद्धेर्धिः । एधि, स्तात् । स्तम् । स्त । असानि । असाव । असाम । आसीत् । आस्ताम् । आसन् । स्यात् । स्याताम् । स्युः । भूयात् । अभूत् । अभविष्यत् ।

६५३ उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ८ । ३ । ८७ ॥

उपसर्गेणः प्रादुसश्च परस्यास्तेः सस्य षो यकारेऽचि च परे । निःष्यात् । प्रादुःष्यात् । निःषन्ति । प्रादुःषन्ति । यच्परे किम् । अभिस्तः । रु शब्दे ।

६५४ तु-रु-स्तु-शम्यमः सार्वधातुके ७ । ३ । ९५ ॥

एभ्यः सार्वधातुकस्य हलादेस्तिङ ईड्वा । नाभ्यस्तस्येत्यतोऽनुवृत्तिसंभवे पुनः सार्वधातुकग्रहणमपिदर्थम् । रवीति, रौति । रुवीतः, रुतः । हलादेः किम् । रुवन्ति । तिङः किम् । शाम्यति । सार्वधातुके किम् । आशिषि रूयात् । विध्यादौ तु रुयात् , रुवीयात् । अरावीत् । अरविष्यत् । तु इति सौत्रो धातुः—गतिवृद्धिहिंसासु । तवीति, तौति । तुवीतः, तुतः । तुवन्ति । तुताव । तोता । तोष्यति । णु स्तुतौ । नौति । नुनाव । नविता । टुक्षु शब्दे । क्षौति । चुक्षाव । क्षविता । क्ष्णु तेजने । क्ष्णौति । क्ष्णविता । अक्ष्णावीत् । ष्णु प्रस्रवणे । स्नौति । सुष्णाव । स्नविता । षु प्रसवैश्वर्ययोः । प्रसवोऽभ्यनुज्ञानम् । सौति । सुतः । सुषाव । सोता । असावीत् ।

---

१–सर्वत्र आर्धधातुके (लिट्–लुट्–लृट्— आशीर्लिङ्–लुङ्–लृङ्क्षु) अस्तेर्भूभावः । बभूव, इत्यादय एव प्रयोगा इत्यर्थः । २–एत्वस्याऽऽभीयत्वेनाऽसिद्धत्वात् 'हुझल्भ्यो...' इति हेर्धिः । ३–(अस+सि=हि) धि, सस्य एत्वम्, अकारस्य श्नसोरिति लोपः । ४–लङि–आ+अस+त्, 'अस्ति सिचोऽपृक्ते' इति 'ईट्' आटश्चेति वृद्धिः । ५–शब्दे=छिक्काशब्दे–इत्यर्थः ।

कु शब्दे। कौति। चुकाव। कोता। इण् गतौ। एति। इतः।

६५५ इणो यण् ६।४।८१॥

इणो यण्स्यादजादौ प्रत्यये। इयङोऽपवादः। यन्ति।

६५६ अभ्यासस्यासवर्णे ६।४।७८॥

अभ्यासस्येवर्णोवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि। इयाय[1]।

६५७ दीर्घ इणः किति ७।४।६९॥

इणोऽभ्यासस्य दीर्घः किति लिटि। ईयतुः। ईयुः। इययिथ[2], इयेथ। एता। एष्यति। एतु[3]। ऐत्। ऐताम्। आयन्[4]। इयात्। ईयात्[5]।

६५८ एतेर्लिङि ६।४।६७॥

उपसर्गात्परस्य इणोऽणो ह्रस्वः स्यादार्धधातुके किति लिङि। निरियात्।

६५९ अन्तादिवच्च ६।१।८५॥

योऽयमेकादेशः स पूर्वस्यान्तवत्परस्यादिवत्स्यात्। "उभयत आश्रयणे नान्तादिवत्"। अभीयात्[7]। अणः किम्—समेयात्[8]।

६६० इणो गा लुङि २।४।४५॥

"गाति स्थेति" सिचो लुक्। अगात्। अगाताम्। अगुः। ऐष्यत्। इक् स्मरणे। अयमधिपूर्व एव। 'अधीगर्थदयेशां कर्मणि' इति लिङ्गात्। (इणवदिक इति वक्तव्यम्)। अधियन्ति। अध्यगात्। केचित्त्वार्धधातुकाधिकारोक्तस्यैवातिदेशमाहुः, तन्मते यणन। तथा च भट्टिः—ससीतयो राघवयोरधीयन्निति[9]। वी गति-व्याप्ति-प्रजन-कान्त्यसन-खादनेषु। प्रजनं=गर्भग्रहणम्।

---

१–इ+इ+अ, वृद्धौ, आयादेशे, अभ्यासस्य 'इयङ्' इयाय। २–'थलि वेट्, उभयत्रापि गुणः, अभ्यासस्य 'इयङ्'। ३–हौ–'इहि'। ४–इ+अन्। 'इणो यण्' इति यण्, तस्याभीयत्वेनाऽसिद्धत्वादाट्। आयन्। ऐः, ऐतम्, ऐत। आयम्, ऐव, ऐम। ५–इयात इयाताम्, इत्यादि। ६–'अकृत् सार्व...' इति दीर्घः। ७–अत्र सवर्णदीर्घस्य पूर्वान्तवद्भावे–इणोऽण् नास्ति, परादिवद्भावे उपसर्गस्वरूपं भज्येत, उभयत आश्रयणे च नान्तादिवद्भाव इति न ह्रस्वः। ८–सम्+आ+ईयात्, गुणे कृते, 'समेयात्' इत्यत्र एकारोऽण् नास्तीति न ह्रस्वः। ९–अधिपूर्वकादिको लटः शत्रादेशे—इयङि रूपम् 'अधीयन्' इति। आर्धधातुकत्वाभावान्न यण्। आर्धधातुकाधिकारोक्तस्यैवातिदेशात्।

असनं=क्षेपणम् । वेति । वीतः । वियन्ति । वेषि । वीहि । अवेत् । अवीताम् । अवियन् । अटि सति अनेकाच्त्वाद्यणिति केचित् । अव्यन् । अत्र ईकारोऽपि धात्वन्तरं प्रश्लिष्यते । एति । ईतः । इयन्ति । इयात् । ऐषीत् । **वच** परिभाषणे । वक्ति । वक्तः । अयमन्तिपरो न प्रयुज्यते । बहुवचनपर इत्यन्ये । झिपर इत्यपरे । वक्तु । वग्धि । वच्यात् । उच्यात् ।

**६६१ अस्यति-वक्ति-ख्यातिभ्योऽङ् ३ । १ । ५२ ॥**

एभ्यश्च्लेरङ् स्यात् ।

**६६२ वच उम् ७ । ४ । २० ॥**

अङि परे । अवोचत् । अवक्ष्यत् । **मृजू** शुद्धौ ।

**६६३ मृजेर्वृद्धिः ७ । २ । ११४ ॥**

मृजेरिको वृद्धिः स्याद् धातुप्रत्यये परे । मार्ष्टि । मृष्टः । ( क्ङित्यजादौ वेष्यते ) । मृजन्ति, मार्जन्ति । ममार्ज । ममृजतुः । ममार्जिथ, ममार्ष्ठ[1] । मार्जिता । मार्ष्टा । मार्ष्टु । मृड्ढि । अमार्ट्, अमार्ड् । अमार्जीत् । अमार्क्ष्यत्, अमार्जिष्यत् । **रुदिर्** अश्रुविमोचने ।

**६६४ रुदादिभ्यः सार्वधातुके ७ । २ । ७६ ॥**

रुद् स्वप् श्वस् अन् जक्ष् एभ्यो वलादेः सार्वधातुकस्येट् । रोदिति । रुदितः । ह्रौ परत्वादिटि धित्वं[2] न । रुदिहि ।

**६६५ रुदश्च पञ्चभ्यः ७ । ३ । ९८ ॥**

हलादेः पितः सार्वधातुकस्यापृक्तस्य ईट् ।

**६६६ अड् गार्ग्य-गालवयोः ७ । ३ । ९९ ॥**

अरोदीत्, अरोदत् । अरुदिताम् । अरुदन् । अरोदीः, अरोदः । [3]प्रकृतिप्रत्ययविशेषापेक्षाभ्यामडीड्भ्यामन्तरङ्गत्वाद्यासुट् (असिद्धं बहिरङ्ग-

---

१–मृज्+थल् क्ङित्वादि, वृद्धिश्च 'व्रश्च...' इति षत्वे ष्टुत्वम् । वसमसोः –ममार्जिव, ममृजिव, ममृज्व । ममार्जिम, ममृजिम, ममृज्म । ( ऊदित्वादिडभावे रूपमिदम् ) । २–'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवे'ति न्यायात् । ३–ननु–लिङ्क्ष्वपि यासुटं बाधित्वा परत्वाद् 'अड्गार्ग्यगालवयोः' इति 'रुदश्च पञ्चभ्यः' इति च–अडीटौ स्यातामित्यत आह–**प्रकृतिप्रत्ययेति**–अडीटौ हि हलादिपित्सार्वधातुकाऽपृक्तप्रत्ययाऽपेक्षत्वात्–रुदादिप्रकृतिविशेषा-

मन्तरङ्गे)[1]। रुद्यात्। अरुदत्[2]। अरोदीत्। अरोदिष्यत्। **ञिष्वप्** शये। स्वपिति। स्वपितः। सुष्वाप। सुषुपतुः। सुष्वपिथ, सुष्वपथ।

**६६७ सुविनिर्दुर्भ्यः सुपि-सूति-समाः ८। ३। ८८॥**

एभ्यः सुप्यादेः सस्य षः किति लिटि। परत्वात्संप्रसारणे षत्वे च कृते द्वित्वम्। (पूर्वत्रासिद्धीयमद्विर्वचने[3])। सुषुषुपतुः। अकिति तु द्वित्वेऽभ्यासस्य संप्रसारणम्। षत्वस्यासिद्धत्वात्। ततः पूर्वं "हलादिःशेषः"। नित्यत्वाच्च। ततः सुपिरूपभावान्न षः। सुसुष्वाप। स्वप्ता। अस्वपीत्, अस्वपत्[4]। स्वप्यात्। सुप्यात्, सुषुप्यात्। अस्वप्स्यत्॥ **श्वस** प्राणने। श्वसिति। श्वसितः। शश्वास। श्वसिता। श्वसिष्यति। श्वसितु। अश्वसीत्–अश्वसत्, अश्वसिताम्, अश्वसन्। श्वस्यात्। ह्म्यन्तेति वृद्धिर्न। अश्वसीत्। **अन** च। अनिति। आन। अनिता। आनीत्, आनत्।

**६६८ अनितेः ८। ४। १९॥**

उपसर्गस्थान्निमित्तात् परस्यानितेर्नस्य णः। प्राणिति। **जक्ष** भक्ष-हसनयोः। जक्षिति[6]। जक्षितः।

**६६९ अदभ्यस्तात्। ७। १। ४॥**

झस्य अत् स्यात्। अन्तापवादः[7]। जक्षति। अजक्षीत्–अजक्षत्, अजक्षिताम्। सिजभ्यस्तेति जुस्। अजक्षुः॥ **जागृ** निद्राक्षये। जागर्ति। जागृतः।

ऽपेक्षत्वाच्च बहिरङ्गौ। तदपेक्षया लिङो विधीयमानो 'यासुट् परस्मैपदेषु...' इति यासुट् प्रत्ययसामान्यापेक्षत्वादन्तरङ्गः।

१–'अन्तरङ्गे कार्ये कर्त्तव्ये सति बहिरङ्गमसिद्धमित्यर्थः'। २–'इरितो वा' इत्यङ् विकल्पेन। ३–ननु—'सुषुषुपतुः' इत्यत्र परत्वात्सम्प्रसारणे षत्वे कृतेऽपि तस्य त्रैपादिकत्वेनाऽसिद्धत्वात् षकारोपलक्षितस्य द्वित्वं न स्यात्, इति चेत्तत्राह—**पूर्वत्रासिद्धीयमद्विर्वचन** इति—अर्थात्—द्विर्वचने कर्त्तव्ये पूर्वत्रासिद्धमिति न प्रवर्तते। ४–'कृताकृतप्रसङ्गी विधिर्नित्यः' 'हलादिः शेषः' इति कृतेऽकृतेपि च षत्वे प्रवर्त्तते। ५–'अड् गार्ग्य...' इत्यट्। ६–'रुदादिभ्यः सार्वधातुके' इतीट्। ७–'झोऽन्तः' इत्यस्याऽपवादः। ८–ङित्वान्न गुणः। जाग्रतीत्यत्र 'जक्षित्यादयः....' इत्यभ्यस्तत्वाद् 'अदभ्यस्तात्'इत्यत्।

जाग्रति। जागराञ्चकार[1], जजागार[2]॥

**६७० जाग्रोऽवि-चिण्-णल्-ङित्सु ७।३।८५॥**

जागर्तेर्गुणः स्याद्विचिण्णल्ङिद्भ्योऽन्यस्मिन्वृद्धिविषये प्रतिषेधविषये च। जजागरतुः, जजागरुः। जागरिता। अजागः। अजागृताम्॥

**६७१ जुसि च ७।३।८३॥**

अजादौ जुसि इगन्ताङ्गस्य गुणः। अजागरुः। अजादौ किम्। जागृयुः। आशिषि तु। जागर्यात्। जागर्यास्ताम् जागर्यासुः। अजागरीत्॥ **दरिद्रा** दुर्गतौ। दरिद्राति॥

**६७२ इद्दरिद्रस्य ६।४।११४॥**

हलादौ क्ङिति सार्वधातुके इत्स्यात्। दरिद्रितः॥

**६७३ श्नाभ्यस्तयोरातः ६।४।११२॥**

लोपः क्ङिति सार्वधातुके। दरिद्रति। अनेकाच्त्वादाम्। दरिद्राञ्चकार। 'आत औ णलः' इत्यत्र ओ इत्येव सिद्धे औकारविधानं दरिद्रातेरालोपे कृते श्रवणार्थम्। अत एव ज्ञापकादाम्नेत्येके। ददरिद्रौ। (दरिद्रातेरार्धधातुके विवक्षिते आलोपो वाच्यः)। (लुङि वा)। (सनि[3] ण्वुलि ल्युटि च न) दरिद्रिता। अदरिद्रीत्। इट्सकौ। अदरिद्रिताम्। अदरिद्रुः। दरिद्रियात्। दरिद्र्यात्। अदरिद्रीत्। इट्सकौ[4]। अदरिद्रासीत्॥ **चकासृ**

---

१-'उषविदजागृभ्यो...' इति वैकल्पिक आम्। 'सार्वधातुका...' इति गुणः। २-आमभावे जकारस्य द्वित्वे वृद्धौ **जजागार**ेति। अतुसादौ कित्वाद् गुणनिषेधे प्राप्ते सूत्रं **'जाग्रोऽविचिण्णल्ङित्सु'** इति, जजागरतुः, जजागरुः। ३-सनि यथा-दिदरिद्रासति। ण्वुलि यथा-दरिद्रायकः। ल्युटि यथा -दरिद्राणः। सनि दरिद्रातेः 'अनन्तरस्ये'ति न्यायाद् एतद्वार्तिकप्राप्तस्यैव (दरिद्रातेरार्धधातुके विवक्षिते-आलोपो वाच्यः) इति प्राप्तस्यैव लोपस्य निषेधः। तेन 'तनिपतिदरिद्राणामुपसङ्ख्यानम्' इति दरिद्रातेः सन इट्पक्षे 'आतो लोप इटि च' इत्यालोपो भवत्येव। दिदरिद्रिषति। तदुक्तं भाष्ये—

न दरिद्रायके लोपो दरिद्राणे च नेष्यते।
दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा॥

४-आलोपाभावपक्षे 'यमरमनमातां....' इतीट्सकौ। अदरिद्रासीत्, अदरिद्रासिष्टाम्, अदरिद्रासिषुः।

दीप्तौ । चकास्ति, चकास्तः, चकासति[1] । चकासाञ्चकार । चकासिता । चकास्तु । चकाधि[2] ॥

**६७४ तिप्यनस्तेः ८ । २ । ७३ ॥**

पदान्तस्य सस्य दः स्यात्तिपि नत्वस्तेः । अचकात्, अचकाद् । अचकास्ताम् । अचकासुः ॥

**६७५ सिपि धातोरुर्वा ८ । २ । ७४ ॥**

पदान्तस्य सस्य । पक्षे दः । अचकाः, अचकात् ॥ **शासु** अनुशिष्टौ । शास्ति ॥

**६७६ शास इदङ्हलोः ४ । ४ । ३४ ॥**

शास उपधाया इत्स्यादङि[3] हलादौ क्ङिति च । शिष्टः[4] । शासति । शशास । शशासतुः । शासिष्यति । शास्तु, शिष्टात् । शिष्टाम् । शासतु ॥

**६७७ शा हौ[5] ६ । ४ । ३५ ॥**

शास्तेः । तस्याभीयत्वेनासिद्धत्वाद्धेर्धिः । शाधि । अशात् । अशिष्टाम् । अशासुः[6] । अशाः, अशात् । शिष्यात् ॥

**६७८ सर्तिशास्त्यर्तिभ्यश्च ३ । १ । ५६ ॥**

एभ्यश्च्लेरङ् कर्तृलुङि । अशिषत् । अशासिष्यत् ॥ इति परस्मैपदम् ॥

**शीङ्** स्वप्ने ॥

**६७९ शीङः सार्वधातुके गुणः ७ । ४ । २१ ॥**

शेते । शयाते ॥

**६८० शीङो रुट् ७ । १ । ६ ॥**

झादेशस्यातो रुडागमः स्यात् । शेरते । शेषे । शयाथे । शेध्वे । शये । शेवहे । शिश्ये । शयिता । शयिषीष्ट । अशयिष्ट । अशयिष्यत ॥

१–जक्षित्यादित्वेनाऽभ्यस्तत्वाज्झस्याऽत् । २–'धि च' इति सलोपः । सिच एव सकारस्य 'धि च' इत्यनेन लोपः, इति मते तु सकारस्य जस्त्वेन दकारे 'चकाद्धि' इति रूपं तद्भाष्यविरुद्धम् । सकारमात्रस्य लोपाऽभ्युपगमात् । ३–अङ्साहचर्य्यात्परस्मैपदे एव इत्वम् । नेह–आशास्ते । ४–'शासिवसि ....' इति षः । ५–शास्तेः शादेशः स्याद् हौ परे–इति सूत्रार्थः । ६–अभ्यस्तत्वात् 'सिजभ्यस्त...' इति झेर्जुस् ।

इङ् अध्ययने । इङिकावध्युपसर्गतो न व्यभिचरतः । अधीते । अधीयाते । अधीयते ॥

**६८१ गाङ् लिटि ६ । ४ । ६६ ॥**

इङो गाङ् स्यात् लिटि । अधिजगे । अध्येता । अध्येष्यते । अधीताम् । अधीष्व । अधीयाथाम् । अधीध्वम् । अध्ययै । अध्ययावहै । अध्ययामहै । अध्यैत । अध्यैयाताम् । अध्यैध्वम् । अध्यैयि । अध्यैवहि । अध्यैमहि । अधीयीत । अधीयीयाताम् । अधीयीरन् । अध्येषीष्ट ॥

**६८२ विभाषा लुङ्लृङोः २ । ४ । ५० ॥**

इङो गाङ् वा स्यात् ॥

**६८३ गाङ्-कुटादिभ्योऽञ्णिन्ङित् १ । २ । १ ॥**

गाङादेशात्कुटादिभ्यश्चाऽञ्णितः प्रत्यया ङितः स्युः ॥

**६८४ घु-मा-स्था-गा-पा-जहाति-सां हलि ६ । ४ । ६६ ॥**

एषामात ईत्स्याद्धलादौ क्ङित्यार्धधातुके । अध्यगीष्ट, अध्यैष्ट । अध्यगीष्यत अध्यैष्यत ॥ ईर गतौ कम्पने च । ईर्ते । ईराञ्चक्रे । ईरिता । ईरिष्यते । ईर्ताम् । ईर्ष्व । ईर्ध्वम् । ऐरिष्ट ॥ ईड स्तुतौ । ईट्टे ॥

**६८५ ईशः से ७ । ६ । ७७ ॥**

**६८६ ईडजनोर्ध्वे च ७ । ६ । ७८ ॥**

ईशीड्जनां सेध्वेशब्दयोः सार्वधातुकयोरिट् स्यात् । योगविभागो वैचित्र्यार्थः । ईडिषे । ईडिध्वे । एकदेशविकृतस्यानन्यत्वात् । ईडिष्व ।

१-इङ् अध्ययने, इक् स्मरणे, इति धातुद्वयम्, 'अधि' उपसर्गपूर्वकमेव प्रयुज्यते सर्वत्रेत्यर्थः । २-अधि+इ+इ, (आ+इ-ए-ऐ) अधि-इ+ऐ, अत्र गुणाऽयादेशयोः कृतयोरुपसर्गस्य यण् अध्ययै । अत्र यद्यपि पूर्वं धातुरुपसर्गेण युज्यते इत्यन्तरङ्गत्वाद् गुणात्पूर्वं सवर्णदीर्घः प्राप्तः, तथापि 'णेरध्ययने वृत्तम्' इति निर्देशान्न भवति, इदम्-एकदेशिपक्षे । 'पूर्वं' धातुः साधनेन युज्यते पश्चादुपसर्गेण, इति सिद्धान्तपक्षे तु नास्त्येव दोषः । ३-परत्वात्पूर्वम् इयङ्, तत आट्, ततो वृद्धिः । ४-सिचो ङित्वादीत्वम् । ५-वैचित्र्यञ्चेह-'ध्वे' इत्यस्य पूर्वत्रापकर्षः 'से' इत्यस्य-उत्तरत्राऽनुवृत्तिरिति ।

ईडिध्वम् । विकृतिग्रहणेन प्रकृतेरग्रहणात् ऐड्ध्वम्। **ईश** ऐश्वर्ये । ईशिषे । ईशिध्वे ॥ **आस** उपवेशने । आस्ते । दयायासश्चेत्याम् । आसाञ्चक्रे । आस्स्व । आध्वम् । आसिष्ट ॥ **आङः शासु** इच्छायाम् । आशास्ते । आशासाते ॥ **वस** आच्छादने । वस्ते । वस्से । वध्वे । ववसे । वसिता ॥ **णिसि** चुम्बने । निंस्ते । **णिजि** शुद्धौ । निङ्क्ते । निङ्क्ते । निञ्जिता । **वृजी** वर्जने । वृक्ते । वृजाते । इदिदित्यन्ये । वृङ्क्ते ॥ **पृची** संपर्चने । पृक्ते ॥ **षूङ्** प्राणिगर्भविमोचने । सूते । सुषुवे । सुषुविषे । सोता, सविता । सुवै । सविषीष्ट । असविष्ट, असोष्ट ॥ **चक्षिङ्** व्यक्तायां वाचि । अयं दर्शनेऽपि । इकारोऽनुदात्तो युजर्थः । नुम्तु न । अन्त्यं इदिति व्याख्यानात् । चष्टे । चक्षाते । आर्धधातुके—

**६८७ चक्षिङः ख्याञ् ६ । ४ । ५४ ॥**

**६८८ वा लिटि ६ । ४ । ५२ ॥**

अत्र भाष्ये-क्शादिरयमादेशः । असिद्धकाण्डे शस्य यो वेति स्थितम् । ञित्वात्पदद्वयम् । चख्यौ, चख्ये, चक्शौ, चक्शे, चचक्षे । ख्याता,

---

१-विकृतिग्रहणेन='ध्वे' इति विकृतरूपग्रहणेन,-प्रकृतेः='ध्वम्' इत्यस्याऽग्रहणादिड् न । २-ऐश्वर्यम्=अधिकारः सामर्थ्यञ्च । ३-धि चेति सलोपः । ४-'णो नः' इति नत्वम् 'इदितो नुम् धातोः' इति नुम् । निंनिंसे । निंसिता । अनिसिष्ट-इत्यादि । ५-निज् धातोः से परे, नुमि, जस्य 'व्रश्चेति' षत्वे, 'षढोः कः सि' इति कः । सस्य षत्वम्, कषसंयोगे क्षः **निङ्क्षे** । ६-अनिट्केषु 'णिजिर्' इति जौहोत्यादिकस्य ग्रहणादयं सेट् । ७-सम्पर्चनम् =सम्बन्धः । ८-"अनुदात्तेतश्च हलादेः" इति ल्युडपवाद-युच्प्रत्ययार्थं इति भावः । तेन 'विचक्षणः' इति सिद्धयति । अत्र लित्स्वरनिवृत्तये युच्-प्रत्यय इति भावः । ९-ननु-इदित्वाद् 'इदितो नुम् धातोः' इति नुमागमः स्यादित्यत आह —**नुम्तु** नेति-**अन्त्य इद्**इति व्याख्यानात् । अर्थात् 'इदितो नुम् धातोः' इत्यत्र 'गोः पदान्ते' इत्यस्माद् अन्ते-इत्यनुवर्त्तते । १०-असिद्धकाण्डे=त्रिपादिप्रकरणे णत्वप्रकरणानन्तरमिति शेषः । तेन प्रख्यानमित्यत्र न णत्वम् (यत्वस्याऽसिद्धत्वेन) । अन्यथा यकारव्यवधानस्य सह्यत्वेन णत्वं स्यादेव ।

क्शाता । ख्यास्यति, ख्यास्यते, क्शास्यति, क्शास्यते । चष्टाम् । अचष्ट । चक्षीत । ख्यायात्, ख्येयात्, क्शायात्, क्शेयात् । अस्यतिवक्तीत्यङ् । अख्यत, अख्यत्, अक्शासीत्, अक्शास्त । वर्जने क्शाञ् नेष्टः[1] । समचक्षिष्टेत्यादि । **द्विष** अप्रीतौ । द्वेष्टि, द्विष्टे । द्वेक्ष्यति । द्विड्ढि । द्वेषै । अद्वेट् ।

**६८९ द्विषश्च ३ । ४ । ११२ ॥**

लङो झेर्जुस्वा । अद्विषुः, अद्विषन् । अद्विक्षत्[2] । **दुह** प्रपूरणे । 'दादेर्धातोर्घः' इति हस्य घः । दोग्धि । दुग्धः । दुहन्ति । धोक्षि[3] । दुग्धे । दुहाते । दुहते । धुक्षे । दुहाथे । धुग्ध्वे । दुहे । दुह्वहे । दुह्महे । दुदोह, दुदुहे । दोग्धा । धोक्ष्यति, धोक्ष्यते । दोग्धु, दुग्धात् । दुग्धाम् । दुहन्तु । दुग्धि । दुग्धात् । दुग्धम् । दुग्ध । दोहानि । दुग्धाम् । दुहाताम् । दुहताम् । धुक्ष्व । दुहाथाम् । धुग्ध्वम् । दोहै । दोहावहै । दोहामहै । अधोक् । अदुग्धाम् । अदुहन् । अदोहम् । अदुग्ध । अदुहाताम् । अदुहत । अधुग्ध्वम् । दुह्यात्, दुहीत । धुक्षीष्ट । अधुक्षत् ।

**६९० लुग्वा दुह-दिह-लिह-गुहामात्मनेपदे दन्त्ये ७ । ३ । ७३**

एषां क्सस्य लुग्वा दन्त्ये तङि । अधुक्षत, अदुग्ध ।

**६९१ क्सस्याचि ७ । ३ । ७२ ॥**

अजादौ तङि क्सस्य लोपः । अधुक्षाताम् । अधुक्षन्त । अधुक्षथाः, अदुग्धाः । अधुक्षाथाम् । अधुक्षध्वम्, अधुग्ध्वम् । अधुक्षि । अधुक्षावहि अदुह्वहि[4] । अधुक्षामहि । अधोक्ष्यत् । अधोक्ष्यत । एवं **दिह** उपचये । उपचयो=वृद्धिः । **लिह** आस्वादने । लेढि । लीढः । लिहन्ति । लेक्षि[5] । लीढे । लिहाते । लिहते । लिक्षे । लिहाथे । लीढ्वे । लेढु, लीढात् ।

---

१–वर्जनेऽर्थे चक्षिङः ख्याञादेशो (ख्शाञादेशः)=(क्शाञादेशः) नेष्टः । २–'शल इगुपधादनिटः...' इति क्सः । ३–दुह्+सि (प्), गुणः । 'दादेर्धातो... इति हस्य घत्वम् 'एकाचो बशो...' इति दस्य धः । सस्य षत्वं क-ष संयोगे क्षः । ४–लुङि आत्मनेपदे 'वहि' प्रत्यये 'क्से' अधुक्षावहि 'लुग्वा दुहदिह....' इति क्सस्य लुक्पक्षे अदुह्वहि । ५–लिढ्+सि (प्), गुणे ढत्वे 'षढोः कः सि' इति सस्य षत्वे क-ष संयोगे क्षः लेक्षि ।

लीढाम् । लिहन्तु । लीढि । लेहानि । लीढाम् । अलेट् । अलीढाम् । ब्रूञ् व्यक्तायां वाचि ।

**६९२ ब्रुवः पञ्चानामादित आहो ब्रुवः ३ । ४ । ८४ ॥**

ब्रुवो लटस्तिबादीनां पञ्चानां णलादयः पञ्च वा स्युर्ब्रुवश्चाहादेशः । आह । आहतुः । आहुः ।

**६९३ आहः स्थः ८ । २ । ३५ ॥**

झलि । चर्त्वम् । आत्थ । आहथुः ।

**६९४ ब्रुव ईट् ७ । ३ । ९३ ॥**

ब्रुवो हलादेः पित ईट् । ब्रवीति । ब्रूतः । ब्रुवन्ति । ब्रूते । ब्रुवाते । ब्रुवते ।

**६९५ ब्रुवो वचिः २ । ४ । ५३ ॥**

आर्धधातुके । उवाच । ऊचतुः । ऊचुः । उवचिथ, उवक्थ । ऊचे । वक्ता । वक्ष्यति, वक्ष्यते । ब्रवीतु । ब्रूताम् । ब्रूहि । ब्रवाणि । ब्रूताम् । ब्रवै । अब्रवीत् । अब्रूत । ब्रूयात् । ब्रुवीत । उच्यात् । वक्षीष्ट । अवोचत् । अवक्ष्यत् । चर्करीतं च । चर्करीतमिति यङ्लुगन्तमदादौ बोध्यम् । ऊर्णुञ् आच्छादने ।

**६९६ ऊर्णोतेर्विभाषा ७ । २ । ९ ॥**

वृद्धिर्वा हलादौ पिति सार्वधातुके । ऊर्णौति । ऊर्णोति । ऊर्णुतः । ऊर्णुवन्ति । ऊर्णुते । ऊर्णुवाते । ऊर्णुवते । (ऊर्णोतेराम् नेति वाच्यम्) ।

---

१–तिप्–तस्–झि–सिप्–थस्, एषां पञ्चानां क्रमेण 'णल्–अतुस्–उस्–थल्–अथुस्, एते पञ्च आदेशाः स्युः । २–थकारस्य तकारः । ३–'लिट्यभ्यासस्यो...' इति सम्प्रसारणम् । ४–अभ्यासस्य पूर्वेण सम्प्रसारणम्, तत उत्तरस्य 'वचिस्वपि....' इति सम्प्रसारणम्, सवर्णदीर्घः । ५–'अस्यतिवक्ति....' इत्यङि 'वच उम्' इति–'उम्' 'आद्गुणः' इति गुणः । ६–यङ्लुगन्तप्रक्रियायाम् अदादिगणकार्यम्=शब्लुगादिकं भवतीत्यर्थः । अत्रेदं बोध्यम्—प्राचीनानां चर्करीतमिति यङ्लुगन्तस्य संज्ञा । एवं णयन्तस्य कारितमिति । सन्नन्तस्य चिकीर्षितमिति । यङन्तस्य चेक्रीतमिति । ७–'इजादेश्च गुरु...' इति प्राप्तं निषिद्ध्यते ।

**६९७ न न्द्राः संयोगादयः ६ । १ । ३ ॥**

अचः संयोगादयो नदरा द्विर्न भवन्ति । नुशब्दस्य द्वित्वम् । ऊर्णुनाव, ऊर्णुनुवतुः । ऊर्णुनुवुः ।

**६९८ विभाषोर्णोः १ । २ । ३ ॥**

इडादिप्रत्ययो वा ङिद्वत् । ऊर्णुविथ, ऊर्णुनविथ[1] । ऊर्णविता, ऊर्णुविता । ऊर्णोतु, ऊर्णौतु । ऊर्णवानि । ऊर्णवै ।

**६९९ गुणोऽपृक्ते ७ । । ९१ ॥**

उर्णोतेर्गुणोऽपृक्ते हलादौ पिति सार्वधातुके । वृद्धयपवादः[3] । और्णोत् । और्णोः । और्णुतम् । ऊर्णुयात्, ऊर्णुयाताम् । ऊर्णूयात्, ऊर्णूयास्ताम् । ऊर्णुविषीष्ट । ऊर्णविषीष्ट । और्णुवीत् ।

**७०० ऊर्णोतेर्विभाषा ७ । २ । ६० ॥**

इडादौ परस्मैपदे परे सिचि वृद्धिः । पक्षे गुणः । और्णावीत् । और्णाविष्टाम् । और्णवीत् । और्णविष्टाम् । ॥ इत्यदादयः ॥

# अथ जुहोत्यादिगणः ॥३॥

हु दानादनयोः ।

**७०१ जुहोत्यादिभ्यः श्लुः २ । ४ । ७५ ॥**

शपः श्लुः स्यात् ।

**७०२ श्लौ ६ । १ । १० ॥**

धातोर्द्वे स्तः । जुहोति । जुहुतः । हुश्नुवोरिति यण् । जुह्वति ।

**७०३ भीह्रीभृहुवां श्लुवच्च ३ । १ । ३९ ॥**

---

१–णत्वस्याऽसिद्धत्वादित्यनुसन्धेयम्, अत एव नोत्तरखण्डे णत्वश्रवणम् । सर्वत्र धातुषु रेफात्परस्य णकारस्य नकारस्थानिकत्वमेव, तथैवोक्तम्–

नकारजावनुस्वारपञ्चमौ झलि धातुषु ।

सकारजश्शकारश्चे षाट्टवर्गस्तवर्गजः

२–ङित्वपक्षे 'उवङ्', तदभावपक्षे गुणः । ३–निरवकाशत्वात् । इत्यदादयः । ४–दानञ्चेह प्रक्षेपः सच प्रकृते–अग्न्यादेर्हविरादीनाम् । ५–अभ्यासहकारस्य 'कुहोश्चुः' इति चुत्वम् । ६–'अदभ्यस्तात्' इति झस्याऽत् ।

एभ्यो लिट्याम् वा स्यादामि श्लाविव कार्यं[1] च। जुहवाञ्चकार, जुहाव[2]। होता। होष्यति। जुहोतु, जुहुतात्। जुहुताम्। जुह्वतु। जुहुधि[3]। जुहवानि। अजुहोत्। अजुहुताम्। अजुहवुः[4]। जुहुयात्। हूयात्। अहौषीत्[5]। अहोष्यत्। **ञिभी** भये। बिभेति॥

**७०४ भियोऽन्यतरस्याम् ६। ४। ११५॥**

इकारो वा स्याद्धलादौ सार्वधातुके क्ङिति। बिभितः, बिभीतः। बिभ्यति। बिभयाञ्चकार[6], बिभाय। भेता। भेष्यति। बिभेतु, बिभितात्, बिभीतात्। अबिभेत्[7]। बिभियात्, बिभीयात्। भीयात्। अभैषीत्। अभेष्यत्॥ **ह्री** लज्जायाम्। जिह्रेति। जिह्रीतः। जिह्रियति[9]। जिह्रयाञ्चकार, जिह्राय[10]। ह्रेता। ह्रेष्यति। जिह्रेतु। अजिह्रेत्[11]। जिह्रियात्। ह्रीयात्। अह्रैषीत्। अह्रेष्यत्॥ **पॄ** पालनपूरणयोः॥

**७०५ अर्तिपिपर्त्योश्च ७। ४। ७७॥**

अभ्यासस्य इत्स्यात् श्लौ। पिपर्ति॥

**७०६ उदोष्ठ्यपूर्वस्य ७। १। १०२॥**

अङ्गावयवौष्ठ्यपूर्वो य ॠत्तदन्तस्याङ्गस्य उः॥

**७०७ हलि च ७। २ ७७॥**

रेफवान्तस्य धातोरुपधाया इको दीर्घो हलि। पिपूर्तः। पिपुरति[12]। पपार॥

१–द्वित्वादि। २–आमोऽभावपक्षे–जुहाव, जुहुवतुः, जुहुवुः, इत्यादि। ३–'हुझल्भ्यो हेर्धिः' इति हेर्धिः। ४–'सिजभ्यस्त...' इति जुस्, 'जुसि चे'ति गुणः। ५–अहौषीत्, अहौष्टाम्, अहौषुः। अहौषीः, अहौष्टम्, अहौष्ट। अहौषम्, अहौष्व, अहौष्म। ६–'भीह्रीभृहुवां...' इति सूत्रेणाऽऽम् श्लाविव कार्यं च। ७–अबिभिताम्, अबिभीताम्, अबिभयुः ('जुसि च' इति गुणः)। अबिभेः, अबिभितम्–अबिभीतम्, अबिभित–अबिभीत, अबिभयम्, अबिभिव–अबिभीव, अबिभिम–अबिभीम। ८–एवं सर्वत्रापि रूपद्वयम्। ९– अदभ्यस्तात्....' इत्यत्, 'अचिश्नु....' इतीयङ्। १०–जिह्राय, जिह्रियतुः, जिह्रियुः, इत्यादिरूपाणि। ११–अजिह्रेत, अजिह्रीताम्, अजिह्रयुः, इत्यादि। १२–'अदभ्यस्तात्' इति 'अत्'।

**७०८ शॄदॄप्रां ह्रस्वो वा ७ । ४ । १२ ॥**

एषां किति लिटि ह्रस्वो वा स्यात् । पप्रतुः । पप्रुः ॥

**७०९ ऋच्छत्यॄताम् ७ । ४ । ११ ॥**

तौदादिकऋच्छेर्ऋधातोर्ॠतां च गुणो लिटि । पपरतुः । पपरुः ॥

**७१० वॄतो वा ७ । २ । ३८ ॥**

वृङ्वृञ्भ्यामॄदन्ताच्चेटो दीर्घो वा स्यान्न तु लिटि । परिता, परीता । परिष्यति, परीष्यति । पिपर्तु । पिपुरतु । अपिपः । अपिपूर्ताम् । अपिपरुः । पिपूर्यात् । पिपूर्याताम् । पिपूर्युः । पूर्यात् । अपारीत् ॥

**७११ सिचि च परस्मैपदेषु ७ । २ । ४० ॥**

अत्र वृत इटो न दीर्घः । अपारिष्टाम् । अपरिष्यत् , अपरीष्यत् । **ओहाक्** त्यागे । जहाति ॥

**७१२ जहातेश्च ६ । ४ । ११६ ॥**

इद् वा स्याद्धलादौ क्ङिति सार्वधातुके । जहितः ।

**७१३ ईहल्यघोः ६ । ४ ११३ ॥**

श्नाभ्यस्तयोरात ईत्स्यात्सार्वधातुके क्ङिति हलि नैतु घोः । जहीतः । जहति । जहौ । हाता । हास्यति । जहातु, जहितात् , जहीतात् ॥

**७१४ आ च हौ ६ । ४ । ११७ ॥**

जहातेराच्चादिदीतौ स्तः । जहाहि , जहिहि , जहीहि । अजहात् । अजहीताम् । अजहुः ॥

**७१५ लोपो यि ६ । ४ । ११८ ॥**

जहातेरालोपो यादौ सार्वधातुके । जह्यात । एर्लिङीति एत्वम् । हेयात् ।

---

१-पिपूर्तात्, पूर्ताम् । पिपूर्हि, पिपूर्तात्, पिपूर्तम्, पिपूर्त । पिपराणि, पिपराव, पिपराम । २-'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुस् । अपिपः, अपिपूर्तम्, अपिपूर्त । अपिपरम्, अपिपूर्व, अपिपूर्म, । ३-ओकारः (अनुनासिकत्वात्), ककारश्च-इत्संज्ञकः । ४-घुसंज्ञकस्य नेत्यर्थः । ५-श्नस्य 'अत्' आलोपः । जहासि, जहिथः-जहीथः जहि (ही) थ । जहामि, जहिवः जहीवः, जहिमः जहीमः । जहौ, जहतुः, जहुः । जहिथ, जहाथ, जहथुः, जह । जहौ, जहिव, जहिम । ६-जहिताम्-जहीताम्, जहतु । ७-आत्वे 'जहाहि' । ईत्वे 'जहीहि' ।

अहासीत्। अहास्यत् ॥ **ऋ** गतौ। ईयर्ति[1]। इयृतः। ईयरति[2]। आर। आरतुः। आरुः। इडत्त्यर्तीति नित्यमिट्। आरिथ। अर्ता। अरिष्यति। इयर्तु। इयराणि। ऐयः[3]। ऐयृताम्। ऐयरुः। इयृयात्। अर्यात्[4]। आरत्[5]। आरिष्यत् ॥ **माङ्** माने शब्दे[6] च ॥

**७१६ भृञामित् ७। ४। ७६ ॥**

भृञ् माङ् ओहाङ् एषामभ्यासस्येत्स्याच्छ्लौ। मिमीते। मिमाते। श्नाभ्यस्तेति आतो लोपः। मिमते[7]। ममे। माता। मास्यते। मिमीताम्। अमिमीत[8]। मिमीत। मासीष्ट। अमास्त[9]। अमास्यत ॥ **ओहाङ्** गतौ। जिहीते। जिहाते। जिहते। जहे। हाता। हास्यते। जिहीताम्। अजिहीत। जिहीत। हासीष्ट। अहास्त। अहास्यत ॥ **डुभृञ्** धारणपोषणयोः। बिभर्ति। बिभृतः। बिभ्रति। बिभृते। बिभ्राते। बिभ्रते। बिभराञ्चकार[10], बभार। बभर्थ। बभृव। बिभराञ्चक्रे, बभ्रे। भर्ता। भरिष्यति। भरिष्यते। बिभर्तु। बिभराणि। बिभृताम्। अबिभः। अबिभृताम्। अबिभरुः। अबिभृत। बिभ्रीत। भ्रियात्[11], भृषीष्ट[12]। अभार्षीत्, अभृत[13]। अभरिष्यत्, अभरिष्यत। **डुदाञ्** दाने। ददाति। दत्तः[14]। ददति। दत्ते।

१–अभ्यासस्यासवर्णे–इति। अभ्यासस्य–इयङ् तदुत्तरस्य तु गुणः। २–'अदभ्यस्तात्...' इत्यत्। ३–'अर्तिपिपर्त्योश्च' इत्यभ्यासस्य–इत्वम्, 'सार्वधातुका..' इति–ऋकारस्य गुणः, अभ्यासस्याऽसवर्णे' इतीयङ् 'इतश्च' इति–इकारलोपः 'हल्ङ्याब्' इति तलोपः, रेफस्य विसर्गः, 'आटश्चेति वृद्धिः। ४–'गुणोऽर्ती' ति गुणः। ५–'सर्तिशास्त्यर्तिभ्यश्च....' इत्यङ् 'ऋदृशोऽङि....' इति गुणः। ६–अजाविडालादिशब्दे इत्यर्थः। ७–श्नाभ्यस्तयोरातः' इति आलोपः। ८–अमिमीत, अमिमाताम्, अमिमत। अमिमीथाः। अमिमाथाम्। अमिमीध्वम्। अमिमि, अमिमीवहि, अमिमीमहि। ९–अमास्त, अमासाताम्, अमासत। अमास्थाः, अमासाथाम्, अमाध्वम्। अमासि, अमास्वहि, अमास्महि। १०–'भीह्रीभृ...' इत्याम्। ११–'रिङ् शयग्लिङ्क्षु' इति रिङ्। अत्र 'रिङ्' इति ह्रस्वविधानसामर्थ्यान्न दीर्घः। १२–'उश्च' इति कित्वान्न गुणः। १३–'ह्रस्वादङ्गात्' सिचो लोपः। १४–'श्नाभ्यस्तयोरातः' इति–आलोपः। अघोरिति निषेधात् 'ई हल्यघोः' इति ईत्वं न।

ददाते। ददते। ददौ[1], ददे। दाता। दास्यति, दास्यते। ददातु। देहि[3]। दत्ताम्। अददात्, अदत्त। दद्यात्, ददीत। देयात्[4], दासीष्ट। अदात्[5]। अदाताम्। अदुः[6]॥

**७१७ स्थाघ्वोरिच्च १। २। १७॥**

अनयोरिदन्तादेशः सिच्च किदात्मनेपदेषु। अदित[7]। अदास्यत्, अदास्यत॥ **डुधाञ्** धारणपोषणयोः॥

**७१८ दधस्तथोश्च ८। २। ३८॥**

द्विरुक्तस्य झषन्तस्य धाञो बशो भष् तथयोः स्ध्वोश्च परतः। धत्तः[9]। दधति। दधासि। धत्थः। धत्ते। धत्से। धध्वे। धेहि[10]॥ **णिजिर्** शौचपोषणयोः॥

**७१९ निजां त्रयाणां गुणः श्लौ ७। ४। ७५॥**

निज्-विज्-विषामभ्यासस्य गुणः स्याच्छ्लौ। नेनेक्ति[11]। नेनिक्तः। नेनिजति। नेनिक्ते। निनेज। नेक्ता। नेक्ष्यति, नेक्ष्यते। नेनेक्तु। नेनिग्धि॥

**७२० नाभ्यस्तस्याचि पिति सार्वधातुके[12] ७। ३। ८७॥**

लघूपधगुणो न। नेनिजानि। नेनिक्ताम्। अनेनेक्। अनेनिक्ताम्।

---

१-'आत औ णलः' इति 'औत्वम्'। २-'आतो लोप इटि च' इत्याकारलोपः। ३-'घ्वसोरेद्धा....इति-एत्वम्, अभ्यासलोपश्च। ४-'एर्लिङि'। ५-'गातिस्थाघुपा....' इति सिचो लुक्। ६-'आतः' इति जुस् 'उस्यपदान्तात्' इति पररूपम्। ७-"ह्रस्वादङ्गात्" इति सिचो लोपः। अदित, अदिषाताम्, अदिषत। अदिथाः, अदिषाथाम्, अदिढ्वम्। अदिषि, अदिष्वहि, अदिष्महि। ८-अस्य चोपसर्गयोगे एवमर्थविशेषः—

'विपूर्वो धा करोत्यर्थे, अभिपूर्वस्तु भाषणे।
मेलने चापि संपूर्वो निपूर्वः स्थापने मतः॥ १॥

यथा—कार्यं विदधाति, (इति करोत्यर्थे)। मधुरमभिदधाति, (भाषणे) कुण्डले संदधाति (मेलने)। पादं निदधाति (स्थापने)।

९-यथा 'दत्तः', इति। १०-'घ्वसो...' इत्येत्वाऽभ्यासलोपौ। ११-जस्य कुत्वं चर्त्वं च। १२-अजादौ पिति सार्वधातुके अभ्यस्तस्य लघूपधगुणो न स्यात्-इत्यर्थः।

अनेनिजुः । अनेनिजम् । अनेनिक्त । नेनिज्यात्, नेनिजीत । निज्यात्, निक्षीष्ट । आनिजत्[1], अनैक्षीत्, अनिक्त[3] । अनेक्ष्यत्, अनेक्ष्यत । एवं **विचिर्** पृथग्भावे ॥ **विष्लृ** व्याप्तौ ॥ इति जुहोत्यादयः ।

# अथ दिवादिगणः ॥ ४ ॥

**दिवु** क्रीडा-विजिगीषा[4]-व्यवहार-द्युति-स्तुति-मोद-मद-स्वप्न-कान्ति-गतिषु ।

**७२१ दिवादिभ्यः श्यन् ३ । १ । ६९ ॥**

कर्तरि सार्वधातुके । शपोऽपवादः । हलि चेति दीर्घः । दीव्यति । दिदेव । देविता । देविष्यति । दीव्यतु । अदीव्यत् । दीव्येत् । दीव्यात् । अदेवीत् । अदेविष्यत् । एवं **षिवु** तन्तुसन्ताने[5] ।

**७२२ सिवादीनां[6] वाड्व्यवायेऽपि ८ । ३ । ७१ ॥**

परिनिविभ्यः परेषामेषां सस्य षो वा । पर्यषीव्यत्, पर्यसीव्यत् । **नृती** गात्रविक्षेपे[7] । नृत्यति । ननर्त । नर्तिता ।

**७२३ सेऽसिचि कृत-चृत-छृद-तृद-नृतः ७ । २ । ५७ ॥**

एभ्यः सिज्भिन्नस्य सादेरार्धधातुकस्येड्वा । नर्तिष्यति, नर्त्स्यति । नृत्यात् । अनर्तीत्[8] । **त्रसी** उद्वेगे[9] । वाभ्राशेति श्यन्वा । त्रस्यति, त्रसति ।

---

१–'लिङ्सिचावात्मनेपदेषु' इति कित्वान्न गुणः । २–अनिजत, अनिजताम्, अनिजन् । अङभावे—अनैक्षीत्, अनैक्ताम् अनैक्षुः । ३–आत्मनेपदे च-अनिक्त, अनिक्षाताम्, अनिक्षत । इति जुहोत्यादयः । ४–विजयाभिलाषः । ५–वस्त्रादिसीवने इत्यर्थः । सीव्यति । सिषेव । सेविता । सेविष्यति । सीव्यतु । असीव्यत् । सीव्येत् । सीव्यात् । असेवीत् । असेविष्यत् । ६–षिवु-सह-सुट-स्तु-स्वञ्जः, इति सिवादयः । ७–नर्त्तने । ८–'वदव्रजे'ति प्राप्ताया वृद्धेः 'नेटि' इति निषेधः 'पुगन्ते'ति गुणे, अनर्तीत्, अनर्तिष्टाम्, अनर्तिषुः । इत्यादि । ९–उद्वेगो=भयम् । लिटि–तत्रास, त्रेसतुः-तत्रसतुः, त्रेसुः-तत्रसुः । त्रेसिथ-तत्रसिथ, त्रेसथुः–तत्रसथुः, त्रेस–तत्रस, तत्रास–तत्रस, त्रेसिव–तत्रसिव, त्रेसिम–तत्रसिम । लुडादौ–त्रसिता । त्रसिष्यति । त्रस्यतु, त्रसतु । अत्रस्यत्–अत्रसत् । त्रस्येत्-त्रसेत् । त्रस्यात् । अत्रासीत्-अत्रसीत् । अत्रसिष्यत् । इति ।

तत्रास ।

**७२४ वा जॄ-भ्रमु-त्रसाम् ६ । ४ । १२४ ॥**

एषां किति लिटि सेटि थलि च एत्वाभ्यासलोपौ वा । त्रेसतुः, तत्रसतुः । त्रेसिथ, तत्रसिथ । त्रसिता । **शो** तनूकरणे ।

**७२५ ओतः श्यनि ७ । ३ । ७१ ॥**

लोपः[1] श्यनि । श्यति । श्यतः । श्यन्ति । शशौ[2] । शशतुः । शशुः । शाता । शास्यति । अशात् । अशाताम् । इटसकौ । अशासीत् । अशासिष्टाम् । **छो** छेदने । छ्यति[3] । **षो** अन्तकर्मणि । स्यति[4] । ससौ[5] । सेयात् । **दो** अवखण्डने । द्यति । ददौ । देयात्[6] । अदात् । **व्यध** ताडने[7] । विध्यति[8] विव्याध[9] । विविधतुः । विव्यद्ध[10] । विव्यधिथ । व्यद्धा । व्यत्स्यति । विध्येत् विध्यात् । अव्यात्सीत् । **पुष** पुष्टौ । पुष्यति । पुपोष । पुपोषिथ । पोक्ष्यति पुषादीत्यङ् । आपरस्मैपदात्[11] । अपुषत् । **शुष** शोषणे । शुष्यति । शुशोष अशुषत् । **णश** अदर्शने[12] । नश्यति । ननाश । नेशतुः[13] ।

**७२६ रधादिभ्यश्च ७ । २ । ४५ ॥**

---

१–ओकारस्य लोप इत्यर्थः । २–'आदेच उपदेशेऽशिति' इति 'आत्वे' णल औत्वम् । ३–छ्यति । चच्छौ । छाता । छास्यति । छ्यतु । अच्छ्यत् । छ्येत् । छायात् । अच्छात्, अच्छासीत् । अच्छास्यत्–इति रूपाणि । ४–'धात्वादेः षः सः' इति सत्वम् । ५–आशीर्लिङि–सेयात् (मास्थादिष्वस्य पाठात्'एर्लिङि' इति–एत्वम्), लुङि–विभाषा घ्राधेट्शाच्छासः' इति सिचो लुग् वा, असात्, पक्षे 'यमरमनमे' ति इट्सकौ–असासीत्, असासिष्टाम्, असासिषुः, इत्यादि । ६–'एर्लिङि' इत्येत्वम् । लुङि–घुसंज्ञायां 'गातिस्थेति सिचो लुक्, अदात् । ७–वेधने प्रसिद्धः । ८-श्यनः 'सार्वधातुकमपित्' ङित्वे 'ग्रहिज्या...' इति सम्प्रसारणम् । ९–'लिट्यभ्यासस्योभयेषाम्' इति अभ्यासस्य सम्प्रसारणम् । १०–'झषस्तथोर्धोऽधः' इति थस्य धत्वम्, पूर्वधकारस्य, जश्त्वम् (दः) । (इडभावे रूपमिदम्) लुङि–'वदव्रजेति वृद्धिः, खरि चेति चर्त्वम् । अव्यात्सीत्, अव्याद्धाम्, अव्यात्सुः–इत्यादिरूपाणि । ११–परस्मैपदपर्यन्तम् । १२–अभावे=नाशे । १३–'अत एकहल्मध्ये......' इति एत्वाभ्यासलोपौ ।

रध् नश् तृप् दृप् दह् मुह् ष्णुह् ष्णिह् एभ्यो वलाद्यार्धधातुकस्य वेट्। नेशिथ,

**७२७ मस्जि-नशोर्झलि ७। १। ६०॥**

नुम् स्यात्। ननंष्ठ। नेशिव, नेश्व। नशिता, नंष्टा। नशिष्यति, नङ्क्ष्यति[1]। नश्येत्। नश्यात्। अनशत्। प्रणश्यति[2]।

**७२८ नशेः षान्तस्य ८। ४। ३६॥**

णत्वं न। प्रनंष्टा। अन्तग्रहणं भूतपूर्वप्रतिपत्त्यर्थम्[3]। प्रनङ्क्ष्यति। **रध** हिंसा-संराध्योः।

**७२९ रधि-जभोरचि। ७ १। ६१॥**

नुम्। ररन्ध। ररन्धतुः। ररन्धिथ, ररद्ध। ररन्धिव, ररन्ध्व॥

**७३० नेट्यलिटि रधेः ७। १। ६२॥**

लिड्वर्जे इटि रधेर्नुम्न। रधिता, रद्धा। रधिष्यति, रत्स्यति। अङि नुम्। अनिदितामिति नलोपः। अरधत्। **तृप** प्रीणने। तृप्यति। तत्रर्प्थ[4], ततर्प्थ, ततर्पिथ। तर्पिता, तर्प्ता, त्रप्ता। (स्पृश्-मृश्-कृष्-तृप्-दृपां च्लेः सिज्वा वाच्यः)। अतर्पीत्[5], अत्राप्सीत्, अताप्र्सीत्, अतृपत्। **दृप** हर्षमोहनयोः। दृप्यति। रधादित्वादिमौ वेट्कार्वमर्थमनुदात्तता[6]। **द्रुह** जिघांसायाम्। द्रुह्यति। वा द्रुहेति वा घः। पक्षे ढः। दुद्रोग्ध, दुद्रोढ, दुद्रोहिथ। द्रोहिता, द्रोग्धा, द्रोढा। अद्रुहत्। **मुह** वैचित्ये। वैचित्यम-

---

१—'इडभावे व्रश्चभ्रस्ज...' इति शस्य षत्वम्, 'षढोः कःसि' इति कत्वे परस्य सस्य षत्वे कषसंयोगे क्षः। नुम्। २—'उपसर्गादसमासेऽपि...' इति णत्वम्। ३—षस्य—इत्युक्तेऽपि पदस्येत्यस्य विशेषणत्वेन षान्तस्येति लाभादन्तग्रहणं व्यर्थं सज्ज्ञापयति **भूतपूर्वप्रतिपत्त्यर्थ**मिति, अर्थात्—साम्प्रतं षान्तत्वाभावेऽपि स्यादेव निषेधः। यथा—प्रनङ्क्ष्यति। ४—इडभावपक्षे 'अनुदात्तस्य चर्दुपधस्य...' इति वैकल्पिकोऽम्। पक्षे गुणः। ५—'रधादिभ्यश्च' इति वैकल्पिके—इटि—ईटि च गुणः 'इट ईटि' इति सिज् लोपः। **अतर्पीत्**। इडभावपक्षे वैकल्पिके अमि—उपधावृद्धौ, **अत्राप्सीत्**। **अताप्र्सीत्**। सिजभावपक्षे—पुषादित्वादङ्—**अतृपत्**। ६—'अनुदात्तस्य चर्दुपधस्या...'इत्यमूविधानार्थमनयोरनुदात्तत्वमित्यर्थः।

विवेकः। मुह्यति। मुमोहिथ, मुमोग्ध, मुमोढ । मोहिता, मोग्धा, मोढा मोहिष्यति, मोक्ष्यति। अमुहत् । ष्णुह उद्गिरणे । स्नुह्यति। सुष्णोह। सुष्णोहिथ, सुष्णोग्ध, सुष्णोढ। सुष्णुहिव, सुष्णुह्व। स्नोहिता, स्नोग्धा, स्नोढा। स्नोहिष्यति । स्नोक्ष्यति । अस्नुहत् । ष्णिह प्रीतौ । स्निह्यति। सिष्णेह। स्नेहिता, स्नेग्धा, स्नेढा। अस्निहत्। तुष तुष्टौ। तुष्यति। दुष वैकृत्ये। दुष्यति। श्लिष आलिङ्गने। श्लिष्यति।

**७३१ श्लिष आलिङ्गने ३। १। ४६॥**

च्लेः क्सः। अश्लिक्षत् कन्यां देवदत्तः। आलिङ्गने किम्-समश्लिषत् जतु काष्ठम्। प्रत्यासत्ताविह श्लिषिः। क्रुध क्रोधे। क्रुध्यति। क्षुध बुभुक्षायाम्। क्षुध्यति। शुध शौचे। शुध्यति। षिधु संराद्धौ। सिध्यति। शमु उपशमे।

**७३२ शमामष्टानां दीर्घः श्यनि ७। ३। ७४॥**

शम् तम् दम् श्रम् भ्रम् क्षम् क्लम्-मदामचो दीर्घः श्यनि । प्रणिशाम्यति। शेमतुः। शेमुः। शेमिथ। शमिता। अशमत्। तमु काङ्क्षायाम्। ताम्यति। तमिता। अतमत्। दमु उपशमे। दाम्यति। दमिता। अदमत्। श्रमु तपसि खेदे च । श्राम्यति । अश्रमत्। भ्रमु अनवस्थाने। वा भ्राशेति श्यन्वा। भ्राम्यति, भ्रामति। भ्रेमतुः, बभ्रमतुः। अभ्रमत्। क्षमू सहने । क्षाम्यति । चक्षमिथ, चक्षन्थ । चक्षमिव, चक्षण्व । क्षमिता। क्षन्ता। अयं न षित्। भ्वादिस्तु षित्।

अषितः क्षाम्यतेः क्षान्तिः क्षमूषः क्षमतेः क्षमा।

क्लमु ग्लानौ। ष्ठिवुक्लमुचमामिति दीर्घः। क्लाम्यति। अक्लमत। क्लमिता।

---

१-वैकृत्यम्=विकारः, दुष्यति=विकृतो भवतीत्यर्थः। २-आलिङ्गति स्म ३-पुषादित्वादङ्। ४-प्रत्यासत्तिः=संयोगः। ५-'फणाञ्च...' इत्येत्वाभ्यासलोपौ वैकल्पिकौ। ६-ऊदित्वादिट्। ७-'म्वोश्चे' ति नत्वे, णत्वम्। ८-षित्वाऽषित्वयोः फलभेदं श्लोकार्धेन सङ्गृह्णाति, अषित इति-अषितः क्षाम्यतेः=श्यन्विकरणपठितस्य क्षम् धातोः क्तिनि क्षान्तिरिति रूपम्। अषित्वात् 'षिद्भिदादिभ्यः' इत्यङ् नेत्यर्थः। क्षमूषस्तु भौवादिकात् षितः क्तिनं बाधित्वा षित्वादङि 'क्षमा' इति रूपम्।

**मदी** हर्षे । माद्यति । अमदत् । **असु** क्षेपणे । अस्यति । आस । असिता ।

**७३३ अस्यतेस्थुक् ७ । ४ । १७ ॥**

अङि । अस्यतीत्यङ् । आस्थत् । **यसु** प्रयत्ने ।

**७३४ यसोऽनुपसर्गात् ३ । १ । ७१ ॥**

**७३५ संयसश्च ३ । १ । ७२ ॥**

श्यन्वा । यस्यति, यसति । संयस्यति, संयसति । अनुपसर्गात्किम् । प्रयस्यति । **जसु** मोक्षणे । जस्यति । **तसु** उपक्षये । **दसु** च । तस्यति । अतसत् । दस्यति । अदसत् । **वसु** स्तम्भे । वस्यति । न शसददेति निषेधः ववास । ववसतुः । बशादिरिति मते तु । बेसतुः । बेसुः । **व्युष** विभागे । व्युष्यति । **विस** प्रेरणे । विस्यति । अविसत् । **वुस** उत्सर्गे । वुस्यति । **मुस** खण्डने । मुस्यति । **मसी** परिणामे । परिणामो=विकारः । **लुठ** विलोडने । लुठ्यति । **उच** समवाये । उच्यति । उवोच[1] । ऊचतुः । ऊचुः **भृशु भ्रंशु** अधःपतने । भृश्यति । बभर्श । अभृशत् । अनिदितामिति नलोपः । भ्रश्यति । बभ्रंश । अभ्रशत्[2] । **कृश** तनूकरणे । कृश्यति । **ञितृषा** पिपासायाम् । तृष्यति । **हृष** तुष्टौ । श्यन्नौ भौवादिकाद्विशेषः, हृष्यति । अहृषत् । **रुष रिष** हिंसायाम् । तीषेति वेट् । रोषिता, रोष्टा । रेषिता, रेष्टा । **कुप** क्रोधे । कुप्यति । **गुप** व्याकुलत्वे । **लुभ** गार्ध्ये । गार्ध्यमाकाङ्क्षा । लोभिता, लोब्धा[3] । लोभिष्यति । भ्वादेरवृत्करणाल्लोभतीत्यप्याहुः[4] । **क्षुभ** संचलने । क्षुभ्यति । **क्लिदू** आर्द्रीभावे । क्लिद्यति । चिक्लेदिथ, चिक्लेत्थ । चिक्लिदिव, चिक्लिद्व । चिक्लिदिम, चिक्लिद्म । **ञिमिदा** स्नेहने ।

**७३६ मिदेर्गुणः ७ । ३ । ८२ ॥**

मिदेरिको गुण इत्संज्ञकशकारादौ प्रत्यये । मेद्यति । अमिदत् ।

---

उच्+अ, द्वित्वे, गुणे, 'अभ्यासस्याऽसवर्णे' इत्युवङ् । २–पुषादित्वादङ्, 'अनिदितां...' इति न लोपः । ३–'तीषसहलुभ...' इति वेट् इडभावे रूपम्, भस्य जस्त्वम् । ४–भ्वादिगणस्याऽवृत्करणात्=असमापनात् समाप्तेरभावादिति यावत् ( भ्वादिराकृतिगणः ) तेन शपि लोभतीत्यपि रूपम् ।

**ञिक्ष्विदा** स्नेहनमोचनयोः। क्ष्विद्यति। **ऋधु** वृद्धौ। ऋध्यति। आनर्ध[1]।
**गृधु** अभिकाङ्क्षायाम्। गृध्यति। अगृधत्। **षूङ्** प्राणिप्रसवे। सूयते।
सुषुवे। क्रादिनियमान्नित्यमिट्। सुषुविषे। सुषुविवहे। सोता[2], सविता।
**दूङ्** परितापे। **दीङ्** क्षये।

**७३७ दीङो युडचि क्ङिति ६।४।६३॥**

दीङः परस्याजादेः क्ङिति आर्धधातुकस्य युट्। (वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ[3])। दिदीये।

**७३८ मीनाति-मिनोति-दीङां ल्यपि च ६।१।५०॥**

एषामात्वं ल्यपि चादशित्येज्निमित्ते। दाता। दास्यते। (स्थाघ्वोरित्वे दीङः प्रतिषेधः[4]) अदास्त। **डीङ्** विहायसा गतौ[5]। डीयते। **पीङ्** पाने। पीयते। **माङ्** माने। मायते। ममे[6]। माता। **जनी[7]** प्रादुर्भावे।

**७३९ ज्ञा-जनोर्जा ७।३।७९॥**

शिति। जायते। गमहनजनेति उपधाया लोपः। 'स्तोः श्चुना श्चुः'। जज्ञे[8]। जनिता। जनिष्यते।

**७४० दीप-जन-बुध-पूरि-तायि-प्यायिभ्योऽन्यतरस्याम् ३।१।६१॥**

एभ्यश्च्लेश्चिण्वा एकवचने तशब्दे परे।

**७४१ चिणो लुक् ६।४।१०४॥**

---

१-ऋकारैकदेशो रेफो हल्त्वेन गृह्यते तेन 'तस्मान्नुड्...' इति नुट् 'आनर्ध'। २-'स्वरतिसूतिसूयति....'इति वेट्। लृडादौ-सोष्यते-सविष्यते। सूयताम् असूयत। सूयेत। सोषीष्ट। सविषीष्ट, असोष्ट, असविष्ट। असोष्यत-असविष्यत-इति रूपाणि। ३-युट आभीयत्वेनाऽसिद्धत्वात् 'एरनेकाच ...' इति यण् प्राप्तः स माभूदित्येतदर्थमिदं वार्त्तिकम्। ४-'स्थाघ्वोरिच्च' इति प्राप्तमित्वं न स्यादित्यर्थः। ५-पक्षिविमानादिगमने इत्यर्थः। लिटि-'एरनेकाचो...' इति यण् 'डिड्ये' लुङि अडयिष्ट, अडयिषाताम्, अडयिषत। अडयिष्ठाः। इत्यादयः। ६-लुङि-अमास्त, अमासाताम्, अमासत। इत्यादि। ७-ईकार इत्। ८-द्वित्वे हलादिशेषे 'जजन्+(त) ए, इत्यत्र 'गमहनजन...' इति उपधालोपे श्चुत्वेन नस्य ञत्वे जज्ञ्ञः जज्ञे।

चिणः परस्य तशब्दस्य लुक्।

**७४२ जनि-वध्योश्च ७। ३। ३५॥**

न वृद्धिश्चिणि ञ्णिति कृति च। अजनि, अजनिष्ट। **दीपी** दीप्तौ। दीप्यते। दिदीपे। अदीपि, अदीपिष्ट। **पद** गतौ। पद्यते। पेदे। पत्ता। पद्येत। पत्सीष्ट।

**७४३ चिण्ते पदः ३। १। ६०॥**

अपादि। अपत्साताम्। अपत्सत[1]। **विद** सत्तायाम्। विद्यते। वेत्ता। **बुध** अवगमने। बुध्यते। बोद्धा[2]। एकाचो बशो भष्झषन्तस्येति भष्भावः भोत्स्यते[3]। भुत्सीष्ट। अबोधि[4], अबुद्ध। अभुत्साताम्। **युध** संप्रहारे। युध्यते। युयुधे। योद्धा। अयुद्ध। **सृज** विसर्गे। सृज्यते। ससृजे। सृजि-दृशोर्झल्यमकितीत्यमागमः। स्रष्टा[5]। स्रक्ष्यते। सृक्षीष्ट। लिङ्सिचाविति कित्त्वम्। असृष्ट। असृक्षाताम्। **मीङ्** हिंसायाम्। मीयते। **रीङ्** श्रवणे रीयते। **लीङ्** श्लेषणे। लीयते।

**७४४ विभाषा लीयतेः ६। १। ५१॥**

लीयतेरिति यका[6] निर्देशो नतु श्यना। लीलीङोरात्वं स्यादेज्विषये ल्यपि च। लेता, लाता। लेष्यते, लास्यते। एज्विषये किम्। लीयते। लिल्ये। **व्रीङ्** वृणोत्यर्थे[7]। व्रीयते। विव्रिये। **मृष** तितिक्षायाम्[8]। मृष्यति। मृष्यते। ममर्षिथ। ममृषे। ममृषिषे। मर्षितासि, मर्षितासे। **णह** बन्धने। नह्यति, नह्यते[9]। ननाह। 'नहो धः' इति धः। ननद्ध। नेहे। नद्धा।

---

१—अपत्थाः, अपत्साथाम्, अपध्वम्। अपत्सि, अपत्स्वहि, अपत्स्महि। २—लघूपधगुणः, तकारस्य धत्वम्। ३—**भोत्स्यते**, 'एकाचो बशो भष्...' इति बस्य भत्वम्। ४—दीपजनबुध....' इति च्लेः चिण् (विकल्पेन)। ५—अमो मित्वाद् ऋकारात्परत्वम्, जकारस्य षत्वम् तकारस्य ष्टुत्वम् यण्। ६—'सार्वधातुके यक्' इति विहितेन यका न तु श्यना अन्यथा लीङ्त्येव ब्रूयात्। तेन लीलिङोरुभयोरप्यात्वम्। ७—वरणे-इत्यर्थः। ८—सहने इत्यर्थः। ९—णो नः। लिटि—ननाह, नेहतुः, नेहुः। नेहिथ, ननद्ध, नेहथुः, नेह। ननाह-ननह, नेहिव, नेहिम। आत्मनेपदे-नेहे, नेहाते, नेहिरे। इत्यादि।

नत्स्यति[1] । अनात्सीत् । अनद्ध । रञ्ज रागे । रज्यति[2], रज्यते । शप आक्रोशे । शप्यति, शप्यते । शक विभाषितोऽमर्षणे । विभाषित इत्युभयपदीत्यर्थः । शक्यति, शक्यते, हरिं द्रष्टुं भक्तः । शशाक । शेकिथ । शशक्थ । शेके । शक्ता । शक्ष्यति । शक्ष्यते । पुषादित्वादङ् । अशकत् । अशक्त । सेट्कोऽयमित्येके । तन्मते नानिट्केषु लृदित्पठितः । शकिता । शकिष्यति । शकिष्यते । ॥ इति दिवादिः ॥

## अथ स्वादिगणः ॥५॥

षुञ् [3]अभिषवे ।

**७४५ स्वादिभ्यः श्नुः ३ । १ । ७३ ॥**

कर्तरि सार्वधातुके । शपोऽपवादः । सुनोति । सुनुतः । हुश्नुवोरिति यण् । सुन्वन्ति । लोपश्चास्येति प्रत्ययोतो वा लोपः । सुन्वः, सुनुवः । सुनुते । सुन्वाते । सुन्वते[4] । सुनुषे । सुषाव, सुषुवे । सोता । सुनवानि[5] । सुनवै । सुनुयात् ।

**७४६ स्तु-सु-धूञ्भ्यः परस्मैपदेषु ७ । २ । ७२ ॥**

सिच इट् । असावीत् । असोष्ट । अभिषुणोति[6] । अभ्यषुणोत् ।

**७४७ सुनोतेः स्यसनोः ८ । ३ । ११७ ॥**

सस्य षो न । विसोष्यति । षिञ् बन्धने । विसिनोति[7] । चिञ् चयने । चिनोति । चिनुते ।

---

१-'नहो धः' इति हस्य धत्वे चर्त्वम्, नत्स्यति । लुङि अनात्सीत् । अनाद्धाम्, अनात्सुः । अनात्सीः, अनाद्धम्, अनाद्ध । अनात्सम्, अनात्स्व, अनात्स्म । आत्मनेपदे-अनद्ध, अनत्साताम्, अनत्सत । इत्यादि । २-'अनिदितां...' इति नलोपः । ३-अभिषवः=स्नपनं पीडनं स्नानं सुरासन्धानं च । ४-'आत्मनेपदेष्वनतः' इति झस्याऽत् । ५-'आडुत्तमस्य....' इत्यादि कृते 'हुश्नुवोरि'ति यणं बाधित्वा परत्वाद् गुणः, सुनवानि । एवं सुनवै । ६-'उपसर्गात्सुनोति...' इति षत्वे णत्वम् । अभ्यषुणोत् इत्यत्र 'अड्भ्यासव्यवायेऽपि' इति षत्वम् । ७-'सात्पदाद्योः' इति षत्वनिषेधः, 'उपसर्गात्सुनोति...' इति तु न षः, सुनोत्यादिष्वनन्तर्भावात् ।

**७४८ विभाषा चेः ७ । ३ । ५८ ॥**

अभ्यासाच्चेः कुत्वं वा सनि लिटि च । चिकाय, चिचाय, चिक्ये । चिच्ये । अचैषीत् , अचेष्ट ॥ **स्तृञ्** आच्छादने । स्तृणोति[1], स्तृणुते । तस्तार[2], तस्तरे । गुणोर्तीति गुणः । स्तर्यात् ॥

**७४९ ऋतश्च संयोगादेः ७ । २ । ४३ ॥**

ऋदन्तात्संयोगादेर्लिङ्सिचोरिड् वा तङि । स्तरिषीष्ट, स्तृषीष्ट[3] । अस्तरिष्ट, अस्तृर्त[4] ॥ **धुञ्** कम्पने । धुनोति, धुनुते । दुधाव, दुधुवे । अधौषीत् । अधोष्यत् ॥ **धूञ्** कम्पने । धूनोति । धूनुते । स्वरतीति वेट् । दुधविथ, दुधोथ । किति लिटि तु ॥

**७५० श्र्युकः किति ७ । २ । ११ ॥**

श्रिञ एकाच उगन्ताच्च गित्कितोरिण्न । इति प्राप्ते । क्रादिनियमान्नित्यमिट्[5] । दुधुविव । दुधुविम । अधावीत् , अधविष्ट, अधोष्ट ॥ **कृञ्** हिंसायाम् । कृणोति, कृणुते । चकार । चकर्थ । चक्रे । क्रियात् । कृषीष्ट । अकार्षीत् , अकृत ॥ **वृञ्** वरणे । वृणोति, वृणुते ॥

**७५१ बभूथाततन्थ-जगृभ्म-ववर्थेति निगमे ७ । २ । ६४ ॥**

एषां वेद इडभावो निपात्यते । तेन भाषायां थलीट् । ववरिथ, ववृथ । ववृवहे । वृतो वा । वरीता, वरिता ॥

**७५२ लिङ्सिचोरात्मनेपदेषु ७ । २ । ४२ ॥**

वृङ्वृञ्भ्यामृदन्ताच्च परयोर्लिङ्सिचोरिड् वा तङि ॥

---

१–ऋवर्णान्नस्य णत्वं वाच्यम् । २–'ऋतश्च संयोगादेर्गुणः' इति गुणे वृद्धिः । **तस्तरतुः**, अत्र पूर्वोक्तेन गुणः । ३–उश्चेति कित्वान्न गुणः । ४–'ह्रस्वादङ्गात्' इति सिचो लोपः । ५–'स्वरतिसूतिसूयति.... ७ । २ । ४४ ।' इति विकल्पे यद्यपि परः, तथापि 'आर्धधातुकस्ये... ७ २ । ३५ ।' इति विधिकाण्डारम्भात् प्रागेव 'नेड् वशि कृति ७ । २ । ८ ।'...'श्र्युकः किति ७ । २ । ११ । इत्यादि प्रतिषेध-( निषेध )—काण्डारम्भसामर्थ्यात्–अयं श्र्युकः किति इति निषेधः स्वरत्यादिविकल्पं बाधते । एवं निषेधं च क्रादि नियमो बाधते ( इति नित्यमिट् । ) विधिप्रकरणात्प्रागेव निषेधप्रकरणाऽऽरम्भसामर्थ्यादित्यर्थः ।

**७५३ न लिङि ७ । २ । ३६ ॥**

वृतो लिङ इटो न दीर्घः । वरिषीष्ट, वृषीष्ट । अवारीत् , अवरिष्ट, अवृत ॥ **टुदु** उपतापे । दुनोति ॥ **हि** गतौ वृद्धौ च ॥

**७५४ हिनुमीना ८ । ४ । १५ ॥**

उपसर्गस्थान्निमित्तात्परस्यैतयोर्नस्य णः । प्रहिणोति ॥

**७५५ हेरचङि ७ । ३ । ५६ ॥**

अभ्यासात्सिनोतेर्हस्य कुत्वं नतु चङि । जिघाय ॥ **आप्लृ** व्याप्तौ । आप्नोति । आप्नुतः । आप्नुवन्ति । आप्नुवः । आप्नुहि । लृदित्त्वादङ् । आपत् ॥ **शक्लृ** शक्तौ । अशकत् ॥ **राध साध** संसिद्धौ । राध्नोति ॥

**७५६ राधो हिंसायाम् ६ । ४ । १२३ ॥**

एत्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च । अपरेधतुः । अपरेधुः । रेधिथ । राद्धा । साध्नोति । ससाध । साद्धा । असात्सीत् । असाद्धाम् ॥ **ञिधृषा** प्रागल्भ्ये । धृष्णोति । दधर्ष । धर्षिता ॥ **दम्भु** दम्भने अनिदितामिति नलोपः । दभ्नोति । ददम्भ । (श्रन्थि-ग्रन्थि-दम्भि-स्वञ्जीनां लिटः कित्त्वं वा ) । कित्त्वपक्षे नलोपः । तस्याभीयत्वादसिद्धत्वेनैत्वाभ्यासलोपयोरप्राप्तौ । ( दम्भेश्च एत्वाभ्यासलोपौ वक्तव्यौ ) देभतुः, ददम्भतुः । दम्भिता । दभ्यात् ॥ **तृप** प्रीणने ॥

**७५७ क्षुभ्नादिषु च ८ । ४ ३९ ॥**

न णत्वम् । तृप्नोति । ततर्प ॥ **अशू** व्याप्तौ संघाते च । अश्नुते ॥

**७५८ अश्नोतेश्च ७ । ४ । ७२ ॥**

दीर्घादभ्यासादवर्णात्परस्य नुट् । आनशे । अशिता । अष्टा । अशिष्यते, अक्ष्यते । अश्नुवीत । अक्षीष्ट, अशिषीष्ट । आशिष्ट, आष्ट । आक्षाताम् ॥ इति स्वादिः ॥

---

१–असंयोगपूर्वत्वान्न हेर्लुक् । २–लोकवञ्चनाय विहितकर्मानुष्ठानम्=दम्भनम्=दम्भः । ३–अत्र श्नुविकरणनिर्देशः क्र्यादिगणस्थस्य 'अश भोजने' इत्यस्य वारणार्थः । ४–अत्र संयोगपूर्वत्वात् 'हुश्नुवो' रिति यण् न, किन्तूवङ् । ५–ऊदित्वादिड् विकल्पः । 'व्रश्च…'ति षत्वे, 'षढोः कःसि' इति कः, परस्य षत्वम्, क-षसंयोगे क्षः । इति स्वादयः ।

# अथ तुदादिगणः ॥ ६ ॥

**तुद** व्यथने ॥

**७५६ तुदादिभ्यः शः ३ । १ । ७७ ॥**

शपोऽपवादः । तुदति[1], तुदते । तुतोदिथ । तुतुदे । तोत्ता । अतौत्सीत्, अतुत्त ॥ **णुद** प्रेरणे । नुदति, नुदते । नुनोद । नुनुदे । नोत्ता[2] । **भ्रस्ज** पाके । ग्रहिज्यावयीति संप्रसारणम् । सस्य श्चुत्वम् । तस्य जश्त्वम् । भृज्जते ॥

**७६० भ्रस्जो रोपधयो रमन्यतरस्याम् ६ । ४ । ४७ ॥**

भ्रस्जेरेफस्योपधायाश्च स्थाने रमागमो वार्धधातुके । मित्त्वादन्त्यादचः परः । स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः[3] । बभर्ज[4] । बभर्जतुः । बभर्जिथ, बभर्ष्ठ[5] । बभ्रज्जतुः । बभ्रज्जिथ । स्कोरिति सलोपः । व्रश्चेति षः । बभ्रष्ठ । बभर्जे । बभ्रज्जे । भर्ष्टा, भ्रष्टा । भर्क्ष्यति, भ्रक्ष्यति । क्ङिति[6] रमागमं बाधित्वा संप्रसारणं पूर्वविप्रतिषेधेन[7], भृज्ज्यात्, भृज्ज्यास्ताम्, भृज्ज्यासुः । भर्क्षीष्ट, भ्रक्षीष्ट । अभार्क्षीत्, अभ्राक्षीत्[8] । अभर्ष्ट, अभ्रष्ट । **कृष** विलखने,

१–'श' इत्यस्य 'सार्वधातुकमपित्' इति ङित्वान्न लघूपधगुणः । **तुदति** । लुङि–अतौत्सीत्, वदव्रजेति वृद्धिः । अतौत्ताम्, (झलो झलि सिचो लोपः) अतौत्सुः इत्यादि । आत्मनेपदे–अतुत्त, अतुत्साताम्, अतुत्सत । अतुत्थाः, अतुत्साथाम्, अतुद्ध्वम् । अतुत्सि, अतुत्स्वहि, अतुत्स्महि । २–अनौत्सीत्, अनुत्त (लुङि) । ३–रमागमोऽयं रेफस्य–उपधायाश्च स्थाने आदेशो भवतीत्यर्थः । तथा चागमत्वमादेशत्वं चास्य सिद्ध्यति । ४–भ्रस्ज्+अ, रमागमे उपधायाः (सस्य) रेफस्य च निवृत्तौ 'भर्ज्+अ' इति स्थितौ द्वित्वे हलादिशेषे अभ्यासकार्ये च '**बभर्ज**' इति सिद्ध्यति । ५–इडभावे व्रश्चेति षत्वे थस्य ष्टुत्वे रूपम् । ६–रमागमाऽभावपक्षे इमानि रूपाणि । ७–वार्त्तिकमिदम् । ८–तुल्यबलविरोधे अपरं कार्यमिति विच्छिद्य पूर्वं कार्यमिति नियमेनेत्यर्थः । ९–लुङि–अभ्राक्षीत्, अभ्राष्टाम्, अभ्राक्षुः । अभ्राक्षीः, अभ्राष्टम्, अभ्राष्ट । अभ्राक्षम्, अभ्राक्ष्व, अभ्राक्ष्म । पक्षे अभार्क्षीत्, अभार्ष्टाम्, अभार्क्षुः, इत्यादि रूपाणि । आत्मनेपदे–अभर्ष्ट, अभर्क्षाताम्,

कृषति । कृषते । चकर्ष, चकृषे । क्रष्टा, कर्ष्टा । कृक्षीष्ट । अक्राक्षीत्[1], अकार्क्षीत् । अकृक्षत्[2], अकृष्ट[3], अकृक्षाताम्, अकृक्षत । स्पृशमृशेति सिज् वा । अकृक्षाताम्, अकृक्षन्त ॥ **मिल** संगमने । मिलति, मिलते । मिमेल । मेलिता, अमेलीत् । **मुच्लृ** मोक्षणे ॥

**७६१ शे मुचादीनाम् ७ । १ । ५९ ॥**

मुच्-लुप्-लिप्-विद्-सिप्-सिच् कृत्-खिद्-पिशां नुम् । मुञ्चति, मुञ्चते । मोक्ता । मुच्यात् । लिङ्सिचाविति कित् । मुक्षीष्ट । अमुचत्, अमुक्त । अमुक्षाताम् ॥ **लुप्लृ** छेदने । लुम्पति, लुम्पते । लोप्ता । अलुपत्[4], अलुप्त । **विद्लृ**[5] लाभे । विन्दति, विन्दते । विवेद । व्याघ्रभूतिमते[6], सेद् । वेदिता । भाष्यमतेऽनिट् । परिवेत्ता[7] । **षिच** क्षरणे । सिञ्चति, सिञ्चते[8] । असिचत्, असिचत[9], असिक्त । **लिप** उपदेहे[10] । लिम्पति, लिम्पते । लेप्ता । लिपिसिचिह्वश्चेत्यङ् । अलिपत्, अलिप्त । **कृती** छेदने । कृन्तति । चकर्त । कर्तिता । सेसिचीति वेट् । कर्तिष्यति, कर्त्स्यति[11] । अकर्तीत् ॥ **खिद** परिदेवने । खिद्यति । चिखेद । खेत्ता ॥ **पिश** अवयवे । पिंशति । पेशिता ॥

---

अभर्क्षत । अभर्ष्ठाः, अभर्क्षाथाम्, अभर्ड्ढ्वम् । अभर्क्षि, अभर्क्ष्वहि, अभर्क्ष्महि । पक्षे-अभ्रष्ट, अभ्रक्षाताम्, अभ्रक्षत । अभ्रष्ठाः-इत्यादि ।

१-'अनुदात्तस्ये'ति सिचि अम् वा, **अक्राक्षीत्, अकार्क्षीत्** । २-सिजभावपक्षे च्लेः क्सः । ३-तङि 'लिङ् सिचावात्म...' इति कित्वादम् न । ४-लृदित्वादङ् । ५-चत्वारो विद्धातवः, तत्रैवं रूपभेदः—

'वेत्ति' रूपं विद ज्ञाने, 'विन्ते' विद विचारणे ।
'विद्यते' विद सत्तायाम्, विद्लृ लाभे च 'विन्दति' ॥इति ॥

६-'विन्दतिश्चान्द्रदौर्गादेरिष्टो भाष्येऽपि दृश्यते ।
व्याघ्रभूत्यादयस्त्वेनं नेह पेठुरिति स्थितम् ॥' इत्युक्तेः ॥

७-परिपूर्वकाद् विद्धातोस्तृचि इडभावे गुणे च **परिवेत्ता**=ज्येष्ठं भ्रातरमन्तरित्य दाराग्निहोत्रादिपरिगृहीता । ८-सेक्ता, सेक्ष्यति । इत्यादि । ९-असिचत, असिचेताम्, असिचन्त । असिचथाः, असिचेथाम् असिचध्वम् । असिचे, असिचावहि, असिचामहि । १०-लेपने इत्यर्थः । ११-'सेऽसिचि कृतचृत...' इति इट् वा ।

**ओव्रश्चू**[1] छेदने। वृश्चति। वव्रश्च[2]। वव्रश्चिथ, वव्रष्ठ[3]। व्रश्चिता, व्रष्टा। वृश्चिष्यति, व्रक्ष्यति[4]। वृश्च्यात्। अव्रश्चीत्, अव्राक्षीत्[5]। **व्यच** व्याजीकरणे। विचति[6]। विव्याच। विविचतुः। व्यचिता। व्यचिष्यति। विच्यात्। अव्याचीत्, अव्यचीत्[7]। व्यचेः कुटादित्वमनसीति तु नेह प्रवर्तते, अनसीति पर्युदासेर्न, कृन्मात्रविषयत्वात्[8]। **उछि** उञ्छे। उञ्छः=कणश आदानं कणिशाद्यर्जनं शिलमिति यादवः। उञ्छति[9]। उञ्छाञ्चकार। **ऋच्छ** गतीन्द्रियप्रलयमूर्तिभावेषु। ऋच्छत्यृतामिति गुणः। द्विहल्ग्रहणस्यानेकहलुपलक्षणत्वान्नुट्[10]। आनर्च्छ[11], आनर्च्छतुः। ऋच्छिता[12]। **उज्झ** उत्सर्गे। उज्झति। उज्झाञ्चकार[13]। **लुभ** विमोहने। लुभति। तीषसहलुभेति वेट्।

---

१–ओकारोऽनुनासिकत्वादित्संज्ञकः। २–णलि द्वित्वे अभ्यासस्य सम्प्रसारणे उरदत्वे हलादिशेषे रूपम्। ३–'स्कोः संयो...' इति सलोपः, 'व्रश्चभ्रस्ज...' इति अन्त्यस्य (चकारस्य) षत्वम्। ४–ऊदित्वादयं वेट्, इडभावे रूपमिदम्, चकारस्थानिकस्य षकारस्य 'षढोः कः सि' इति कत्वे परस्य (सस्य) षत्वे कषसंयोगे क्षः। ५–ऊदित्वाद्वेट्। इडभावपक्षे 'स्को'-रिति सलोपः, व्रश्चेति षः, षढोरिति कः, सस्य षत्वं क-ष संयोगे क्षः 'अतो हलादेः' इति वृद्धिः। **अव्राक्षीत्**। ६–'ग्रहिज्या...' इति सम्प्रसारणम्। ७–'अतो हलादेर्लघोः' इति वा वृद्धिः। ८–द्विविधो हि नञ्—यथा चोक्तम्—

'नञौ तु द्वौ समाख्यातौ पर्युदास–प्रसज्यकौ।
पर्युदासः सदृग्ग्राही प्रसज्यस्तु निषेधकृत्॥ इति॥

अत्र हि समस्तत्वात् पर्युदासो नञ् पर्युदासो हि सदृशग्राही, तेन अस् भिन्नेऽस्सदृशे कृत्प्रत्यये (उद्विचिता, उद्विचितुम्, इत्यादौ) एव कुटादित्वेन ङित्वप्रयुक्तं सम्प्रसारणं भवति। तिङ्विषये 'व्यचिता' इत्यादौ (लुटि) तु न। ९–उञ्छाञ्चकार। उञ्छिता। उञ्छिष्यति। उञ्छतु। औञ्छत्। उञ्छेत्। उञ्छ्यात् (इदित्वान्नलोपो न) औञ्छीत्। औञ्छिष्यत्। इति रूपाणि। १०–'तस्मान्नुड् द्विहलः' इति सूत्रे इत्यर्थः। उपलक्षणत्वात्=परकत्वात्। ११–'इजादेश्च...' इति सूत्रे 'अनृच्छः' निषेधात् आम् न। 'आनर्च्छतुः' इत्यत्र 'ऋच्छत्यृताम्' इति गुणः। १२–लुङि-आर्च्छीत्, आर्च्छिष्टाम्, आर्च्छिषुः इत्यादि। १३–लिडादौ-उज्झाञ्चकार। उज्झिता। औज्झीत् (लुङि)।

लोभिता, लोब्धा । लोभिष्यति । **तृप तृम्फ** तृप्तौ । तृपति । ततर्प । तर्पिता । अतर्पीत् । तृम्फति । ( शे तृम्फादीनां नुम्वाच्यः ) । आदिशब्दः प्रकारे । तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः । ततृम्फ । तृफ्यात् । **मृड** सुखने । **पृड** च । मृडति । पृडति । **शुन** गतौ । शुनति । **इषु** इच्छायाम् । इषुगमीति छः । इच्छति । तीषेति वेट् । एषिता, एष्टा । एषिष्यति । इष्यात् । ऐषीत् । **कुट** कौटिल्ये । गाङ्कुटादीति ङित्त्वम् । चुकुटिथ । चुकोट । चुकुट । कुटिता । **पुट** संश्लेषणे । पुटति । पुटिता । **स्फुट** विकसने । स्फुटति । **स्फुर स्फुल** संचलने । स्फुरति । स्फुलति ।

**७६२ स्फुरति-स्फुलत्योर्निर्निविभ्यः ८ । ३ । ७६ ॥**

---

१-लुङि-अलोभीत् । २-'श' इत्यस्य 'सार्वधातुकमपित्, इत्यनेन ङित्वात् 'अनिदिताम्...' इति नलोपः ( पुनर्नुमिरूपं तृम्फति ) । नचात्र नकारो नास्ति किन्तु मकार इति वाच्यम्, नकारस्यैव स्थानेऽनुस्वारे परसवर्णे च मकारस्य जातत्वात् । ( अनिदितामिति लोपदृष्टौ-अनुस्वारपरसवर्णयोरसिद्धत्वाद् लोपदृष्टौ नकार एवेति । ) तथा चोक्तम्—

नकारजावनुस्वारपञ्चमौ झलि धातुषु ।
सकारजः शकारश्चे षाट्टवर्गस्तवर्गजः ॥ इति ॥

३-'शे तृम्फादीनाम्...' इत्यत्र आदिशब्दः प्रकारे ( सादृश्ये ) तथा च ये धातवः तृम्फधातुरिव ( तृम्फधातुर्यथा नकारयुक्तः तथा ) नकारानुषक्ताः=नकारयुक्ताः ( नकारस्थानिकजायमानानुस्वारपरसवर्णा अपि लोपदृष्टौ नकारानुषक्ताः ) तेषु सर्वत्र शप्रत्यये परतः 'नुम्' स्यादित्यर्थः । ४-आशिषि यासुटः कित्वाद् 'अनिदिताम्....' इति 'न' लोपः । ५-शुशोन । शोनिता । शोनिष्यति । शुनतु । अशुनत् । शुनेत् । शुन्यात् । अशोनीत् । अशोनिष्यत् । इति रूपाणि । ६-लिटि-इयेष, ईषतुः, ईषुः । इयेषिथ, ईषथुः, ईष । इयेष, ईषिव, ईषिम । ७-कुटति । चुकोट ( णलो णित्वात् ) गाङ्कुटादीति न ङित्वम्, चुकुटतुः, चुकुटुः । चुकुटिथ ( गाङ्कुटादीति ङित्वेन गुणाभावः ) चुकुटथुः, चुकुट । चुकोट, चुकुट ( उत्तमस्य णलो वा णित्वात् ) णित्वाभावे ङित्वे न गुणः, परत्र गुणः ) चुकुटिव, चुकुटिम । कुटिता, कुटिष्यति । इत्यादि ।

षत्वं वा। निष्फुरति, निस्फुरतीत्यादि। णू स्तवने। परिणूतगुणोदयः। नुवति। नुनाव। नुविता। इति कुटादयः। **टुमस्जो** शुद्धौ। मज्जति। ममज्ज। मस्जिनशोरिति नुम्। (मस्जेरन्त्यात्पूर्वो नुम्वाच्यः)। संयोगादिलोपः। ममङ्क्थ, ममज्जिथ। मङ्क्ता। मङ्क्ष्यति। **रुजो** भङ्गे। अरौक्षीत्। **भुजो** कौटिल्ये। रुजिवत्। **विश** प्रवेशने। विशति। **मृश** आमर्शने। आमर्शनं=स्पर्शः। अम्राक्षीत्, अमार्क्षीत्, अमृक्षत्। स्पृशमृशेति च्लेः सिच् वा। **शद्लृ** विशरणगत्यवसादनेषु। विशरणं=दुःखम्। सीदतीत्यादि। **शद्लृ** शातने।

**७६३ शदेः शितः १। ३। ६०॥**

१-(दीर्घ)-ऊकारान्तत्वबोधनायेदम्। अत्र 'ग्क्ङिति च' इति इणिनषेधः। २-नुविष्यति। नुवतु। अनुवत्। नुवेत्। नूयात्। अनुवीत्। अनुविष्यत्। ३-सस्य श्चुत्वेन शः। शस्य जश्त्वेन जः। ४-'मित्' हि-अन्त्यादचः परो भवतीति नियमेन मकारस्थाऽकारात्परो माभूत् किन्तु सकारजकारयोर्मध्ये स्यादित्यर्थः। ५-'स्कोः संयोगाद्योरन्ते च' इत्यनेन सलोपः इत्यर्थः। ६-अकारवत्त्वात्थलि वेट्। ७-अमाङ्क्षीत्। अमाङ्क्षीः, अमाङ्क्ताम्, अमाङ्क्त। अमाङ्क्षम्, अमाङ्क्ष्व, अमाङ्क्ष्म। अमङ्क्ष्यत् (लृङि)। ८-अरौक्षीत्, अरौक्ताम्। अरौक्षुः। अरौक्षीः, अरौक्तम्, अरौक्त। अरौक्षम्, अरौक्ष्व, अरौक्ष्म। अरोक्ष्यत्। ९-विशति। विवेश, विविशतुः, विविशुः। वेष्टा (व्रश्चेति षत्वम्, पुगन्तेति गुणः) वेक्ष्यति। विशतु। अविशत्। विशेत्। विश्यात्। अविक्षत् ('शल इगुपधादनि....' इति च्लेः 'क्सः'। अवेक्ष्यत्। इति रूपाणि। १०-एतस्य रूपाणि—मृशति। ममर्श। मर्ष्टा। मर्क्ष्यति। मृशतु। अमृशत्। मृशेत्। मृश्यात्। ११-लुङि अम्, पक्षे क्सं बाधित्वा पाक्षिके सिचि वदव्रजेति वृद्धौ-अम्राक्षीत्, अम्राष्टाम्, अम्राक्षुः। अम्राक्षीः, इत्यादि। अमभावपक्षे सिचि च सति-अमार्क्षीत्, अमार्ष्टाम् अमार्क्षुः, अमार्क्षीः, अमार्ष्टम्, इत्यादि। १२-पाघ्राध्मेति सीदादेशः। सीदति। ससाद, सेदतुः। सत्ता। सत्स्यति। सीदतु। असीदत्। सीदेत्। सद्यात्। असदत्-(लृदित्त्वात्। 'पुषादि....' इत्यङ्)। असत्स्यत्।

शिद्वाविनोऽस्मात्तङानौ स्तः । शीयते । शीयताम् । अशीयत । शीयेत । शशाद । शत्ता । शत्स्यति । अशदत् । अशत्स्यत् । कॄ विक्षेपे ।

**७६४ ॠत इद्धातोः ७ । १ । १०० ॥**

किरति । ( ईत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन ) । चकार । चकरतुः[2] । करिता, करीता[3] । कीर्यात्[4] । अकारीत् ।

**७६५ किरतौ लवने ६ । १ । १४० ॥**

उपात्किरतेः सुट् छेदेऽर्थे । उपस्किरति । ( अडभ्यासव्यवायेऽपि सुट् कात्पूर्व इति वक्तव्यम् ) । उपास्किरत् । उपचस्कार ।

**७६६ हिंसायां प्रतेश्च ६ । १ । १४१ ॥**

उपात्प्रतेश्च किरतेः सुट् हिंसायाम् । उपस्किरति । प्रतिस्किरति । गॄ निगरणे ।

**७६७ अचि विभाषा ८ । २ । २१ ॥**

गिरते रेफस्य लोऽजादौ प्रत्यये । गिरति[5], गिलति । गरिता, गरीता । गलिता, गलीता[6] । प्रच्छ ज्ञीप्सायाम्[7] । ग्रहिज्येति संप्रसारणम् । पृच्छति पप्रच्छ, पप्रच्छतुः, पप्रच्छुः । प्रष्टा[8] । प्रक्ष्यति[9] । अप्राक्षीत्[10] । मृङ् प्राणत्यागे ।

**७६८ म्रियतेर्लुङ्लिङोश्च १ । ३ । ६१ ॥**

लुङ्लिङोः शितश्च प्रकृतिभूतान्मृङस्तङानौ नान्यत्र[11] । ङित्त्वंस्वरार्थम् ।

---

१-परत्वाद् गुणवृद्धी भवत इति वक्तव्ये कुतोऽस्याऽऽरम्भः ? इति चेत् तत्रोच्यते, परादप्यन्तरङ्गं बलवदितीत्वे प्राप्ते वार्तिकमिदमारब्धम् । २-'ॠच्छत्यॄताम्' इत्यनेन गुणः । ३-'वॄतो वा' इति वा दीर्घः । ४-कीर्यात्, कीर्यास्ताम्, कीर्यासुः, ('ॠत इद्धातोः' इति 'इर्' हलि च इति दीर्घः । ५-'ॠत इद्धातोः' इति-'इर्' । ६-'वॄतो वा' वा इटो दीर्घः । ७-ज्ञीप्सा=प्रश्नकरणम् । ८-'व्रश्च...' इति च्छस्य षत्वम् । ९-व्रश्चेति षत्वे 'षढोः कः सि' इति कः, क ष् संयोगे क्षः । **प्रक्ष्यति** । १०-अप्राक्षीत् ( वदव्रज...' इति वृद्धिः ) । अप्राष्टाम्, अप्राक्षुः । अप्राक्षीः, अप्राष्टम्, अप्राष्ट । इत्यादि । ११-एवं चात्र विवेकः । लट् लोट् लङ् विधिलिङ् आशीर्लिङ् लुङ्तु आत्मनेपदम् । लिट् लुट् लृट् लृङ्तु परस्मैपदम् । तथैवोदाहरणानि मूले ।

रिङ्[1]। इयङ्। म्रियते। ममार। ममर्थ। मम्रिव। मम्रिम। मर्ता। मरिष्यति[2]। मृषीष्ट। अमृत[3]। पृङ् व्यायामे। प्रायेणायं व्याङ्पूर्वः। व्याप्रियते व्यापप्रे। व्यापरिष्यते। ह्रस्वादङ्गादिति सिज्लोपः। व्यापृत। व्यापृषाताम्। जुषी प्रीतिसेवनयोः। जुषते। जुजुषे[4]। ओविजी भयसंचलनयोः। प्रायेणायमुत्पूर्वः। उद्विजिते[5]।

**७६९ विज इट् १। २। २॥**

विजेः पर इडादिप्रत्ययो ङिद्वत्[6]। उद्विजिता। उद्विजिष्यते। ओलजी ओलस्जी व्रीडने। लजते। लेजे। लज्जते। ललज्जे।

॥ इति तुदादिगणः॥

# अथ रुधादिगणः ॥७॥

रुधिर् आवरणे।

**७७० रुधादिभ्यः श्नम् ३। १। ७८॥**

शपोऽपवादः। रुणद्धि। 'श्नसोरल्लोपः'। रुन्द्धः[7], रुन्धन्ति। रुणत्सि रुन्द्धः, रुन्द्ध। रुणध्मि, रुन्ध्वः, रुन्ध्मः। रुन्धे, रुन्धाते। रुन्त्से, रुन्धाथे, रुन्द्ध्वे। रुन्धे। रुन्ध्वहे। रुन्ध्महे। रुरोध, रुरुधे। रोद्धा। रोत्स्यति, रोत्स्यते। रुणद्धु, रुन्द्धात्, रुन्द्धाम्, रुन्धन्तु। रुन्धि[8], रुणधानि[9]। रुणधाव। रुणधाम। रुन्द्धाम्। रुन्धाताम्। रुन्धताम्। रुन्त्स्व।

---

१—'रिङ्शयग्लिङ्क्षु' इति 'रिङ्'। 'अचि श्नुधातु...' इति इयङ्। २—'ऋद्धनोः स्ये' इति इट्। ३—अमृत ('ह्रस्वादङ्गात्' इति सूत्रेण सिचो लुक्) अमृषाताम्, अमृषत। अमृथाः, अमृषाथाम्, अमृढ्वम्। अमृषि, अमृष्वहि, अमृष्महि। ४—जोषिता। जोषिष्यते। जुषताम्। अजुषत। जुषेत। जोषिषीष्ट। अजोषिष्ट। अजोषिष्यत। इति रूपाणि। ५—विविजे। विजिता। विजिष्यते। विजताम्। अविजत। विजेत। विजिषीष्ट। अविजिष्ट। अविजिष्यत। ६—तेन न लघूपधगुणः। इति तुदादयः। ७—णत्वस्याऽसिद्धत्वादनुस्वारे परसवर्णे च जाते तस्य (परसवर्णस्य) असिद्धत्वान्नस्य णत्वं न 'झरो झरि' इति विकल्पेन धलोपः, रुन्धः, पक्षे—'रुन्द्धः' इति। ८—झलन्तत्वाद् 'हुझल्भ्यो...' इति हेर्धिः। ९—रुणधानि—'आडुत्तमस्य पिच्चे'ति आडागमः।

रुणधै । रुणधावहै । रुणधामहै । अरुणत् (द्) । अरुन्द्धाम् । अरुन्धन् । दश्चेति रुर्वा । अरुण[1]:, अरुणत् (द्) । अरुन्द्धम् । अरुन्द्ध । अरुन्द्ध । अरुन्धाताम् । अरुन्धत । रुन्ध्यात्, रुन्धीत । रुध्यात्, रुत्सीष्ट[2] । अरुधत्[3], अरौत्सीत् । अरुद्ध । अरोत्स्यत्, अरोत्स्यत । **भिदिर्[4]** विदारणे । **छिदिर्[5]** द्वैधीकरणे । **युजिर्[6]** योगे । **रिचिर्** विरेचने । रिणक्ति । रिङ्क्ते । रिरेच । रेक्ता । अरिणक्[7] । अरिचत्, अरैक्षीत्, अरिक्त । **विचिर्** पृथग्भावे । विनक्ति, विङ्क्ते । **क्षुदिर्** संपेषणे । क्षुणत्ति, क्षुन्ते । क्षोत्ता । अक्षुदत्, अक्षौत्सीत्, अक्षुत्त । **उच्छृदिर्** दीप्तिदेवनयोः । छृणत्ति, छृन्ते । चच्छर्द सेसिचीति वेद । चच्छृदिषे, चच्छृत्से । छर्दिता । छर्दिष्यति । छर्त्स्यति[8] । अच्छृदत्, अच्छर्दीत्, अच्छर्दिष्ट । **उतृदिर्** हिंसानादरयोः । तृणत्ति । तृन्ते[9] । **कृती** वेष्टने । कृणत्ति[10] । **तृह हिसि** हिंसायाम् ।

**७७१ तृणह इम् ७ । ३ । ९२ ॥**

तृहः श्नमि कृते इम् हलादौ पिति । तृणेढि[11] । तृण्ढः । ततर्ह । तर्हिता । अतृणेट् ।

---

१—सिपि 'दश्च' इति रुर्वा । २—'लिङ्सिचावात्म...' इति कित्वान्न गुणः । ३—'इरितो वा' इत्यङ् । अरुधत्, अरुधताम्, अरुधन् इत्यादि । अङभावे अरौत्सीत् (वदव्रजेति वृद्धिः), अरौद्धाम् (झलो झलीति सिचः सलोपः), अरौत्सुः, अरौत्सीः, इत्यादि । अरुद्ध (आत्मनेपदे, झलो झलीति सलोपे) । ४—भिनत्ति, भिन्ते । बिभेद, बिभिदे । भेत्तासि, भेत्तासे । भेत्स्यति भेत्स्यते । भिनत्तु, भिन्ताम् । अभिनत्, अभिन्त । भिन्द्यात्, भिन्दीत । भिद्यात् भित्सीष्ट । अभिदत्, अभैत्सीत्, अभित्त । अभेत्स्यत्, अभेत्स्यत । सिद्धिस्तु रुधिवत् । ५—चिच्छेद, चिच्छिदे । अच्छिदत्, अच्छैत्सीत्, इत्यादि भिदिवत् । ६—लुङि अयुजत्—अयौक्षीत्—अयुक्त । ७—अरिणक्, अरिङ्क्ताम्, अरिञ्चन् । अरिणक्, अरिङ्क्तम्, अरिङ्क्त । अरिणचम्, अरिञ्च्व, अरिञ्च्म । ८—अस्य रिचिवद्रूपाणि । ९—तर्दिता । तर्दिष्यति । लुङि- अतृदत्, अतर्दीत्, अतर्दिष्ट । १०—कर्तिता । अकर्तीत् । अयं परस्मैपदी । ११—तृन इ ह्+ति, गुणे, ऋवर्णान्नस्य णत्वे, 'तृणेह्+ति' 'होढः' इति हस्य ढत्वे 'झषस्तथोर्धः' इति तकारस्य धकारे ष्टुत्वे पूर्वढस्य लोपः, तृणेढि ।

**७७२ श्नान्नलोपः[1] ६ । ४ । २३ ॥**

हिनस्ति[2] । जिहिंस । हिंसिता । **उन्दी** क्लेदने । उनत्ति । उन्तः । उन्दन्ति । उन्दाञ्चकार[3] । औनत् । औन्ताम् । औन्दन् । औनः । औनदम् । **अञ्जू** व्यक्ति-म्रक्षण-कान्ति-गतिषु । अनक्ति । अङ्क्तः । अञ्जन्ति । आनञ्ज[4] । आनञ्जिथ, आनङ्क्थ । अञ्जिता[5], अङ्क्ता । अङ्ग्धि । अनजानि । आनक् ।

**७७३ अञ्जेः सिचि ७ । २ । ७१ ॥**

अञ्जेः सिचो नित्यमिट् । आञ्जीत्[6] । **तञ्चू** संकोचने । तनक्ति । तङ्क्ता, तञ्चिता । **ओविजी** भयसंचलनयोः । विनक्ति । विङ्क्तः । विज

**तृण्ढः**—अल्लोपः, अनुस्वारपरसवर्णौ । तृणेढि, तृण्ढः, तृंहन्ति । तृणेक्षि, तृण्ढः, तृण्ढ । तृणेह्मि, तृंह्वः, तृंह्मः । लङि—अतृणेट्, (श्नमि इम् । हल्ङ्यादिलोपे ढत्व-जश्त्वे), अतृण्ढाम्, अतृंहन् । अतृणेट् (ड्), अतृण्ढम्, अतृण्ढ । अतृणहम्, अतृंह्व, अतृंह्म । वि० लि० तृंह्यात् । आ० लि० तृह्यात् । लु० अतर्हीत्, अतर्हिष्टाम् । अतर्हिष्यत् ।

१—श्नमः परस्य नस्य लोपः स्यादित्यर्थः । २—हिनस्ति, हिंस्तः, हिंसन्ति । हिनस्सि, हिंस्थः, हिंस्थ । हिनस्मि, हिंस्वः, हिंस्मः । जिहिंस, जिहिंसतुः, जिहिंसुः । जिहिंसिथ, जिहिंसथुः । हिंसिता । हिंसिष्यति । हिनस्तु, हिंस्तात्, हिंस्ताम्, हिंसन्तु । हिन्धि—(हौ श्नमि नुमि कृते श्नान्नलोप इति नुमो लोपे हेरपित्त्वेन ङित्वात् श्नसोरित्यल्लोपे धि चेति सलोपे रूपम्), हिंस्तात्, हिंस्तम्, हिंस्त । हिनसानि, हिनसाव, हिनसाम । अहिनत् (द्), अहिंस्ताम्, अहिंसन् । अहिनसम्, अहिंस्व, अहिंस्म । हिंस्यात् । (किति इदित्वान्नलोपो न) हिंस्यात्, हिंस्यास्ताम् । अहिंसीत् । अहिंसिष्यत् । ३—(लुटि) उन्दिता । उन्दिष्यति । उनत्तु—उन्तात् । उन्धि । उनदानि । वि० लि० उन्द्यात् । आ० लि० उद्यात् । लुङि—औन्दीत् । औन्दिष्यत् । ४—'तस्मान्नुड् द्विहलः' इति नुट् । ५—ऊदित्वाद् वेट् । ६—वदव्रजेति वृद्धिर्न, नेटीति निषेधात्, आटा सह तु आटश्चेति वृद्धिः । **आञ्जीत्** । तेन मा भवानञ्जीत्, इति । लृङि—आञ्जिष्यत्, आङ्क्ष्यत् ।

इडिति ञित्त्वम् । विविजिथ । विजिता । अविनक् । अविजीत् । **शिष्लृ** विशेषणे । शिनष्टि । शिंष्टः । शिंषन्ति । शिनक्षि । शिशेष । शिशेषिथ । शेष्टा । शेक्ष्यति । हेर्धिः[1] । शिण्ढि[2] । शिनषाणि । अशिनट्[3] । शिंष्यात् । शिष्यात् । अशिषत्[4] । अशेक्ष्यत् । एवं **पिष्लृ**[5] संचूर्णने । **भञ्जो** आमर्दने । श्नान्नलोपः । भनक्ति । बभञ्जिथ, बभङ्क्थ[6] । भङ्ग्धि । अभाङ्क्षीत् । **भुज** पालनाऽभ्यवहारयोः । भुनक्ति । भोक्ता । भोक्ष्यति । अभुनक्[7] ।

**७७४ भुजोऽनवने १ । ३ । ६६ ॥**

तङानौ स्तः । ओदनं भुङ्क्ते । अनवने किम्-महीं भुनक्ति[8] । **ञिइन्धी** दीप्तौ । इन्धे । इन्धाते । इन्धते । इन्त्से । इन्धाञ्चक्रे । इन्धिता । इन्धाम् । इन्धाताम् । इन्धताम् । इनधै । ऐन्ध । ऐन्धाताम् । ऐन्धत । ऐन्धाः[9] । **विद्** विचारणे । विन्ते । वेत्ता[10] ॥ इति रुधादिगणः ॥

# अथ तनादिगणः ॥८॥

**तनु** विस्तारे ।

**७७५ तनादिकृञ्भ्य उः ३ । १ । ७९ ॥**

तनोति, तनुते । ततान, तेने । तनिता । तनिष्यति, तनिष्यते ।

---

१-'हुझल्भ्यो हेर्धिः' । २-शिनष्+धि, इति स्थितिः । 'श्नसोरल्लोपः' इति 'अ'लोपे । 'जश्त्वम्, ष्टुत्वम्, झलो झलीति वा डलोपः, अनुस्वार-परसवर्णौ-**शिण्ढि**, शिण्ड्ढि । ३-**अशिनट्**, अशिंष्टाम्, अशिंषन् । अशिनट्(ड्), अशिंष्टम्, अशिंष्ट । अशिनषम्, अशिंष्व, अशिंष्म । ४-लृदित्वात् पुषादीत्यङ् । ५-पिनष्टि । पिपेष । पेष्टा । पेक्ष्यति । पिनष्टु । पिण्ढि । अपिनट् । पिंष्यात् । पिष्यात् । अपिषत् । अपेक्ष्यत् । ६-क्रादिनियमाद् (थलि) वेट् । ७-अभुनक्, अभुङ्क्ताम्, अभुञ्जन्-इत्यादि । भुञ्ज्यात् । भुज्यात् । अभौक्षीत्, अभौक्ताम्, अभौक्षुः । इत्यादि । ८-पालयतीत्यर्थः । ९-वि० लि० इन्धीत । आ० लि० इन्धिषीष्ट । लुङि-ऐन्धिष्ट । लृङि-ऐन्धिष्यत् । १०-वेत्स्यते । विन्ताम् । अविन्त । विन्दीत । वित्सीष्ट । अवित्त । अवेत्स्यत ॥ इति रुधादयः ॥

तनोतु, तनुताम्। अतनोत्, अतनुत। तनुयात्, तन्वीत। तन्यात्, तनिषीष्ट। अतनीत्, अतानीत्।

**७७६ तनादिभ्यस्तथासोः २।४।७९॥**

तनादेः सिचो वा लुक् तथासोः। अनुदात्तोपदेशेति नलोपः। अतत, अतनिष्ट। अतथाः, अतनिष्ठाः। अतनिष्यत्, अतनिष्यत। षणु दाने। सनोति, सनुते। ये विभाषेति आत्वम्। सायात्, सन्यात्।

**७७७ जन-सन-खनां सञ्झलोः ६।४।४२॥**

एषामाकारो झलादौ सनि झलादौ क्ङिति। असात, असनिष्ट। असाथाः, असनिष्ठाः। क्षणु हिंसायाम्। क्षणोति, क्षणुते। ह्म्यन्तेति न वृद्धिः। अक्षणीत्। अक्षत, अक्षणिष्ट। अक्षथाः, अक्षणिष्ठाः। क्षिणु च। उप्रत्यये लघूपधगुणो वा। क्षिणोति। क्षेणोति, अक्षेणीत्।

१–सिपि–तनु ('उतश्च प्रत्ययात्...' इति हिलोपः), तनुतात्, तनुतम्, तनुत। तनवानि, तनवाव, तनवाम। २–'अतो हलादेर्लघोः' इति विकल्पेन वृद्धिः। ३–'थास्'–साहचर्यात् (आत्मनेपदे भवः) प्रथमपुरुषैकवचनः 'त' शब्दो गृह्यते न तु 'थ' स्थानिकः, तेनेह न–यूयमतानिष्ट। 'सहचरिताऽसहचरितयोर्मध्ये सहचरितस्यैव ग्रहणम्' इति नियमात्। ४–'अनुदात्तोपदेश०' इत्यनुनासिकलोपः, अतत। ५–ससान, सेनतुः, सेनुः। सेनिथ, सेनथुः। आत्मनेपदे–सेने, सेनाते, सेनिरे, इत्यादि। सनितासि, सनितासे। सनिष्यति, सनिष्यते। सनोतु। सिपि–सनु। सनुताम्। असनोत्, असनुत। वि० लि० सनुयात्, सन्वीत। सायात्–सन्यात्, सनिषीष्ट। ६–लिटि, चक्षाण, चक्षणे। क्षणितासि, क्षणितासे। इत्यादि। ७–वदव्रजेति प्राप्ता वृद्धिर्नेटीत्यनेन निषिध्यते। पुनश्च 'अतो हलादेर्लघोः' इति विकल्पेन प्राप्ताया वृद्धेर्ह्म्यन्तेति निषेध इत्यर्थः। ८–'तनादिभ्यस्तथासोः' इति वा सिचो लुक्। अत्र गणे सर्वत्रापि–इदं सूत्रं प्रवर्तते, इति बोध्यम्। ९–'पुगन्तलघूपधस्येति' उपधासंज्ञानिमित्तकत्वात्संज्ञापूर्वकोऽयं विधिः। 'संज्ञापूर्वको विधिरनित्यः' इति न गुण इत्यात्रेयः। संज्ञापूर्वकस्य विधेरनित्यत्वस्य भाष्यानुक्तत्वाद् भवत्येव गुण इत्यन्ये। तथा चोक्तं 'गुणो वा' इति। १०–लिटि–चिक्षेण, चिक्षिणतुः, चिक्षिणुः। चिक्षेणिथ, चिक्षिणथुः, चिक्षिण।

अक्षित, अक्षेणिष्ट । तृणु अदने । तृणोति, तर्णोति । तृणुते, तर्णुते । डुकृञ् करणे । करोति । 'अत उत्सार्वधातुके' कुरुतः । हलि चेति दीर्घे प्राप्ते ।

**७७८ न भ-कुर्छुराम् ८ । २ । ७९॥**

भस्य कुर्छुरोरुपधाया न दीर्घः । कुर्वन्ति ।

**७७९ नित्यं करोतेः ६ । ४ । १०८॥**

करोतेः प्रत्ययोकारस्य नित्यं लोपो म्वोः परयोः । कुर्वः । कुर्मः । कुरुते । चकार । चकर्थ । चकृव । चक्रे । कर्ता । करिष्यति, करिष्यते । करोतु, कुरुताम् । अकरोत् , अकुरुत ॥

**७८० ये च ६ । ४ । १०९ ॥**

कृञ उलोपो यादौ प्रत्यये । कुर्यात् , कुर्वीत । क्रियात् , कृषीष्ट । अकार्षीत् , अकृत । अकरिष्यत , अकरिष्यत ।

**७८१ संपरिभ्यां करोतौ भूषणे ६ । १ । १३७ ॥**

**७८२ समवाये च ६ । १ । १३८ ॥**

---

चिक्षेण, चिक्षिणिव, चिक्षिणिम । आत्मनेपदे चिक्षिणे, चिक्षिणाते, चिक्षिणिरे । चिक्षिणिषे, इत्यादि ।

१-ततर्ण-ततृणे । तर्णितासि, तर्णितासे । तर्णिष्यति, तर्णिष्यते । तृणोतु, तर्णोतु । तृणुताम् , तर्णुताम् । अतृणोत् अतर्णोत् , अतृणुत, अतर्णुत । तृणुयात, तर्णुयात् , तृणवीत , तर्णवीत । तृण्यात् , तृणिषीष्ट । अतर्णीत् , अतर्णिष्ट, अतृत । अतर्णिष्यत् , अतर्णिष्यत । २-'ऋद्धनोः स्ये' इति इट् । ३-करोतु-कुरुतात् , कुरुताम् , कुर्वन्तु । कुरु-कुरुतात् , कुरुतम् , कुरुत । करवाणि, करवाव, करवाम । आत्मनेपदे-कुरुताम् , कुर्वाताम् , कुर्वताम् , कुरुष्व, कुर्वाथाम् , कुरुध्वम् , करवै, करवावहै, करवामहै । ४-'रिङ् शयग्लिङ्क्षु' इति रिङ् । ५-'उश्चेति कित्वान्न गुणः । ६-अकार्षीत् , अकार्ष्टाम् , अकार्षुः । अकार्षीः, इत्यादि । आत्मनेपदे-अकृत (तनादिभ्यस्तथासोः, इति सिचो लोपे) लोपाभावेऽपि ह्रस्वादङ्गादिति सिचो लोपे 'अकृत' इति । अकृषाताम् , अकृषत । अकृथाः, अकृषाथाम् , अकृढ्वम् । अकृषि, अकृष्वहि, अकृष्महि ।

आभ्यां परस्य करोतेः सुट् भूषणे संघाते चार्थे । संस्करोति=अलङ्करोतीत्यर्थः । संस्कुर्वन्ति=संघीभवन्तीत्यर्थः । संपूर्वस्य क्वचिदभूषणेऽपि सुट् 'संस्कृतं भक्षाः' इति ज्ञापकात् ॥

**७८३ उपात्प्रतियत्न-वैकृत-वाक्याध्याहारेषु च ६।१।१३९**

कृञः सुट् । चात्प्रागुक्तयोरर्थयोः । प्रतियत्नो=गुणाधानम् । विकृतमेव वैकृतं=विकारः । वाक्याध्याहारः=आकाङ्क्षितैकदेशपूरणम् । उपस्कृता कन्या । उपस्कृता ब्राह्मणाः । एधोदकस्योपस्कुरुते । उपस्कृतं भुङ्क्ते । उपस्कृतं ब्रूते ॥ **वनु** याचने । वनुते । ववने ॥ **मनु** अवबोधने । मनुते । मेने । मनिता । अमनुत । मन्वीत । मनिषीष्ट ॥ इति तनादिगणः ॥

# अथ क्र्यादिगणः ॥९॥

**डुक्रीञ्** द्रव्यविनिमये ॥

**७८४ क्र्यादिभ्यः श्ना ३।१।८१ ॥**

शपोऽपवादः । क्रीणाति । 'ई हल्यघोः' क्रीणीतः । 'श्नाभ्यस्तयोरातः' । क्रीणन्ति । क्रीणासि, क्रीणीथः, क्रीणीथ । क्रीणामि, क्रीणीवः, क्रीणीमः । क्रीणीते, क्रीणाते, क्रीणते । क्रीणीषे, क्रीणाथे, क्रीणीध्वे । क्रीणे, क्रीणीवहे, क्रीणीमहे । चिक्राय, चिक्रियतुः, चिक्रियुः । चिक्रयिथ, चिक्रेथ । चिक्रिये । क्रेता । क्रेष्यति, क्रेष्यते । क्रीणातु, क्रीणीतात् । क्रीणीताम् । क्रीणाताम् । क्रीणताम् । अक्रीणात्, अक्रीणीत ।

१–तेन–'अन्नं संस्करोति' इत्यादि सिद्धम् । २–अलङ्कृता इत्यर्थः । ३–सङ्घीभूता इत्यर्थः । ४–एधः=काष्ठं, दकस्य=जलस्य उपस्कुरुते=गुणान् आधत्ते=गृह्णाति–इत्यर्थः । ५–विकृतमित्यर्थः । ६–वाक्याध्याहारपूर्वकं ब्रूते इत्यर्थः । ७–'न शसददवादिगुणानाम्' इति निषेधात्–एत्वाभ्यासलोपौ न । लुङि=अवत–अवनिष्ट । इति तनादयः । ८–क्रयणे इत्यर्थः । ९–अक्रीणात्, अक्रीणीताम्, अक्रीणन् । अक्रीणाः अक्रीणीतम्, अक्रीणीत । अक्रीणाम्, अक्रीणीव, अक्रीणीम । १०–अक्रीणीत, अक्रीणाताम्, अक्रीणत । अक्रीणीथाः, अक्रीणाथाम्, अक्रीणीध्वम् । अक्रीणि, अक्रीणीवहि, अक्रीणीमहि ।

क्रीणीयात्, क्रीणीत। क्रीयात्, क्रेषीष्ट। अक्रैषीत्, अक्रेष्ट। अक्रेष्यत्, अक्रेष्यत॥ **प्रीञ्** तर्पणे कान्तौ च। प्रीणाति, प्रीणीते[1]। **श्रीञ्** पाके। श्रीणाति, श्रीणीते॥ **मीञ्** हिंसायाम्। प्रमीणाति। 'हिनुमीना'[2] इति णत्वम्। प्रमीणीते। मीनातीत्यात्वम्। ममौ। मिम्यतुः। ममिथ[3], ममाथ। मिम्ये। माता। मास्यति। मीयात्। मासीष्ट। अमासीत्[4]। अमासिष्टाम्। अमास्त। **षिञ्** बन्धने। सिनाति, सिनीते। सिषाय, सिष्ये। सेता[5]॥ **स्कुञ्** आप्रवणे[6]॥

**७८५ स्तन्भुँ-स्तुन्भु-स्कन्भु-स्कुन्भु-स्कुञ्भ्यः श्नुश्च ३। १। ८२॥**

चात् श्ना। स्कुनोति, स्कुनुते। स्कुनाति, स्कुनीते। चुस्कार्व, चुस्कुवे। स्कोता। अस्कौषीत्, अस्कोष्ट। स्तन्भ्वादयश्चत्वारः सौत्राः[9]। सर्वे रोधनार्थाः परस्मैपदिनः॥

**७८६ हलः श्नः शानज्झौ[10] ३। १। ८३॥**

---

१–पिप्राय, पिप्रिये। इत्यादि क्रीञ्वत्। २–हिनोतेः–मीनातेश्च। 'मीनातिमिनोतिदीङां...' इत्यस्मिन् सूत्रे, 'अशिति–एज् निमित्ते' इत्युक्तत्वात् तिप्–सिप्–मिप्–सु (गुणवृद्धियोग्येषु) अस्य प्रवृत्तिर्नान्यत्र। ३–'आतो लोप इटि च' आकारलोपः। अजन्तत्वात् थलि वेट्, पक्षे ममाथ। ४–आत्वे कृते 'यमरमनमातां सक् च' इति सक्, सिच इट् च। ५–लुङि–असैषीत्, असैष्टाम्, असैषुः। इत्यादि। आत्मनेपदे–असेत। (ह्रस्वादङ्गात्, इति सिचो लोपः), असिषाताम्, असिषत। असिथाः, असिषाथाम्, असिढ्वम्। असिषि, असिष्वहि, असिष्महि। ६–आप्रवणम्=उत्पवनम् उत्प्लवनञ्च। ७–स्तभ्नोति, स्तभ्नाति। तस्तम्भ। स्तम्भिता। स्तम्भिष्यति। स्तभ्नोतु, स्तभ्नातु, स्तभ्नुहि–(उतश्च प्रत्ययादिति सूत्रे असंयोगपूर्वादित्युक्तेर्न हेर्लुक्)। अस्तभ्नोत्, अस्तभ्नात्। स्तभ्नुयात्–स्तभ्नीयात्। स्तभ्यात्। अस्तभत्, अस्तम्भीत्। अस्तम्भिष्यत्। प्राय एवं शेषाणां त्रयाणामपि रूपाणि। ८–'शर्पूर्वाः खयः'। ९–सूत्र एव पठिताः, न पुनर्गणे इत्यर्थः। १०–हलः परस्य श्नः शानजादेशः स्याद् हौ परे।

स्तभान[1] ॥

**७८७ जॄ-स्तम्भु-म्रुचु-म्लुचु-ग्रुचु-ग्लुञ्चु-श्विभ्यश्च ३ । १ । ५८ ॥**

च्लेरङ् वा । व्यष्टभत्[2], अस्तम्भीत् । **युञ्** बन्धने । युनाति, युनीते । योता[3] ॥ **क्नूञ्** शब्दे । क्नूनाति, क्नूनीते[4] । क्नविता ॥ **दॄञ्** हिंसायाम् । दॄणाति, दॄणीते[5] ॥ **द्रूञ्** हिंसायाम् । द्रूणाति, द्रूणीते[6] ॥ **पूञ्** पवने ॥

**७८८ प्वादीनां ह्रस्वः ७ । ३ । ८० ॥**

पूञ् लूञ् स्तॄञ् कॄञ् वॄञ् धूञ् शॄ पॄ वॄ भॄ मॄ दॄ जॄ झॄ धॄ नॄ कॄ ॠ गॄ ज्या री ली व्ली प्ली एषां चतुर्विंशतेर्ह्रस्वः शिति । पुनाति, पुनीते । पविता ॥ **लूञ्** छेदने । लुनाति, लुनीते ॥ **स्तॄञ्** आच्छादने । स्तृणाति, स्तृणीते । तस्तार । तस्तरतुः[7] । तस्तरे । स्तरिता, स्तरीता[8] । स्तृणीयात् । स्तृणीत । 'ॠत इद्धातोः' । स्तीर्यात्[9] । स्तरिषीष्ट[10], स्तीर्षीष्ट[11] ॥ 'सिचि च परस्मैपदेषु' । अस्तारीत्, अस्तारिष्टाम्, अस्तारिषुः । अस्तरिष्ट, अस्तीर्ष्ट ॥ **कॄञ्** हिंसायाम् । कृणाति, कृणीते । चकार, चकरे[12] । **वॄञ्** वरणे । वृणाति, वृणीते । ववार, ववरे । वरिता, वरीता । उदोष्ठ्येत्युत्वम् । वूर्यात्, वरिषीष्ट, वूर्षीष्ट[13] । अवारीत् । अवारिष्टाम् । अवरिष्ट, अवरीष्ट, अवूर्ष्ट । **धूञ्** कम्पने । धुनाति, धुनीते । दुधविथ, दुधोथ । दुधुविव । धोता ।

१–'अतो हे' रित्याऽऽरम्भसामर्थ्यात् सन्निपातपरिभाषाया अप्रवृत्तेर्हेर्लुक् । २–'प्राक् सितादड्व्यवायेऽपि' इति षत्वम् । ३–लुङि–अयौषीत्, अयौष्टाम्, इत्यादि । आत्मनेपदे–अयुत, अयुषाताम्, इत्यादि । ४–चुक्नाव, चुक्नुवे । लुङि–अक्नावीत्, अक्नविष्ट । ५–दर्ता । दरिष्यति, दरिष्यते । लुङि –अदार्षीत्, अदृत । ६–दुद्राव । द्रविता । अद्रावीत् । ७–अत्र गुणः 'ऋच्छत्यॄताम्' इत्यनेन । ८–'वॄतो वा' इति वा दीर्घः । ९–'ॠत इद्धातोः' इति 'इर्' हलि चेति दीर्घः । १०–अत्र 'वॄतो वा' इति प्राप्तो दीर्घः 'न लिङि' इति निषिद्ध्यते । ११–उश्चेति कित्वम् 'ॠत इद्…' इतीर्, हलि चेति दीर्घः । १२–'ऋच्छत्यॄताम्' इति गुणः । १३–वूर्षीष्ट, इडभावपक्षे उश्चेति कित्वम्, 'उदोष्ठ्य' इति 'उर्', हलि चेति दीर्घः ।

धविता[1] । 'स्तुसुधूञ्भ्यः परस्मैपदेषु'[2] । अधावीत् , अधविष्ट । ग्रह उपादाने[3] गृह्णाति, गृह्णीते । जग्राह, जगृहे[4] ॥

**७८९ ग्रहोऽलिटि दीर्घः ७ । २ । ३७ ॥**

एकाचो ग्रहेर्विहितस्येटो दीर्घो न तु लिटि । ग्रहीता । गृह्णातु । गृहाण । गृह्यात् । ग्रहीषीष्ट । ह्म्यन्तेति न वृद्धिः । अग्रहीत् । अग्रहीष्टाम् । अग्रहीषाताम् ॥ कुष निष्कर्षे । कुष्णाति । कोषिता ॥

**७९० निरः कुषः ७ । २ । ४६ ॥**

वलादेरार्धधातुकस्येड् वा । निष्कोषिता, निष्कोष्टा । निरकोषीत् । शल इगुपधादिति क्सः । निरकुक्षत् ॥ अश भोजने । अश्नाति । आश । अशिता । अश्नातु । अशान[5] ॥ ज्ञा अवबोधने । ज्ञाजनोर्जेति जादेशः । जानाति । जज्ञौ ॥ पॄ पालनपूरणयोः । पृणाति ॥ शॄ हिंसायाम् । शृणाति । शॄदॄप्रां ह्रस्वो वेति पक्षे यण् । शश्रतुः, शशरतुः । दॄ विदारणे । दृणाति । दद्रतुः, ददरतुः ॥ जॄ वयोहानौ । जृणाति ॥ मुष स्तेये । मुष्णाति । मोषिता[6] ॥ पुष पुष्टौ । पुष्णाति । पोषिता ॥ बन्ध बन्धने । बध्नाति[7] । बबन्ध । बबन्धिथ । बन्धा । भन्त्स्यति[8] । अभान्त्सीत्[9] । अबान्धाम् । अभान्त्सुः । क्लिशू विबाधने । क्लिश्नाति[10] । क्लेशिता, क्लेष्टा । अक्लेशीत् , अक्लिक्षत्[11] ॥ वृङ् संभक्तौ । वृणीते । वव्रे । ववृढ्वे । वरिता, वरीता । अवरिष्ट, अवरीष्ट, अवृत ॥ इति क्र्यादिगणः ॥

१–'स्वरतिसूतिसूयति...' इति वेट् । २–इति नित्यमिट् । ३–ग्रहणे इत्यर्थः । ४–संप्रसारणम् 'ग्रहिज्या...' इति सूत्रेण । ५–'हलः श्नः शानज्झौ, इति अशान । लुङि–आशीत्, आशिष्टाम्, आशिषुः, इत्यादि । ६–लुङि–अमोषीत् नेटीति वृद्धिनिषेधः । ७–'अनिदिताम्....' इति न–लोपः । ८–'एकाचो बशो भष्...' इति बस्य भत्वम् । ९–'झलो झलि' इति सिचो लोपः, 'झषस्तथोर्धः' इति तकारस्य धत्वम् । १०–'शात्' इति श्चुत्वनिषेधः । ११–इडभावपक्षे 'शल इगुपधा...' इति क्सः ।

# अथ चुरादिगणः ॥१०॥

**चुर** स्तेये।

**७११ सत्याप-पाश-रूप-वीणा-तूल-श्लोक-सेना-लोम-त्वच-वर्म-वर्ण-चूर्ण-चुरादिभ्यो णिच् ३ । १ । २५ ॥**

चूर्णान्तेभ्यः प्रातिपदिकाद्धात्वर्थ इत्येव सिद्धे तेषामिह ग्रहणं प्रपञ्चार्थम्। चुरादिभ्यस्तु स्वार्थे इति। पुगन्तेति गुणः। सनाद्यन्ता इति धातुत्वम्। तिप्-शबादि। गुणायादेशौ। चोरयति।

**७१२ णिचश्च १ । ३ । ७४ ॥**

णिजन्तादात्मनेपदं कर्तृगामिनि क्रियाफले। चोरयते। चोरयामास। चोरयिता। चोर्यात्[1]। चोरयिषीष्ट। णिश्रीति चङ्। णौ चङीति ह्रस्वः। चङीति द्वित्वम्। हलादिः शेषः। दीर्घो लघोरित्यभ्यासस्य दीर्घः। अचूचुरत्। **चिति** स्मृत्याम्। चिन्तयति। अचिचिन्तत्। चिन्तेति पठितव्ये इदित्करणं णिचः पाक्षिकत्वे लिङ्गम्[2]। तेन चिन्त्यादित्यादौ नलोपो न। चिन्तति। चिन्तेदित्यादि। **यत्रि** संकोचे। यन्त्रयति। यन्त्रेति पठितुं शक्यम्। यत्तु इदित्करणाद्यन्त्रतीति माधवेनोक्तं तच्चिन्त्यम्[3]। एवं **कुद्रि** अनृतभाषणे। **तत्रि** कुटुम्बधारणे। **मत्रि** गुप्तपरिभाषणे। तन्त्रयते। मन्त्रयते। एतौ आत्मनेपदिनौ। **स्फुडि** परिहासे। स्फुण्डयति। **पीड** अवगाहे।

**७१३ भ्राज-भास-भाष-दीप-जीव-मील-पीडामन्यतरस्याम् ७ । ४ । ३ ॥**

एषामुपधाया ह्रस्वो वा चङ्परे णौ। अपीपिडत्, अपिपीडत्। **प्रथ** प्रख्याने। प्रथयति।

---

१–'णेरनिटि' इति णिलोपः। २–चिन्तयति, चिन्तयाञ्चकार, इत्यादौ णिचः क्ङित्वाभावादेव नलोपस्याऽप्रसक्त्या व्यर्थमिदित्करणमिति चेत्तत्राह —**णिचः पाक्षिकत्वे लिङ्गमि**ति। तेन णिजभावे–आशीर्लिङि 'चिन्त्याद्' इत्यत्र नलोपो न। ३–**तच्चिन्त्यमि**ति 'यन्त्र्यात्' इत्यणिजन्ते सत्यपि नकारस्यानुपधात्वादेव नलोपस्याऽप्रसक्त्या–इत्त्वस्य प्रयोजनाभावादिति भावः।

**७१४ अत्स्मृ-दृ-त्वर-प्रथ-म्रद-स्तृ-स्पशाम् ७।४।९५॥**

एषामभ्यासस्याकारश्चङ्परे णौ। इत्वापवादः[1]। अपप्रथत्। **पृथ** प्रक्षेपे पर्थयति।

**७१५ उर्ऋत्[2] ७।४।७॥**

उपधाया ऋवर्णस्य ऋद्वा चङ्परे णौ। इरराराममपवादः[3]। अपीपृथत्, अपपर्थत्। **लुण्ठ** स्तेये। लुण्ठयति। अलुलुण्ठत्। **तड** आघाते। ताडयति। अतीतडत्। **मडि** भूषायां हर्षे च। मण्डयति। अममण्डत्। **भडि** कल्याणे। भण्डयति। अबभण्डत्। **छर्द** वमने। छर्दयति। अचच्छर्दत्। **चुद** संचोदने। चोदयति। अचूचुदत्। **पाल** रक्षणे। पालयति। अपीपलत्। **पूज** पूजायाम्। पूजयति। अपूपुजत्। **कृत** संशब्दने।

**७१६ उपधायाश्च ७।१।१०१॥**

धातोर्ऋत इत्। रपरत्वम्। उपधायां चेति दीर्घः। कीर्तयति। अचीकृतत्, अचिकीर्तत्। **म्लेच्छ** अव्यक्तायां वाचि। म्लेच्छयति। अमिम्लेच्छत्। **ईड** स्तुतौ। ईडयति[4]। **पिडि** संघाते। पिण्डयति[5]। **रुष** रोषे। रोषयति। अरूरुषत्। **तुल** उन्माने। तोलयति। अतूतुलत्। **शुल्ब** माने। शुल्बयति। अशुशुल्बत्। **घुषिर्** विशब्दने। घोषयति। अजूघुषत्। **पट पुट लुट तुजि मिजि पिजि लुजि भजि लघि त्रसि पिसि कुसि दसि कुशि घट घटि बृहि बर्ह बल्ह गुप धूप विच्छ चीव पुथ लोकृ लोचृ णद कुप तर्क वृतु वृधु** भाषार्थाः[6]। पाटयति। पोटयति। लोटयति। तुञ्जयति। एवं परेषाम्। घाटयति। घण्टयति।

**७१७ नाग्लोपि-शास्वृदिताम् ७।४।२॥**

---

१-'सन्यतः' इति प्राप्तस्येत्वस्यापवादः। २-'जिघ्रतेर्वा' इत्यतो 'वा' इत्यनुवर्त्तते। ३-'अचीकृतद्' इत्यादौ 'उपधायाश्च' इति 'इर्' प्राप्तः, 'अपीपृथत्' इत्यादौ 'अर्' प्राप्तः, 'अमीमृजत्' इत्यत्र 'मृजेर्वृद्धिः' इति 'आर्' प्राप्तः। सर्वत्र तेषामयमपवादः 'उर्ऋद्' इति। ४-ऐडिडत् (लुङि)। ५-अपिपिण्डत्। ६-शब्दविशेषार्था इत्यर्थः। लुङि-अपीपटत्। अपूपुटत्। अलूलुटत्। इत्यादयः।

णिच्यग्लोपिनः शास्तेर्ॠदितां चोपधाया ह्रस्वो न चङ्परे णौ। अलुलोकत्[1]। अलुलोचत् । वर्तयति । वर्धयति । 'आधृषाद्वा' । इत ऊर्ध्वं विभाषितणिचो धृषधातुमभिव्याप्य । **युज पृच** संयमने । योजयति[2]। योजति। अयौक्षीत् । पर्चयति[3] । पर्चति । पर्चिता । अपर्चीत्। **अर्च**[4] पूजायाम् । **षह** मर्षणे । साहयति[5] । 'स एवायं नागः सहति कलभेभ्यः परिभवम्' । **वृञ्** वरणे । वारयति[6] । वराति, वरते । **जॄ** वयोहानौ। जारयति[7]। जरति । **शिष** असर्वोपयोगे । शेषयति[8] । शेषति । शेष्टा। आशिक्षत् । **तप** दाहे । तापयति[9] । तपति। तप्ता । **तृप** तृप्तौ । तर्पयति[10]। तर्पति । **हिसि** हिंसायाम् । हिंसयति[11] । हिंसति । **अर्ह**[12] पूजायाम् । **छद** अपवारणे । छादयति[13] । छदति, छदते । **धूञ्** कम्पने । (धूञ्प्रीञोर्नुक्) णौ । धूनयति[14] । धवति, धवते । **प्रीञ्** तर्पणे । प्रीणयति, प्रीणयते[15] । प्रयति, प्रीयते । **वच** परिभाषणे । वाचयति[16] । वचति । वक्ता । अवाक्षीत् । **मान** पूजायाम् । मानयति[17] । मानति । मानिता । **भू** प्राप्तौ आत्मनेपदी । भावयते[18] । भवते । णिच्संनियोगेनैवात्मनेपदमित्येके । भवति । **मार्ग** अन्वेषणे । **धृष** प्रसहने । धर्षयति[19] । धर्षति । अथादन्ताः । **कथ** वाक्यप्रबन्धे । अंक्षापः[20] ।

**७६८ अचः परस्मिन्पूर्वविधौ १ । ५ । ५७**

---

१-ह्रस्वाभावान्न सन्वद्भावदीर्घौ। २-अयूयुजत्। ३-अपपर्चत्, अपीपृचत्। ४-आर्चिचत्। ५-असीसहत् । ६-अवीवरत्। ७-अजीजरत्। ८-अशीशिषत्। ९-अतीतपत्। १०-अतीतृपत्, अततर्पत्। ११-अजिहिंसत्। १२-आर्जिहत्, णिचा सह द्वित्वात्सन्वद्भावो नेति तद्विषये विहितो यो दीर्घो लघोरिति दीर्घः स न प्रवर्तते । १३-अचिच्छदत्। १४-अयं स्वादौ क्रयादौ तुदादौ चुरादौ च स्वादौ ह्रस्वश्च तथा चाऽऽह कविरहस्ये—

धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम् ।
वायुर्विधूनयति चम्पकपुष्परेणून् तत्कानने धवति चन्दनमञ्जरीश्च ।

अदूधुनत्। १५-अपिप्रयत्। १६-अवीवचत्। १७-अमीमनत्। १८-अबीभवत्। १९-अदीधृषत्, अदधर्षत् । २०-णिचि 'अतो लोपः' इति अन्त्यावयवस्याऽकारस्य लोपः।

परनिमित्तोऽजादेशः स्थानिवत्स्यात् स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये । इति स्थानिवत्त्वान्नोपधाया वृद्धिः । कथयति । अग्लोपित्वाद्दीर्घसन्वद्भावौ न । अचकथत् । गण संख्याने । गणयति ।

**७१६ ई च गणः ७ । ४ । ९७ ॥**

गणेरभ्यासस्य ईत्स्यात् चादच्चङ्परे णौ । अजीगणत्, अजगणत् । **रच** प्रतियत्ने । रचयति । अररचत् । **कल** गतौ संख्याने च । कलयति अचकलत् । **मह** पूजायाम् । महयति । **सूच** पैशून्ये । सूचयति । अषोपदेशत्वान्न षः । असुसूचत् । **कुमार** क्रीडायाम् । कुमारयति । अचुकुमारत् । **ऊन** परिहाणे । ऊनयति । ओः पुयण्जीति सूत्रे पययोरिति वक्तव्ये वर्गप्रत्याहारजग्रहो लिङ्गम् । 'णिच्यच आदेशो न द्वित्वे कर्तव्ये' इति । यत्र

१-अल्लोपस्येत्यर्थः । २-अयमपि अग्लोपी । ३-'अत्स्मृ...' इत्यत्र योऽत् स चकारेण समुच्चीयते । ४-प्रतियत्नः=गुणाधानम्=विरचनमिति यावत् । ५-अममहत् । ६-'ऊन-परिहाणे'इत्यस्य (लुङि) 'औननत्' इति रूपसिद्धिः । ननु-द्वित्वात्परत्वादन्तरङ्गत्वाच्च-अतो लोपे कृते णिचा सह निशब्दस्य द्वित्वे 'औनिनत्' इति रूपं स्यान्नत्वौननत् इति । 'द्विर्वचनेऽची'ति सूत्रन्तु अत्र नैव प्रवर्त्तते, अल्लोपनिमित्तस्य णिचो द्वित्वनिमित्तत्वाभावात् । इत्यत आह-'**ओःपुयण्जीत्यादि**' अयमर्थः-पिपावयिषति, बिभावयिषतीत्यादौ द्वित्वम्प्रत्यनिमित्ते णिचि द्विर्वचनेऽचीति निषेधाप्रवृत्त्या द्वित्वात्प्रागेव परत्वाद् वृद्ध्यावादेशयोः कृतयोरभ्यासाऽऽकारस्य ह्रस्वे सति 'सन्यतः' इत्येवेत्वसिद्धेः 'ओःपुयण्जी'ति सूत्रे पवर्गयण्जकारग्रहणं व्यर्थम् । केवलं पिपविषते,-यियविषतीत्यत्र-इत्वसिद्धये पकारयकारग्रहणमेवापेक्षितम् । अन्यथा-'स्मिपूङ्रञ्ज्वशां सनि' 'सनीवन्तर्ध...' इति सूत्राभ्यामिटि कृते-इडादेः सनो द्वित्वनिमित्तत्वेन-इटोऽपि द्वित्वनिमित्ततया द्विर्वचनेऽचीति गुणावादेशयोर्निषेधे सति 'पू' 'यु' इत्यनयोर्द्वित्वेऽभ्यासेऽकाराभावेन सन्यत इत्यस्याप्रवृत्त्या पुपविषते, युयविषति, इत्यनिष्टं रूपं प्रसज्येत । एवञ्च व्यर्थं सत् पवर्गयण्जकारग्रहणं ज्ञापयति '**णिच्यच आदेशो न द्वित्वे कर्त्तव्ये**' तेन प्रकृते 'न' शब्दस्य द्वित्वमुत्तरखण्डेऽल्लोपः '**औननद्**' इति सिद्ध्यति ।

द्विरुक्तावभ्यासोत्तरखण्डस्याद्योऽच् प्रक्रियायां परिनिष्ठितरूपे वाऽवर्णो लभ्यते तत्रैवायं निषेधः । ज्ञापकस्य सजातीयापेक्षत्वात् । तेनाचिकीर्तदित्यादि सिद्धम् । प्रकृते तु नशब्दस्य द्वित्वम् । तत उत्तरखण्डे अल्लोपः । औननत् । **ध्वन** शब्दने । ध्वनयति । अदध्वनत् । **सूत्र** वेष्टने । सूत्रयति । **मूत्र** प्रस्रवणे । मूत्रयति । अदन्तत्वसामर्थ्याण्णिज्विकल्पः । मूत्रति । आगर्वादात्मनेपदिनः । **पद** गतौ । पदयते । अपपदत । **गृह** ग्रहणे । **मृग** अन्वेषणे । मृगयते । **शूर वीर** विक्रान्तौ । शूरयते । वीरयते । **गर्व** माने । गर्वयते । ॥ इति चुरादयः ॥

# अथ णिच्प्रक्रिया ॥१॥

**८०० स्वतन्त्रः कर्ता १ । ४ । ५४ ॥**

क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् ।

**८०१ तत्प्रयोजको हेतुश्च १ । ४ । ५५ ॥**

कर्तृप्रयोजको हेतुसंज्ञः कर्तृसंज्ञश्च स्यात् ।

**८०२ हेतुमति च ३ । १ । २६ ॥**

१–इदञ्च ज्ञापकं सजातीयापेक्षं तेन द्वित्वे सति यत्राभ्यासोत्तरखण्डस्याद्योऽच् प्रक्रियायां परिनिष्ठिते वा रूपेऽवर्णो लभ्यते तत्रैवायं निषेधः प्रवर्त्तते । तथा च 'अचिकीर्त्तत्' इत्यादौ नास्य प्रवृत्तिः । २–ननु–कथादावस्य (मूत्रधातोः) पाठो व्यर्थः । अदन्तत्वे फलाभावात्, नच सन्वत्त्वमित्त्वयेऽग्लोपित्वायाऽदन्तत्वमिति शङ्क्यम्, लघुपरकत्वाभावादेव तदप्रसक्तेः । इति चुरादयः । ३–तच्छब्देन 'स्वतन्त्रः कर्ते'ति पूर्वसूत्रोपात्तः कर्त्ता परामृश्यते । तस्य=कर्त्तुः प्रयोजकः=प्रेरकः । ४–**हेतुमति च** इति । हेतुः=प्रेरकः कर्त्ता स्वनिष्ठाधारतानिरूपताध्येयतासम्बन्धेन ( आधारतया ) अस्यास्तीति हेतुमान् प्रयोजकनिष्ठः प्रेषणादिव्यापारः तस्मिन् वाच्ये णिच् स्यादित्यर्थः । प्रेषणादावित्यत्रादिशब्देनाऽध्येषणाऽनुमत्युपदेशादीनां ग्रहणम् । भृत्यादेर्निकृष्टस्य प्रवर्त्तना प्रेषणा, समानस्याऽधिकस्य वा सख्याचार्यादेः प्रवर्त्तनाऽध्येषणा, अनुमतिः=राजादेः सम्मतिः, रोगाऽऽक्रान्तस्य कषायादिपाने हितावबोधनेन प्रवर्त्तना=उपदेशः ।

प्रयोजकव्यापारे प्रेरणादौ वाच्ये धातोर्णिच् । भवन्तं प्रेरयति भावयति[1] ।

**८०३ ओः पुयण्ज्यपरे ७ । ४ । ८० ॥**

सनि परे यदङ्गं तदवयवो योऽभ्यासस्तस्योत इत्स्यात्पवर्गयण्जकारेष्ववर्णपरेषु परतः । अबीभवत्[3] । अपीपवत्[4] । मूङ् बन्धने । अमीमवत्[5] । अयीयवत्[6] । रुं शब्दे । अरीरवत्[7] । अलीलवत्[8] । अजीजवत्[9] । पुयण्जीति

---

१-भूधातोर्णिचि वृद्धौ 'सनाद्यन्ता धातवः' इति धातुसञ्ज्ञायां लट्, तिप्, शप्, भावि+अ+ति, इत्यवस्थायां 'सार्वधातुका....' इति गुणेऽयादेशः **भावयति** । णिचश्चेति कर्त्तृगामिनि फले-आत्मनेपदमपि, तेन भावयेत, भावयेते, भावयन्ते, इत्यादि । इत्थञ्चात्र **कर्त्तृयोजना**प्रकारः-देवदत्तो भवति, भवन्तं तं यज्ञदत्तः प्रेरयति प्रेरयते वा, इति यज्ञदत्तो देवदत्तं भावयति भावयते वा । लिडादौ भावयाञ्चकार । भावयाञ्चक्रे इत्यादिरूपाणि । २-उशब्दस्य ओरिति षष्ठी । पुयण्जि-अपरे, इतिच्छेदः । पुश्च यण् च ज् च इति समाहारद्वन्द्वात्सप्तम्येकवचनम् । अः परो यस्मात् सोऽपरस्तस्मिन्नपरे-इदं पुयण्जीत्यस्य विशेषणम् । अङ्गस्येत्यधिकारः 'सन्यतः' इत्यस्मात्सनि 'अत्र लोपोऽभ्यासस्य' इत्यस्माद् 'अभ्यासस्य' 'भृञामित्' इत्यस्माद् 'इत्' इति चानुवर्तते तथा चार्थो वृत्तौ स्पष्टः । ३-भूधातोर्ण्यन्ताल्लुङि-अडागमे च्लेश्चङि 'णिच्यच आदेशो न द्वित्वे कर्त्तव्ये' इति पूर्वं वृद्ध्यभावे 'भू' इत्यस्य द्वित्वेऽभ्यासकार्ये ( भस्य बत्वे ह्रस्वे च ) अबु भू+इ+अत्, इति स्थितौ ( परस्य ) वृद्धौ आवादेशे 'णौ चङ्युपधायाः' इति ह्रस्वे सन्वद्भावेऽभ्यासोकारस्येत्वे ( णिलोपे ) 'दीर्घो लघोः' इति दीर्घः-**अबीभवत्**, अबीभवताम्, अबीभवन् । ४-**अपीपवत्** पूङ् धातोर्णिचि लडादौ 'पावयति' इत्यादि लुङि 'अपीपवत्' सिद्धिस्तु-अबीभवद्वत् । ५-लटि-भावयतीत्यादिरूपाणि । लुङि-अमीमवत् । ६-युधातोर्णिचि लटि 'यावयति' । ७-लटि 'रावयति' इत्यादि । लुङि-'अरीरवत्' । ८-लूञ् धातोर्णिचि लटि-'लावयति' । लुङि-'अलीलवत्' । ९-'जु' इति सौत्रो धातुस्तस्माण्णिचि लटि 'जावयति' । लुङि-'अजीजवत्' । सर्वाणीमानि 'ओः पुयण्जि...' इति सूत्रोदाहरणानि ।

किम् । नुनावयिषति । अपरे किम् । बुभूषति ।

**८०४ स्रवति-शृणोति-द्रवति-प्रवति-प्लवति-च्यवतीनां वा ७ । ४ । ८१ ॥**

एषामभ्यासोकारस्येत्वं वा सनि अवर्णपरे धात्वक्षरे परे । असिस्रवत् । इत्यादि । अवर्णपरे किम् । अशूशुवत् । णिजन्ताण्णिच् । परत्वाद्वृद्धौ प्राप्तायाम् । णयल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेनेति णिलोपः । चोरयति । णौ चङीति ह्रस्वः । दीर्घो लघोरिति दीर्घः । न चाग्लोपित्वाद् द्वयोरप्यसंभवः । णयाकृतिनिर्देशात् । अचूचुरत् ।

१—नात्राऽभ्यासोकारः पवर्गयणजकारपरः । अत एव 'ओः पुयण्जि' इतीकारो न । २—अत्राऽभ्यासोकारस्य पवर्गपरत्वेऽपि पवर्गस्याऽकारपरकत्वाभावान्नेत्वम् । ३—अपरे—इत्यनुवर्त्तते नतु पुयण्जीति पवर्गजकारयोरसम्भवात् स्रवत्यादौ यणः सत्वेऽप्यव्यभिचारात् । ४—स्रुधातोर्णिचि लटि 'स्रावयति' । लुङि—असुस्रव्+इ+अत्, इत्यवस्थायां 'स्रवति शृणोती' त्यादिनाऽभ्यासोकारस्य वैकल्पिके-इत्वे '**असिस्रवत्**' '**असुस्रवत्**' संयोगे परे ह्रस्वं गुरुः स्यादिति नियमादभ्यासे ह्रस्वाभावात् "दीर्घो लघो" रिति न दीर्घः । ५—श्रु श्रवणे—श्रावयति । लुङि—अशिश्रवत्, 'अशुश्रवत्' । द्रु—द्रावयति । अदिद्रवत्, अदुद्रवत् । प्रु—प्रावयति । अपुप्रवत्, अपिप्रवत् । प्लु—प्लावयति । अपिप्लवत्, अपुप्लवत् । च्यु—च्यावयति । अचिच्यवत्, अचुच्यवत् । ६—चिन्त्यमिदं प्रत्युदाहरणम् । सूत्रेऽस्याऽग्रहणेन प्राप्तेरेवाभावात् । अत एव तत्त्वबोधिन्यां शुश्रूषतीति प्रत्युदाहरणं दत्तम् । ७—स्वार्थणिजन्ताच्चुरधातोः प्रेरणार्थके णिचि चोरि+इ+अ ति, इत्यवस्थायां 'णेरनिटी'ति णिलोपः प्राप्नोति "अचो ञ्णिती" तिवृद्धिश्चेत्युभयोः प्राप्तौ "विप्रतिषेधे परं कार्य्यम्" इति परत्वाद् वृद्धावेव प्राप्तायां 'णयल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेने'ति णिलोपः । अस्यायमर्थः—णिलोपोऽल्लोपश्च—इयङ्गुणवृद्धिदीर्घान् पूर्वविप्रतिषेधेन बाधत इति । "विप्रतिषेधे परं कार्यं" मित्यत्राऽपरं कार्य्यमिति छित्वा तुल्यबलविरोधे क्वचित्पूर्वमेव कार्य्यमिति व्याख्यानात् । प्रकृते च पूर्वविप्रतिषेधेन वृद्धिं बाधित्वा णिलोपः । ८—अथ णयन्तात् णौ प्रथमस्य णेर्लोपे चोरीत्यस्माल्लुङि चङि—अचोर्+इ+अ त्, इति

**टुओश्वि** गतिवृद्ध्योः।

**८०५ णौ च संश्चङोः २।४।५१॥**

सन्परे चङ्परे च णौ श्वयतेः संप्रसारणं वा स्यात्। (संप्रसारणं तदाश्रयं च कार्यं बलवत्) इति वचनात्संप्रसारणम्। अशूशवत्[२]। अलघुत्वान्न दीर्घः। अशिश्वयत्।

**८०६ स्तम्भु-सिवु-सहां चङि ८।३।११६॥**

उपसर्गादेषां सस्य षो न स्याच्चङि। अवातस्तम्भत्[३]। पर्यसीषिवत्[४]। न्यसीषहत्[५]।

**८०७ स्वापेश्चङि ६।१।१८॥**

णयन्तस्य स्वापेश्चङि संप्रसारणम्। असूषुपत्[६]।

**८०८ हनस्तोऽचिण्णलोः ७।३।३२॥**

---

स्थितौ-णौ चङीति ह्रस्वे दीर्घो लघोरिति दीर्घे 'अचूचुरत्' इति सिद्ध्यति। न चात्र द्वितीय-णौ प्रथमणिलोपमादायाऽग्लोपित्वात् (नाग्लोपीतिह्रस्वनिषेधात्) सन्वद्भावाभावे णौ चङीति ह्रस्वस्य दीर्घो लघोरिति दीर्घस्य चेति द्वयोरप्यसम्भवस्तत्राह **णयाकृतिनिर्देशात्** इति-चङ्परे णावित्यत्र णावित्यस्य चङ्परकणित्वजात्याश्रयैकानेकणिज्व्यक्तिपरकत्वं विवक्षितम्। तथा च णिद्वयस्य चङ्परकत्वाभावेऽपि णित्वस्य चङ्परकत्वमस्तीति भवति ह्रस्वदीर्घयोः प्रवृत्तिः।

१-णिचि लटि श्वाययतीति रूपम्। २-सम्प्रसारणे पूर्वरूपे 'शु' इत्यस्य द्वित्वे सन्वद्भावे दीर्घो लघोरिति दीर्घः। सम्प्रसारणाभावपक्षेऽलघुत्वान्न दीर्घः। ३-लटि-अवष्टम्भयतीत्यादिरूपाणि "अवाच्चाऽलम्बनाऽऽविदूर्ययो" रिति षत्वम्। चङि-अवातस्तम्भत्। ४-५-षिवु-तन्तुसन्ताने, षह-मर्षणे, इति णिजन्ताभ्यां लटि परिषेवयति, निषाहयति "परिनिविभ्यः सेवसित..." इत्युपसर्गनिमित्तं षत्वम्। चङि षत्व निषेधे पर्य्यसीषिवत्, न्यसीषहत्। उपसर्गनिमित्तस्यैव षत्वस्यायं निषेधोऽभ्यासनिमित्तन्तु षत्वं भवत्येव। ६-णयन्तात्स्वप् धातोर्लटि स्वापयतीत्यादि। लुङि चङि पूर्वं सम्प्रसारणे पूर्वरूपे द्वित्वे सन्वद्भावेऽभ्यासदीर्घे च असूषुपत्। ७-हन्तेस्तकारोऽन्तादेशः स्याच्चिण्णल् वर्जे ञिति णिति।

चिण्णल्वर्जे ञिति णिति । घातयति[1] ।

**८०९ अर्ति-ह्री-व्ली-री-क्नूयी-क्ष्माय्यातां पुग्णौ ७।३।३६॥**

स्थापयति[2] ।

**८१० तिष्ठतेरित् ७ । ४ । ५ ॥**

उपधायाश्चङ्परे णौ इदादेशः स्यात् । अतिष्ठिपत्[4] ।

**८११ जिघ्रतेर्वा ७ । ४ । ६ ॥**

उपधाया इत्वं वा चङ्परे णौ । अजिघ्रपत्[5], अजिघ्रिपत् ।

**८१२ शा-च्छा-सा-ह्वा-व्या-वेपां युक् णौ ७ । ३ । ३७ ॥**

शाययति[6] । अशीशयत् । ह्वाययति ।

**८१३ ह्वः संप्रसारणम् ६ । १ । ३२ ॥**

सन्परे चङ्परे च णौ ह्वः सम्प्रसारणं स्यात् । ( कारयादीनां वा= ) चङ्परे णौ उपधाया ह्रस्वो वा । णयन्ताः कण-रण-भण-श्रण-लुप-हेठाः षट् भाष्ये । ह्वायि-वाणि-लोटि-लोपयश्चत्वारोऽधिका न्यासे । चाणि-लोठी अप्यन्यत्र । इत्थं काणयादयो द्वादश । अजूहवत्[7], अजुहावत् । पाययति[8] ।

**८१४ लोपः पिबतेरीच्चाभ्यासस्य ७ । ४ । ४ ॥**

पिबतेरुपधाया लोपः स्यादभ्यासस्य ईदन्तादेशश्च चङ्परे णौ । अपीप्यत्[9] ।

१-लुङि अजीघतत् । २-अर्त्यादीनां षण्णामादन्तानाञ्च पुक् स्याण्णौ । ३-आदन्तत्वात्पुक् । **स्थापयति**=तिष्ठन्तं प्रेरयतीत्यर्थः । ४-अस्थाप्+इ+अ त्, इति स्थितावुपधाया (आकारस्य) इत्वे द्वित्वे 'शर्पूर्वाः खयः' इति-अथिस्थिप्+इ+अ त्, इति जातेऽभ्यासस्य चर्त्वे णिलोपे षत्वे ष्टुत्वे **'अतिष्ठिपत्'** । ५-णिजन्ताद् घ्राधातोर्लटि घ्रापयति । लुङि-वैकल्पिकमित्वम् । ६-शो तनुकरणे धातुः । णिचि 'आदेच उपदेशेऽशिति' इत्यात्वे पुकोऽपवादो युक् । ७-ह्वेञ् धातोर्लुङि-अह्वा+इ+अ त्, इति स्थिते सम्प्रसारणे पूर्वरूपे 'हु' इत्यस्य द्वित्वे-उत्तरखण्डस्य वृद्ध्यवादेशयोर्वैकल्पिक उपधाह्रस्वे सन्वद्भावे दीर्घे च-**'अजूहवत्'** । ८-पा पाने धातुः । णिचि पुकोऽपवादो युक् **पाययति** । ९-पायीत्यस्माल्लुङि-चङि पाय् शब्दस्य द्वित्वे हलादिशेषेऽभ्यासाऽऽकारस्येत्वे उपधालोपे च **'अपीप्यत्'** इति ।

(पातेर्णौ लुग्वक्तव्यः) पुकोऽपवादः। पालयति।

**८१५ वो विधूनने जुक् ७।३।३८॥**

णौ। वाजयति। विधूनने किम्। केशान्वापयति।

**८१६ शदेरगतौ तः ७।३।४२॥**

णौ। शातयति। गतौ तु। गाः शादयति गोविन्दः। गमयतीत्यर्थः।

**८१७ रुहः पोऽन्यतरस्याम् ७।३।४३॥**

णौ। रोपयति, रोहयति।

**८१८ दोषो णौ ६।४।९०॥**

दुष्यतेरुपधाया ऊत्स्याण्णौ। दूषयति।

**८१९ वा चित्तविरागे ६।४।९१॥**

विरागोऽप्रीतता। चित्तं दूषयति दोषयति वा कामः।

**८२० उभौ साभ्यासस्य ८।४।२१॥**

साभ्यासस्यानितेरुभौ नकारौ णत्वं प्राप्नुतो निमित्ते सति। प्राणिणत्।

**८२१ णौ गमिरबोधने २।४।४६॥**

१—पा रक्षणे—इत्यस्माण्णौ पुकोऽपवादे लुगागमे **पालयति**। लुङि—अपीपलत्। २—ओवै शोषणे—इति धातोरात्वे कृते पुकोऽपवादे जुकि **वाजयति**। लुङि अवीवजत्। ३—नात्र विधूननम् (कम्पनम्) अर्थः, किन्तु सुगन्धीकरणं छेदनं वार्थः। ४—शदेर्णौ तोऽन्तादेशः स्यान्नतु गताविति सूत्रार्थः। ५—लुङि—अशीशतत्। ६—लुङि—अरूरुपत्, अरूरुहत्। ७—कृतलघूपधगुणस्य दुष्धातोर्निर्देशः। लघूपधगुणापवाद ऊत्। 'दुषो णौ' इत्येव तु सुवचम्। ८—लुङि—'अदूदुषत्' इति रूपम्। ९—प्र अन्+इ+अ त्, इति स्थिते णत्वस्यासिद्धत्वात् नीत्यस्य द्वित्वे—उत्तरखण्डेऽभ्यासनकारेण व्यवधानादप्राप्ते णत्वे, उभयोर्णत्वार्थम् 'उभौ साभ्यासस्ये'ति सूत्रम्। न च 'पूर्वत्रासिद्धीयद्विर्वचने' इति निषेधाद् द्वित्वे कर्त्तव्ये णत्वस्यासिद्धत्वं न भविष्यति। 'अनिते' रिति कृते च णत्वे पश्चाद् द्वित्वे प्राणिणदिति सेत्स्यतीति व्यर्थं सूत्रमिदमिति वाच्यम्। 'पूर्वत्रासिद्धीयद्विर्वचने' इत्यस्यानित्यत्वज्ञापनायैतत्सूत्रस्यावश्यकत्वात्। तेन 'ऊर्णुनाव' इत्यत्र नुशब्दस्य द्वित्वेऽभ्यासोत्तरखण्डे णत्वाभावसिद्धिरिति। १०—इणो गमिः स्याण्णौ न तु बोधने।

इणः। गमयति[1]। बोधने तु–प्रत्याययति[2]। **घट** चेष्टायाम्। **घटादयो मितः**[3]। **जनी-जॄष्-क्नसु-रञ्जोऽमन्ताश्च,** मितः। '**ज्वल-ह्वल-ह्मल-नमामनुपसर्गाद्वा**', एषां मित्त्वं वा। '**ग्ला-स्ना-वनु-वमां च**', अनुपसर्गादेषां मित्त्वं वा। '**न कम्यमिचमाम्**', अमन्तत्वात्प्राप्तं मित्त्वमेषां न। '**यमोऽपरिवेषणे**', मित्त्वं न। '**स्खदिरवपरिभ्यां च**'। मित्वञ्च।

**८२२ मितां ह्रस्वः ६।४।९२॥**

ज्ञपादीनां घटादीनां च णावुपधाया ह्रस्वः। घटयति। अजीघटत्। **ज्ञप** ज्ञाने ज्ञापने च। ज्ञपयति। अजिज्ञपत्[4]।

**८२३ रभेरशब्लिटोः ७।१।६३॥**

नुमचि[5]।

**८२४ लभेश्च ७।१।६४॥**

अररम्भत्[7]। अललम्भत्। ईर्ष्ययति[8]। (ईर्ष्यतेस्तृतीयस्येति

---

१–लुङि–अजीगमत्। २–लुङि–प्रत्यायियत्। ३–घटादिगणपठिता धातवो मित्संज्ञकाः। एतदाद्यानि सप्त गणसूत्राणि। ४–लुङि रूपम्, चङि द्वित्वे हलादिशेषेऽभ्यासस्येत्वे संयोगपरकत्वेन लघुत्वाभावाद् 'दीर्घो लघो' रिति न दीर्घः। ५–रभेर्नुम् स्यादचि न तु शब्लिटोरिति सूत्रार्थः। ६–नुम् स्यादित्यर्थः। योगविभागः 'आङो यि' इत्यत्र लभेरेवानुवृत्तिर्यथा स्या दित्येवमर्थः। ७–लटि–रम्भयति। लम्भयति। लुङि–च्लेश्चङि द्वित्वे हलादिशेषेऽभ्यासस्य लघुपरकत्वाभावात्सन्वद्भावाभावः, तेन–इत्वदीर्घौ न। ८–ईर्ष्यधातोर्ण्यन्ताल्लटि रूपमिदम्। ९–द्वित्वमिति शेषः। ईर्ष्यधातोर्ण्यन्ताल्लुङि च्लेश्चङि णिसहितयोः षकारयकारयोर्द्वित्वं प्राप्नोति, तत्र षस्य द्वित्वं वारयितुमिदं वार्तिकमारभ्यते। अस्य चार्थद्वयम्:—ईर्ष्यतेस्तृतीयव्यञ्जनस्य द्वित्वमित्येकः, ईर्ष्यतेस्तृतीयस्यैकाचो द्वित्वमित्यपरः। तत्र प्रथमेऽर्थे षस्य द्वित्वं निवार्य्य यिशब्दस्य द्वित्वं करोतीदं वार्तिकम्, तेन–'**ऐर्ष्यियत्**' इति रूपं भवति। अपरस्मिन्नर्थे तु नात्रेदं वार्तिकं प्रवर्तिष्यते तृतीयस्यैकाचोऽभावात्। किन्तु–अजादेर्द्वितीयस्येत्यस्यापवादतया सन्नन्ते प्रवर्त्तते, तत्र 'ष' इति तृतीयस्यैकाचो विद्यमानत्वात्।

वक्तव्यम्) तृतीयव्यञ्जनस्य तृतीयैकाच इति वार्थः। आद्ये षस्य द्वित्वं वारयितुमिदम्। द्वितीये त्वजादेर्द्वितीयस्येत्यस्यापवादतया सन्नन्ते प्रवर्तते। ऐर्ष्यियर्यत्। द्वितीयव्याख्यायां णिजन्ताच्चङि ष एवाभ्यासे श्रूयते। हलादिः शेषात्। द्वित्वं तु द्वितीयस्यैव। तृतीयाभावेन प्रकृतवार्तिकाप्रवृत्तेः। ऐर्षिष्यत्।[2] ॥ इति णिजन्तप्रक्रिया ॥

# अथ सन्नन्तप्रक्रिया ॥२॥

**८२५ धातोः कर्मणः समानकर्तृकादिच्छायां वा ३।१।७॥**

इषिकर्मणो धातोरिषिणैककर्तृकात्सन्वेच्छायाम्। **पठ** व्यक्तायां वाचि। इद्र।

**८२६ सन्यङोः ६।१।९॥**

सन्नन्तस्य यङन्तस्य च प्रथमस्यैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य। सन्यतः। पठितुमिच्छति पिपठिषति। कर्मणः किम्–गमनेनेच्छतीति करणान्माभूत्। समानकर्तृकात् किम्–शिष्याः पठन्त्वितीच्छति गुरुः। वाग्रहणाद्वाक्यमपि।

शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः।
सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥१॥

१–प्रथमव्याख्यायां तृतीयव्यञ्जनस्य णिसहितस्य द्वित्वे रूपमिदम्। २–द्वितीयव्याख्यायां तृतीयस्यैकाचोऽभावेन प्रकृतवार्तिकाऽप्रवृत्तेर्द्वितीयावयवस्यैकाचो द्वित्वे रूपमिदम् ॥ इति णिजन्तप्रक्रिया ॥

३–इषिः=इच्छा, इषिणैककर्तृकत्वादिषिकर्मीभूतव्यापारवाचकाद् धातोरित्यर्थः। ४–इच्छायामित्युक्तत्वात्कर्मत्वं कर्तृत्वञ्च तदपेक्षमेव गृह्यते। ५–पठ धातोरिच्छायां सनि 'सनाद्यन्ता' इति धातुत्वे 'आर्धधातुकस्ये' तीटि 'सन्यङो' रिति द्वित्वे हलादिशेषे 'सन्यतः' इत्यभ्यासस्येत्वे सनः सकारस्य षत्वे रूपं **पिपठिषति**। लिटि–पिपठिषाञ्चकार। लुङि–अपिपठिषीत्। ६–नात्र गमनमिच्छायाः कर्म किन्तु करणम्, तेन नात्र सन्। ७–पठनकर्त्तारः शिष्याः, इच्छायाः कर्त्ता तु गुरुरिति नास्ति समानकर्तृकत्वं तेन न सन्। ८–**शैषिकादिति** 'धातोः कर्मण' इति सूत्रस्थभाष्यवार्तिकमिदम-

तेन पिपठिषिषुमिच्छतीति वाक्यमेव । 'लुङ्सनोर्घस्लृ' [१] ।

**८२७ सः स्यार्धधातुके ७ । ४ । ४९ ॥**

सस्य तः स्यात्सादावार्धधातुके । अत्तुमिच्छति जिघत्सति [२] । एकाच इति नेट् ।

**८२८ अज्झनगमां सनि ६ । ४ । १६ ॥**

अजन्तानां हन्तेरजादेशगमेश्च दीर्घो झलादौ सनि ।

**८२९ इको झल् १ । २ । ९ ॥**

इगन्ताज्झलादिः सन्कित् । कर्तुमिच्छति चिकीर्षति [३] ।

स्यायमर्थः—शैषिकात्=शेषाधिकारे विहितात् सरूपः=समानरूपः शैषिकः=शेषाधिकारविहितः प्रत्ययो न, यथा—शालायां भवः शालीयः—इत्यत्र 'वृद्धाच्छः' इति शैषिकश्छः प्रत्ययः, ततश्च शालीये भव इत्यर्थे शालीयशब्दात् पुनः शैषिकश्छो न भवति, तेन शालीये भव इति वाक्यमेव । शैषिकात् शैषिकः स्वरूप एव निषिध्यते विरूपस्तु स्यादेव यथा—अहिच्छत्रे भव आहिच्छत्र इति भवार्थेऽण् ततश्चाऽऽहिच्छत्रे भव आहिच्छत्रीय इति अणन्ताच्छो (भवत्येव) । तथा—मतुबर्थीयात्=मत्वर्थात् सरूपो मतुबर्थिकः=मत्वर्थो न भवति । यथा—धनमस्यास्तीति धनवान् इत्यत्र मतुप्, ततश्च धनवानस्यास्तीत्यर्थविवक्षायां मतुबन्तात्सरूपो मतुब् न, विरूपस्तु स्यादेव यथा—दण्डोऽस्यास्तीति दण्डी 'अत इनिठनौ' इतीनि प्रत्ययः । ततश्च दण्डिनः सन्त्यस्यां शालायामित्यर्थविवक्षायां दण्डमतीत्यत्र—इन्नन्तान्मतुब् (भवत्येव) । एवं सन्नन्तात्सरूपः सन्नेष्यते, अत्रापि सरूप इत्यनुषज्जतेऽर्थद्वारा सादृश्यं तस्यार्थस्तथा चेच्छासन्नन्तादिच्छासन्न, यथा—पठितुमिच्छति पिपठिषति ततश्च पिपठिषितुमिच्छतीति वाक्यमेव । स्वार्थसन्नन्तादिच्छासन् तु विरूपत्वात्स्यादेव यथा—'जुगुप्सते' 'मीमांसते' इति स्वार्थः सन्, ततश्च जगुप्सितुमिच्छति मीमांसितुमिच्छति 'जुगुप्सिषते' 'मीमांसिषते' इत्यत्र—इच्छासन् (भवत्येव) ।

१—इत्यनेन सूत्रेणाऽदो घस्लादेशः । २—सनि—अदो घस्लादेशे 'घस्' इत्यस्य द्वित्वे चुत्वे जस्त्वे सन्यत इतीत्वे सस्य तत्वे **जिघत्सति** । लुङि—अजिघत्सीत् । ३—कृधातोरिच्छासनि 'एकाच उपदेशे' इतीडभावे 'अज्झनगमां ...' इति दीर्घे द्वित्वेऽभ्यासहस्वे—उरदत्वे हलादिशेषे 'कुहोश्चु' रिति

जिघांसति ।

**८३० सनि च २ । ४ । ४७ ॥**

इणो गमिः स्यात्सनि न तु बोधने । जिगमिषति । बोधने तु प्रतीषिषति ।

**८३१ इङश्च २ । ४ । ४८ ॥**

इङो गमिः स्यात् सनि । अधिजिगांसते ।

**८३२ रुद-विद-मुष-ग्रहि-स्वपि-प्रच्छः संश्च १ । २ । ८ ॥**

एभ्यः सन् क्त्वा च कितौ स्तः । रुरुदिषति । विविदिषति । मुमुषिषति ।

**८३३ सनि ग्रहगुहोश्च ७ । २ । १२ ॥**

ग्रहेर्गुहेरुगन्ताच्च सन इण्न । जिघृक्षति ।

**८३४ हलन्ताच्च १ । २ । १० ॥**

---

चुत्वे 'इको झल्' इति सनः कित्वे 'ॠत इद्धातोः' इत्वे रपरत्वे च 'हलि चे' ति दीर्घे सनः सस्य षत्वे **चिकीर्षति** । लुङि-अचिकीर्षीत् ।

१-हन्तुमिच्छतीति हन्तेः सनि 'अज्झन....' इति दीर्घे द्वित्वेऽभ्यास-ह्रस्वे चुत्वे 'सन्यतः' इति-इत्वे 'अभ्यासाच्च' इति कुत्वे 'नश्चापदान्त....' इत्यनुस्वारे **जिघांसति** । लुङि-अजिघांसीत्, अजिघांसिष्टाम् । २-एतुमिच्छतीति विग्रहः, इणो गमादेशे रूपमिदम्, अत्रेणो गमनमर्थः । ३-प्रतिपूर्वकादिणः सनि षत्वे द्वितीयावयवस्यैकाचः 'ष' इत्यस्य द्वित्वे सन्यत इत्यभ्यासस्येत्वे **प्रतीषिषति** रूपम् । लुङि-प्रत्यैषिषीत् । अत्र त्विणो बोधनमर्थः । ४-अध्येतुमिच्छतीत्यर्थेऽधिपूर्वादिङः सनि 'इङश्चे'ति गमादेशे 'गमः परस्मैपदेषु' इत्युक्तेरिडभावे 'अज्झन' इति दीर्घे द्वित्वेऽभ्यासह्रस्वे चुत्वेऽभ्यासेत्वे मस्यानुस्वारे-**अधिजिगांसते**-इति । लुङि-अध्यजिगांसिष्ट, अध्यजिगांसिषाताम्, अध्यजिगांसिषत । ५-तेन रोदितुमिच्छति-रुरुदिषति, वेदितुमिच्छति विविदिषति, मोषितुमिच्छति मुमुषिषति, इत्यादौ लघूपधगुणो न । ६-ग्रहेर्नित्यं गुहेर्विकल्पेन प्राप्ते निषेधोऽयम् । ७-ग्रहेः सनि "ग्रहिज्ये" ति सम्प्रसारणे द्वित्वादौ जगृह् स इति स्थिते हकाररूपेणः परत्वेन सस्य षत्वं तस्यासिद्धत्वाद् हस्य ढत्वे भष्भावः "षढोः कः सि" इति कत्वे सस्य षत्वे (क ष संयोगे क्षः) 'जिगृक्ष' इत्यस्य "सनाद्यन्ता" इति धातुत्वे लडादयो **जिघृक्षति** । लुङि-अजिघृक्षीत् ।

इक्समीपाद्धलः परो झलादिः सन्कित् । गुहू संवरणे । जुघुक्षति । सुषुप्सति ।

**८३५ किरश्च पञ्चभ्यः ७ । २ । ७५ ॥**

कॄ गॄ दृङ् धृङ् प्रच्छ एभ्यः सन इट् । पिपृच्छिषति । चिकरिषति । जिगरिषति । जिगलिषति । ( अत्रेटो दीर्घो नेष्टः ) ॥

**८३६ पूर्ववत्सनः १ । ३ । ६२ ॥**

सनः पूर्वो यो धातुस्तेन तुल्यं सन्नन्तादप्यात्मनेपदं स्यात् । दिदरिषते । दिधरिषते । बुभूषति ॥

**८३७ सनीवन्तर्ध-भ्रस्ज-दम्भु-श्रि-स्वृ-यूर्णु-भर-ज्ञपि-सनाम् ७ । २ । ४६ ॥**

इवन्तेभ्य ऋधादिभ्यश्च सन इड् वा ॥

**८३८ च्छ्वोः शूडनुनासिके च ६ । ४ १६ ॥**

सतुक्कस्य छस्य वस्य च क्रमात् श ऊठ् एतावादेशौ स्तोऽनुनासिके क्वौ झलादौ क्ङिति च । यण् । द्वित्वम् । दुद्यूषति , दिदेविषति ॥

---

१–गुहूधातोः सनि–इण्निषेधे पूर्ववद् भष्भावादौ **जुघुक्षति** । लुङि–अजुघुक्षीत् । २–स्वपधातोः सनि 'रुदविदे' ति सनः कित्वाद् "वचि स्वपि ...." इति सम्प्रसारणं लघूपधगुणाभावश्च, द्वित्वादौ, **सुषुप्सति** । लुङि—असुषुप्सीत् । ३–प्रच्छधातोः सनि रुदविदेति सनः कित्वाद् ग्रहिज्येति सम्प्रसारणं, द्वित्वादि, 'किरश्च पञ्चभ्यः' इति सन इट्, सनः सस्य षत्वे **पिपृच्छिषति**। लुङि–अपिपृच्छिषीत् । ४–कॄ विक्षेपे–इत्यस्मात्सनि–इट्, सनि वेति विकल्पे प्राप्ते किरश्चेति नित्यमिट्, द्वित्वादि–अभ्यासोत्तरस्य गुणे सनः षत्वे **चिकरिषति**। ५–गॄ निगरणे धातुः, सिद्धिः पूर्ववत्, अचि विभाषेति लत्वविकल्पः । ६–वृतो वेति दीर्घमाशङ्क्याऽऽह–**अत्रेटो दीर्घो नेष्टः** ( वार्तिकमिदम् ) । ७–दृङ् आदरणे–इत्यस्मात्सनि किरश्चेतीटि द्वित्वादौ 'दिदरिष' इत्यस्मात्पूर्ववत्सन इत्यात्मनेपदं **दिदरिषते** । लुङि–अदिदरिषिष्ट । ८–धृङ् अवस्थाने धातुः, सिद्धिः पूर्ववत् । ९–भूधातोः सनि "सनि ग्रहगुहोश्च" तीण्निषेधे द्वित्वादौ 'इको झल्'इति सनः कित्वान्न गुणः, षत्वे **बुभूषति** । १०–दिवु धातोः सनि, सनीवन्तर्धेति" इड्विकल्पे । इडभावपक्षे

**८३६ स्तौतिण्योरेव षण्यभ्यासात् ८ । ३ । ६१ ॥**

अभ्यासेणः परस्य स्तौतिण्यन्तयोरेव सस्य षः षभूते सनि नान्यस्य । तुष्टूषति । सिषाधयिषति । स्तौतिण्योः किम्-सुस्यूषति , सिसेविषति ॥

**८४० आप्-ज्ञप्यृधामीत् ७ । ४ । ५५ ॥**

एषामच ईत्स्यात्सादौ सनि ॥

**८४१ अत्र लोपोऽभ्यासस्य ७ । ४ । ५८ ॥**

सनिमीमित्यारभ्य ५उक्तं तत्राभ्यासस्य लोपः । आप्तुमिच्छति-ईप्सति । अर्धितुमिच्छति-ईर्त्सति । अर्दिधिषति । बिभ्रज्जिषति ।

---

'हलन्ताच्चे' ति सनः कित्वे 'च्छ्वोः शूड्...' इति वस्योठि यणि 'द्यु' इत्यस्य द्वित्वे हलादिशेषेऽभ्यासह्रस्वे सनः षत्वे **दुद्यूषति** । इट्पक्षे—'**दिदेविषति**' सनः कित्वाभावाल्लघूपधगुणः ।

१-स्तुधातोः सनि "अज्झन..." इति दीर्घे द्वित्वादौ सनः षत्वेऽभ्यासोत्तरस्य "स्तौतिण्यो" रेवेति षत्वे ष्टुत्वं '**तुष्टूषति**' २-ण्यन्तोदाहरणमिदम् । ण्यन्तात्साधधातोः सनीटि द्वित्वे हलादिशेषे ह्रस्वे सन्यत इतीत्वे स्तौतिण्योरिति षत्वे **सिषाधयिषति**। ३-४-सिवुधातोः सनीडभावे दुद्यूषतिवद्रूपम् । अभ्यासोत्तरस्य स्तौतिण्योरेवेति नियमान्न षत्वम् । इट्पक्षे सिसेविषति । ५-अयमर्थः सनिमीमेति सूत्रम् ७ । ४ । ५४ । "आप्ज्ञप्यृधामीत्" ७ । ४ । ५५ । इति सूत्रम्, "दम्भ इच्च ७ । ४ । ५६ ।" इति सूत्रम्, "मुचोऽकर्मकस्य ७ । ४ । ५७ । इति सूत्रञ्च यत्र प्रवर्त्तते तत्राऽभ्यासस्य लोप इति । ६-आप्लृ व्याप्ताविव्यस्मात्सनि "आप्ज्ञप..." इत्याऽऽकारस्येत्वे द्वित्वेऽभ्यासलोपे **ईप्सतीति** रूपम् । लुङि—ऐप्सीत् । ७-ऋध् धातोः सनि सनीवन्तर्धेतीड्विकल्पः, इडभावपक्षे—ऋकारस्य 'आप्ज्ञपि-ऋधाम्' इतीत्वे रपरत्वे धस्य चर्त्वे 'त्स' इत्यस्य द्वित्वेऽभ्यासलोपे '**ईर्त्सति**' इति रूपम् । लुङि—ऐर्त्सीत् । ८-इट् पक्षे रूपमिदम् । ९-भ्रस्ज धातोः सनि सनीवन्तर्धेति-इट्पक्षे 'भ्रस्जो रोपधयो'रिति रमागमाभावपक्षे **बिभ्रज्जिषति**' इति रूपम् । अत्र सस्य श्चुत्वेन शः, शस्य जस्त्वेन जः क्ङिदभावाद् ग्रहिज्येति सम्प्रसारणं न । इटि रमागमपक्षे—भ्रस्ज्+इस् , इति स्थितेऽकारादुपरि सकारात्प्राक् रेफागमे भकारात्परस्य च निवृत्तौ भर्ज्+

बिभर्जिषति, बिभ्रक्षति, बिभर्क्षति।

**८४२ दम्भ इच्च ७। ४। ५६॥**

दम्भेरच इत्स्यादीच सादौ सनि। हलन्तादित्यत्र हल्ग्रहणं जातिपरम्। तेन सनः कित्त्वान्नलोपः। धिप्सति, धीप्सति, दिदम्भिषति। शिश्रीषति, शिश्रयिषति। उदोष्ठ्येत्युत्वम्। सुस्वूर्षति, सिस्वरिषति। युयूषति, यियविषति। 'विभाषोर्णोः' इति ङित्। ऊर्णुनुविषति, ऊर्णुन-

---

इस्, इति स्थिते द्वित्वे हलादिशेषे जस्त्वे-इत्वे सनः षत्वे **'बिभर्जिषति,** इति रूपम्। तदेवमिट् पक्षे रमागमतदभावाभ्यां रूपद्वयम्। इडभावे रमागमाभावे च **बिभ्रक्षति** इति रूपम्, "स्कोः" रिति सलोपे व्रश्चेति षत्वं षढोरिति कत्वं सस्य षत्वं कषसंयोगे क्षः, द्वित्वादि पूर्ववत्। इडभावे रमागमे च **'बिभर्क्षति** इति रूपम्, सिद्धिः पूर्ववत्। तदेवमिडभावपक्षेऽपि रमागमतदभावाभ्यां रूपद्वयम्।

१—ननु दम्भधातोः सनि परे "दम्भ इच्चे" तीत्वे सन इक्समीपहल्परकत्वाभावाद् "हलन्ताच्चे" ति कित्वं न स्यात्तत्राह—हलन्तादित्यत्र **हल्ग्रहणं जातिपर**मिति हल्त्वजात्याऽऽक्रान्तैकानेकव्यक्तिपरमित्यर्थः, तेन भवत्यत्रापि सनः कित्वम्। २—३—दम्भ इच्चेतीत्वे सनः कित्वान्नलोपे भष्भावे भस्य चर्त्वे द्वित्वेऽभ्यासलोपे **धिप्सती**ति रूपम्। ईत्वपक्षे **धीप्सति**। सनीवन्तर्धेतीट्पक्षे **दिदम्भिषति** 'दम्भ इच्चे' त्यस्याऽप्रवृत्तेरभ्यासलोपस्याप्यप्रवृत्तिः। ४—श्रिञ् सेवायामित्यस्मात्सनि सनीवन्तेतीडभावेऽज्झनेतिदीर्घे इको झल् इति सनः कित्वान्न गुणः, **'शिश्रीषति'**। इट्पक्षे सनो झलादित्वाभावान्न कित्वं नापि दीर्घः **'शिश्रयिषति'** इति रूपम्। ५—स्वृधातोः सनि सनीवन्तेति—इडभावे—ऋकारस्याऽज्झने दीर्घे कृते "उदोष्ठ्यपूर्वस्य" त्युत्वे रपरत्वे "हलि चे"ति दीर्घः,**सुस्वूर्षति**। इट्पक्षे **सिस्वरिषति** 'स्वृ' इत्यस्य द्वित्वे उरदत्वे—इत्वम्। ६—युधातोः सनि सनीवन्तेतीडभावपक्षेऽज्झनेतिदीर्घे इको झल् इति सनः कित्वाद् गुणाभावो द्वित्वं **युयूषति**। इट्पक्षे—द्विर्वचनेऽचि, इति गुणनिषेधाद् यु' इत्यस्य द्वित्वे 'ओः पुयण्जी'-त्यभ्यासोकारस्येत्वे तदुत्तरखण्डे गुणे **यियविषति**। ७—ऊर्णुञ् धातोः सनि सनीवन्तेतीट्पक्षे 'विभाषोर्णो' रिति ङित्वे 'नु' शब्दस्य द्वित्वे—उवङि

विषति, ऊर्णुनूषति । बिभरिषति, बुभूर्षति । जिज्ञपयिषति, ज्ञीप्सति । सिसनिषति, सिषासति । (**आशङ्कायां सन्वक्तव्यः**) । श्वा मुमूर्षति । (**तनि-पति-दरिद्रातिभ्यः सनो वेड् वाच्यः**) । तितनिषति ॥

**८४३ तनोतेर्विभाषा ६ । ४ । १७ ॥**

उपधाया दीर्घो झलादौ सनि । तितांसति, तितंसति । कूलं पिपतिषति

**८४४ सनि मी-मा-घु-रभ-लभ-शक-पत-पदामच इस् ७ । २ । ४१ ॥**

---

'**ऊर्णुनुविषति**' इति रूपम् । ङिद्वदभावपक्षे-गुणे-**ऊर्णुनविषति** । इडभावपक्षे-"अज्झने"ति दीर्घे 'इको झल्' इति सनः कित्वाद् गुणाभावे '**ऊर्णुनूषति**' ।

१-भृधातोः सनि सनीवन्तेतीट्पक्षे द्वित्वे-उरदत्वे रपरत्वे हलादिशेषे सन्यत इतीत्वे-उत्तरखण्डस्य गुणे **बिभरिषति** । इडभावपक्षे च भृ+स, इति स्थिते "अज्झने"ति दीर्घे 'उदोष्ठ्ये' त्युत्वे रपरत्वे उत्तरखण्डस्य हलि चेति दीर्घे **बुभूर्षति** । २-ज्ञपधातोर्ण्यन्तात्सनि सनीवन्तेतीट्पक्षे द्वित्वादौ सन्यत इतीत्वे **जिज्ञपयिषति** । इडभावपक्षे-इको झलिति कित्वान्न गुणः 'अज्झने'ति दीर्घात्परत्वाद् णिलोपः 'आप्ज्ञप....' इतीत्, द्वित्वेऽभ्यासस्य लोपो **ज्ञीप्सति** । ३-सनधातोः सनि सनीवन्तेतीट्पक्षे **सिसनिषतीति** रूपम् । अत्र "जन सने" त्यात्वन्न सनो झलादित्वाभावात् "स्तौतिण्यो" रेवेति षत्वञ्च न । इडभावपक्षे च **सिषासतीति** रूपम्, जनसनेतिनकारस्यात्वे कृते 'सा' इत्यस्य द्वित्वे ह्रस्वे अत इत्वे षत्वे च रूपं, षभूते सनीत्युक्तत्वात् स्तौतिण्योरेवेति नियमस्याप्रवृत्तेर्भवत्येवात्र षत्वम् । ४-आशङ्काविषयक्रियावृत्तेर्धातोः स्वार्थे सन्नित्यर्थः । ५-मृङ् धातोः सनि "अज्झने"ति दीर्घे 'इको झलि'ति सनः कित्वम् 'उदोष्ठ्यपूर्वस्ये' ति-उत्वे रपरत्वे द्वित्वे हलि चेति दीर्घे सनः षत्वे **मुमूर्षति**=शङ्कितमरणो भवतीत्यर्थः (मरणशङ्काविषयो भवति) । ६-तनेः सनि 'तनि-पति...' इति-इड्विकल्पस्तत्रेट्पक्षे (**तितनिषति**) रूपमिदम् । ७-इडभावपक्षे तनोतेर्विभाषेति -उपधाया दीर्घे नस्यानुसारे **तितांसति**, दीर्घाभावपक्षे **तितंसति** । ८-पत् धातोः सनि 'तनि पती' तीट्पक्षे **पिपतिषति**, इति रूपम् ।

एषामच इस् स्यात् सादौ सनि । अभ्यासलोपः । पित्सति । दिदरिद्रिषति, दिदरिद्रासति ॥

**८४५ मुचोऽकर्मकस्य गुणो वा ७ । ४ । ५७ ॥**

सादौ सनि । अभ्यासलोपः । मुमुक्षते, मोक्षते वा वत्सः स्वयमेव । अकर्मकस्य किम् । मुमुक्षति वत्सं कृष्णः ॥

**८४६ इट् सनि वा ७ । २ । ४१ ॥**

वृङ्वृञ्भ्यामृदन्ताच्च सन इड् वा । विवरिषते, विवरीषते, वुवूर्षते । विवरिषति, विवरीषति, वुवूर्षति । तितरिषति, तितरीषति, तितीर्षति ।

**८४७ स्मि-पूङ्-रञ्ज्वशां सनि ७ । २ । ७४ ॥**

स्मिङ् पूङ् ऋ अञ्जू अशू एभ्यः सन इट् । सिस्मयिषते । पिपविषते ।

१–इडभावपक्षे सनि मीमेति 'इस्' स्कोरिति सलोपो द्वित्वेऽत्र लोपोऽभ्यासस्येत्यभ्यासलोपः **पित्सति**। २–दरिद्रातेः सनि तनिपतीतीट्पक्षे 'द' इत्यस्य द्वित्वे सन्यत इतीत्वे 'दरिद्रातेरार्धधातुके'ति–आलोपे **दिदरिद्रिषति** । इडभावपक्षे च **दिदरिद्रासति**। ३–मुच् धातोः सनि 'मुचोऽकर्मकस्ये'ति गुणाभावपक्षे चोःकुरिति कुत्वे सनः षत्वे **मुमुक्षते** । गुणपक्षे चात्र लोपोऽभ्यासस्येत्यभ्यासलोपे **मोक्षते** । अकर्मकस्येत्युक्तेः कर्मणः कर्तृत्वविवक्षायामयं विकल्पोऽन्यत्र तु **मुमुक्षतीत्येव** । ४–वृङ्धातोः सनि 'इट् सनिवे' तीट् पक्षे 'वृतो वे'तीटो वैकल्पिके दीर्घे द्वित्वादौ **विवरिषते, विवरीषते** । ५–इडभावपक्षे च 'अज्झने' ति दीर्घे 'उदोष्ठ्ये' त्युत्वे रपरत्वे –द्वित्वादौ हलि चेति दीर्घे **वुवूर्षते** । वृञ् धातोर्ञित्वादुभयपदम् , आत्मनेपदे तु पूर्ववद्रूपाणि परस्मैपदे च **विवरिषति, विवरीषति, वुवूर्षति** । ६—७–तॄधातोः सनि 'इट् सनि वे' तीट्पक्षे द्वित्वादौ गुणेऽभ्यासस्येत्वे 'वृतो वे' तीटो दीर्घविकल्पे **तितरिषति, तितरीषति** । इडभावपक्षे च 'ॠत इद् धातो'रिति–इत्वे रपरत्वे हलि चेति दीर्घे–**तितीर्षति** । ८–स्मिङ् धातोः सनि'स्मिपूङ्...' इति इट्, द्वित्वादौ गुणायादेशयोः **सिस्मयिषते** । ९–पूङ् धातोः सनि 'स्मिपूङ्...' इतीटि द्वित्वादौ 'ओः पुयण् ज्यपरे' अभ्यासस्येत्वे–**पिपविषते** ।

अरिरिषति । अञ्जिजिषति । अशिशिषति । **गुप** गोपने । **तिज** निशाने । **कित** निवासे रोगापनयने च । **मान** पूजायाम् । **बध** बन्धने । **दान** खण्डने । **शान** तेजने ।

**८४८ गुप्तिज्किद्‌भ्यः सन् ३ । १ । ५ ॥**

**८४९ मान्बध-दान्-शान्भ्यो दीर्घश्चाभ्यासस्य ३ । १ । ६ ॥**

सूत्रद्वयोक्तेभ्यः सन् मानादीनामभ्यासस्येकारस्य दीर्घश्च । ( गुपेर्निन्दायाम् । तिजेः क्षमायाम् । कितेर्व्याधिप्रतीकारे निग्रहे अपनयने नाशने संशये च । मानेर्जिज्ञासायाम् । बधेश्चित्तविकारे । दानेरार्जवे । शानेर्निशाने) । गुपप्रभृतयः किद्भिन्ना निन्दाद्यर्थका एवाऽनुदात्तेतः । दानशानौ तु स्वरितेतौ । ऐश्वर्थेष्वेते नित्यसन्नन्ताः । अर्थान्तरे त्वननुबन्धकाश्चुरादयः । अनुबन्धस्य केवलेऽचरितार्थत्वात्सन्नन्तात्पदव्यवस्था । धातोरित्यविहितत्वात्सनोऽत्र नार्धधातुकत्वम् । तेनेड्गुणौ न । जुगुप्सते । तितिक्षते । चिकित्सति । मीमांसते । बीभत्सते । दीदांसति, दीदांसते । शीशांसति, शीशांसते । णिचि तु । गोपयति । गोपयते ॥ इति सन्नन्तप्रक्रिया ॥

---

१—ऋधातोः सनि स्मिपूङ्तीटि 'गुणोर्ति...' इति गुणे 'अरिस' इति स्थिते 'अजादेर्द्वितीयस्ये'ति 'रिस्' शब्दस्य द्वित्वम्, **अरिरिषति** । २—अञ्जू धातोः सनि स्मिपूङ्तीटि 'जिस्' इत्यस्य द्वित्वे रूपम्—**अञ्जिजिषति** ३—अशूधातोः सनि—ऊदित्वादिटो विकल्पे प्राप्ते स्मिपूङ्ति नित्यमिट् 'अजादेर्द्वितीयस्ये' ति 'शिस्' इत्यस्य द्वित्वे '**अशिशिषति** । ४—क्षमायाम् =सहने । ५—रोगदूरीकरणे । ६-तीक्ष्णीकरणे । ७—धात्वर्थेष्वेवायं सन् नत्विच्छायाम् । ८—तत्तदर्थविशेषेष्वनुबन्धरहिताः । ९—केवले ह्यचरितार्थं लिङ्गं समुदायोपकारकं भवतीति न्यायात् । सन्नन्तेभ्यः तत्तदनुबन्धानुसारं पदव्यवस्था=आत्मनेपदं परस्मैपदं वा । १०—आर्धधातुकं शेष इत्यत्र 'धातोरिति विहित' इति व्याख्यायते । अयञ्च सन् धातोरिति विहितो नास्ति—इति नार्धधातुकत्वमस्य तेन इड् गुणौ न । ११—गुप्धातोर्निन्दार्थं सनि द्वित्वादौ **जुगुप्सते** । एवमग्रेऽपि । १२—मान्धातोर्जिज्ञासायां सनि द्वित्वादावभ्यासेकारस्य सन्यत इति विहितस्य 'मान्बधे'ति दीर्घो **मीमांसते** । एवं **बीभत्सते । दीदांसति, दीदांसते । शीशांसति, शीशांसते** ।
१३—गुप्धातोर्णिचि लघूपधगुणे धातुत्वाल्लडादौ **गोपयति, गोपयते** ।

# अथ यङन्तप्रक्रिया

**८५० धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ३।१।२२॥**

पौनःपुन्ये भृशार्थे च द्योत्ये धातोरेकाचो हलादेर्यङ्।

**८५१ गुणो यङ्लुकोः ७।४।८२॥**

अभ्यासस्य। ङिदन्तत्वादात्मनेपदम्। पुनःपुनरतिशयेन वा भवति–बोभूयते। बोभूयाञ्चक्रे। अबोभूयिष्ट। धातोः किम्। आर्धधातुकत्वं यथा स्यात्।[1] अवो वचिरित्यादि। एकाचः किम्। पुनःपुनर्जागर्ति। हलादेः किम्। भृशमीक्षते।

**८५२ नित्यं कौटिल्ये गतौ ३।१।२३॥**

गत्यर्थात्कौटिल्य एव यङ् न तु क्रियासमभिहारे॥

**८५३ दीर्घोऽकितः ७।८३॥**

अकितोऽभ्यासस्य दीर्घो यङ्–यङ्लुकोः। कुटिलं व्रजति–वाव्रज्यते।

**८५४ यस्य हलः ६।४।४९॥**

हलः परस्य यस्य लोपः स्यादार्धधातुके। 'आदेः परस्य'। 'अतो लोपः'। वाव्रजाञ्चक्रे। वाव्रजिता[2]।

**८५५ रीङृतः ७।४।२७॥**

अकृद्यकारे असार्वधातुकयकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः॥ डुकृञ् करणे। चेक्रीयते[3]॥

**८५६ रीगृदुपधस्य च ७।४।९०॥**

ऋदुपधस्य धातोरभ्यासस्य रीगागमो यङ्–यङ्लुकोः। वरीवृत्यते। वरीवृताञ्चक्रे। वरीवृतिता[4]।

---

१–आर्धधातुकसञ्ज्ञायां धातोरिति विहित इति व्याख्यातत्वात्। २–व्रजधातोर्यङि द्वित्वादौ 'दीर्घोऽकितः' इत्यभ्यासदीर्घे 'वाव्रज्य' इत्यस्मात् लुटि तासादाविटि 'यस्य हलः' इति यलोपः 'अतो लोपः' इत्यकारलोपः, **वाव्रजिता**। ३–कृञ्धातोर्यङि 'रीङ् ऋतः' इति रीङ्, क्रीत्यस्य द्वित्वेऽभ्यासकार्ये गुणे **चेक्रीयते**। ४–वृतुधातोर्यङि द्वित्वादावभ्यासस्य रीगागमे 'वरीवृत्य' इत्यस्मात्तासादौ–इटि यस्य हल इति यलोपे अलोपे **वरीवृतिता** अलोपस्य स्थानिवत्वान्नोपधागुणः। अवरीवृतिष्ट (लुङि)।

'क्षुभ्नादिषु च'। नरीनृत्यते। जरीगृह्यते। (रीगृत्वत इति वाच्यम्) वरीवृश्च्यते। परीपृच्छ्यते।

**८५७ लुप-सद-चर-जप-जभ-दह-दश-गॄभ्यो भावगर्हायाम् ३। १। २४॥**

एभ्यो धात्वर्थगर्हायामेव यङ्। गर्हितं लुम्पति लोलुप्यते। सासद्यते॥

**८५८ चर-फलोश्च ७। ४। ८७॥**

अनयोरभ्यासस्यातो नुक् यङ्-यङ्लुकोः। नुगित्यनेनानुस्वारो लक्ष्यते। स च पदान्तवद्वाच्यः। वा पदान्तस्येति यथा स्यात्॥

**८५९ उत्परस्यातः ७। ४। ८८॥**

चरफलोरभ्यासात्परस्यात उत्स्याद्यङ्-यङ्लुकोः। हलि चेति दीर्घः। चञ्चूर्यते, चंचूर्यते। पम्फुल्यते, पंफुल्यते॥

**८६० जप-जभ-दह-दश-भञ्ज-पशां च ७। ४। ८६॥**

एषामभ्यासस्य नुक् यङ्-यङ्लुकोः। गर्हितं जपति-जञ्जप्यते। इत्यादि।

**८६१ ग्रो यङि ८। २। २०॥**

गिरते रेफस्य लत्वं यङि। गर्हितं गिलति-जेगिल्यते॥ (सूचि-

---

१-नृती गात्रविक्षेपे-इत्यस्य रूपमिदं सिद्धिः पूर्ववत् 'क्षुभ्नादिषु चे'-ति णत्वाभावः। २-ग्रहधातोर्यङि ग्रहिज्येति सम्प्रसारणं द्वित्वादावभ्यासस्य रीगागमे रूपम्। ३-व्रश्चधातोर्यङि सम्प्रसारणम्। ४-लुप्धातोर्यङि (गर्हितार्थे) रूपमिदम्। ५-दीर्घोऽकित इत्यभ्यासस्य दीर्घः। लुङि-असासद्दिष्ट। ६-नुगतोऽनुनासिकस्येति पूर्वसूत्रे यंयम्यते, रंरम्यते, इत्यादावनुस्वारश्रवणार्थं नुगित्यनुस्वारोपलक्षणमाश्रयणीयम्। अन्यथा-झल्परत्वाभावान्नश्चापदान्तस्येत्यनुस्वाराऽसम्भवान्नकार एव श्रूयेत। तस्यैवे-हानुवृत्तेरत्राप्यनुस्वारोपलक्षणार्थत्वमिति भावः। सचानुस्वारः पदान्तवत्, तेन पक्षे परसवर्णमिति रूपद्वयं सिद्ध्यति। ७-चर् धातोर्यङि द्वित्वे नुकि 'उत्परस्यातः' इत्युत्वे हलि चेति दीर्घोऽनुस्वारस्य विकल्पेन परसवर्णः। ८-फलधातो रूपमिदं सिद्धिः पूर्ववत्। ९-गर्हितजपेऽत्र यङ्। लुङि-अजञ्जपिष्ट। १०-गॄधातोर्यङि 'ॠत इद् धातो' रितीत्वे रपरत्वे द्वित्वा-दावभ्यासस्य 'गुणो यङ्लुको' रिति गुणे 'ग्रो यङि' इति लत्वे रूपमिदम्।

**सूत्रि मूत्र्यटत्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः )** । सोसूच्यते[1] ॥ **अट पट** गतौ । अटाट्यते[2] ॥

**८६२ यङि च ७ । ४ । ३० ॥**

अर्तेः संयोगादेश्च ऋदन्ताङ्गस्य गुणो यङि । यकारपरस्य रेफस्य न द्वित्वनिषेधः, अरार्यते इति भाष्योदाहरणात्[3] । अरारिता । अशाश्यते[4] । ऊर्णोनूयते[5] ॥

**८६३ सिचो यङि ८ । ३ । ११२ ॥**

सस्य षो न । निसेसिच्यते[6] ॥

**८६४ न कवतेर्यङि ७ । ४ । ६३ ॥**

अभ्यासस्य चुत्वं न । कोकूयते[7] । कौतिकुवत्योस्तु–चोकूयते ॥ **(हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः )** जेघ्नीयते[8] । हिंसायां किम्—

**८६५ नुगतोऽनुनासिकान्तस्य ७ । ४ । ८५ ॥**

---

१–अदन्तात्सूचधातोरनेकाच्त्वात्पूर्वसूत्रेणाप्राप्तो यङ् सूचिसूत्रीत्यादिना वार्तिकेन भवति द्वित्वादि–अभ्यासगुणः । २–अट्धातोर्यङि 'अजादेर्द्वितीयस्ये'ति 'ट्य' शब्दस्य द्वित्वे हलादिशेषे 'दीर्घोऽकितः' इत्यभ्यासदीर्घः–**अटाट्यते**, लुटि–**अटाटिता** । ३–धातोरेकाच इति सूत्रे–इति शेषः । रेफस्य द्वित्वनिषेधे तु–'अराय्र्यते' इति भाष्योदाहरणं व्याकुप्येत । ऋधातोर्यङि यङि चेति गुणे 'र्य' शब्दस्य द्वित्वे हलादिशेषे दीर्घोऽकित इति दीर्घः । ४–अशूधातोर्यङि रूपमिदं सिद्धिः पूर्ववत् । ५–ऊर्णुञ् धातोर्यङि 'नु' शब्दस्य द्वित्वे हलादिशेषेऽभ्यासगुणे 'अकृत्सार्वधातुकेति दीर्घः । ६–सिचिर् क्षरणे–इत्यस्माद् धातोर्यङि रूपमिदम् । सिद्धिः स्पष्टा । अभ्याससकारस्य 'उपसर्गात्सुनोती'त्यनेन ततः परस्य च 'स्थादिष्वभ्यासस्य चे'त्यनेन प्राप्तं षत्वं 'सिचो यङि' इति निषिध्यते । ७–कुङ् धातोः शब्विकरणाद् यङि द्वित्वेऽभ्यासस्य गुणे 'अकृत्सार्वे' इति दीर्घे कुहोश्चुरिति चुत्वे प्राप्ते 'न कवते' र्यङीति चुत्वनिषेधः **कोकूयते** । लुग्विकरण–शविकरणयोः कौति कुवत्योस्तु नात्र सूत्रे ग्रहणं कवतेरिति शपा निर्देशात्, तेन तयोश्चोकूयते–इति रूपम् । ८–हन्तेर्यङि ( हिंसायाम् ) घ्नीभावे द्वित्वादावभ्यासस्य गुणे रूपम् ।

अदन्ताभ्यासस्य नुक् यङ्-यङ्लुकोः । जंघन्यते ॥

**८६६ अयङ् यि क्ङिति ७ । ४ । २२ ॥**

शीङोऽयङादेशः स्याद् यादौ क्ङिति । शाशय्यते ॥

**८६७ स्वपि-स्यमि-व्येञां यङि ६ । १ । १६ ॥**

एषां संप्रसारणं स्याद् यङि । सोषुप्यते । सेसिम्यते । वेवीयते ॥

**८६८ न वशः ६ । १ । २० ॥**

वशो न संप्रसारणम् । वावश्यते ।

**८६९ चायः की ६ । १ । २१ ॥**

यङि । चेकीयते ॥

**८७० ई घ्राध्मोः ७ । ४ । ३१ ॥**

जेघ्रीयते । देध्मीयते ।

**८७१ नीग्-वञ्चु-स्रंसु-ध्वंसु-भ्रंसु-कस-पत-पद-स्कन्दाम् ७ । ४ । ८४ ॥**

एषामभ्यासस्य नीगयङ्-यङ्-लुकोः । अकित इत्युक्तेर्न दीर्घः । वनीवच्यते । सनीस्रस्यते । दनीध्वस्यते । बनीभ्रस्यते । चनीकस्यते । पनीपत्यते । पनी-

---

१-गत्यर्थाद् हन्तेर्यङि द्वित्वेऽभ्यासस्य नुगागमेऽभ्यासाच्चेति कुत्वे **जंघन्यते** । २-शीङ् स्वप्ने-इत्यस्माद् यङि परत्वादन्तरङ्गत्वाच्चाऽयङादेशे कृते द्वित्वे हलादिशेषे 'दीर्घोऽकितः' इत्यभ्यासदीर्घे **शाशय्यते** । ३-स्वप् धातोर्यङि सम्प्रसारणे पूर्वरूपे द्वित्वादावभ्यासस्य गुणेऽभ्यासादुत्तरस्य सनः षत्वे रूपम् । ४-स्यम् धातोर्यङि सम्प्रसारणे पूर्वरूपे द्वित्वादावभ्यासगुणे रूपम् । अषोपदेशत्वान्न षः । ५-व्येञो यङि सम्प्रसारणे पूर्वरूपे द्वित्वादि 'हलः' इति 'अकृत्सार्व...' इति वा दीर्घः । ६-वश्धातोर्यङि ग्रहिज्येति सम्प्रसारणे प्राप्ते 'न वशः' इति तन्निषेधः द्वित्वादौ दीर्घोऽकित इत्यभ्यास-दीर्घः । ७-चायृ पूजानिशामनयोरित्यस्माद् यङि कीभावेऽभ्यासगुणे रूपम् । ८-९-घ्रा गन्धोपादाने, ध्मा शब्दे-इत्याभ्यां यङीत्वे द्वित्वादावभ्यासस्य गुणे रूपद्वयमिदम् । १०-वञ्चुधातोर्यङि 'अनिदितां...' इति नलोपे द्वित्वेऽभ्यासस्य नीगागमे रूपम् । दीर्घोऽकित इत्यत्राऽकित इत्युक्तेर्नाभ्यासदीर्घस्तदवयवस्य नुकः कित्वात् । एवं क्रमशः स्रंसु-ध्वंसु-भ्रंसु-कस-पत-पद-स्कन्दधातूनां **सनीस्रस्यते**-इत्यादीनि रूपाणि ॥ इति यङन्तप्रक्रिया ॥

पच्यते । चनीस्कद्यते ।

॥ इति यङन्तप्रक्रिया ॥

# अथ यङ्लुगन्तप्रक्रिया ॥ ४ ॥

**८७२ यङोऽचि च २ । ४ । ७४ ॥**

यङोऽचि प्रत्यये लुक् स्यात् । चकारात्तं विनापि क्वचित् । अनैमित्तिकोऽयमन्तरङ्गत्वादादौ भवति । ततः प्रत्ययलक्षणेन यङन्तत्वाद् द्वित्वम् । अभ्यासकार्यम् । धातुत्वाल्लडादयः । 'शेषात्कर्तरि परस्मैपदम्' । चर्करीतं चेत्यदादौ पाठाच्छपो लुक् ।

**८७३ यङो वा ७ । ३ । ९४ ॥**

यङन्तात्परस्य हलादेः पितः सार्वधातुकस्य ईड् वा स्यात् । भूसुवोरिति निषेधो यङ्लुकि भाषायां न । 'बोभूतु तेतिक्ते' इति छन्दसि निपातनात् ।

---

१—अचि—इति प्रत्ययग्रहणन्तु प्रत्याहारग्रहणं यङा साहचर्यात् 'सहचरिताऽसहचरितयोर्मध्ये सहचरितस्यैव ग्रहणम्' इति हि न्यायः । 'एच क्षत्रियार्षे' इत्यतो लुगित्यनुवर्त्तते । २—अच्प्रत्ययाभावेऽपीत्यर्थः । सूत्रे चकाराद् बहुलं छन्दसीति पूर्वसूत्राद् बहुलग्रहणमप्यनुकृष्यते, एवञ्चाऽच् प्रत्यये तदभावेऽपि च यङो बहुलं लुगिति फलितम् । अच्प्रत्यये यङ्लुक उदाहरणम् , लोलुवः पोपुवः, इति । अच्प्रत्ययाभावे च बोभवीतीत्यादि । ३—यङो ङित्वमाश्रित्याऽऽत्मनेपदन्तु न भवति ङित्वस्य प्रत्ययाऽप्रत्ययसाधारणत्वेन प्रत्ययलक्षणाऽप्रवृत्तेः । यत्र हि प्रत्ययस्यासाधारणं रूपमाश्रीयते तत्रैव प्रत्ययलक्षणमिति हि नियमः । ४—बोभू+ई ति, इति स्थिते—उकारस्य गुणेऽवादेशे **बोभवीति** इति रूपम् । तत्र 'भूसुवोस्तिङि' इति गुणनिषेधमाशङ्क्य समाधत्ते **बोभूतु तेतिक्ते** इति—वैदिकप्रक्रियायां छन्दसीत्यनुवर्त्तमाने 'दाधर्ति दर्धर्ति दर्धर्षि बोभूतु तेतिक्ते' इत्यादिसूत्रे भूधातोर्यङ्लुगन्तस्य गुणाभावो निपात्यते । तत्र भूसुवोरित्येव गुणनिषेधे सिद्धे पुनर्गुणाभावनिपातनं यङ्लुकि छन्दस्येवाऽयं गुणाभाव इति नियमात्—'लोके भूधातोर्यङ्लुकि भूसुवोरिति गुणनिषेधो न भवतीति ज्ञापयति, तेन भवति गुणः । किञ्चैतेन यङोऽचीति यङ्लुग्विधौ बहुलं छन्दसीत्यतः छन्दसीत्यनुवर्तयन्तः परे परास्ताः तेनैव निपातनेन लोकेऽपि यङ्लुग् भवतीति ज्ञापनात् ।

बोभवीति, बोभोति । बोभूतः । बोभुवति । बोभवीषि, बोभोषि । बोभूथः बोभूथ । बोभवीमि, बोभोमि । बोभूवः । बोभूमः । बोभवाञ्चकार, बोभवांबभूव, बोभवामास । बोभविता । बोभविष्यति । बोभवीतु, बोभोतु, बोभूतात् । बोभूताम् । बोभुवतु । बोभूहि । बोभवानि । अबोभवीत्, अबोभोत् । अबोभूताम् । अबोभवुः । बोभूयात् । बोभूयाताम् । बोभूयुः । बोभूयात् । बोभूयास्ताम् । गातिस्थेति सिचो लुक् । यङो वेतीट्पक्षे गुणं बाधित्वा नित्यत्वाद् वुक् । अबोभूवीत्, अबोभोत् । अबोभूताम् । अबोभूवुः । अबोभविष्यत् । जङ्गमीति, जङ्गन्ति । अनुदात्तेत्यनुनासिकलोपः । जङ्गतः । जङ्ग्मति । 'म्वोश्च' । जङ्गन्वः ।

शितपा शपानुबन्धेन निर्दिष्टं यद्गणेन च ।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥ १ ॥

इति वचनान्न इण्निषेधः । जङ्गमिता । अनुनासिकलोपस्याभीयत्वेनासिद्धत्वान्न हेर्लुक् । जङ्गहि । 'मो नो धातोः' । अजङ्गन्, अजङ्गमीत् । अनुबन्ध-

---

१—अदभ्यस्तादित्यत् । २—गम्धातोर्यङ्लुकि 'यङो वे' तीट्पक्षे 'नुगतोऽनुनासिकस्ये'ति नुगागमे नश्चेत्यनुस्वारः परसवर्णौ **जङ्गमीति** । ईडभावपक्षे—**जङ्गन्ति** । तसि—अनुनासिकलोपे **जङ्गतः** । झौ 'गमहने-त्युपधालोपो **जङ्ग्मति** । जङ्गसि, जङ्गमीषि । जङ्गथः । जङ्गथ । जगन्मि, जङ्गमीमि । जङ्गन्वः । जङ्गन्मः । ३—गमेरनिट्त्वात् 'प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणाद्' यङ्लुगन्तस्यापि 'एकाच उपदेशे...' इतीड्निषेधः स्यात् तथा च कथं जङ्गमितेतीत्यत आह—**शितपा शपे**ति । शितपा निर्दिष्टं यङ्लुकि न यथा—'हन्तेर्जः' इति शितपा निर्देशाज्जादेशो न 'जङ्घहि' इति । शपा निर्दिष्टं यङ्लुकि न यथा-'भवतेरः' इत्यादि । यच्चानुबन्धेन निर्दिष्टं तद् न यङ्लुकि यथा—'अजङ्गमीत्' इत्यत्र लृकारानुबन्धनिर्दिष्टत्वाच्च्लेरङ् न । गणनिर्दिष्टञ्च यङ्लुकि न यथा—'न वृद्भ्यश्चतुर्भ्यः' इतीण् निषेधो न । 'वर्वर्तिष्यति' । यत्रैकाज् ग्रहणं तदपि यङ्लुकि न यथा—जङ्गमितेत्यत्रैव 'एकाच उपदेशे' इतीण्निषेधो न, तेन सर्वेऽप्यनिट्का धातवो यङ्लुकि सेट्का भवन्ति । एतच्च 'एकाच उपदेशे' इत्यत्रैकाज्ग्रहणेनैकदेशानुमत्या ज्ञापितामिति । ४—लङि—अजङ्गम्+त् इति स्थिते हल्ङ्यादिना तलोपे 'मो नो' इति मस्य नत्वे—

निर्देशान्न च्लेरङ् । अजङ्गमीत् ।

**८७४ रुग्रिकौ च लुकि ७ । ४ । ९१ ॥**

ऋदुपधस्य धातोरभ्यासस्य रुक् रिक् रीक् एते स्युर्यङ्लुकि ॥

**८७५ ऋतश्च ७ । ४ । ९२ ॥**

ऋदन्तधातोरपि तथा । वर्वृतीति, वरिवृतीति, वरीवृतीति, वर्वर्ति, वरिवर्ति । वरीवर्ति । वर्वृतः ३ । वर्वृतति ३ । वर्वर्तामास ३ । वर्वर्तिता ३ । गणनिर्दिष्टत्वान्न वृद्भ्यश्चतुर्भ्य इति नेट् । वर्वर्तिष्यति ३ । अवर्वृतीत् ३ । अवर्वर्त् ३ । सिपि दश्चेति रुत्वपक्षे रोरि । अवर्वाः ३ । गणनिर्दिष्टत्वादङ् न । अवर्वर्तीत् ३ । चर्करीति, चरिकरीति, चरीकरीति । चर्कर्ति, चरिकर्ति, चरीकर्ति । चर्कृतः ३ । चर्कति ३ । चर्कराञ्चकार ३ । चर्करिता ३ । अचर्करीत् ३, अचर्कः ३ । चर्कृयात् ३ । आशिषि रिङ् । चर्क्रियात् ३ । अचर्कारीत् ३ । ऋतश्चेति तपरत्वान्नेह । चाकर्ति, चाकरीति । चाकीर्तः । चाकीर्हि । चाकराणि । अचाकरीत्, अचाकः । अचाकीर्ताम् । अचाकरुः ।

---

अजङ्गन् । इट्पक्षे–अजङ्गमीत् । तसादौ च अजङ्गताम् । अजङ्ग्मुः । अजङ्गन्, अजङ्गमीः । अजङ्गतम् । अजङ्गत । अजङ्गमम् । अजङ्गन्व । अजङ्गन्म ।

१–ह्म्यन्तेति वृद्धिनिषेधः । २–चकारेण 'रीगृदुपधस्य' इत्यतो रीगनुकृष्यते । ३–रुक उकार उच्चारणार्थो व्याख्यानात् । ४–वृतुधातोर्यङि लुकि द्वित्वादौ लटि तिपि–ईटि–अभ्यासस्य रुगागमे रूपम् । एवमग्रेऽपि । ५–वृतादिर्हि गणो गणनिर्दिष्टत्वाद् वर्वर्तिष्यतीत्यत्रेण्निषेधो नेत्यर्थः । ६–यङ्लुगन्तस्य वृतेर्लङि सिपि रूपमिदम् । ७–पुषादिद्युतादीति सूत्रे गणनिर्दिष्टत्वाद् वृतेश्च द्युतादित्वाच्च्लेरङ् नेत्यर्थः । ८–कृधातोर्यङ्लुकि लटस्तिपीट्पक्षे द्वित्वादावभ्यासस्य रुगागमे चर्करीति । ईडभावपक्षे चर्कर्ति झौ चर्कति 'अभ्यस्ताद्' इत्यद् यण् । ९–लङि–तिपि रुगागमे गुणे–ईडभावे–अचर्कर्त्, इत्यत्र हल्ङ्यादिलोपे रेफस्य विसर्गः अचर्कः । १०–सिचि वृद्धिरिति वृद्धिः । ११–कॄ विक्षेपे–इत्यस्माद् यङ्लुकि लटस्तिपीडभावे द्वित्वादावभ्यासदीर्घे चाकर्ति इति रूपम् । दीर्घत्वान्न रुगादयः । १२–तसः 'सार्वधातुकमपिद्' इति ङित्वाद् गुणाभावे–ऋत इत्वं रपरत्वं हलि चेति दीर्घः । झौ चाकिरति ।

अचाकारीत् । अचाकारिष्टाम् । तातरीति, तातर्तीत्यादि । इति यङ्लुगन्ताः ।

## अथ नामधातुप्रक्रिया ॥५॥

**८७६ सुप आत्मनः क्यच् ३ । १ । ८ ॥**

इषिकर्मण एषितुरात्मसम्बन्धिनः सुबन्तादिच्छायामर्थे क्यज्वा ।

**८७७ सुपो धातुप्रातिपदिकयोः २ । २ । ७१ ॥**

एतयोरवयवस्य सुपो लुक् स्यात् ॥

**८७८ क्यचि च ७ । ४ । ३३ ॥**

अवर्णस्य ईत्स्यात् । आत्मनः पुत्रमिच्छति पुत्रीयति । ( मान्तप्रकृतिकसुबन्तादव्ययाच्च क्यज्न ) किमिच्छति । इदमिच्छति । स्वरिच्छति ।

**८७९ अशनायोदन्य-धनाया बुभुक्षा-पिपासा-गर्द्धेषु ७ । ४ । ३४ ॥**

एते क्यजन्ता निपात्यन्ते । अशनायति । उदन्यति । धनायति । बुभुक्षादौ किम् । अशनीयति । उदकीयति । धनीयति ।

**८८० अश्व-क्षीर-वृष-लवणानामात्मप्रीतौ क्यचि ७।१।५१ ॥**

एषां क्यच्यसुक् । ( अश्ववृषयोर्मैथुनेच्छायाम् ) । अश्वस्यति बडवा । वृषस्यति गौः । ( क्षीरलवणयोर्लालसायाम् ) । क्षीरस्यति बालः । लवणस्यत्युष्ट्रः । ( सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ ) । दधिस्यति । दध्यस्यति ।

**८८१ नः क्ये १ । ४ । १५ ॥**

१–तॄ प्लवनसन्तरणयोरित्यस्य यङ्लुकि रूपाणि । सिद्धिः पूर्ववत् ।

॥ इति यङ्लुगन्तप्रक्रिया ॥

२–इच्छा कर्तुः । ३–पुत्र+अम्+य, 'सनाद्यन्ता धातवः' इति धातुत्वम्, (सुपो लुक्) लट्, तिप् शप्, पुत्र+य+अ+ति, अकारस्य (पुत्रशब्दस्थस्य) ईत्वम्, पररूपम् (यकारस्थाऽकारस्य 'अतो गुणे' इत्यनेन) । **पुत्रीयति** । पुत्रीयाञ्चकार, पुत्रीयिता । लुङि–अपुत्रीयीत् । ४–उदकशब्दस्य 'उदन्' भावोऽन्ययोर्दीर्घत्वञ्चापि निपात्यते । ५–अन्नं सङ्ग्रहीतुमिच्छतीत्यर्थः । उदकीयति=सस्यादिसेचनार्थमुदकमिच्छति । धनीयति=दरिद्रः सन् जीवनाय धनमिच्छति । ६–मैथुनार्थमश्वमिच्छतीत्यर्थः । एवं वृषस्यति । ७–**दधिस्यति**, क्यचि सुगागमे रूपमिदम्, असुगागमे **दध्यस्यति** ।

क्यचि क्यङि च नान्तमेव पदं नान्यत् । नलोपः[1] । राजीयति । नान्तमेवेति किम् । वाच्यति[2] । 'हलि च' । गीर्यति[3] । पूर्यति । धातोरित्येव । तेनेह न । दिवमिच्छति दिव्यति[4] ।

**८८२ क्यस्य विभाषा ६ । ४ । ५० ॥**

हलः परयोः क्यच्क्यङोर्लोपो वाऽऽर्धधातुके । 'आदेः परस्य'[5] । 'अतो लोपः' । तस्य[6] स्थानिवद्भावान्नोपधाया गुणः । समिधिता[7], समिध्यिता ।

**८८३ काम्यच्च ३ । १ । ९ ॥**

उक्तविषये काम्यच्[8] । पुत्रमात्मन इच्छति पुत्रकाम्यति । पुत्रकाम्यिता[9] ।

**८८४ उपमानादाचारे ३ । १ । १० ॥**

उपमानात्कर्मणः सुबन्तादाचारेऽर्थे क्यच् । पुत्रमिवाचरति पुत्रीयति छात्रम् । विष्णूयति[10] द्विजम् । (सर्वप्रातिपदिकेभ्यः क्विब्वा[11] वक्तव्यः) 'अतो गुणे' । कृष्ण इवाचरति कृष्णति । स्व इवाचरति स्वति । सस्वौ[12] ।

**८८५ अनुनासिकस्य क्विझलोः क्ङिति ६ । ४ । १५ ॥**

अनुनासिकान्तस्योपधाया दीर्घः क्वौ झलादौ क्ङिति च । इदमिवाचरति–इदामति । राजेवाचरति–राजानति । पन्था इवाचरति-पथीनति । मथीनति । इन्हन्निति नोपधादीर्घः ( इत्यपरे ) । पथेनति[13] । मथेनति ।

**८८६ कर्तुः क्यङ् सलोपश्च ३ । १ । ११ ॥**

---

१–'नलोपः प्रातिपदिकान्तस्य' इत्यनेन । २–अन्यथाऽत्र चोः कुरिति कुत्वं 'झलां जशोऽन्ते' इति जश्त्वं च स्यात् । ३–गिरमात्मन इच्छति पुरं आऽऽत्मन इच्छतीत्यर्थे क्यचि हलि चेत्युपधादीर्घे **गीर्यति । पूर्यति** । ४–नात्र दिव् धातुः किन्तु सुबन्तम् । तेन नात्र हलिचेति दीर्घः । ५–इति 'य्' मात्रस्य लोपः, ततोऽवशिष्टस्य 'अ' इत्यस्य 'अतो लोपः' इत्यनेन लोपः । ६–अलोपस्य । ७–क्यस्य विभाषेति लोपविकल्पे रूपद्वयमिदम् । ८–उच्चारणसामर्थ्यात्ककारस्य नेत्सञ्ज्ञा । ९–"यस्य हल" इत्यत्र यस्येति सङ्घातग्रहणमित्युक्तत्वाद् यलोपो न । १०–विष्णुमिवाचरति । अकृत्सार्वधातुकयोरिति दीर्घः । ११–अयं क्विप् आचारेऽर्थे, कर्त्तरि, उपमानवाचकाद् भवति । १२–णलि 'अचो ञ्णिति' इति वृद्धौ 'आत औ णलः' इति औत्वम् १३–अन्तरङ्गत्वाद्दीर्घस्ततो लघूपधत्वाऽभावान्न गुणः, **पथीनति** । **मथी-**

उपमानात्कर्तुः सुबन्तादाचारेऽर्थे क्यङ् वा सान्तस्य कर्तृवाचकस्य लोपो वा । क्यङ् वेत्युक्तेः पक्षे वाक्यम् । (संनियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः) इति क्यङ्सलोपयोः सहैव प्रवृत्तिः । लोपश्च व्यवस्थितः । (ओजसोऽप्सरसोर्नित्यमितरेषां विभाषया) । कृष्ण इवाचरति कृष्णायते । ओजायते । अप्सरायते । यशायते, यशस्यते । विद्वायते, विद्वस्यते । आचारेऽवगल्भ–क्लीब–होडेभ्यः क्विब्वा वक्तव्यः ) । वाग्रहणाद्वाक्यमपि । अवगल्भादयः पचाद्यजन्ताः । क्विप्सन्नियोगेनानुदात्तत्वमनुनासिकत्वं चाच्प्रत्ययस्य प्रतिज्ञायते । तेन तङ् । अवगल्भते । क्लीबते । होडते । भूतपूर्वादप्यनेकाच्त्वं आम् । एतद्वार्तिकारम्भसामर्थ्यात् । अवगल्भाञ्चक्रे । क्लीबाञ्चक्रे । होडाञ्चक्रे ।

नति । 'इन्हन्पूषार्यम्...' इत्यनेन शाविवोपधादीर्घ इति नियमाद्दीर्घोऽभावे गुणः, **पथनति मथनति** इत्यपरे ।

१–'धातोः कर्मणः' इत्यतो 'वा' इत्यनुवर्तते तदाह क्यङ् वेति । २–व्यवस्थितः=व्यवस्थां प्राप्तः । क्वचिदेव भवतीत्यर्थः, तदेवाह–**ओजस** इत्यादि । ओजस्–शब्दस्याप्सरस्–शब्दस्य च नित्यं सकारलोपः क्यङि, इतरेषां सान्तानां क्यङि वा सलोप इत्यर्थः । ३–ओजश्शब्दो यशश्शब्दश्च वृत्तिविषये तद्वति वर्तते । सलोपेऽकृत्सार्वधातुकेति दीर्घः । ओजस्वी वाऽऽचरतीति विग्रहः । यशश्शब्दात्क्यङि विकल्पेन सलोपे **यशायते, यशस्यते**=यशस्वी वाचरतीत्यर्थः । ४–विद्वानिवाचरतीत्यर्थे विद्वच्छब्दात्क्यङि सलोपविकल्पेऽकृत्सार्वधातुकेति दीर्घः, **विद्वायते, विद्वस्यते** । ५–गल्भ–अधार्ष्ट्ये, क्लीब-अधार्ष्ट्ये, होड़-अनादरे, एभ्यः पचाद्यचि अवगल्भादयः शब्दाः सिद्ध्यन्ति । अवगल्भ इवाचरति, क्लीब इवाचरति, होड इवाचरतीत्यर्थे क्विब् भवति (क्यङ् च) । क्विप् सन्नियोगेन चैषामन्त्यस्याऽकारस्याऽनुदात्तत्वमनुनासिकत्वञ्च प्रतिज्ञायत इत्युक्तम् । अनुदात्तत्वाच्चाऽऽत्मनेपदम् **अवगल्भते, क्लीबते, होडते** । ६–अन्त्याऽकारस्येत्वेन लुप्तत्वात् । क्विपि धातूनामेकाच्त्वेन कास्यनेकाच इत्यस्याऽप्रवृत्तेः, अवगल्भाञ्चक्रे, क्लीबाञ्चक्रे, होडाञ्चक्रे, –इत्यत्र कथमाम् (अवगल्भ इत्यत्र 'अव' इत्यस्य उपसर्गसमानाकारत्वेन पृथक्करणाभानेकाच्त्वम् ) तत्राह **भूतपूर्वादपि-एतद्वार्तिकेति** च । अयमर्थः–साम्प्रतिकाभावे भूतपूर्वगतिरिति न्यायेन क्विबुत्पत्तेः प्राक्तनमेवाने-

उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते । तेन गल्भ-शब्दात्प्रागट् । अवागल्भत । अवागल्भिष्ट ।

**८८७ लोहितादिडाज्भ्यः क्यष् ३ । १ । १३ ॥**

**८८८ वा क्यषः १ । ३ । ९० ॥**

क्यषन्तात्परस्मैपदं वा । अलोहितो लोहितो भवति-लोहितायति, लोहितायते । ननूच्चारणसामर्थ्यात्काम्यच इव क्यषोऽपि ककारः कुतो न श्रूयते, तस्य भाष्ये प्रत्याख्यानात् । पटपटायति, पटपटायते ।

---

काच्त्वमाश्रयणीयम् । अत्र प्रमाणमेतद्वार्तिकाऽऽरम्भ एव, सर्वप्रातिपदिकेभ्यः क्विब् वेति वक्ष्यमाणवार्तिकादेव अवगल्भते, अवजगल्भे, इत्यादिसिद्धौ पुनरेभ्यः क्विब् विधानं तत्सन्नियोगेनाऽन्त्यवर्णस्याऽनुदात्तत्वानुनासिकत्वप्रतिज्ञानार्थं सद् भूतपूर्वगत्याऽनेकाच्त्वाश्रयणं ज्ञापयतीति भावः । नच सर्वप्रातिपदिकेति वार्तिकेन क्विपि सति 'अवगल्भती'ति भवति । एतद्वार्तिकारम्भस्य चानुदात्तत्वप्रतिज्ञानेन 'अवगल्भते' इत्यादिसिद्धिः फलं तेन अवगल्भाञ्चक्रे-इति न स्यादिति वाच्यम्, अच्प्रत्ययरहितानां धातुपाठपठितानामनुदात्तेतामेव गल्भादिधातूनां (धातूनामनेकार्थत्वेन) अवगल्भ इवाचरतीत्याद्यर्थेषु वृत्तिसम्भवात्-अवगल्भते-इत्यादिसिद्धेः पुनः क्रियमाणमिदं वार्तिकम् (आचारे-अवगल्भ-इति) भूतपूर्वगत्याऽनेकाच्त्वाश्रयणं ज्ञापयत्येव ।

१-क्विबन्तादवगल्भ इत्यस्माल्लङि 'अव' इत्यतः पूर्वमाडागमे प्राप्ते-उत्तरमाह-**उपसर्गसमानाकार**मित्यादि । अयम्भावः-चुरादौ सङ्ग्रामयुद्ध इत्यत्रोपसर्गविशिष्टस्य धातुत्ववचनेनैतद् ज्ञाप्यते 'धातुसञ्ज्ञाप्रयोजके प्रत्यये=सन् णिच् क्विबादौ चिकीर्षिते=कर्त्तुमिष्टे सति उपसर्गसमानाकारं पूर्वपदं पृथक् क्रियते, इति तेन प्रकृते क्विपि चिकीर्षितेऽवेत्यस्य पृथक्करणं ततश्चाङ्गसञ्ज्ञा धातुसञ्ज्ञा च गल्भमात्रस्यैव तेन गल्भशब्दादेव प्राग् अट् । २-ननु उच्चारणसामर्थ्याद् यथा काम्यच् प्रत्ययस्य ककारो न लुप्यते तथा क्यषोऽपि ककारो न लुप्येत किन्तु श्रूयेत तत्राह-**तस्य भाष्ये**ति । तस्य=क्यषः ककारस्य भाष्ये प्रत्याख्यानात् यदि ककारश्रवणमिष्टमभविष्यत्तर्हि ककारं किमिति प्रत्याख्यास्यद्भाष्यकारः । ३-पटच्छब्दाद् डाचि 'डाचि विवक्षिते द्वे बहुल'मिति द्वित्वे 'नित्यमाम्रेडिते डाची'ति पूर्वतकारस्य पररूपे डित्वाट्टिलोपे च पटपटाशब्दाड् डाजन्तात्क्यषि रूपमिदम् । पटपटाभवतीति विग्रहः ।

**८८९ कष्टाय क्रमणे ३ । १ । १४ ॥**

चतुर्थ्यन्तात्कष्टशब्दादुत्साहेऽर्थे क्यङ् । कष्टाय क्रमते-कष्टायते । पापं कर्तुमुत्सहत इत्यर्थः । सत्त्र-कक्ष-कष्ट-कृच्छ्र-गहनेभ्यः कण्वचिकीर्षायाम् । कण्वं=पापं चिकीर्षति । सत्त्रायते । कक्षायते ।

**८९० कर्मणो रोमन्थ-तपोभ्यां वर्ति-चरोः ३ । १ । १५ ॥**

कर्मीभूताभ्यां रोमन्थतपोभ्यां क्रमेण वर्तनायां चरणे चार्थे क्यङ् स्यात् । रोमन्थं वर्तयति-रोमन्थायते । (हनुचलन इति वाच्यम्) चर्वितस्याकृष्य पुनश्चर्वणमित्यर्थः । नेह-कीटो रोमन्थं वर्तयति । (तपसः परस्मैपदं च) तपश्चरति-तपस्यति ।

**८९१ बाष्पोष्मभ्यामुद्वमने ३ । १ । १६ ॥**

बाष्पमुद्वमति-बाष्पायते । ऊष्मायते (फेनाच्चेति वक्तव्यम्) । फेनायते ।

**८९२ शब्द-वैर-कलहाभ्र-कण्व-मेघेभ्यः करणे ३ । १ । १७**

एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् । शब्दं करोति-शब्दायते । (सुदिन-दुर्दिननीहारेभ्यश्च) । सुदिनायते । दुर्दिनायते । नीहारायते । (प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च) । 'प्रातिपदिकाद्धात्वर्थे णिच् स्यात्' इष्ठे यथा प्रातिपदिकस्य पुंवद्भाव-रभाव-टिलोप-विन्मतुब्लोप-यणादिलोप-प्रस्थस्फाद्यादेश-

---

१-अत्र स्वरितत्वात्क्यङ एवानुवृत्तिर्नतु क्यषः । २-सत्त्रादयो वृत्तिविषये पापार्थास्तेभ्यो द्वितीयान्तेभ्यश्चिकीर्षायां क्यङित्यर्थः । पापञ्चिकीर्षतीत्यस्वपदविग्रहः । ३-रोमन्थशब्दस्यार्थद्वयं तत्र रोमन्थं वर्त्तयति रोमन्थायते इत्यत्र चर्वितचर्वणमर्थः । कीटो रोमन्थं वर्त्तयति-इत्यत्र तु-अपानप्रदेशान्निःसृतं द्रव्यं=रोमन्थः, तदश्नातीत्यर्थः । वर्त्तुलं करोतीति वा । ४-कर्मीभूतात्तपश्शब्दाच्चरणेऽर्थे क्यङ् परस्मैपदञ्चेत्यर्थः । ५-ऊष्माणमुद्वमति फेनमुद्वमति चेति विग्रहः । ६-करोतीत्यर्थे क्यङिति शेषः। सुदिनं करोतीति विग्रहः । ७-पुंवद् भावो यथा-पट्वीमाचष्टे पटयति । (भस्याऽढे तद्धिते, इत्यनेन) । रभावो यथा-दृढं करोति द्रढयति । टिलोपो यथा-पटुमाचष्टे पटयति । विनो लुग्-स्रग्विणम् आचष्टे स्रजयति। मतुपो लुग्यथा-श्रीमन्तं करोतीति श्राययति । यणादिपरलोपो यथा-स्थूलमाचष्टे स्थवयति, प्रादेशो यथा-प्रियमाचष्टे प्रापयति । स्थादेशो यथा-स्थिरं करोति स्थापयति स्फादेशो यथा-स्फिरमाचष्टे स्फापयति । भसञ्ज्ञा यथा-पट्वीमाचष्टे पटयति ।

भसंज्ञास्तद्गुणावपि स्युः। पटुमाचष्टे—पटयति। परत्वाद् वृद्धौ सत्यां टिलोपः। अपीपटत्। णौ चङ्युपधाया इत्यत्र भाष्ये तु वृद्धेर्लोपो बलीयानिति स्थितम्। अपपटत्।

**८९३ पुच्छ-भाण्ड-चीवराण्णिङ् ३। १। २०॥**

(पुच्छादुदसने व्यसने पर्यसने च)। विविधं विरुद्धं चोत्क्षेपणं=व्यसनम्। उत्पुच्छयते। परिपुच्छयते। (भाण्डात्समाचयने)। संभाण्डयते। समबभाण्डत)। (चीवरादर्जने परिधाने च)। संचीवरयते भिक्षुः।

**८९४ मुण्ड-मिश्र-श्लक्ष्ण-लवण-व्रत-वस्त्र-हल-कल-कृत-तूस्तेभ्यो णिच् ३। १। २१॥**

कृञर्थे। मुण्डं करोति—मुण्डयति। (व्रताद्भोजनतन्निवृत्त्योः) पयः शूद्रान्नं वा व्रतयति। (वस्त्रात्समाच्छादने)। संवस्त्रयति। (हल्यादिभ्यो ग्रहणे)। हलिकल्योरदन्तत्वं च निपात्यते। हलिं कलिं वा गृह्णाति—हलयति, कलयति। महद्धलं=हलिः। कृतं गृह्णाति—कृतयति। तूस्तानि विहन्ति वितूस्तयति। तूस्तं=केशा इत्येके। जटीभूताः केशा इत्यन्ये। पापमित्यपरे। (सत्यार्थवेदानामापुग्वक्तव्यः)। सत्यापयति। अर्थापयति। वेदापयति। पाशं विमुञ्चति—विपाशयति। रूपं पश्यति—रूपयति। वीणयोपगायति—उपवीणयति। तूलेनानुकुष्णाति—अनुतूलयति। तृणाग्रं तूलेनानुघट्टयतीत्यर्थः।

---

१—पटुशब्दाद् णिचि 'अचो ञ्णिति' इति वृद्धिरपि प्राप्ता—इष्ठवद्भावाद्टिलोपोऽपि तत्र परत्वाद् वृद्धौ सत्यां टेः=औकारस्य लोपः तेन नायमग्लोपी तस्माद्भवति सन्वद्भावो दीर्घश्च। (लुङि) **अपीपटत्**। २—भाष्ये तु वृद्धेर्लोपो बलीयानित्युक्तत्वाद् णौ वृद्धिं बाधित्वा टेः=उकारस्यैव लोपस्तेनायं भवत्यग्लोपी—अतो न सन्वद्भावदीर्घौ, **अपपटत्**। ३-समाचयनम्=राशीकरणम्। ४—पयो व्रतयति=अश्नातीत्यर्थः। शूद्रान्नं व्रतयति=वर्जयतीत्यर्थः ५—वस्त्रेण सम्यगाच्छादयतीत्यर्थः। ६—हलिकल्योरदन्तत्वनिपातनाद् वृद्धेः पूर्वं पश्चाद्वा टिलोपे (अ—लोपे-आलोपे वा) अगेव लुप्यत इति—अग्लोपित्वान्न सन्वद्भावदीर्घौ—**अजहलत्**। **अचकलत्**। ७-उपकारं स्वीकरोतीत्यर्थः, कृतज्ञो भवतीति भावः। ८—अर्थं करोत्याचष्टे वेत्यर्थः। ९—वेदं करोत्याचष्टे वा। १०—पाशं विमुञ्चतीत्यादौ 'प्रातिपदिकाद् धात्वर्थे' इति णिच्।

श्लोकैरुपस्तौति-उपश्लोकयति । सेनयाभियाति-अभिषेणयति । लोमान्यनुमार्ष्टि-अनुलोमयति । त्वच संवरणे । पचाद्यच् । त्वचं गृह्णाति-त्वचयति । वर्मणा संनह्यति-संवर्मयति । वर्णं गृह्णाति-वर्णयति । चूर्णैरवध्वंसते-अवचूर्णयति । इति नामधातुप्रक्रिया ॥

## अथ कण्ड्वादिः ।

**८९५ कण्ड्वादिभ्यो यक् ३ । १ । २७ ॥**

*एभ्यो धातुभ्यो नित्यं यक् स्यात् स्वार्थे ॥* **कण्डूञ् गात्रविघर्षणे ।** कण्डूयति, कण्डूयते । इत्यादि ।

# अथात्मनेपदप्रक्रिया ।

**८९६ कर्तरि कर्मव्यतिहारे १ । ३ । १४ ॥**

क्रियाविनिमये द्योत्ये कर्तर्यात्मनेपदं स्यात् । व्यतिलुनीते=अन्यस्य योग्यं लवनं करोतीत्यर्थः ।

**८९७ न गतिहिंसार्थेभ्यः १ । ३ । १५ ॥**

व्यतिगच्छन्ति । व्यतिघ्नन्ति । (हरतेरप्रतिषेधः) । संप्रहरन्ते राजानः ।

**८९८ इतरेतरान्योन्योपपदाच्च १ । ३ । १६ ॥**

( परस्परोपपदाच्चेति वक्तव्यम् ) । इतरेतरस्यान्योन्यस्य परस्परस्य वा व्यतिलुनन्ति ॥

१-उपसर्गात्सुनोतीति षः ॥ इति नामधातुप्रक्रिया ॥

२-धातुग्रहणं प्रातिपदिकनिवृत्त्यर्थम्-द्विविधा हि कण्ड्वादयो धातवः प्रातिपदिकानि च तत्र धातुभ्य एव स्यादित्यर्थः । यकः कित्वेन धातवः (कण्ड्वादयः) इति ज्ञायते । कण्डूञ् इति दीर्घपाठेन प्रातिपदिकान्यपीति, यदि तु धातव एव स्युस्तर्हि ह्रस्वान्ते पठितेऽपि यकि परे 'अकृत्सार्वधातुकयोः' इति दीर्घेण 'कण्डूयते' इति सिद्धः किं दीर्घपाठेन । ३-ञित्वादुभयपदी । ४-वि-अति-लूञ् धातुः । ५-गत्यर्थेभ्यो हिंसार्थेभ्यश्च धातुभ्यः कर्मव्यतिहारे पूर्वसूत्रप्राप्तमात्मनेपदन्न स्यादित्यर्थः । ६-हृञ् धातोरुपसर्गबलाद् हिंसार्थत्वेन 'न गतिहिंसार्थेभ्य' इत्यात्मनेपदनिषेधे प्राप्ते निषेधाभावसूचकमिदं वार्तिकम् । ७-इतरेतरमन्योन्यं परस्परमित्येतत्त्रितयोपपदात् कर्मव्यतिहारे पूर्वसूत्रप्राप्तमात्मनेपदं नेति सूत्रवार्तिकयोरर्थः ।

**८९९ नेर्विशः १ । ३ । १७ ॥**

निविशते ।

**९०० परिव्यवेभ्यः क्रियः १ । ३ । १८ ॥**

परिक्रीणीते । विक्रीणीते । अवक्रीणीते ।

**९०१ विपराभ्यां जेः १ । ३ । १९ ॥**

विजयते । पराजयते ।

**९०२ क्रीडोऽनु-सं-परिभ्यश्च १ । ३ । २१ ॥**

चादाङः । अनुक्रीडते । संक्रीडते । आक्रीडते । (समोऽकूजने)। संक्रीडते । कूजने तु संक्रीडति चक्रम् । (आगमेः क्षमायाम्) । एयन्तस्येदं ग्रहणम् । आगमयस्व तावत्=मा त्वरिष्ठा इत्यर्थः । शिक्षेर्जिज्ञासायाम् । धनुषि शिक्षते=धनुर्विषयज्ञाने शक्तो भवितुमिच्छतीत्यर्थः ।

**९०३ वृत्ति-सर्ग-तायनेषु क्रमः १ । ३ । ३८ ॥**

वृत्तिरप्रतिबन्धः । ऋचि क्रमते बुद्धिः । सर्ग=उत्साहः । अध्ययनाय क्रमते । तायनं=वृद्धिः क्रमन्तेऽस्मिञ्छास्त्राणि=स्फीतानि भवन्तीत्यर्थः ।

**९०४ आङ उद्गमने १ । ३ । ४० ॥**

आक्रमते सूर्यः । ज्योतिरुद्गमन इति वाच्यम् । नेह—आक्रामति धूमो हर्म्यतलात् ।

**९०५ वेः पादविहरणे १ । ३ । ४१ ॥**

साधु विक्रमते वाजी ।

**९०६ प्रोपाभ्यां समर्थाभ्याम् १ । ३ । ४२ ॥**

१—परि—वि—अव—इत्येतदुपसर्गपूर्वस्य क्रीणातेरात्मनेपदमित्यर्थः । २—क्षमायाम्=सहने, तितिक्षायामिति यावत् । ३—शकेः सन्नन्तस्य शिक्षेत्यनेन ग्रहणं, नतु शिक्ष विद्योपादाने इत्यस्य । सनि मीमेतीस् अभ्यासलोपः शिक्षते । ४—आङ्पूर्वकात् क्रमतेरुद्गमनेऽर्थे—आत्मनेपदमित्यर्थः । ५—ज्योतिरुद्गमने इत्युक्त्वात्रेहाऽऽत्मनेपदम्, नहि धूमो ज्योतिः । ६—विपूर्वकात्क्रमतेः पादविहरणे वर्तमानादात्मनेपदमित्यर्थः । ७—समोऽर्थो ययोस्तौ समर्थौ (शकन्ध्वादित्वात्पररूपम्) तुल्यार्थावित्यर्थः । प्रारम्भेऽनयोस्तुल्यार्थता तेन प्रारम्भार्थाभ्यां प्रोपाभ्यां क्रमतेरात्मनेपदमित्यर्थः ।

प्रारम्भेऽनयोस्तुल्यार्थता । प्रक्रमते । उपक्रमते । समर्थाभ्यां किम् ? प्रक्रामति=गच्छतीत्यर्थः । उपक्रामति=आगच्छतीत्यर्थः ।

**६०७ अनुपसर्गाद्वा १ । ३ । ४३ ॥**

क्रामति । क्रमते ।

**६०८ अपह्नवे[1] ज्ञः १ । ३ । ४४ ॥**

शतमपजानीते=अपलपतीत्यर्थः ।

**६०९ अकर्मकाच्च १ । ३ । ४५ ॥**

सर्पिषो जानीते=सर्पिषोपायेन प्रवर्तत इत्यर्थः ।

**६१० समवप्रविभ्यः स्थः[2] १ । ३ २२ ॥**

संतिष्ठते[3] । अवतिष्ठते । प्रतिष्ठते[4] । वितिष्ठते । (आङः प्रतिज्ञायामुपसंख्यानम् ) । शब्दं नित्यमातिष्ठते[5] ।

**६११ प्रकाशन-स्थेयाख्ययोश्च[6] ३ । ४ । २३ ॥**

गोपी कृष्णाय तिष्ठते=आशयं प्रकाशयतीत्यर्थः । 'संशय्य कर्णादिषु तिष्ठते यः'=कर्णादीन्निर्णेतृत्वेनाश्रयतीत्यर्थः ।

**६१२ उदोऽनूर्ध्वकर्मणि १ । ३ । २४ ॥**

मुक्तावुत्तिष्ठते[7] । अनूर्ध्वेति किम् ? पीठादुत्तिष्ठति ।

**६१३ उपान्मन्त्रकरणे १ । ३ । २४ ॥**

आग्नेय्याग्नीध्रमुपतिष्ठते । मन्त्रकरणे किम् ? भर्तारमुपतिष्ठति यौवनेन। (उपाद्देवपूजा-संगतिकरण-मित्रकरण-पथिष्विति वाच्यम् ) । आदित्यमुपतिष्ठते[8] । गङ्गा यमुनामुपतिष्ठते[9] । रथिकानुपतिष्ठते=मित्रीकरोतीत्यर्थः ।

---

१-अपन्हवे=अपलापे गोपने इति यावत् । २-स्थः=तिष्ठतेः, सम्-अव-प्र-वि-इत्येतदुपसर्गपूर्वकादात्मनेपदमित्यर्थः । ३-सन्तिष्ठते=समाप्तो भवतीत्यर्थः । लिडादौ-सन्तस्थे । संस्थाता । संस्थास्यते । सन्तिष्ठताम् । समतिष्ठत । सन्तिष्ठेत । संस्थासीष्ट । समस्थित (स्थाघ्वोरिच्च ह्रस्वादङ्गादिति सिचो लुक्) समस्थास्यत । इति रूपाणि । ४-प्रतिष्ठते=गच्छतीत्यर्थः । ५-नित्यत्वेन प्रतिजानीते इत्यर्थः । ६-प्रकाशनम्=स्वाभिप्रायाविष्करणम् । स्थेयाख्या=विवादनिर्णेतुरभिधानम् । प्रकाशनाख्यायां स्थेयाख्यायाञ्च वर्तमानात्स्थाधातोरात्मनेपदमित्यर्थः । ७-गुरूपगमनादिना यतते इत्यर्थः । ८-स्तुत्यादिभिः पूजयतीत्यर्थः । ९-उपश्लिष्यतीत्यर्थः ।

पन्थाः स्रुघ्नमुपतिष्ठते=प्राप्नोतीत्यर्थः । (वा लिप्सायाम्) । भिक्षुकः प्रभुमुपतिष्ठति, उपतिष्ठते वा ।

**६१४ उद्विभ्यां तपः १ । ३ । २७ ॥**

अकर्मकादित्येव । उत्तपते, वितपते=दीप्यते इत्यर्थः । स्वाङ्गकर्मकाच्चेति वक्तव्यम्[1] । उत्तपते वितपते पाणिम् । नेह–सुवर्णमुत्तपति ।

**६१५ आङो यमहनः[2] १ । ३ । २८ ॥**

आयच्छते । आहते । अकर्मकात्स्वाङ्गकर्मकादित्येव । नेह–परस्य शिर आहन्ति ।

**६१६ आत्मनेपदेष्वन्यतरस्याम् २ । ४ । ४४ ॥**

हनो वधादेशो वा लुङि । आवधिष्ट, आवधिषाताम्, आवधिषत ।

**६१७ हनः सिच् १ । २ । १४ ॥**

कित् । अनुनासिकलोपः[3] । आहत, आहसाताम् , आहसत ।

**६१८ यमो गन्धने १ । २ । १५ ॥**

सिच् कित् । गन्धनं=सूचनं–परदोषाविष्करणम् । उदायत[4] । गन्धने किम् ? उदायंस्त पादम्=आकृष्टवानित्यर्थः ।

**६१९ समो गम्यृच्छिभ्याम् १ । ३ । २९ ॥**

अकर्मकाभ्यामित्येव । संगच्छते ।

**६२० वा गमः १ । २ । १३ ॥**

गमः परौ झलादी लिङ्सिचौ वा कितौ स्तः[5] । संगसीष्ट, संगंसीष्ट । समगत[6], समगंस्त । समृच्छते । अकर्मकाभ्यां किम् ? ग्रामं संगच्छति । (विदि–

१–चकारेणाऽकर्मकस्यापि सङ्ग्रहः । २–आङ्पूर्वकाद् यम्धातोर्हन्तेश्चात्मनेपदमित्यर्थः । ३–अनुदात्तोपदेशवनतीत्यादिना । ४–उदाङ्पूर्वकाद् यम आत्मनेपदे लुङि गन्धनार्थे सिचः कित्वेऽनुनासिकलोपे ह्रस्वादङ्गादिति सिचो लोपे 'उदायत' इति रूपम् । गन्धनभिन्नेऽर्थे तु कित्वाभावेनानुनासिकलोपाभावे ह्रस्वात्परत्वाभावान्न सिचो लुक् । ५–सञ्ज्ञतो भवतीत्यर्थः । ६–तेन सङ्गसीष्टेत्यत्र विकल्पेनानुनासिकलोपः । ७–'वा गमः' इति सिचः कित्वेनानुनासिकलोपे ह्रस्वादङ्गादिति सिचा लोपः । कित्वाभावे–**समगंस्त** ।

प्रच्छि-स्वरतीनामुपसंख्यानम् ) । वेत्तेरेवं ग्रहणम् । संवित्ते । संविदाते ।

**६२१ वेत्तेर्विभाषा ७ । १ । ७ ॥**

वेत्तेः परस्य झादेशस्यातो रुडागमो वा । संविद्रते, संविदते । संपृच्छते । संस्वरते । अथास्मिन्नकर्मकाधिकारे हनिगम्यादीनां कथमकर्मकतेति चेत्, शृणु ।

धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् ।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥ १ ॥

वहति भारम् । नदी वहति=स्यन्दत इत्यर्थः । जीवति । नृत्यति । प्रसिद्धेर्यथा-मेघो वर्षति । कर्मणोऽविवक्षातो यथा—'हितान्न यः संशृणुते स किंप्रभुः' ।

**६२२ संमाननोत्सञ्जनाचार्यकरण-ज्ञान-भृति-विगणन-व्ययेषु नियः १ । ३ । ३६ ॥**

शास्त्रे नयते । दण्डमुन्नयते=उत्क्षिपतीत्यर्थः ।

---

१-परस्मैपदसाहचर्यात् । २-आङो यमहन इत्यादौ अकर्मकादित्यनुवर्त्तते तत्रायं प्रश्नः-प्रायः सकर्मतया प्रयुज्यमानानां हनिगम्यादीनां कथमकर्मतेति । तत्रोत्तरमुच्यते **धातोरर्थान्तरे** इत्यादि, धातोरर्थान्तरे=धातुपाठपठितादर्थादन्यत्रार्थे वृत्तेः=वर्तनात् क्रियाऽकर्मिका भवति यथा-प्रापणार्थस्य वह्धातोः 'भारं वहती' त्यादौ सकर्मकत्वेऽपि स्यन्दनरूपार्थान्तरप्रयोगे 'नदी वहतीत्यादौ' अकर्मकता । तथा धात्वर्थेनोपसङ्ग्रहात् क्रियाऽकर्मिका भवति, -अर्थात्-यस्य धातोः कर्म धात्वर्थान्तरगतं स्यात्तस्याप्यकर्मकत्वमिति यथा-जीवति=प्राणान् धारयति, नृत्यति=गात्रं विक्षिपति । एवं कर्मणः प्रसिद्धेः क्रिया अकर्मिका भवति यथा 'मेघो वर्षति' अत्र वर्षकर्मणो जलस्य प्रसिद्धत्वं । तथा कर्मणोऽविवक्षातोऽपि क्रियाऽकर्मिका भवति यथा-'हितान्न यः संशृणुते स किंप्रभुः' (हितात् पुरुषाद् यो न संशृणुते (स्वहितं) स किंप्रभुः=कुत्सितः प्रभुरित्यर्थः ), अत्र स्वहितस्य वस्तुतः कर्मत्वेऽपि तस्याविवक्षयाऽकर्मकत्वमिति भावः । एवञ्चास्मिन्नकर्मकाधिकारे सतोऽपि कर्मणोऽविवक्षयाऽकर्मकत्वं सिद्धमिति बोध्यम् । ३-उत्सञ्जनम्=उत्क्षेपणम् । ४-शास्त्रस्थ सिद्धान्तं शिष्येभ्यः प्रापयतीत्यर्थस्तेन शिष्यसम्माननं फलितम् ।

माणवकमुपनयते । तत्त्वं नयते । कर्मकरानुपनयते । करं विनयते=राज्ञे देयं भागं परिशोधयतीत्यर्थः । शतं विनयते=धर्मार्थं विनियुङ्क्ते इत्यर्थः । (उपसर्गादस्यत्यूह्योर्वेति वाच्यम्) बन्धान्निरस्यति, निरस्यते। समूहति, समूहते।

९२३ उपसर्गाद्ध्रस्व ऊहतेः ७ । ४ । २३ ॥

यादौ किति । ब्रह्म समुह्यात् । अग्निं समुह्य ।

९२४ निसमुपविभ्यो ह्वः १ । ३ । ३० ॥

निह्वयते ।

९२५ स्पर्धायामाङः १ । ३ । ३१ ॥

कृष्णश्चाणूरमाह्वयते । स्पर्धायां किम् ? पुत्रमाह्वयति ।

९२६ उदश्चरः सकर्मकात् १ । ३ । ५३ ॥

धर्ममुच्चरते=उल्लङ्घ्य गच्छतीत्यर्थः ।

९२७ समस्तृतीयायुक्तात् १ । ३ । ५४ ॥

रथेन संचरते ।

९२८ दाणश्च सा चेच्चतुर्थ्यर्थे १ । ३ । ५५ ॥

समो दाणस्तृतीयान्तेन युक्तादुक्तं स्यात्तृतीया चेच्चतुर्थ्यर्थे । दास्या संयच्छते कामी ।

९२९ उपाद्यमः स्वकरणे १ । ३ । ५६ ॥

स्वकरणं=स्वीकारः । भार्यामुपयच्छते ।

९३० विभाषोपयमने १ । २ । १६ ॥

यमः सिच् किद्वा विवाहेऽर्थे । रामः सीतामुपायत, उपायंस्त वा=उदवोढेत्यर्थः ।

१–विधिनाऽऽत्मसमीपं प्रापयतीत्यर्थः । उपनयनपूर्वकेणाध्यापनेनोपनेतर्य्याचार्य्यत्वं क्रियते । २–निश्चिनोतीत्यर्थः । ३–भृतिदानेन स्वसमीपं प्रापयतीत्यर्थः । ४–विगणनोदाहरणमिदम् । विगणनम्=ऋणादेः परिशोधनम् । ५–संपूर्वकात् चरधातोः तृतीयान्तेन योगे आत्मनेपदमित्यर्थः । ६–आत्मनेपदम् । ७–'अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया' दास्यै–इत्यर्थः । ८–पाघ्राध्मेति दाणो 'यच्छ' आदेशः । ९–सिचः कित्वादनुनासिकलोपे ह्रस्वादङ्गादिति सिचो लोपः । कित्वाभावपक्षे–'उपायंस्त' ।

**६३१ ज्ञा-श्रु-स्मृ-दृशां सनः १ । ३ । ५७ ॥**

सन्नन्तानामेषां प्राग्वत्। धर्मं जिज्ञासते । शुश्रूषते। सुस्मूर्षते। दिदृक्षते।

**६३२ नाऽनोर्ज्ञः १ । ३ । ५८ ॥**

*पुत्रमनुजिज्ञासति ।*

**६३३ प्रोपाभ्यां युजेरयज्ञपात्रेषु १ । ३ । ६४ ॥**

प्रयुङ्क्ते । उपयुङ्क्ते । ( स्वराद्यन्तोपसर्गादिति वाच्यम् ) । उद्युङ्क्ते । नियुङ्क्ते । अयज्ञपात्रेषु किम् ? द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति ।

**६३४ समः क्ष्णुवः १ । ३ । ६५ ॥**

संक्ष्णुते शस्त्रम् ।

**६३५ गन्धनावक्षेपण-सेवन-साहसिक्य-प्रतियत्न-प्रकथनोपयोगेषु कृञः १ । ३ । ३२ ॥**

गन्धनं=हिंसा । उत्कुरुते=सूचयतीत्यर्थः । अवक्षेपणं=भर्त्सनम् । श्येनो वर्तिकामुदाकुरुते=भर्त्सयत इत्यर्थः । हरिमुपकुरुते=सेवते । परदारान्प्रकुरुते=तेषु सहसा प्रवर्तते । एधोदकस्योपस्कुरुते=गुणमाधत्ते । कथाः प्रकुरुते=प्रकथयतीत्यर्थः । शतं प्रकुरुते=धर्मार्थं विनियुङ्क्ते । एषु किम्-कटं करोति ।

॥ इत्यात्मनेपदप्रक्रिया ॥

# अथ परस्मैपदप्रक्रिया ॥७॥

'शेषात्कर्तरि परस्मैपदम्' । श्वि-श्वयति ।

---

१-आत्मनेपदमित्यर्थः । 'पूर्ववत्सनः' इत्यस्यापवादोऽयम् । २-अनुपूर्वकाज् ज्ञाधातोः सन्नन्तान्नात्मनेपदमित्यर्थः । ३-प्रोपाभ्यां परस्य युजेरयज्ञपात्रविषयादात्मनेपदमित्यर्थः । ४-स्वरौ=अचौ, आद्यन्तौ यस्य स स्वराद्यन्तः । एवम्भूतोपसर्गात्परत्व एव युजेरात्मनेपदमित्यर्थः । ५-एधोदकस्योपस्कुरुते=एधश्च दकं चेति समाहारद्वन्द्वः, एधः=इन्धनम्, दकं=जलम्, एधोदकम् उपस्कुरुते=( 'उपात् प्रतियत्ने' इति सुट् 'कृञः प्रतियत्ने' इति षष्ठी ) गुणमाधत्ते इत्यर्थः । एधस्य=काष्ठस्य शोषणादि गुणाधानम् । दकस्य=जलस्य तु गन्धद्रव्यसंपर्कजनितगन्धाधानम् । इत्यात्मनेपदप्रक्रिया ॥

६-उक्तादन्यः शेषः । आत्मनेपदनिमित्तमुक्तं तद्भिन्नो विषयः शेषः, तथैवोक्तमेतत्सूत्रवृत्तौ आत्मनेपदनिमित्तहीनाद् धातोः कर्तरि परस्मैपदमिति ।

**६३६ विभाषा श्वेः ६ । १ । ३० ॥**

संप्रसारणं वा लिटि यङि च । शुशाव । शुशुवतुः । (श्वयतेर्लिट्य-भ्यासलक्षणप्रतिषेधः) । शिश्वाय । शिश्वियतुः । शिश्वियुः । शूयात् । जॄस्तम्भ्वित्यङ् वा ।

**६३७ श्वयतेरः ७ । ४ । १८ ॥**

अङि । अश्वत् । अश्वः । विभाषेति चङ् । अशिश्वियत् । अश्वयीत् ।

**६३८ अनुपराभ्यां कृञः १ । ३ । ७६ ॥**

कर्तृगेऽपि फले गन्धनादौ च परस्मैपदं स्यात् । अनुकरोति । पराकरोति ।

**६३६ अभिप्रत्यतिभ्यः क्षिपः १ । ३ । ८० ॥**

क्षिप प्रेरणे । स्वरितेत् । अभिक्षिपति ।

**६४० प्राद्वहः १ । ३ । ८१ ॥**

प्रवहति ।

**६४१ परेर्मृषः १ । ३ । ८२ ॥**

परिमृष्यति ।

**६४२ व्याङ्परिभ्यो रमः १ । ३ । ८३ ॥**

विरमति । आरमति ।

**६४३ उपाच्च १ । ३ । ८४ ॥**

यज्ञदत्तमुपरमति, उपरमयतीत्यर्थः । अन्तर्भावितण्यर्थोऽयम् ।

---

१–णलि विभाषा श्वेरिति सूत्रकृतसम्प्रसारणाभावपक्षे 'श्वि' इत्यस्य द्वित्वे'लिट्यभ्यासस्ये' त्याभ्यासस्य सम्प्रसारणे 'शुश्वाय' इति रूपं स्यात्तत्राह –**श्वयतेर्लिटी**त्यादि । 'लिट्यभ्यासम्प्रसारणस्य प्रतिषेधो वक्तव्य इत्यर्थः तथा च श्वीत्यस्याऽभ्यासम्प्रसारणाऽभावादभ्यास इकार एव श्रूयते 'शिश्वाय' इति । २–क्षिपधातुर्हि स्वरितेत्त्वादुभयपदी, ततश्च कर्तृगामिनि क्रियाफले आत्मनेपदे प्राप्ते तत्रापि परस्मैपदविधानार्थमिदं सूत्रम् । अभिप्रत्यतिभ्य उपसर्गेभ्यः परस्य क्षिपः परस्मैपदमेवेति सूत्रार्थः । ३–विरमति=विरतो भवतीत्यर्थः । लुङि–व्यरंसीत्, व्यरंसिष्टाम्, इत्यादि । 'यमरमेति' इट्-सकौ । ४–अण्यन्तत्वेऽपि धातूनामनेकार्थत्वादत्र णिजर्थोऽन्तर्भूतो बोध्यः, णिजर्थश्च=प्रेरणा ।

**६४४ विभाषाऽकर्मकात् १ । ३ । ८५ ॥**

उपाद्रमेः परस्मैपदं वा स्यात् । उपरमति । उपरमते, निवर्तत इत्यर्थः ।

**६४५ बुध-युध-नश-जनेङ्-प्रु-द्रु-स्रुभ्यो णेः १ । ३ । ८६ ॥**

एभ्यो ण्यन्तेभ्यः परस्मैपदं स्यात् । णिचश्चेत्यस्यापवादः । बोधयति पद्मम् । योधयति काष्ठानि । नाशयति दुःखम् । जनयति सुखम् । प्रावयति, प्रापयतीत्यर्थः । द्रावयति । स्रावयति ।

**६४६ क्रीङ्जीनां णौ ६ । १ । ४८ ॥**

आत्वं स्यात् । अध्यापयति[1] ।

**६४७ णौ च संश्चङोः २ । ४ । ५१ ॥**

सन्परे चङ्परे च णौ इङो गाङ् वा । अध्यजीगपत् । अध्यापिपत् । क्रापयति । जापयति ।

**६४८ निगरणचलनार्थेभ्यश्च[2] १ । ३ । ८७ ॥**

निगारयति । चलयति । ( अदेः[3] प्रतिषेधः ) । आदयते देवदत्तेन ।

**६४९ अणावकर्मकाच्चित्तवत्कर्तृकात्[4] १ । ३ । ८८ ॥**

ण्यन्तात्परस्मैपदम् । शेते कृष्णस्तं गोपी शाययति ।

**६५० न पा-दम्याङ्यमाङ्यस-परिमुह-रुचि-नृति-वद-वसः[5] १ । ३ । ८९ ॥**

एभ्यो ण्यन्तेभ्यः परस्मैपदं न । पाययते । दमयते । आयामयते । आयासयते । परिमोहयते । रोचयते । नर्तयते । वादयते । वासयते । ( धेट उप-

१-'इङ् अध्ययने' इत्यस्मात् णिचि क्रीङ्जीनामित्यात्वे पुकि च सत्यधिपूर्वत्वे-**अध्यापयति** । २-निगरणं=भक्षणम्,-चलनं=कम्पनम्,- इत्येतदर्थकेभ्यो ण्यन्तेभ्यः परस्मैपदमित्यर्थः । णिचश्चेत्यस्यापवादः । ३- निगरणार्थत्वेन प्राप्तं निषिद्ध्यते । अदेर्ण्यन्तात्परस्मैपदस्य प्रतिषेधो वक्तव्य इत्यर्थः । **आदयते** देवदत्तेन, 'आदिखाद्योर्न' इति कर्मत्वनिषेधात्तृतीया । ४-अणौ यो धातुरकर्मकश्चित्तवत्कर्तृकश्च तस्मात् ण्यन्तात्परस्मैपद मित्यर्थः । ५-पिबतिर्निगरणार्थः, इतरे च चित्तवत्कर्तृका अकर्मकाः, नृतिश्चलनार्थोऽपि, तेनैतेषु सूत्रद्वयेन प्राप्तस्य परस्मैपदस्यैतेन निषेधः ।

संख्यानम्)। धापयते। अकर्त्रभिप्राये शेषादिति परस्मैपदं स्यादेव। वत्सान्पाययति पयः।

॥ इति परस्मैपदप्रक्रिया। समाप्ता पदव्यवस्था ॥

# अथ भावकर्मप्रक्रिया ॥८॥

**६५१ भावकर्मणोः १। ३। १३॥**

लस्य तङानौ स्तः

**६५२ सार्वधातुके यक् १। ३। ६७॥**

भावकर्मवाचिनि सार्वधातुके धातोर्यक् स्यात्। भावः क्रिया। सा च भावार्थकलकारेणानूद्यते। युष्मदस्मद्भ्यां सामानाधिकरण्याभावात्प्रथमः पुरुषः। तिङ्वाच्यक्रियाया अद्रव्यरूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादिकम्, किन्तु एकवचनमेवोत्सर्गतः। त्वया मया अन्यैश्च भूयते। बभूवे।

---

१—'अनन्तरस्य विधिर्वा प्रतिषेधो वा' इति न्यायेन पूर्वसूत्रद्वयप्राप्तस्यैव परस्मैपदस्यायं निषेधो नतु शेषात्कर्तरीति प्राप्तस्यापीति भावः। तेन 'दमयन्ती कमनीयतामदम्, इत्यादि सिद्धम्। इति परस्मैपदप्रक्रिया॥

२—भावे कर्मणि यो लकारस्तस्यात्मनेपदमित्यर्थः। 'लः कर्मणी'ति सूत्रे सकर्मकेभ्यो धातुभ्यः कर्मणि कर्त्तरि च, अकर्मकेभ्यस्तु भावे कर्त्तरि च लकारा विहितास्तेषु कर्त्तरि लकारा निरूपिता (दशगण्याम्) अथेदानीं भावकर्मणोर्लकारा निरूप्यन्ते। ३—भावशब्देन प्रकृते क्रिया गृह्यते इत्यर्थः। क्रिया च धात्वर्थमात्रम्। यद्यपि धातुत्वेन सकलधातुवाच्यैव सा (क्रिया) भावार्थकलकारेण तु तस्या अनुवाद एव। ४—युष्मत्समानाधिकरणे मध्यमः, अस्मत्समानाधिकरणे चोत्तमः पुरुषो विहितः, भावे लकारे च 'आस्यते त्वया' इत्यादौ तिङ्वाच्येन भावेन युष्मदस्मदोः सामानाधिकरण्याभावात् न मध्यमो न चोत्तमः किन्तु परिशेषात्प्रथमः पुरुषः। ५—अत्र तिङ्वाच्यो भावः=क्रिया तस्य च लिङ्गसङ्ख्याद्यन्वयाऽयोग्यत्वाद् अद्रव्यरूपत्वेन द्वित्वादिसङ्ख्याद्यप्रतीतेर्न द्विवचनं बहुवचनं वा किन्त्वेकवचनमेव। क्रियाया लिङ्गसङ्ख्यान्वयाऽयोग्यत्वे च हेतुः शब्दशक्तिस्वाभाव्यमेव। ६—उत्सर्गतः= स्वभावतः, अर्थादेकवचनस्य सङ्ख्यानपेक्षत्वात्। द्विवचनबहुवचनपरिशिष्टविषय एकवचनस्य प्राप्तिरिति भाष्यसिद्धान्तः।

**६५३ स्य-सिच्-सीयुट्-तासिषु भावकर्मणोरुपदेशेऽज्झन-ग्रह-दृशां वा चिण्वदिट् च ६ । ४ । ६२ ॥**

उपदेशे योऽच् तदन्तानां हनादीनां च चिणीवाङ्गकार्यं वा स्यात्स्यादिषु भावकर्मणोर्गम्यमानयोः स्यादीनामिडागमश्च । चिण्वद्भावपक्षे-अयमिट्, चिण्वद्भावाद् वृद्धिः । भाविता । भविता । भाविष्यते, भविष्यते । भूयताम् । अभूयत । भूयेत । भाविषीष्ट, भविषीष्ट ।

**६५४ चिण्भावकर्मणोः ३ । १ । ६६ ॥**

च्लेश्चिण् स्याद्भावकर्मवाचिनि तशब्दे परे । अभावि । अभाविष्यत, अभविष्यत । अकर्मकोऽप्युपसर्गवशात्सकर्मकः—अनुभूयते आनन्दश्चैत्रेण त्वया मया च । अनुभूयेते । अनुभूयन्ते । त्वमनुभूयसे । अहमनुभूये । अन्वभावि । अन्वभाविषाताम् । अन्वभविषाताम् । णिलोपः, भाव्यते[3] । भावयाञ्चक्रे । भावयाम्बभूवे । भावयामासे । चिण्वदिट् । आभीयत्वेनासिद्धत्वाण्णिलोपः । भाविष्यते[4], भावयिष्यते । भाव्यताम् । अभाव्यत । भाव्येत । भावयिषीष्ट, भाविषीष्ट । अभावि । अभाविषाताम्, अभावयिषाताम् । बुभूष्यते[5] । बुभूषाञ्चक्रे । बुभूषिता । बुभूषिष्यते । बोभूयते[6] । अकृत्सार्वधातुकेति दीर्घः । स्तूयते विष्णुः । स्ताविता, स्तोता । स्ताविष्यते, स्तोष्यते । अस्तावि । अस्ताविषाताम्, अस्तोषाताम् । गुणोर्तीति

---

१–'सन्नियोगशिष्टानां सहैव प्रवृत्तिः सहैव निवृत्तिरिति' न्यायेन चिण्वद्भावसन्नियोगशिष्टोऽयमिट् चिण्वद्भावाभावपक्षे न भवति । सेड्धातूनां वलादिलक्षणस्त्विट् स्यादेवेति भावः । २–यद्यप्ययं भूधातुरकर्मकस्तथाप्युपसर्गवशादर्थान्तरवृत्तेर्भवति सकर्मकः, तेन कर्मणि लकारः । अनुभूयते आनन्दश्चैत्रेण त्वया मया च, कर्मणोऽनुक्तत्वाभावान्न द्वितीया, किन्तु प्रातिपदिकार्थमात्रे प्रथमा कर्तुश्चाऽनुक्तत्वात्तृतीया । ३–ण्यन्ताद् भूधातोः कर्मणि लकारे यकि 'णेरनिटि' इति णिलोपो **'भाव्यते'** इत्यादि । ४–भाविष्यते–इत्यत्र चिण्वदिट आभीयत्वेनासिद्धत्वाद्भवति णिलोपः । ५–सन्नन्ताद् भूधातोः 'बुभूष' इत्यस्माद्भावे लकारे यक्यतो लोपे **बुभूष्यते** इत्यादि । ६–यङन्ताद् भूधातोर्भावे लकारे यकि 'बोभूय्यते' अतो लोपः पूर्ववत् । यङ्लुगन्ताच्च यको लुक्येकयकारकं रूपं—**'बोभूयते'** इति ।

गुणः—अर्यते[1]। स्मर्यते। ऋच्छत्यृतामिति गुणः। आरे[2]। सस्मरे। उपदेशग्रहणाच्चिण्वदिट्[3]। आरिता। अर्ता। स्मारिता। स्मर्ता। नलोपः। स्रस्यते[4]। सस्रंसे। इदितस्तु नन्द्यते[5]। ईज्यते[6]।

६५५ तनोतेर्यकि ६। ४। ४४॥

आदन्तादेशो वा स्यात्। तायते। तन्यते।

६५६ तपोऽनुतापे च ६। १। ६५॥

च्लेश्चिण्न कर्मकर्तरि अनुतापे च। अन्ववतप्त[7] पापेन। घुमास्थेतीत्वम्। दीयते। धीयते। ददे। दधे।

६५७ आतो युक् चिण्कृतोः ७। ३। ३३॥

आदन्तानां युगागमश्चिणि ञ्णिति कृति च। दायिता[8]। दाता। दायिषीष्ट। दासीष्ट। अदायि। अदायिषाताम्। शम्यते[9] मोहो मुकुन्देन।

६५८ चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ६। ४। ९३॥

चिण्परे णमुल्परे च णौ मितामुपधाया दीर्घो वा। शामिता[10][11], शमिता।

---

१–ऋधातोः स्मृधातोश्च कर्मणि लकारे यकि–उभयत्र 'गुणोर्तिसंयोगाद्यो' रिति गुणे–'अर्य्यते' 'स्मर्य्यते'। २–लिटि द्वित्वे परस्य गुणेऽभ्यासस्याऽति 'अत आदे' रिति दीर्घे सवर्णदीर्घः। ३–परत्वान्नित्यत्वाच्च गुणे रपरे कृतेऽजन्तत्वाभावेऽपि–उपदेशे योऽजन्त इत्युक्तेर्भवति चिण्वदिट् इति भावः। ४–स्रंस्धातोर्भावे लकारे यकि 'अनिदितां...' इति नलोपे रूपम्। ५–टुनदि समृद्धावित्यस्माद्भावे लकारे रूपमिदम् इदित्वान्नलोपो न। ६–यज् धातोर्भावेऽर्थविशेषे कर्मणि वा लकारे यकि 'वचि स्वपी'ति सम्प्रसारणे रूपम्। ७–पापं कर्तृ तेनाऽभ्याहत इत्यर्थः। कर्मणि लुङ्। यद्वा पापेन पुंसा (कर्त्रा) अशोचीत्यर्थः। इह दुःखानुभवः शोकः पश्चात्ताप इत्यर्थः। एवञ्चेह धात्वर्थेनोपसङ्ग्रहादकर्मकत्वेन भावे लुङ्। ८–चिण्वद्भावादिटि युक्। ९–शम्धातोर्हेतुमण्णौ–उपधावृद्धौ–अमन्तत्वेन मित्वाद् ह्रस्वे शमीत्यस्मात्कर्मणि लकारो यक् णिलोपः। १०–लुटि तासि शमि=इ ता, इति स्थितेऽमन्तत्वेन मित्वान्नित्यमुपधाह्रस्वे प्राप्ते दीर्घोऽनेन विकल्प्यते। ११–चिण्वदिटि–आभीयत्वेन तस्याऽसिद्धत्वाद् णिलोपे दीर्घे विकल्पे च **शामिता, शमिता,** चिण्वत्त्वाभावे वलादिलक्षणे–इटि णिलोपाभावे रूपं '**शमयिता**'।

शमयिता । शामयिष्यते । शमिष्यते । शमयिष्यते । णयन्तत्वाभावे [1] शम्यते मुनिना ।

**९५९ नोदात्तोपदेशस्य मान्तस्यानाचमेः ७ । ३ । ३४ ॥**

उपधाया वृद्धिर्न स्याच्चिणि ञ्णिति कृति च । अशमि । अदमि । उदात्तोपदेशस्येति किम् ? अगामि । मान्तस्येति किम् ? अवादि । अनाचमेरिति किम् ? आचामि । ( अनाचमि-कमि-वमीनामिति वक्तव्यम् ) । अकामि [2] । अवामि ।

**९६० भञ्जेश्च चिणि ६ । ४ । ३३ ॥**

नलोपो वा । अभाजि [3], अभञ्जि । लभ्यते ।

**९६१ विभाषा चिण्णमुलोः ७ । १ । ६९ ॥**

लभेर्नुम् वा । अलम्भि । अलाभि ॥ इति भावकर्मप्रक्रिया ॥

## अथ कर्मकर्तृप्रक्रिया ॥६॥

यदा [4] कर्मैव कर्तृत्वेन विवक्षितं तदा सकर्मकाणामपि अकर्मकत्वात्कर्तरि भावे च लकारः ।

**९६२ कर्मवत्कर्मणा तुल्यक्रियः ३ । १ । ८७ ॥**

कार्यातिदेशोऽयम् [5] । कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत् ।

---

१-णयन्तत्वाभावेन शमुधातोरकर्मकत्वाद्भावे लकारः । २-चिणि 'आयादय आर्धधातुके वा' इति णिङभावे रूपमिदम् । ३-नलोपपक्षे -उपधावृद्धिः । ॥ इति भावकर्मप्रक्रिया ॥

४-यदा सौकर्यातिशयं द्योतयितुं कर्तृव्यापारो न विवक्ष्यते तदा कारकान्तराण्यपि स्वव्यापारे स्वतन्त्रत्वात्कर्तृसञ्ज्ञां लभन्ते इति सिद्धान्ते यदा कर्मैव कर्तृत्वेन विवक्षितं स्यात् तदा कर्माभावात्सकर्मका अपि धातवोऽकर्मका एव भवन्ति, एतेभ्यः कर्तरि भावे च लकाराः । ५-शास्त्रातिदेशः कार्यातिदेशश्चेति पक्षद्वयम् । कर्मणि यानि शास्त्राणि प्रवर्तन्ते तानि तुल्यक्रिये कर्तर्यपि प्रवर्तेरन्निति शास्त्रातिदेशपक्षेऽर्थः । कार्यातिदेशपक्षे च कर्मणि यानि कार्याणि भवन्ति तद्वत्तानि कर्तर्यपि स्युरित्यर्थः । द्वयोः पक्षयोः कार्यातिदेशपक्षो मुख्यः शास्त्रस्यापि कार्यार्थत्वादतः स एवात्राऽऽश्रितः ।

तेन[1] यगात्मनेपदं चिण् चिण्वदिट् च स्युः। पच्यते फलम्। भिद्यते काष्ठम्। अपाचि। अभेदि। भावे तु भिद्यते काष्ठेन। (भूषावाचिनां किरादीनां सन्नन्तानां च यक्चिणौ चिण्वदिट् च नेति वक्तव्यम्)। अलं[3]कुरुते कन्या। अलमकृत। अवकिरते हस्ती। अवाकीर्ष्ट। अवाकरिष्ट। गिरते। अगीर्ष्ट। अगरिष्ट। आद्रियते। आदृत। किरादिस्तुदाद्यन्तर्गणः। चि[4]कीर्षते कटः अचिकीर्षिष्ट।

**९६३ तपस्तपःकर्मकस्यैव[5] ३।१।८८॥**

कर्ता कर्मवत्। तप्यते तपस्तापसः। अर्जयतीत्यर्थः। अतप्त। तपःकर्मकस्यैवेति किम्? उत्तपति सुवर्णं सुवर्णकारः। (सकर्मकाणां प्रतिषेधो वक्तव्यः)। अजां ग्रामं नयति। (दुहिपच्योर्बहुलं सकर्मकयोरिति वाच्यम्)

**९६४ न दुह-स्नु-नमां यक्चिणौ ३।१।८९॥**

एषां कर्मकर्तरि यक्चिणौ न। शप्। तस्य लुक्। गौः पयो[7] दुग्धे।

**९६५ अचः कर्मकर्तरि ३।१।६२॥**

अजन्ताच्च्लेश्चिण्वा कर्मकर्तरि तशब्दे परे। अकारि। अकृत।

**९६६ दुहश्च ३।१।६३॥**

---

१—तेन=कार्य्यातिदेशेन कर्मणि प्रवर्तमानं यगात्मनेपदादि कर्मकर्त्तर्यपि प्रवर्त्तते। २—कर्मवद्भावात्प्राप्तं यक्चिणादि वार्तिकेनानेन निषिध्यते। ३—भूषावाचित्वान्नात्र यक् आत्मनेपदमात्रमेव। ४—सन्नन्तत्वाद् यको निषेध आत्मनेपदन्तु स्यादेव—( चिकीर्षति कटम्, कर्मणः कर्तृत्वविवक्षायां ) चिकीर्षते कटः=चिकीर्षाविषयो भवतीत्यर्थः। ५—तपःकर्मकस्यैव तपधातोः कर्त्ता कर्मवदिति नियमसूत्रार्थः 'तप्यते तपस्तापसः' तपिरत्रार्जनार्थकः। ६—एककर्मकाणां छिदिभिदिप्रभृतीनां कर्मणः कर्त्तृत्वविवक्षयाऽकर्मकाणां सतां कर्त्तुः कर्मवत्वमुक्तम्, ये तु द्विकर्मका अर्थाद् एकस्य कर्मणः कर्तृत्वविवक्षायामपि द्वितीयस्य कर्मणः सत्वात् सकर्मका धातवस्तेषां कर्मकर्त्तुः कर्मवत्वप्रतिषेधो वक्तव्य इत्यर्थः। तेन अजा ग्रामं नयतीत्यत्र कर्मवत्वाभावान्न यगात्मनेपदादि। ७-दुहेः कर्मकर्त्तरि यकि निषिद्धे शप् प्रवर्त्तते तस्य च 'अदिप्रभृतिभ्यः' इति लुक्। गौः स्वयमेव पय उत्सृजतीत्यर्थः।

तथौ[1]। अदोहि, अदुग्ध। लुग्वेति क्सस्य लुक्पक्षेऽयम्। अधुक्षत। उदुम्बरः[2] फलं पच्यते।

**९६७ कुषिरञ्जोः प्राचां श्यन्परस्मैपदं च ३।१।९०॥**

अनयोः कर्मकर्तरि न यक् किन्तु श्यन्परस्मैपदं[3] च। आत्मनेपदापवादः कुष्यति, कुष्यते वा पादः। रज्यति, रज्यते वा वस्त्रम्। यगविषये तु नास्य[4] प्रवृत्तिः। कोषिषीष्ट। रंक्षीष्ट। इति कर्मकर्तृप्रक्रिया॥

# अथ लकारार्थप्रक्रिया ॥१०॥

**९६८ अभिज्ञावचने[5] लृट् ३।२।११२॥**

स्मृतिबोधिन्युपपदे भूतानद्यतने धातोर्लृट्। लङोऽपवादः। **वस** निवासे। स्मरसि कृष्ण! गोकुले वत्स्यामिः[6]। एवं बुध्यसे चेतयसे इत्यादि प्रयोगेऽपि।

**९६९ न यदि ३।२।११३॥**

यद्योगे उक्तं न। अभिजानासि यद्वने अभुञ्ज्महि।

**९७० विभाषा साकाङ्क्षे ३।२।११४॥**

उक्तविषये लृट् वा, लक्ष्यलक्षणभावेन साकाङ्क्षश्चेद्धात्वर्थः[7]। स्मरसि

---

१-दुहेश्च्लेश्चिण्वा कर्मकर्त्तरि तशब्दे परे। २-उदुम्बरवृक्षं फलं पचति काल इत्यत्र द्विकर्मकः पच् धातुः, कर्मणः कर्तृत्वविवक्षायाम् उदुम्बरः स्वयमेव ( कालविशेषमनपेक्ष्य ) फलं पच्यते। अत्रोदुम्बरस्य गौणकर्मणः कर्तृत्वविवक्षायां फलेन प्रधानकर्मणा सकर्मकत्वात् 'सकर्मकाणां प्रतिषेधः' इति कर्मवत्त्वस्य निषेधे प्राप्ते 'दुहिपच्योरि' ति पुनः कर्मवत्त्वविधानम्। तेन भवति यगादि। ३-दिवादित्वात्तस्मिन्नेव विषये श्यन् परस्मैपदञ्चेत्यर्थः ४-यकं प्रतिषिध्य तत्स्थाने श्यनो विधानसामर्थ्याद् यकोऽविषये तु नास्य= यकः प्रवृत्तिरिति भावः। ॥ इति कर्मकर्तृप्रक्रिया ॥

५-अभिज्ञा=स्मृतिः सा-उच्यतेऽनेनेत्यभिज्ञावचनम्, तस्मिन् अर्थात् स्मृतिबोधके पदे समीपे प्रयुज्यमाने सति। ६-हे कृष्ण! गोकुलेऽवसाम इति यत् तत्स्मरसीत्यर्थः। ७-प्राप्तस्य लृटो 'न यदी'ति प्रतिषेधादुत्सर्गो लङ् प्रवर्त्ततेऽर्थः पूर्ववदेव।

कृष्ण ! वने वत्स्यामस्तत्र गाश्चारयिष्यामः । वासो लक्षणं चारणं लक्ष्यम् । पक्षे लङ् । 'परोक्षे लिट्' । चकार । उत्तमपुरुषे चित्तविक्षेपादिना पारोक्ष्यम् । सुप्तोऽहं किल विललाप । ( अत्यन्तापह्नवे लिड् वक्तव्यः ) । कलिङ्गेष्ववात्सीः । नाहं कलिङ्गान् जगाम ।

**६७१ प्रश्ने चासन्नकाले ३ । २ । ११७ ॥**

पृच्छ्यमानेऽर्थे लिड्विषये लङ्लिटौ स्त आसन्नकाले । अगच्छत्किम् ? । जगाम किम् ? ।

**६७२ लट् स्मे ३ । २ । ११८ ॥**

लिटोऽपवादः । यजति स्म युधिष्ठिरः ।

**६७३ अपरोक्षे च ३ । २ । ११९ ॥**

भूतानद्यतने लट् स्यात् स्मयोगे । एवं स्म पिता ब्रवीति ।

**६७४ ननौ पृष्टप्रतिवचने ३ । २ । १२० ॥**

भूते लट् । अकार्षीः किम् । ननु करोमि भोः ।

**६७५ नन्वोर्विभाषा ३ । २ । १२१ ॥**

अकार्षीः किम् ? न करोमि, नाकार्षम् । अहं नु करोमि, अहं न्वकार्षम् ।

**६७६ पुरि लुङ् चास्मे ३ । २ । १२२ ॥**

पुरायोगे भूतानद्यतने वा लुङ् चाल्लट् न तु स्मयोगे । पक्षे यथाप्राप्तम् । वसन्तीह पुरा छात्राः । अवात्सुः । अवसन् । ऊषुर्वा । अस्मे इति किम् । यजति स्म पुरा । भविष्यतीत्यनुवर्तमाने—

**६७७ यावत्पुरानिपातयोर्लट् ३ । ३ । ४ ॥**

यावद्भुङ्क्ते, पुराभुङ्क्ते । निपातयोः किम्—यावद्दास्यते तावद्भोक्ष्यते । करणभूतया पुरा यास्यति ।

---

१–वासो हि गोचारणस्य लक्षणम्=ज्ञापकम्, गोचारणञ्च लक्ष्यम्=ज्ञाप्यमित्यर्थः । २–अहमर्थस्य प्रत्यक्षत्वात्परोक्षत्वाभावेन लिट उत्तमपुरुषप्रयोगः कथं स्यादित्यत आह–'उत्तमपुरुष' इति । ३–पञ्चवर्षाभ्यन्तरमासन्नकालम्, पञ्चवर्षातीतं कालं विप्रकृष्टकालमाहुरिति वृत्तिकाराः । प्रयोक्तृदृष्टिपथविषयत्वमासन्नकालत्वमिति मनोरमार्थः । ४–यावदित्यस्य निश्चितमर्थः । ५–रेफान्तस्य नगरीवाचकस्य पुर्-शब्दस्य तृतीयान्तमिदं रूपम्, तद्बोधयितुमेव करणभूतयेत्याह ।

**९७८ विभाषा कदाकर्ह्योः ३ । ३ । ५ ॥**

लट् स्यात् । कदा कर्हि वा भुङ्क्ते । भोक्ष्यते भोक्ता वा ।

**९७९ वर्तमानसामीप्ये वर्तमानवद्वा ३ । ३ । १३१ ॥**

वर्तमाने ये प्रत्यया उक्तास्ते वर्तमानसमीपे भूते भविष्यति च वा स्युः । कदा आगतोऽसि—अयमागच्छामि, आगमं वा । कदा गमिष्यसि—एष गच्छामि, एष गमिष्यामि वा ।

**९८० आशंसायां भूतवच्च ३ । ३ । १३२ ॥**

भविष्यत्काले भूतवद्वर्तमानवच्च प्रत्यया वा स्युराशंसायाम् । देवश्चेदवर्षीद्वर्षति वर्षिष्यति वा, धान्यमवाप्स्म वपामः वप्स्यामो वा ।

**९८१ क्षिप्रवचने लृट् ३ । ३ । १३३ ॥**

क्षिप्रपर्यायोपपदे पूर्वविषये लृट् । वृष्टिश्चेत्क्षिप्रमाशु त्वरितं वा आयास्यति, शीघ्रं वप्स्यामः ।

**९८२ आशंसावचने लिङ् ३ । ३ । १३४ ॥**

आशंसावाचिन्युपपदे भविष्यति लिङ् स्यात् न भूतवत् । गुरुश्चेदुपेयादाशंसे अधीयीय ।

**९८३ हेतुहेतुमतोर्लिङ् ३ । ३ । १५६ ॥**

वा स्यात् । कृष्णं नमेच्चेत्सुखं यायात् । कृष्णं नंस्यति चेत्सुखं यास्यति । भविष्यत्येवेष्यते । नेह । हन्तीति पलायते ।

**९८४ इच्छार्थेषु लिङ्लोटौ ३ । ३ । १५७ ॥**

इच्छामि भुञ्जीत भुङ्क्तां वा भवान् । एवं कामये प्रार्थये । ( कामप्रवेदने इति वक्तव्यम् ) नेह । इच्छन्करोति ।

**९८५ लिङ् च ३ । ३ । १५९ ॥**

समानकर्तृकेषु इच्छार्थेषु । भुञ्जीयेतीच्छति । विधिनिमन्त्रणेति लिङ् । विधिः=प्रेरणं भृत्यादेर्निकृष्टस्य प्रवर्तनम्, यजेत । निमन्त्रणं=नियोगकरणम्

---

१—अप्राप्तस्य प्रियस्य प्राप्तीच्छा=आशंसा । सा च भविष्यद्विषयैव, भूते इच्छाविरहात् । २—वचनग्रहणात् क्षिप्रपर्याये—इति लभ्यते । ३—कार्यकारणभावे द्योत्ये वा लिङित्यर्थः । ४—परम्प्रति स्वाभिप्रायाविष्करणम्=कामप्रवेदनम् ।

आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम्, इह भुञ्जीत । आमन्त्रणं कामचारानुज्ञा[1], इह आसीत । अधीष्टः=सत्कारपूर्वको व्यापारः, पुत्रमध्यापयेत् । संप्रश्नः=संप्रधारणम्, किं भो वेदमधीयीय उत तर्कम् । प्रार्थनं=याच्ञा, भो भोजनं लभेय । एवं लोट् ।

**९८६ प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ३ । ३ । १६३ ॥**

प्रैषो=विधिः । अतिसर्गः=कामचारानुज्ञा । भवता यष्टव्यम् । चाल्लोटोऽनुकर्षणं प्राप्तकालार्थम् । भवान्यजताम् ।

**९८७ अर्हे कृत्यतृचश्च ३ । ३ । १६९ ॥**

चाल्लिङ् । त्वं कन्यां वहेः ।

**९८८ शकि लिङ् च ३ । ३ । १७२ ॥**

शक्तौ लिङ् स्याच्चात्कृत्याः । त्वं भारं वहेः ।

**९८९ धातुसम्बन्धे प्रत्ययाः ३ । ४ । १ ॥**

धात्वर्थानां सम्बन्धे यत्र काले प्रत्यया उक्तास्ततोऽन्यत्रापि स्युः । तिङन्तवाच्यक्रियायाः[2] प्राधान्यात्तदनुरोधेन गुणभूतक्रियावाचिभ्यः प्रत्ययाः । वसन्ददर्श । भूते लट् । अतीतवासकर्तृकर्तृकं दर्शनमित्यर्थः । सोमयाज्यस्य पुत्रो भविता । सोमेन यक्ष्यमाणो यः पुत्रस्तत्कर्तृकं भवनम् ।

**९९० क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः ३ । ४ । २ ॥**

पौनःपुन्ये भृशार्थे च द्योत्ये धातोर्लोट् तस्य च हिस्वौ स्तस्तिङामपवादः । तौ च हिस्वौ क्रमेण परस्मैपदात्मनेपदसंज्ञौ स्तस्तिङ्संज्ञौ च । तध्वमोर्विषये तु हिस्वौ वा स्तः । पुरुषैकवचनसंज्ञे नानयोरतिदिश्येते हिस्वविधानसामर्थ्यात्तेन[3] सकलपुरुषवचनविषये परस्मैपदिभ्यो हिः कर्तरि,

१–कामचारानुज्ञा=तदिच्छानुसारं तदनुकूलप्रेरणा । २–'वसन् ददर्श' इत्यादौ तिङन्तवाच्या दर्शनादिक्रिया प्रधाना वासादिक्रिया तु दर्शनादिक्रियार्थत्वाद् गुणभूता, अतः प्रधानभूतदर्शनादिक्रियानुसारेण गुणभूतवासादिक्रियावाचिभ्य एवेह कालान्तरेषु प्रत्यया विधीयन्ते–इत्यर्थः । ३–यदि हि मध्यमपुरुषत्वम् एकवचनत्वञ्चातिदेश्यत्वेन विवक्षितमभविष्यत्तर्हि सर्ववचनेषु हिस्वविधानं व्यर्थमभविष्यत्–अर्थात्–युष्मत्सामानाधिकरण्ये–एकत्वे

आत्मनेपदिभ्यः स्वो भावकर्मकर्तृषु ।

**६६१ समुच्चयेऽन्यतरस्याम् ३ । ४ । ३ ॥**

अनेकक्रियासमुच्चये द्योत्ये प्रागुक्तं वा स्यात् ।

**६६२ यथाविध्यनुप्रयोगः पूर्वस्मिन् ३ । ४ । ४ ॥**

आद्ये लोड्विधाने लोट्प्रकृतिभूत एव धातुरनुप्रयोज्यः ।

**६६३ समुच्चये सामान्यवचनस्य ३ । ४ । ५ ॥**

समुच्चये लोड्विधौ सामान्यार्थस्य धातोरनुप्रयोगः स्यात् । अनुप्रयोगाद्यथायथं लडादयस्तिबादयश्च । ततः सङ्ख्याकालयोः पुरुषविशेषार्थस्य चाभिव्यक्तिः । ( क्रियासमभिहारे द्वे वाच्ये ) । याहि याहीति याति । पुनः पुनरतिशयेन वा यानं ह्यन्तस्यार्थः । एककर्तृकं वर्तमानं यानं यातीत्यस्य । इतिशब्दस्तु अभेदान्वये तात्पर्यं ग्राहयति । एवं यातः । यान्ति । याथः । याथ । यातयातेति यूयं याथ । याहि याहीत्ययासीत् । यास्यति वा । अधीष्वाधीष्वेत्यधीते । ध्वंविषये तु पक्षे अधीध्वमधीध्वमिति यूयमधीध्वे । समुच्चये—सक्तून्पिब धानाः खादेत्यभ्यवहरति । अन्नं भुङ्क्ष्व दाधिकमास्वादस्वेत्यभ्यवहरते । तध्वमोस्तु पिबत खादतेत्यभ्यवहरथ । भुङ्ग्ध्वमास्वादध्वमित्यभ्यवहरध्वे । पक्षे तु हिस्वौ । अत्र समुच्चीयमानविशेषाणामनुप्रयोगार्थेन सामान्येनाभेदान्वयः । पक्षे सक्तून् पिबति । धानाः खादति । अन्नं भुङ्क्ते । दाधिकमास्वादते । एतेन—

"पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः ।
विगृह्य चक्रे नमुचिद्विषा बली य इत्थमस्वास्थ्यमहर्दिवं दिवः" ॥
( माघः, स० १, श्लो० ५१ )

---

च सत्येव लोटो हिस्वौ स्यातामन्यत्र तु यथायथं तिबाद्यादेशाः स्युः तथा सति लोटो हिस्वविधानस्यानर्थक्यं स्फुटमेव । अतो न पुरुषवचनातिदेशः ।

१—धातोर्लोट् तस्य च हिस्वौ (तध्वमोर्विषये वा) इत्युक्तमित्यर्थः। २—आद्ये=प्रथमेऽर्थात्क्रियासमभिहारे इत्यादिसूत्रेण कृते । ३—अनुप्रयोगात्=अनुप्रयुज्यमानाद् धातोरित्यर्थः । यथायथं यथाप्राप्तम् । ४—याहि याहि—इति यातः, याहि याहि—इति यान्ति । याहि याहि इति यासि । याहि याहि—इति यामि—इत्यादयः । ५—स्वादेशाभावपक्षे—इत्यर्थः । ६—"समुच्चयेऽन्यतर-

इति व्याख्यातम्। अवस्कन्दनलवनादिरूपा भूतानद्यतनपरोक्षा एककर्तृका अस्वास्थ्यक्रियेत्यर्थात्। इह पुनः पुनश्चस्कन्देत्यादिरर्थ इति व्याख्यानं भ्रममूलकमेव। द्वितीयसूत्रे क्रियासमभिहारे इत्यस्यानुवृत्तेः। लोडन्तस्य द्वित्वापत्तेश्च। पुरीमवस्कन्देत्यादि मध्यमपुरुषैकवचनमित्यपि केषाञ्चिद्भ्रम एव। पुरुषवचनसंज्ञे इह नेत्युक्तत्वात्॥ इति लकारार्थप्रक्रिया॥

## इति तिङन्तप्रकरणं समाप्तम्

# अथ कृदन्तप्रकरणम्।

**६६४ धातोः ३। १। ६१॥**

आतृतीयाध्यायान्तं ये प्रत्ययास्ते धातोः परे स्युः। कृदतिङिति कृत्संज्ञा।

**६६५ वाऽसरूपोऽस्त्रियाम् ३। १। ६४॥**

---

स्याम्" "समुच्चये सामान्यवचनस्य" इति च सूत्रद्वयेन तदुदाहरणप्रदर्शनेन च **पुरीमवस्कन्द**त्यादि माघकाव्यस्थं श्लोकवाक्यं व्याख्यातमित्यर्थः। बली=रावणः नमुचिद्विषा=इन्द्रेण सह विगृह्य=विरोधं प्राप्य पुर्याः=अमरावत्या अवस्कन्दनम्=पीडनं नन्दनवनस्य लवनम्=कर्त्तनं रत्नानां मोषणममराङ्गनानां हरणमित्येवम्प्रकारेणाऽहर्दिवम्=अहन्यहनि दिवः=स्वर्गस्य अस्वास्थ्यं चक्रे=कृतवानित्यन्वितार्थः। तथैव फलितमाह-**अवस्कन्दनलवनादिरूपेति**।

१-भ्रममूलकम्=भ्रान्तिहेतुकम्। तदेवोपपादयति--**द्वितीयसूत्रे**-इत्यादि। **लोडन्तस्य द्वित्वापत्तेश्चे**त्यादि। २-मध्यमपुरुषैकवचनसादृश्यमेव तेषां भ्रमहेतुः पुरुषवचनयोर्नात्रातिदेश इति तूक्तमेव

॥ इति लकारार्थप्रक्रिया॥

इति श्री प्रभाकरीविवृतौ मध्यकौमुदीटीकायां तिङन्तप्रकरणं सम्पूर्णम्।

३-तिङ्निरूपणानन्तरं कृत्प्रत्ययान्निरूपयिष्यन्नधिकारविशेषमाह-**धातोरिति**। तेन सर्वेऽपि कृत्प्रत्यया धातोः परे भवन्ति, इति निष्पन्नम्। ४-तृतीयाध्यायसमाप्तिपर्यन्तमयमधिकारः (धातोरिति) तत्र प्रमाणन्तु भाष्यव्याख्यानमेव। ५-परिभाषासूत्रमिदम्। उत्सर्गः सामान्यविषयः अपवादश्च=विशेषविधयः। 'प्रकल्प्य चापवादविषयं तत उत्सर्गः प्रवर्तते इति

अस्मिन्धात्वधिकारेऽसरूपोऽपवादः प्रत्यय उत्सर्गस्य वा बाधकः स्त्र्यधिकारोक्तं विना ।

**९९६ कृत्याः ३ । १ । ९५ ॥**

ण्वुल्तृचावित्यतः प्राक् कृत्यसंज्ञाः स्युः ।

**९९७ कर्तरि कृत् ३ । ४ । ६७ ॥**

कृत्प्रत्ययः कर्तरि स्यात्, इति प्राप्ते ।

**९९८ तयोरेव कृत्य-क्त-खलर्थाः ३ । ४ । ७० ॥**

एते भावकर्मणोरेव स्युः ।

**९९९ तव्यत्तव्यानीयरः ३ । १ । ९६ ॥**

धातोरेते स्युः । एधितव्यम् । एधनीयं त्वया । भावे औत्सर्गिकमेकव-

---

न्यायानुसारम्, अपवादः—उत्सर्गस्य सर्वत्र नित्यं बाधको भवति । तथाऽत्र प्रकरणेऽपि—अपवादेन उत्सर्गस्य नित्यं बाधे प्राप्ते सूत्रेणाऽनेन विकल्पेन बाधो व्यवस्थाप्यते—**वाऽसरूप** इति । तेन "अचो यत्" 'ऋहलोर्ण्यत्' इत्याद्यपवादविषये उत्सर्गाः ( सामान्याः ) तव्यदादयोऽपि प्रवर्तन्ते 'भव्यम् भवितव्यम्, कार्यम्, कर्त्तव्यम्, वाच्यम्—वक्तव्यमित्यादि । न समानं रूपं यस्य सोऽसरूपः, (असारूप्ये एवायं वैकल्पिको बाधः) । सरूपस्तूत्सर्गस्य नित्यं बाधको भवति, यथा—'कर्मण्यण्' इत्युत्सर्गस्य 'आतोऽनुपसर्गे कः' इत्यपवादो नित्यं बाधकः—गोदः कम्बलदः, ( अण् (अ) क (अ) इत्युभौ हि सरूपौ) । स्त्र्यधिकारे तु नेयं परिभाषा ( सूत्रं ) प्रवर्तते, 'तेन स्त्रियां क्तिन्' इत्युत्सर्गस्य 'अ प्रत्ययात्' इत्यपवादो नित्यं बाधकः—चिकीर्षा, जिहीर्षा ।

१—तव्यत्, तव्यः, अनीयर् इति प्रत्ययत्रयम्, तव्यत्तव्ययोः 'तित्स्वरित' मिति स्वरे भेदः । किञ्च 'पूरणगुण'—इति सूत्रे तव्यप्रत्ययान्तस्य समासनिषेधः—यथा—ब्राह्मणस्य कर्तव्यम् । तव्यत्प्रत्ययान्तस्य तु भवत्येव समासो यथा स्वकर्तव्यम् । २—भावस्य ( भावरूपस्य धात्वर्थस्य ) द्रव्यरूपत्वाऽभावाद्, भावे प्रत्यये लिङ्गसङ्ख्यान्वयः कथं स्यादिति तत्राह—**औत्सर्गिकमेकवचन**मिति । एकवचनं हि न सङ्ख्यापेक्षं किन्तु द्विवचनबहुवचनयोरविषये शब्दसाधुत्वाय—औत्सर्गिकी तस्य प्रवृत्तिः, एवं नपुंसकलिङ्गस्यापि—पुंस्त्रीलिङ्गविषयाऽभाव औत्सर्गिकी शब्द-

वचनं क्लीबत्वं च। चेतव्यश्चयनीयो वा धर्मस्त्वया। ( केलिमर[१] उपसंख्यानम् )। पचेलिमा[२] माषाः पक्तव्या इत्यर्थः। भिदेलिमाः सरलाः। कर्मणि[३] प्रत्ययः। ( वसेस्तव्यत्[४] कर्तरि णिच्च )। वसतीति वास्तव्यः[५]।

**१००० कृत्यचः ८। ४। ३०॥**

उपसर्गस्थान्निमित्तात्परस्याच उत्तरस्य कृत्स्थस्य[६] नस्य णत्वं स्यात्। प्रयाणीयम्। अचः किम्। प्रमग्नः[७] ( निर्विण्णस्योपसंख्यानम्[८] )।

**१००१ णेर्विभाषा[९] ८। ४। ३०॥**

प्राग्वत्। प्रयापणीयम्। प्रयापनीयम्।

**१००२ हलश्चेजुपधात् ८। ४। ३१॥**

---

साधुत्वमात्रार्थं प्रवृत्तिरिति। अर्थात्-यत्र न लिङ्गविशेषापेक्षा तत्र शब्द-साधुत्वाय नपुंसकं लिङ्गम्। सङ्ख्याविशेषानपेक्षत्वे च एकवचनं केवलं शब्द-साधुत्वाय प्रवर्तते स्वभावत इति। भावे प्रत्यये कर्तुरनुक्तत्वात्तृतीया, **एधितव्यम्; एधनीयम्;** त्वया। कर्मणि प्रत्ययेऽत्र च कर्मण उक्तत्वात् प्रातिपदिकार्थमात्रे प्रथमा कर्तुरनुक्तत्वात्तृतीया-**चेतव्यश्चयनीयो वा धर्मस्त्वया।**

१-भावकर्मणोरर्थयोर्धातोः 'केलिमर्'-प्रत्ययोऽपि वक्तव्य इत्यर्थः, ककारो रेफश्चात्र-इत्संज्ञकः। २-पच्धातोः केलिमर्प्रत्यये-**पचेलिमाः,** भिद्धातोश्च **भिदेलिमाः** इति। अत्र कित्वाण्णोपधागुणः। सरलाः=वृक्ष-विशेषाः ३-केलिमर्प्रत्ययः कर्मण्यर्थे भवतीत्यर्थः। वृत्तिकारस्तु कर्मकर्तरि चायमिष्यते इत्याह। ४-वस्धातोः कर्तरि तव्यत्प्रत्ययो भवति, सच णिद्वद् वक्तव्यः, इत्यर्थः। ५-तव्यत्प्रत्यये णिद्वद्भावात् 'अत उपधायाः' इति वृद्धिः। ६-कृत्प्रत्ययावयवस्येत्यर्थः। ७-'टु मस्जो शुद्धौ' धातोः क्त-प्रत्यये ओदितश्चेति निष्ठानत्वे, स्कोरिति सलोपे चोः कुरिति कुत्वे रूपम् 'प्रमग्नः' इति। अचः परत्वाऽभावान्नस्य णत्वं न। ८-निर् पूर्वकाद् विद्धातोः क्तप्रत्यये रदाभ्यामिति निष्ठायाः=तकारस्य, दस्य च नत्वे सति, अचः-परत्वाऽभावेन णत्वस्याऽप्राप्तौ वार्त्तिकमिदमारभ्यते। तेन परस्य नस्यानेन णत्वम्, पूर्वस्य नस्य च 'ष्टुना ष्टु' रिति ष्टुत्वेन णत्वम्। **निर्विण्ण**मिति। ९-उपसर्गस्थान्निमित्तात्परस्य ण्यन्ताद् विहितो यः कृत्प्रत्ययः तत्स्थस्य नस्य णो वा स्यात्, इत्यर्थः।

हलादेरिजुपधाद्धातोः परस्य कृत्स्थाचः परस्य णो वा । प्रकोपणीयम् । प्रकोपनीयम् । हलः किम् । प्रोहणीयम्[1] । इजुपधात्किम् । प्रवपणीयम्[2] ।

**१००३ इजादेः सनुमः ८ । ४ । ३२ ॥**

सनुम[3]श्चेद्भवति इजादेर्हलन्ताद्विहितो यः कृत्तस्यैव । (**इखि** गतौ) । प्रेङ्खणीयम् । इजादेः किम् । ( **मगि** सर्पणे ) । प्रमङ्गनीयम् ।

**१००४ वा निंस-निक्ष-निन्दाम् ८ । ४ । ३३ ॥**

एषां नस्य णो वा कृति । प्रणिंसितव्यम् । प्रनिंसितव्यम् ।

**१००५ न[4] भा-भू-पू-कमि-गमि-प्यायी-वेपाम् ८।४।३४॥**

एभ्यः कृत्स्थस्य णो न । प्रभानीयम् । प्रभवनीयम् । ( णयन्तभादीनामुपसंख्यानम्[5] ) प्रभापनीयम् ।

**१००६ कृत्यल्युटो बहुलम् ३ । ३ । ११३ ॥**

क्वचित्प्रवृत्तिः[6] क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥

स्नान्त्यनेन स्नानीयं[7] चूर्णम् । दीयतेऽस्मै दानीयो[8] विप्रः ।

---

१–प्र+ऊह्+अनीय ( र् )=**प्रोहणीयम्**, नात्र धातुर्हलादिरिति न णत्वविकल्पः, किन्तु 'कृत्यचः' इति नित्यमेव णत्वम् । २–प्र–वप्+अनीय ( र् )=**प्रवपणीयम्**,नात्र धातुः–इजुपधः इति न णत्वविकल्पः किन्तु 'कृत्यचः' इति नित्यं णत्वम्। ३–'कृत्यचः' इत्येव सिद्धे नियमार्थमिदं सूत्रम् । सिद्धौ सत्याम् आरभ्यमाणो विधिर्नियमायेति न्यायात् । ४–'कृत्यचः' इति प्राप्ते निषेधोऽयम् । ५–णयन्तानां भा–भू–पू–कमि–गमि–प्यापि–वेपां न णत्वमिति वक्तव्यमित्यर्थः । ६–**क्वचित्प्रवृत्तिः**, अप्राप्तस्यापीति शेषः, यथा–स्नानीयं चूर्णम् इत्यत्र करणेऽप्राप्तस्यापि-अनीयर् प्रत्ययस्य प्रवृत्तिः । **क्वचिदप्रवृत्तिः** प्राप्तस्यापीति शेषः, यथा=अप्रसरः, इत्यत्र पूर्वपदस्यैदन्तत्वाप्रवृत्तिर्बाहुलकात् । **क्वचिद्विभाषा**=विकल्पः, यथा –'मघवा बहुलम्' इति विकल्पः । **क्वचिदन्यदेव**=( विकल्पप्राप्तस्यापि ) नित्यत्वादिकम्, यथा–उन्मत्तगङ्गम् इत्यत्र नित्यमम्—भावः, तृतीया-सप्तम्योर्बहुलमिति बहुलग्रहणात् । ७–स्नाधातोः करणे अनीयर् प्रत्ययः । ८–दाधातोः सम्प्रदाने अनीयर् प्रत्ययः ।

**१००७ ऋदुपधाच्चाक्लृपिचृतेः ३। १। ११० ॥[1]**

क्यप् स्यात्। वृत्–वृत्यम्[2]। वृध्–वृध्यम्। क्लृपिचृत्योस्तु कल्प्यम्[3]। चर्त्यम्[4]।

**१००८ अचो यत् ३। १। ९७ ॥**

अजन्ताद् धातोर्यत् स्यात्। चेयम्[5]। जेयम्।

**१००९ ईद्यति ६। ४। ६५ ॥**

यति परे आत ईत्। गुणः[6]। देयम्। ग्लेयम्[7]।

**१०१० पोरदुपधात् ३। १। ९८ ॥**

पवर्गान्ताददुपधाद्यत्। ण्यतोऽपवादः[8]। शप्यम्[9]। लभ्यम्।

**१०११ आङो यि ७। १। ६५ ॥**

आङः परस्य लभेर्नुम् यादौ प्रत्यये। आलम्भ्यो गौः।

**१०१२ उपात्प्रशंसायाम्[10] ७। १। ६६ ॥**

उपलम्भ्यः साधुः। स्तुतौ किम्। उपलब्धुं शक्यः उपलभ्यः।

**१०१३ शकि–सहोश्च[11] ३। १। ९९ ॥**

शक्यम्। सह्यम्॥

**१०१४ गद–मद–चर–यमश्चानुपसर्गे[12] ३। १। १०० ॥**

---

१–क्लृपिधातुं चृतीधातुं च वर्जयित्वा ऋदुपधात् धातोः क्यप् स्यादित्यर्थः। २–'वृतु वर्तने' इत्यस्मात् क्यप् प्रत्यये '**वृत्यम्**', कित्वान्नोपधागुणः। एवं–वृध् धातोः **वृध्यम्**। ३–'ऋहलोर्ण्यत्' इति ण्यत् प्रत्यये रूपम्–**कल्प्यम्**। उपधागुणः। ४–चृत् धातोर्ण्यत्प्रत्यये रूपं **चर्त्यम्**। उपधागुणः। ५–'सार्वधातुकार्धधातुकयोः' इति गुणः, चि+य (त्)= **चेयम्**। एवं **जेयम्**। ६–दाधातोः यत् प्रत्यये, ईत्वे, सार्वधातुकेति गुणः, **देयम्**। ७–ग्लै हर्षक्षये इति धातोर्भावे यत् प्रत्यये, 'आदेच उपदेशेऽशिति' इति–आत्वे, ईत्वे गुणः—**ग्लेयम्**। ८–'ऋहलोर्ण्यत्' इति प्राप्तस्य ण्यतोऽपवाद इत्यर्थः। ९–शप्+य (त्) म्=**शप्यम्**। लभ्+य (त्) म्=**लभ्यम्**। १०–उपपूर्वाद् लभेर्नुम् स्यात् प्रशंसायामित्यर्थः। ११–शकिसहिभ्यां धातुभ्यां ण्यतोऽपवादो यत् इत्यर्थः। १२–उपसर्गरहितेभ्यो गदमदादिभ्यो ण्यतोऽपवादो यत्, इत्यर्थः।

गद्यम् । मद्यम् । चर्यम् । ( चरेराङि चागुरौ ) आचर्यो देशः । अगुरौ किम् । आचार्यो=गुरुः । यम्यम् ।

**१०१५ अवद्य-पण्य-वर्या गर्ह्य-पणितव्यानिरोधेषु ३ । १ । १०१ ॥**

अवद्यं=पापम् । पण्यं=विक्रेयम् । शतेन वर्या कन्या ।

**१०१६ वह्यं करणम् ३ । १ । १०२ ॥**

वहन्त्यनेनेति वह्यं=शकटम् । वाह्यमन्यत् ।

**१०१७ अर्यः स्वामि-वैश्ययोः ३ । १ । १०३ ॥**

अनयोः किम् । आर्यो ब्राह्मणः ।

**१०१८ उपसर्या काल्या प्रजने ३ । १ । १०४ ॥**

गर्भग्रहणे प्राप्तकाला चेदित्यर्थः । उपसर्या गौः । गर्भाधानार्थं वृषभेणोपगन्तुं योग्येत्यर्थः । प्रजने काल्येति किम् । उपसार्या काशी । प्राप्तव्येत्यर्थः ।

---

१–आङि–उपसर्गे सत्यपि चरधातोर्यत् स्यादेव गुरुभिन्नेऽर्थे । **आचर्यो** देशः=गन्तव्य इत्यर्थः । २–ऋहलोर्ण्यत्, इति ण्यत् प्रत्यये 'अत उपधायाः' इति वृद्धिः, आचर्+ण्यत्=**आचार्यः** । यम् धातोर्यत्–**यम्यम्** । ३–गर्ह्य-पणितव्याऽनिरोधेष्वर्थेषु क्रमेण–अवद्य पण्य-वर्या निपात्यन्ते इत्यर्थः । ४–नञ्पूर्वकाद् वद् धातोः 'वदेः सुपि....' इति यत् क्यप् च प्राप्तः तत्र यदेव स्यात् सोऽपि गर्हायामेवेति निपात्यते । **अवद्यम्**=अवाच्यम् , गर्हणीयमिति यावत् । पणधातोर्ण्यतः प्राप्तौ पणितव्यार्थे=विक्रेयार्थे यत् निपातितः **पण्यम्**=विक्रेयम् । वृङ् धातोः 'एतिस्तुशा•••' इति क्यपि प्राप्ते यत् निपात्यते, अनिरोधार्थे=अप्रतिबन्धार्थे । **वर्या**=स्वयंवरेण वरणीया इत्यर्थः । ५–वह् धातोः करणे ण्यतोऽपवादो यत् निपात्यते, इत्यर्थः । अन्यत्र ण्यति वाह्यम् इति । ६–स्वामिनि वैश्ये चार्थे ऋधातोर्यत् निपात्यते । (ण्यतोऽपवादः) इत्यर्थः । अन्यत्र ण्यति–**आर्यः** । ('अचो ञ्णिति' वृद्धिः ) । ७–काल्या प्रजने इत्यस्य गर्भग्रहणे प्राप्तकाला इत्यर्थः । गर्भग्रहणे प्राप्तकाला स्त्रीपशुव्यक्तिर्विवक्षिता चेत् तदा उपपूर्वात्सृधातोर्ण्यतोऽपवादो यत् निपात्यते इति सूत्रार्थः ।

**१०१९ अजर्यं संगतम् ३ । १ । १०५ ॥**

विशेष्यं चेत् । न जीर्यतीत्यजर्यम्=सतां संगतम् ।

**१०२० वदः सुपि क्यप् च ३ । १ । १०६ ॥**

चाद्यत् । ब्रह्मोद्यम् । ब्रह्मवद्यम् ।

**१०२१ भुवो भावे ३ । १ । १०७ ॥**

क्यप् । ब्रह्मणो भावो ब्रह्मभूयम् ।

**१०२२ हनस्त च ३ । १ । १०८ ॥**

चात्क्यप् । ब्रह्मणो हननं ब्रह्महत्या ।

**१०२३ एति-स्तु-शास्वृ-दृ-जुषः क्यप् ३ । १ । १०९ ॥**

**१०२४ ह्रस्वस्य पिति कृति तुक् ६ । १ । ७१ ॥**

इत्यः । स्तुत्यः । शिष्यः । वृ इति वृञो ग्रहणं न वृङः । वृत्यः । वृङस्तु

१—नञ्पूर्वकाद् जीर्यतेः ( जॄधातोः ) कर्तरि यत् प्रत्ययो निपात्यते सङ्गतं चेद् विशेष्यं स्यादित्यर्थः । अन्यत्र कर्तरि तृच् अजरिता । २—सङ्गतिरित्यर्थः । ३—वद् धातोः क्यप् स्यादनुपसर्गे सुप्युपपदे भावे, चाद् यत् । ४—ब्रह्म—वद्+क्यप्—ब्रह्मोद्यम् । 'वचिस्वपियजा...' इति सम्प्रसारणम् । पक्षे यत् प्रत्यये ब्रह्मवद्यम्, ब्रह्म=वेदस्तस्य वदनम्=उच्चारणमित्यर्थः । ५—कित्वाद् गुणाऽभावः । ६—अनुपसर्गे सुप्युपपदे हन्धातोर्भावे क्यप् स्यात् तकारश्चान्तादेशः । ७—ब्रह्म—हन्+क्यप् । नकारस्य 'हनस्त' इति तकारः स्त्रीत्वं लोकात्—ब्रह्महत्या । ८—इण्, गतौ, इत्यस्मात् क्यपि प्रत्यये, इ+य ( : ) इत्यवस्थायां तुगागमे 'इत्यः=गन्तव्य इत्यर्थः । एवं स्तुधातोः स्तुत्यः । ९—शास् धातोः क्यप् प्रत्यये 'शास इदङ्हलोः, इति आकारस्य इत्वे आदेशप्रत्ययावयवत्वाऽभावात् 'आदेशप्रत्यययो' रिति षत्वाऽप्राप्तौ 'शासिवसिघसीनां' चेति षत्वम्, शिष्यः । शास्यतेऽसौ इति विग्रहः । १०—वृञ् धातोः क्यप् प्रत्यये ह्रस्वस्येति तुक्—वृत्यः । वृङ् धातोस्तु 'ऋहलो' रिति ण्यत्प्रत्यये वृद्धौ बहुवचने वार्याः=अवश्यं भजनीयाः ( वृङ् सम्भक्तौ ) । आदृ+क्यप्, तुक्=आदृत्यः । आदरणीयः इत्यर्थः । जुष्+क्यप्, जुष्यः=सेवनीयः ।

वार्या ऋत्विजः। आद्रत्यः। जुष्यः। पुनः क्यब्ग्रहणं परस्यापि ण्यतो बाधनार्थम्। अवश्यस्तुत्यः।

**१०२५ मृजेर्विभाषा[2] ३। १। ११३॥**

मृजेः क्यब्वा। मृज्यः।

**१०२६ ऋहलोर्ण्यत् ३। १। १२४॥**

ऋवर्णान्ताद्धलन्ताच्च ण्यत्।

**१०२७ चजोः कु घिण्यतोः ७। ३। ५२॥**

चजोः कुत्वं घिति ण्यति च। (निष्ठायामनिट इति वक्तव्यम्) तेनेह न—गर्ज्यम्[3]। मार्ग्यः[4]।

**१०२८ ओरावश्यके[5] ३। १। १२५॥**

ण्यत्। पाव्यम्[6]।

'लुम्पेदवश्यमः[7] कृत्ये तुंकाममनसोरपि।
समो वा हिततयोर्मांसस्य पचि युड्घञोः॥

---

१—ननु 'वदः सुपि' इत्यतोऽनुवृत्त्यैव सिद्धे (क्यप्-ग्रहणे), पुनरिह क्यब्ग्रहणं व्यर्थमित्यत आह—**पुनः क्यब्ग्रह**रित्यादि। अयंभावः—'ओरावश्यके' इत्यस्य ण्यतोऽवश्यलाव्यमित्यादिरवकाशः, 'एतिस्तुशासे' ति क्यपश्च स्तुत्यः-इत्यादिरवकाशः, एवं लब्धावकाशयोरुभयोरवश्यस्तुत्यः' इत्यत्र प्राप्तौ तुल्यबलविरोधे परं कार्यमिति परत्वेन, 'ओरावश्यके' इति ण्यदेव प्रसज्यते तन्माभूदिति पुनः क्यब्ग्रहः। तेन क्यप्—एव। २—मृज्धातोर्ऋदुपधत्वात् 'ऋदुपधाच्चाक्लृपि' इति नित्यं क्यपि प्राप्ते विकल्पार्थोऽयमारम्भः। ३—गर्जधातुर्हि निष्ठायां सेट्—गर्जितम् इति, तेन न कुत्वम्। ४—क्यपोऽभावपक्षे ण्यत्प्रत्ययः, 'मृजेर्वृद्धि' रिति वृद्धौ कुत्वे रूपम्—**मार्ग्यः**=शोधनीयः। ५—उवर्णान्ताद् धातोः क्यप् स्यादवश्यंभावे द्योत्ये, इत्यर्थः। ६—पूधातोर्ण्यत्प्रत्ययः, 'अचो ञ्णिति' इति वृद्धौ, 'वान्तो यि प्रत्यये' इति आवादेशे **पाव्यम्**। एवं लाव्यमित्यादि। ७—**लुम्पेदि**ति, अवश्यमः='अवश्यम्' शब्दस्य मकारो लुम्पेत्,=लुप्तो भवेत्, कृत्ये=कृत्यप्रत्यये यथा—अवश्यलाव्यम्। तथा 'तुम्' इत्यस्य मकारो लुम्पेत्, कामशब्दे मनःशब्दे च परे सति यथा—कर्तुकामो गन्तुमनाः,

अवश्यलाव्यम्।

**१०२९ भव्य-गेय-प्रवचनीयोपस्थानीय-जन्याप्लाव्यापात्या वा ३।४।६८॥**

एते कृत्यान्ताः कर्तरि वा निपात्यन्ते। भवतीति भव्यः। भव्यमनेन वा।

**१०३० भोज्यं भक्ष्ये ७।३।६९॥**

भोग्यमन्यत्।

**१०३१ वचोऽशब्दसंज्ञायाम् ७।३।६७॥**

न कुत्वम्। वाच्यम्। वाक्यमन्यत्।

**१०३२ राजसूय-सूर्य-मृषोद्य-रुच्य-कुप्य-कृष्टपच्या-ऽव्यथ्याः ३।१।११४॥**

इत्यादि। तथा 'हित' शब्दे 'तत' शब्दे च परे 'सम्'-शब्दस्य मकारो वा लुम्पेत् यथा—सहितम्-संहितम्, सततम्-सन्ततम्। तथा पचि युङ्घञोः =अर्थात् युट्प्रत्ययान्ते घञ्प्रत्ययान्ते च पच्धातौ, पचनपचन्यादिशब्दे पाकशब्दे च परे सति इति यावत्, मांसस्य=मांसशब्दस्य मकारस्याऽनुस्वारभूतस्य लोपो भवतीत्यर्थः, उदाहरणं यथा—मास्पचनी, मास्पाकः, इति।

१—भवतीति **भव्यः**, कर्तरि यत्। गायतीति **गेयः**, कर्तरि यत्, 'ईद्यति' ईत्वे, सार्वधातुकेति गुणः। प्रवक्षीति **प्रवचनीयः**, कर्तरि अनीयर् उपतिष्ठते इति **उपस्थानीयः** कर्तरि-अनीयर्। **जायते** इति जन्यः, कर्तरि यत्। आप्लवतेऽसौ—**आप्लाव्यः**, 'ओरावश्यके' इति कर्तरि ण्यत्। आपतति-असौ, **इत्यापात्यः**। 'ऋहलो'रिति कर्तरि ण्यत्। २—भक्ष्ये गम्ये ण्यत्प्रत्यये भुज्धातोः कुत्वाभावो निपात्यते। **भोज्यम्**। ३—भक्षणीयभिन्नं धनादिकम् इत्यर्थः। ४—वच्धातोर्ण्यत्प्रत्यये कुत्वाभावनिपातने-**वाच्यम्**=वचनीयं वस्तु, **वाक्यम्**=एकतिङ्रूपम्। ५-एते सप्त क्यप् प्रत्ययान्ता निपात्यन्ते इत्यर्थः। राजपूर्वकात् सुञ् धातोः क्यप् प्रत्यये दीर्घो निपात्यते राज्ञा सूयते **राजसूयम्**=यज्ञविशेषः, अर्धचादिः। सृधातोः कर्तरि क्यप्, सरत्याकाशे इति **सूर्यः**, निपातनादुत्वं दीर्घश्च। मृषापूर्वाद् वद्धातोः क्यपि वचि स्वपीति सम्प्रसारणम्, **मृषोद्यम्**। रुच् धातोः क्यप् प्रत्यये रोचते इति **रुच्यः**। गुप् धातोः क्यप् प्रत्यये गकारस्य कत्वं

एते सप्त क्यबन्ता निपात्यन्ते ।

**१०३३ भिद्योद्ध्यौ नदे ३ । १ । ११५ ॥**

नदे किम् । भेत्ता । उज्झिता ।

**१०३४ पुष्यसिध्यौ नक्षत्रे ३ । १ । ११६ ॥**

अधिकरणे क्यन्निपात्यते । पुष्यन्त्यस्मिन्नर्थाः पुष्यः । सिध्यन्त्यस्मिन्सिध्यः ।

**१०३५ विपूय-विनीय-जित्या मुञ्ज-कल्क-हलिषु ३ । १ । ११७॥**

विपूयो मुञ्जः । विनीयः कल्कः । जित्यो हलिः ।

**१०३६ प्रत्यपिभ्यां ग्रहेः ३ । १ । ११८ ॥**

( छन्दसीति वक्तव्यम् ) प्रतिगृह्यम् । अपिगृह्यम् । लोके तु । प्रतिग्राह्यम् । अपिग्राह्यम् ।

**१०३७ पदास्वैरिबाह्यापक्ष्येषु च ३ । १ । ११९ ॥**

अवगृह्यम् । प्रगृह्यं पदम् । अस्वैरी=परतन्त्रः । गृह्यकाः शुकाः । ग्रामगृह्या सेना । आर्यैर्गृह्यते आर्यगृह्यः । तत्पक्षाश्रित इत्यर्थः ।

निपात्यते, **कुप्यम्**=सुवर्णरजतादिभिन्नं धनम् । कृष्टपूर्वकात् पच् धातोः निपातनात् कर्मकर्तरि क्यप् । कृष्टे स्वयमेव पच्यन्ते—**कृष्टपच्याः** । नञ्पूर्वकात् व्यथ्धातोः कर्तरि क्यप् निपात्यते, न व्यथतेऽ**व्यथ्यः** ।

१—नदविशेषे कर्तरि भिदेरुज्झेश्च क्यप् निपात्यते इत्यर्थः, उज्झेर्धत्वं च निपात्येत । २—भिनत्ति इति भेत्ता=भेदनकर्ता । तृच् । एवम् उज्झिता । ३—पुष् धातोः सिध् धातोश्च नक्षत्रे वाच्येऽधिकरणे क्यप् निपात्यते इत्यर्थः । ४—क्यप्प्रत्ययान्ता निपात्यन्ते इत्यर्थः । ५—कल्कः=पिष्टऔषधविशेषः । ६—जिधातोः क्यपि तुक् **जित्यः**=हलिः=महद्धलं=हलिः । जित्यो =बलेन कृष्टव्यः । ७—क्यप् स्यादिति शेषः । ८—प्रति-ग्रह्धातोः क्यप्, कित्वाद् ग्रहिज्येति सम्प्रसारणम्, **प्रतिगृह्यम्** । एवम् **अपिगृह्यम्** । ९—न क्यप्, किन्तु ण्यत्, वृद्धौ प्रतिग्राह्यम् । १०—पद—अस्वैरि—बाह्या—पक्ष्येष्वर्थेषु ग्रह्धातोः क्यप् स्यात्, इत्यर्थः । क्यपि सम्प्रसारणम् । **गृह्यकाः**=पञ्जरादिबन्धनेन परतन्त्रीकृताः । **ग्रामगृह्या**=ग्रामाद् बहिर्भूता इत्यर्थः । **आर्यगृह्यः**=आर्यपक्षाश्रित इत्यर्थः ।

**१०३८ विभाषा कृवृषोः ३ । १ । १२० ॥**

कृत्यम्[1] । वृष्यम्[2] । कार्यम्[3] । वर्ष्यम् ।

**१०३९ युग्यं च पत्रे ३ । १ । १२१ ॥**

पत्रं=वाहनम्[4] । योग्यमन्यत् ।

**१०४० अमावस्यदन्यतरस्याम् ३ । १ । १२२ ॥**

अमा सह वसतोऽस्यां चन्द्रार्कावित्यमावस्या अमावास्या वा[5] ।

**१०४१ अग्नौ परिचाय्योपचाय्यसमूह्याः ३ । १ १३१ ॥**

अग्नावेते साधवः[6] ।

**१०४२ क्रतौ कुण्डपाय्य-संचाय्यौ ३ । १ । १३० ॥**

**१०४३ चित्याग्निचित्ये च[8] ३ । १ । १३२ ॥**

चित्योऽग्निः । अग्नेश्चयनमग्निचित्या[9] । इति कृत्यप्रत्ययाः ।

## अथ कृत्प्रक्रिया (पूर्वकृदन्तम्) ॥

**१०४४ ण्वुल्तृचौ ३ । १ । १३३ ॥**

धातोरेतौ स्तः । कर्तरि कृदिति कर्त्रर्थे ।

१–कृञ ऋदन्तत्वात् नित्यं ण्यति प्राप्ते वृष्धातोरृदुपधत्वात् नित्यं क्यपि प्राप्ते च क्यप्—विकल्पोऽयम् । २–क्यप्प्रत्यये तुक् **कृत्यम्** । **वृष्यम्**, कित्वान्नोपधागुणः । ३–पक्षे ण्यत्, वृद्धिः, **कार्यम्** । **वर्ष्यम्** , उपधागुणः । ४–युज् धातोः क्यप् कुत्वं च निपात्यते, वाहनेऽर्थे । अन्यत्र ण्यत्प्रत्यये चजोरिति कुत्वम्, **योग्यम्** । ५–ओपपदाद् वसेरधिकरणे ण्यत्, वृद्धौ सत्यां पाक्षिको ह्रस्वश्च निपात्यते इत्यर्थः । ६–अग्नौ गम्ये परिचाय्य–उपचाय्य–समूह्या इत्येते निपात्यन्ते इत्यर्थः । परिपूर्वकादुपपूर्वकाच्च 'चि' धातोर्ण्यत्प्रत्यय आयादेशश्च निपात्यते **परिचाय्यः, उपचाय्यः** । समपूर्वकाद्वहधातोः कर्मणि ण्यत् सम्प्रसारणं दीर्घश्च निपात्यते, **समूह्यः** । ७–अग्नौ=अग्न्याधारस्थलविशेषे इत्यर्थः । ८–'चित्यः' अग्निचित्या, इति च अग्नौ निपात्येते । **चित्यः** कर्मणि ण्यत् तुक् च निपात्यते । ९–अग्निपूर्वकात् 'चि' धातोर्ण्यत्, तुक् च । स्त्रीत्वं लोकात् , **अग्निचित्या** इति कृत्यप्रत्ययाः ।

**१०४५ युवोरनाकौ ७ । १ । १ ॥**

यु वु एतयोरनुनासिकयोरेतौ स्तः । कारकः । कर्ता ।[1]

**१०४६ नन्दि-ग्रहि-पचादिभ्यो ल्युणिन्यचः ३ । १ । १३४ ॥**

नन्द्यादेर्ल्युर्ग्रह्यादेर्णिनिः पचादेरच्स्यात् । नन्दयतीति नन्दनः । जनार्दनः । लवणः ।[2] गणे निपातनाण्णत्वम् । ग्राही । स्थायी । मन्त्री ।[3] पचः ।[4] आकृतिगणोऽयम् ।

**१०४७ इगुपध-ज्ञा-प्री-किरः कः ३ । १ । १३५ ॥**

एभ्यः कः स्यात् । क्षिपः ।[5] बुधः । कृशः । ज्ञः ।[6] प्रियः ।[7] किरः ।[8]

**१०४८ आतश्चोपसर्गे ३ । १ । १३६ ॥**

प्रज्ञः ।[9][10] सुग्लः ।

**१०४९ पा-घ्रा-ध्मा-धेट्-दृशः शः ३ । १ । १३७ ॥**

एभ्यः शः स्यात् । पिबः ।[11] जिघ्रः । धमः । धयः । पश्यः ।

**१०५० अनुपसर्गाल्लिम्प-विन्द-धारि-पारि-वेद्युदेजि-चेति**

---

१—करोतीति **कारकः, कर्ता**, ण्वुल्प्रत्यये वृद्धिः, तृचि गुणः । २—ल्युप्रत्यये 'यु' इत्यस्य अनादेशः । जनमर्दयतीति जनार्दनः । लुनातीति लवणः । ३—ग्रह्धातोर्णिनि प्रत्यये—उपधावृद्धिः । **ग्राही**, स्थाधातोः णिनिः, 'आतो युक् चिण् कृतोः, इति युक्—**स्थायी** । ४—पच्धातोरच्, पचतीति **पचः** । ५—इगुपधोदाहरणम्—**क्षिपः** कित्वान्नोपधागुणः । एवं **बुधः कृशः** । ६—ज्ञाधातोः कप्रत्यये 'आतो लोप इटि च, इत्यालोपः । ७—प्रीञ् धातोः कप्रत्यये इयङ्—प्रीणातीति **प्रियः** । ८—कॄ विक्षेपे इत्यस्मात् कप्रत्ययः 'ॠत इद्धातो' रिति इत्वं रपरत्वम् । किरतीति **किरः** । ९—सोपसर्गात्—आदन्ताद् धातोः कप्रत्ययः स्यादित्यर्थः । १०—प्र-'ज्ञा' धातोः कप्रत्यये, 'आतो लोप' इत्यालोपे प्रजानातीति **प्रज्ञः** । सु-'ग्लै' धातोः कप्रत्यये, 'आदेच' इत्यात्वे, 'आतो लोप' इति लोपः । सुग्लायतीति **सुग्लः** । ११—पा पाने इत्यस्मात् शप्रत्यये तस्य शित्वेन सार्वधातुकत्वात्—'पाघ्राध्मा' इति पिबादेशः, शप्, पररूपम्, पिबतीति **पिबः** । एवं घ्राधातोर्जिघ्रतीति **जिघ्रः** । धमतीति **धमः** । धयतीति **धयः** । दृश् धातोः पश्यादेशे पश्यतीति **पश्यः** ।

**साति-साह्विभ्यश्च ३ । १ । १३८ ॥**

लिम्पः[1] । विन्दः । धारयः[3] । पारयः । वेदयः । उदेजयः । चेतयः[4] । सातयः । साहयः । अनुपसर्गात्किम् । प्रलिपः[5] । ( गवादिषु विन्देः संज्ञायाम्[6] ) । गोविन्दः[7] । अरविन्दम्[8] ।

**१०५१ ददाति-दधात्योर्विभाषा ३ । १ । १३९ ॥**

ददः[10] । दधः । पक्षे—वक्ष्यमाणो णः[11] ।

**१०५२ ज्वलिति-कसन्तेभ्यो णः[12] ३ । १ । १४० ॥**

वा स्यात् । ज्वालः[13] । ज्वलः । चालः । चलः ।

---

१—उपसर्गरहितेभ्यः सूत्रोक्तेभ्यो धातुभ्यः शप्रत्ययः स्यादित्यर्थः । २—लिप् उपदेहे इत्यस्मात् शप्रत्यये तस्य शित्वात्सार्वधातुकत्वेन 'तुदादिभ्यः शः' इति शपोऽपवादः शः, 'शे मुचादीनाम्' इति नुम्, लिम्पतीति **लिम्पः** । एवं विद्लृ लाभे, इत्यस्य विन्दतीति **विन्दः** । ३—धृञ् धातोर्णयन्ताद् 'धारि' इत्यस्मात् शप्रत्यये शप्, गुणः, अयादेशः, धारयतीति **धारयः** । एवं पारयतीति **पारयः** । वेदयतीति **वेदयः** । उदेजयतीति **उदेजयः** । ४—चिती संज्ञाने इत्यस्मात् णयन्तात्—शप्रत्यये, चेतयतीति **चेतयः** । एवं सातयतीति **सातयः** । ( सातिः सुखार्थः सौत्रो धातुः णयन्तात् तस्मात् शप्रत्यये रूपम् ) । सह मर्षणे इत्यस्य णयन्तस्य, साहयतीति **साहयः** । ५—प्रलिम्पतीति **प्रलिपः**, 'इगुपधज्ञाप्रीकिरः कः, इति कप्रत्ययः, शविकरणाऽभावान्न नुम् । ६—गवादिषूपपदेषु विन्देः शप्रत्ययो वाच्यः, सञ्ज्ञायामिति नियमः । ( 'कर्मण्यण्,इत्यस्यापवादोऽयम् ) । ७—गाः=उपनिषद्वाचो विन्दति प्रमाणतया इति **गोविन्दः**=साक्षात्परब्रह्मपरमात्मा भगवान् श्रीकृष्णः । ८-अराणि=चक्रेऽन्तरालप्रोतानि काष्ठानि, तत्सादृश्याद् दलान्यपि अराणि उच्यन्ते, तानि विन्दतीति—**अरविन्दम्**=कमलम् । ९—दाञ् धाञ् धातुभ्यां शप्रत्ययो वा स्यादित्यर्थः । १०—ददातीति **ददः**, दधातीति **दधः** । शः, शप् जुहोत्यादित्वात् शपः श्लुः, 'श्लौ' इति द्वित्वम्, 'आतो लोपः, इत्यालोपः । ११—'श्याद्व्यध····' इत्यादि सूत्रेणेति भावः । १२—ज्वलादिभ्यः कसन्तेभ्यो ण-प्रत्ययो वा स्यादित्यर्थः । १३—णप्रत्यये 'अत उपधायाः, इत्युपधावृद्धिः, ज्वलतीति **ज्वालः**, पक्षेऽच् प्रत्ययः **ज्वलः** । एवम्, चलतीति **चालः**, **चलः** ।

**१०५३ श्याद्व्यधास्रु-संस्र्वतीणवसाऽवह-लिह-श्लिष-श्वसश्च ३ । १ । १४१ ॥**

अवश्यायः । आत्-दायः । धायः । व्याधः । आस्रावः । अत्यायः । अवसायः । अवहारः । लेहः । श्लेषः । श्वासः ।

**१०५४ विभाषा ग्रहः ३ । १ । १४३ ॥**

व्यवस्थितविभाषेयम् । तेन जलचरे ग्राहः । ज्योतिषि ग्रहः ।

**१०५५ गेहे कः ३ । १ । १४४ ॥**

गृह्णाति धान्यादिकिमिति गृहम् ।

**१०५६ शिल्पिनि ष्वुन् ३ । १ । १४५ ॥**

क्रियाकौशलं=शिल्पम् । तद्वत्कर्तरि ष्वुन् स्यात् ।

**१०५७ षः प्रत्ययस्य १ । ३ । ६ ॥**

१-श्या-आत्-व्याध-आस्रु-संस्रु-अतीण्-अवसा अवहृ-लिह्-श्लिष-श्वसेत्येकादशभ्योऽनुपसर्गेभ्यो धातुभ्यो नित्यं णप्रत्ययः स्यादित्यर्थः । २-अव-श्यैङ्, इत्यस्मात् णप्रत्यये 'आदेच' इत्यात्वे, आतो युक्, इति युगागमे **अवश्यायः**=नीहारः, ( ओस ) । ३-आदन्तोदाहरणे-ददातीति **दायः**, दधातीति **धायः**, दाधाधातुभ्यां णप्रत्यये युक् । विध्यति -इति **व्याधः**, णप्रत्यये उपधावृद्धिः आस्रवतीत्या**स्रावः**, 'अचो ञ्णिति, वृद्धिः । एवमग्रेऽपि । ४-ग्रह् धातोर्णप्रत्ययो वा स्यादित्यर्थः सूत्रस्य । इयं च **व्यवस्थितविभाषा**, अयमर्थः-विशेषे=क्वचित् क्वचित् प्रयोगे, अवस्थितौ=अत्र विधिरेव अत्र निषेध एवेत्येवं रूपेण नियमितौ विधिनिषेधौ यस्याः सा व्यवस्थिता सा चासौ विभाषा=व्यवस्थितविभाषा । **यद्वा** व्यवस्था ( अत्र विधिरेव अत्र निषेध एवेत्येवं रूपा ) सञ्जाता अस्या इति व्यवस्थिता, सा चाऽसाविति पूर्ववत् । तेन जलचरे=मत्स्यादौ वाच्ये णप्रत्यये उपधावृद्धौ **ग्राह** इत्येव भवति । ज्योतिषि सूर्यचन्द्रादौ वाच्येऽच् प्रत्यये **ग्रह** इत्येव भवतीति । ५-गेहे कर्तरि ग्रह्धातो कप्रत्ययः स्यादित्यर्थः । "विभाषा ग्रहः" इत्यस्यापवादोऽयम् । ६-ग्रह् धातोः कप्रत्यये, ग्रहिज्येति सम्प्रसारणम्—**गृहम्** । गृहशब्दोऽर्धर्चादित्वादुभयलिङ्गः, किन्तु पुंल्लिङ्गे बहुवचनान्त एव प्रयुज्यते, अत एव 'गृहाः पुंभूम्नि' इत्यमरकोशे उक्तम् ।

आदिरित् । (नृति-खनि-रञ्जिभ्य एव) । नर्तकः[1] । खनकः । (असिध्वकेऽने च रञ्जेर्नलोपो वाच्यः) । रजकः[2] ।

**१०५८ गः स्थकन् ३ । १ । १४६ ॥**

गायतेस्थकन् । गाथकः[3] ।

**१०५९ ण्युट् च ३ । १ । १४७ ॥**

गायनः[4] ।

**१०६० प्रु-सृ-ल्वः समभिहारे वुन् ३ । १ । १४९ ॥**

समभिहारग्रहणेन साधुकारित्वं लक्ष्यते । प्रवकः[5] । सरकः । लवकः ।

**१०६१ आशिषि च ३ । १ । १५० ॥**

वुन् स्यात् । जीवतात्—जीवकः[6] ।

**१०६२ तत्रोपपदं सप्तमीस्थम् ३ । १ । ९२ ॥**

सप्तम्यन्ते पदे कर्मणीत्यादौ वाच्यत्वेन स्थितं यत् कुम्भादि तद्वाचकं पदमुपपदसंज्ञं स्यात्[7] ।

**१०६३ कर्मण्यण् ३ । २ । १ ॥**

कर्मण्युपपदे धातोरण् । कुम्भं करोतीति कुम्भकारः[8] ।

१—नृत्यतीति **नर्तकः**, खनतीति **खनकः**, 'वु' इत्यस्य 'युवोरनाकौ' इति अकादेशः । षित्वात् स्त्रियां 'षिद्गौरादिभ्यः' इति ङीष् नर्तकी, खनकी । २—स्त्रियां षित्वात् ङीष् रजकी । ३—गैधातोः थकन्, गायतीति **गाथकः** 'आदेच' इत्यात्वम् । ४—ण्युट् इत्यस्य 'युः' तस्यानादेशः, 'युवोरनाकौ' इत्यनेन । आयादेशे **गायनः** । टित्वात् स्त्रियां टिड्ढाणञिति ङीप् गायनी । ५—साधु प्रवते=गच्छति—इति **प्रवकः**, वुन्,' 'वु' इत्यस्य अकः, गुणः, अवादेशः । एवं साधु सरतीति **सरकः** (सृ+वुञ्) । साधु लुनातीति **लवकः** (लू+वुन्) । ६—आशीर्विषयार्थवृत्तेर्धातोर्वुन् स्यात्कर्तरि । आशीः=आशासनम्, अयमित्थं भूयादिति प्रार्थनारूपमिति । तथा—जीवतादिति **जीवकः**, नन्दतादिति **नन्दकः**, आशासितुः पित्रादेरियमुक्तिः । ७—'उपपदमतिङ्' इति समासः—उपपदसञ्ज्ञायाः फलम् । ८—कुम्भं करोतीति लौकिकविग्रहः । अलौकिकविग्रहस्तु कुम्भ+अस् कार इति । सुबुत्पत्तेः प्रागेव कारशब्देन समासः, **कुम्भकारः** ।

**१०६४ आतोऽनुपसर्गे कः ३ । २ । ३ ॥**

कर्मण्युपपदे आदन्ताद्धातोरनुपसर्गात्कः स्यान्नाऽण् । अणोपवादः । गोदः[1] । कम्बलदः । अनुपसर्गे किम् । गोसंदायः[2] । ( मूलविभुजादिभ्यः कः ) । मूलानि विभुजतीति मूलविभुजो[3] रथः । आकृतिगणोऽयम् । महीध्रः[4] । कुध्रः ।

**१०६५ सुपि स्थः ३ । २ । ४ ।**

कः स्यात्[5] । समस्थः[6] । विषमस्थः । सुपीति योगविभागादन्यस्मादपि । द्वाभ्यां पिबति इति द्विपः[7] ।

**१०६६ अम्बाम्ब-गो-भूमि-सव्याप-द्वि-त्रि-कुशे-कु-शं-कङ्गु-मञ्जि-पुञ्जि-परमे-बर्हिर्दिव्यग्निभ्यः स्थः ८ । ३ । ९७ ॥**

एभ्यः स्थस्य सस्य षः स्यात्[8] । द्विष्ठः । त्रिष्ठः ।

**१०६७ तुन्दशोकयोः परिमृजापनुदोः ३ । २ । ५ ॥**

तुन्दशोकयोः कर्मणोरुपपदयोराभ्यां[9] कः । ( आलस्यसुखाहरणयोरिति[10]

---

१—गां ददातीति **गोदः**, कम्बलं ददातीति **कम्बलदः**, अणि प्राप्ते तदपवादः कप्रत्ययः, 'आतो लोप' इत्यालोपः । २—गां संददातीति **गोसन्दायः**, उपसर्गपूर्वकत्वान्न कप्रत्ययः किन्तु 'कर्मण्यणि'ति अण् , 'आतो युक्' इति युगागमः । ३—कित्त्वात् 'पुगन्ते,ति—उपधागुणो न । विभुजति= विमर्दयति, विपूर्वकाद् भुजो कौटिल्ये इत्यस्मात् कप्रत्ययः, इहोपसर्गवशान्म र्दनमर्थः । ४—महीं धरतीति—**महीध्रः**, कुं=पृथ्वीं धरतीति **कुध्रः** कप्रत्ययः, कित्त्वान्न गुणः, ऋकारस्य 'इको यणि' ति यण् रेफः । ५—सुप्युपपदे स्थाधातोः कप्रत्ययः स्यादित्यर्थः । अत्र सूत्रे 'सुपि' इति योगो विभज्यते तेन सुप्युपपदे अन्यस्मादप्यादन्तात् कप्रत्ययो भवति, तेन द्वाभ्यां पिबतीति द्विप इत्यादिरपि सिद्ध्यति । ६—समे तिष्ठतीति **समस्थः**, कप्रत्यये 'आतो लोप, इत्यालोपः । एवं विषमस्थः । ७—पाधातोः कः, आलोपः, द्वाभ्याम् =मुखेन शुण्डादण्डेन च पिबतीति **द्विपः**=हस्ती । ८—स्थाधातोः सकारस्येत्यर्थः । **द्विष्ठः** इत्याद्युदाहरणानि । कप्रत्यये, आतो लोपः । ९—परिमृजापनुदोरिति पञ्चम्यर्थे षष्ठीति भावः । १०—पूर्वसूत्रोक्तम् आलस्ये सुखाहरणे च गम्ये स्यादिति वक्तव्यमित्यर्थः ।

वक्तव्यम् ) । तुन्दपरिमृजोऽलसः । शोकापनुदः=सुखस्याहर्ता

**१०६८ प्रे दाज्ञः ३ । २ । ६ ॥**

कः स्यात् । सर्वप्रदः । पथिप्रज्ञः

**१०६९ समि ख्यः ३ । २ । ७ ॥**

गोसंख्यः ।

**१०७० गापोष्टक् ३ । २ । ८ ॥**

कर्मण्युपपदे । सामगः । ( पिबतेः सुराशीध्वोरिति वाच्यम् ) । सुरापी । शीधुपी ।

**१०७१ हरतेरनुद्यमनेऽच् ३ । २ । ९ ॥**

अंशहरः । अनुद्यमने किम् । भारहारः । ( शक्तिलाङ्गलाङ्कुश-तोमर-

१-तुन्दम्=उदरं परिमार्ष्टि-इति **तुन्दपरिमृजः**=अलसः । कित्त्वाद् गुणवृद्धी न भवतः । ( अत्र 'मृजेरजादौ, इति पाक्षिकवृद्धिर्न भवति व्यवस्थितविभाषाश्रयणादित्याहुः ) । शोकम् अपनुदति-इति **शोकापनुदः**=सुखस्याहर्ता, कित्त्वान्नोपधागुणः । अन्यत्र तुन्दपरिमार्जः, शोकापनोदः, कर्मण्यण् । २-प्रपूर्वकाद् दाधातोर्ज्ञाधातोश्च कर्मण्युपपदे कप्रत्ययः स्यादित्यर्थः, अणोऽपवादोयम् । ३-सर्वं प्रददातीति **सर्वप्रदः** । ४-पन्थानं प्रजानाति-इति-**पथिप्रज्ञः** । कप्रत्यये 'आतो लोपः, । ५-गाः सञ्चष्टे-**गोसङ्ख्यः**, सम्पूर्वकात् चक्षिङः ख्याञादेशे रूपम्, कप्रत्यये 'आतो लोपः' । ६-गै शब्दे पा पाने, इत्याभ्यां कर्मण्युपपदे टक् स्यादित्यर्थः । ७-सामानि गायतीति **सामगः** । टक् प्रत्यये आतो लोपः, स्त्रियां टित्त्वात् ङीप् सामगी । ८-पाधातोः सुरा शीध्वोरुपपदयोः टक् स्यादित्यर्थः । ९-पुँल्लिङ्गे सुराप इत्यादिप्रयोगस्य 'आतोऽनुपसर्गे कः, इति कप्रत्ययेऽपीष्टस्य सिद्धेः सत्वात् स्त्रीत्वे विशेषताज्ञापनार्थमुदाहरति—**सुरापी शीधुपी** (स्त्री) टित्त्वात् टिड्ढेति ङीप् । कप्रत्ययान्तस्य तु टापि 'सुरापा, इति स्यात् । १०-अनुद्यमने विद्यमानात्कर्मण्युपपदे हृञ्धातोः-अच् प्रत्ययः स्यादित्यर्थः । उद्यमनम्=उद्ग्रहणम्, उत्थापनम् इति । ११-अंशं हरति-इति **अंशहरः**=भागस्याऽऽदाता ।

यष्टि-घट-घटी-धनुष्षु ग्रहः ) । शक्तिग्रहः ।

**१०७२ वयसि च ३ । २ । १० ॥**

उद्यमनार्थं सूत्रम् । कवचहरः=कुमारः ।

**१०७३ आङि ताच्छील्ये ३ । २ । ११ ॥**

पुष्पाण्याहरति तच्छीलः, पुष्पाहरः ।

**१०७४ अर्हः ३ । २ । १२ ॥**

अर्हतेरच्स्यात् कर्मण्युपपदे । पूजार्हा ब्राह्मणी ।

**१०७५ स्तम्बकर्णयोरमिजपोः ३ । २ । १३ ॥**

(हस्तिसूचकयोरिति वक्तव्यम्) । स्तम्बेरमो=हस्ती । कर्णेजपः=सूचकः ।

**१०७६ अधिकरणे शेतेः ३ । २ । १५ ॥**

खे शेते खशयः । ( पार्श्वादिषूपसंख्यानम् ) । पार्श्वाभ्यां शेते पार्श्व-

---

१-शक्त्यादिषूपपदेषु ग्रहधातोरच् प्रत्ययः स्यादिति वक्तव्यमित्यर्थः । अत्र वार्तिके घटग्रहणेनैव सिद्धे पुनर्घटीशब्दस्य पृथग्ग्रहणं लिङ्गविशिष्ट-परिभाषाया अनित्यत्वज्ञापनार्थम् । **शक्तिग्रहः**; इत्यादि, अच् प्रत्ययस्य कित्त्वाऽभावान्न सम्प्रसारणम् । २-कर्मण्युपपदे वयसि गम्ये हृञ् धातोरच् प्रत्ययः स्यादित्यर्थः । अनुद्यमने 'हरतेरनुद्यमने, इत्यनेनैव सिद्धे-उद्यमनार्थं सूत्रमिदम् । **कवचहरः**—कवचं हरतीति विग्रहः, अत्र कवचधारणयोग्य-त्वेन कुमारावस्था गम्यते । ३-आङ्पूर्वाद् हरतेः कर्मण्युपपदेऽच्प्रत्ययः स्यात् ताच्छील्ये गम्ये । ताच्छील्यं=तत्स्वभावता । ४-पूजाम् अर्हतीति **पूजार्हा** ब्राह्मणी । अच् प्रत्यये स्त्रियां टाप् । अणोऽपवादोऽयम् । अण् प्रत्यये तु सति टिड्ढाणञिति स्त्रियां ङीपि 'पूजार्ही, इति स्यात् । (तन्निवृत्तये ऽच्प्रत्ययविधिः ) । ५-स्तम्बपूर्वकाद् 'रम, धातोः कर्णपूर्वकाद् 'जप, धातोश्च हस्तिसूचकयोरर्थयोरच् प्रत्ययः स्यादित्यर्थः । ६-स्तम्बे=दर्भा-दितृणनिचये रमते=क्रीडति, **स्तम्बेरमो**=हस्ती । 'तत्पुरुषे कृति बहुल, मिति सप्तम्याः ( ङेः ) अलुक् । ७-कर्णे जपति-इति **कर्णेजपः**=सूचकः पिशुन इति यावत् अत्रापि पूर्ववत् ङेरलुक् । ८-सुबन्तेऽधिकरणवाचिन्यु-पपदे शीङ्धातोरच् प्रत्ययः स्यादित्यर्थः । खे शेते—**खशयः**, गुणायादेशौ । ९-अच् प्रत्ययस्येति शेषः । पृष्ठेन शेते **पृष्ठशयः** । उदरेण शेते-**उदरशयः** ।

शयः । पृष्ठशयः । उदरशयः ।

**१०७७ चरेष्टः ३ । २ । १६ ॥**

अधिकरणे उपपदे । कुरुचरः[1] ।

**१०७८ भिक्षा-सेनादायेषु च[2] ३ । २ । १७ ॥**

भिक्षाचरः । सेनाचरः । आदायेति ल्यबन्तम् । आदायचरः ।

**१०७९ कृञो हेतु-ताच्छील्यानुलोम्येषु ३ । २ । २० ॥**

एषु द्योत्येषु कृञष्टः ।

**१०८० अतः कृ-कमि-कंस-कुम्भ-पात्र-कुशा-कर्णीष्वनव्ययस्य ८ । ३ । ४६ ॥**

अत उत्तरस्याऽनव्ययविसर्गस्य समासे नित्यं सादेशः करोत्यादिषु । यशस्करी[3] विद्या । श्राद्धकरः । वचनकरः ।

**१०८१ दिवा-विभा-निशा-प्रभा-भास्कारान्तानन्तादि बहु-नान्दी-किं-लिपि-लिबि-बलि-भक्ति-कर्तृ-चित्र-क्षेत्र-संख्या-जङ्घा-बाह्वहर्यत्तद्धनुररुष्षु ३ । २ । २१ ॥**

एषु कृञष्टोऽहेत्वादावपि । दिवाकरः । विभाकरः । निशाकरः । कस्कादित्वात्[4]सः-भास्करः । बहुकरः । एककरः । द्विकरः । अहस्करः[5] । धनुष्करः[6] । अरुष्करः ।

१-कुरुषु=तदाख्यदेशे चरति=अटतीति **कुरुचरः**, स्त्रियां टित्वात् ङीप् कुरुचरी । २-एषूपपदेषु चरेष्ट इत्यर्थः । भिक्षां चरति=अर्जयति-**भिक्षाचरः** । सेनायां चरतीति-**सेनाचरः** । **आदायचरः**=लब्धं द्रव्यं गृहीत्वा चरतीत्यर्थः । ३-यशः करोतीति-**यशस्करी** विद्या, विद्यायशोहेतुरित्यर्थे टप्रत्यये 'सार्वधातुके'ति गुणः, स्त्रियां टित्त्वात् ङीप् । श्राद्धं करोति तच्छीलः **श्राद्धकरः** । वचनं करोति **वचनकरः**=गुर्वादिवचनानुवर्ती, आनुलोम्योदाहरणमिदम् । ४-भास्करशब्दस्य कस्कादिगणपठितत्वात् "कस्कादिषु च" इति सूत्रेण विसर्गस्य सत्वमित्यर्थः । भासं करोतीति **भास्करः**=सूर्यः । ५-अहः करोति **अहस्करः** अहन्निति रुत्वम्, कस्कादित्वात् विसर्गस्य सत्वम् । ६-धनुः करोति **धनुष्करः**, "नित्यं समासेऽनुत्तरपदस्थस्य" इति विसर्गस्य षत्वम्, एवम् **अरुष्कर** इत्यत्रापि ।

**१०८२ न शब्द-श्लोक-कलह-गाथा-वैर-चाटु-सूत्र-मन्त्र-पदेषु ३ । २ । २३ ॥**[1]

एषु कृञष्टो न । शब्दकारः ।

**१०८३ स्तम्बशकृतोरिन् ३ । २ । २४ ॥**[2]

( व्रीहिवत्सयोरिति वक्तव्यम् ) । स्तम्बकरिर्व्रीहिः[3] । शकृत्करिर्वत्सः[4] ।

**१०८४ हरतेर्दृतिनाथयोः पशौ ३ । २ । २५ ॥**[5]

दृतिहरिः । नाथं=नासारज्जुं हरतीति नाथहरिः=पशुः ।

**१०८५ फलेग्रहिरात्मम्भरिश्च ३ । २ । २६ ॥**[6]

एतौ निपात्येते । चात्कुक्षिम्भरिः । चान्द्रास्तु आत्मोदरकुक्षिष्विति पेठुः । 'ज्योत्स्नाकरम्भमुदरम्भरयश्चकोराः' इति मुरारिः[7] ।

**१०८६ एजेः खश् ३ । २ । २८ ॥**[8]

ण्यन्तात् ।

**१०८७ अरुर्द्विषदजन्तस्य मुम् ६ । ३ । ६७ ॥**

अरुषो द्विषतोऽजन्तस्य मुम् खिदन्ते नत्वव्ययस्य । शित्वाच्छबादि[9] । जनमेजयतीति जनमेजयः[10] । ( वात-शुनी-तिल-शर्द्धेष्वज-धेट्-तुद-जहातिभ्यः

---

१-हेत्वादिषु प्राप्तष्टो निषिध्यते सूत्रेणाऽनेन । टप्रत्ययनिषेधादण् भविष्यति । **शब्दकारः** इत्यादि । २-स्तम्बे शकृति च कर्मण्युपपदे कृञ्धातोः इन् प्रत्ययः स्यादित्यर्थः । नकार इत्संज्ञकः । तत्र वार्तिकार्थसहकारेण व्रीहौ वत्से एव वाच्ये स्यादिति । ३-स्तम्बम्=तृणनिचयं करोति, **स्तम्बकरिः** व्रीहिः, गुणः, रपरत्वम् । ४-शकृत्=मलं करोति **शकृत्करिः**=वत्सः, । ५-दृतिनाथयोरुपपदयोर्हृञ इन् स्यात् पशौ कर्तरि । दृतिम्=चर्मभस्त्रिकां हरति दृतिहरिः । एवं **नाथहरिः** । ६-फलानि गृह्णाति—**फलेग्रहिः**, उपपदस्य एदन्तत्वम् इन्प्रत्ययश्च निपात्यते । आत्मानं बिभर्ति—**आत्मम्भरिः**, आत्मनो मुगागमो भृञ इन्प्रत्ययश्च निपात्यते । ७-अनर्घराघवनाटके मुरारिकविरित्यर्थः । ८-ण्यन्तादेजेः खश् स्यादित्यर्थः । ९-'तिङ्शित्सार्वधातुकमिति सार्वधातुकत्वे 'कर्तरि शप्, इति शप्, गुणः, अय्—इत्यर्थः । १०-तन्नामा नृपतिविशेषः ।

खश्)। वातमजा मृगाः।

१०८८ खित्यनव्ययस्य ६ । ३ । ६६ ॥

ह्रस्वः । शुनिन्धयः । तिलन्तुदः । शर्द्धञ्जहा माषाः ।

१०८९ नासिकास्तनयोर्ध्माधेटोः ३ । २ । २९ ॥

( स्तने धेटो नासिकायां ध्मश्चेति वक्तव्यम् ) । स्तनन्धयः । टित्त्वा-त्स्तनन्धयी ।

१०९० नाडीमुष्टयोश्च ३ । २ । ३० ॥

ध्माधेटोः खश् । नाडिन्धमः । नाडिन्धयः । मुष्टिन्धमः । मुष्टिन्धयः ।

१०९१ उदि कूले रुजिवहोः ३ । २ । ३१ ॥

कूलमुद्रुजः । कूलमुद्वहः ।

१०९२ वहाभ्रे लिहः ३ । २ । ३२ ॥

वहः=स्कन्धः तं लेढीति वहंलिहो गौः । अभ्रंलिहो=वायुः ।

१०९३ परिमाणे पचः ३ । ३ । ३३ ॥

प्रस्थम्पचा स्थाली । खारिम्पचः कटाहः ।

१०९४ मितनखे च ३ । ३ । ३४ ॥

---

१-वातम् अजन्ति=क्षिपन्ति, इति **वातमजाः**, सुपो लुकि मुम् । २-खिदन्ते परे पूर्वपदस्य ह्रस्वः, न त्वव्ययस्येत्यर्थः । ३-शुनीं धयति **शुनिन्धयः**, ह्रस्वे मुम् । तिलानि तुदति इति **तिलन्तुदः**, शर्द्धम्=अपानशब्दं जहति **शर्द्धञ्जहाः**, अन्तर्भावितण्यर्थोऽयम् । ४-धेट् धातोः टित्त्वस्याऽवयवेऽचरितार्थत्वेन 'टिड्ढे,ति ङीपि **स्तनन्धयी** । ५-उत्पूर्वाभ्यां रुजिवहिभ्यां कूले कर्मण्युपपदे खश् स्यादित्यर्थः, **कूलमुद्रुजः** सुपो लुकि मुम् । एवं **कूलमुद्वहः** । ६-वहे अभ्रे च कर्मण्युपपदे लिह् धातोः खश् स्यादित्यर्थः । **वहंलिहः**, अदादित्वाच्छपो लुक् । खशः शित्वेन सार्वधातुकत्वात् 'सार्वधातुकमपित्, इति ङित्त्वात् नोपधागुणः । ७-एवम् **अभ्रंलिहः** । अभ्रं लेढीति विग्रहः । ८-परिमाणे कर्मण्युपपदे पचेः खश् इत्यर्थः । ९-प्रस्थं पचति—**प्रस्थम्पचा** । खश् मुम् । **खारिम्पचः**, खश् , मुम् , खारीं पचतीति विग्रहः, खित्यनव्ययस्येति ह्रस्वः । १०-मिते नखे च कर्मण्युपपदे पचेः खश् इत्यर्थः । नखानि पचति=तापयति **नखम्पचा**, पचिरत्र तापवाची ।

मितम्पचा ब्राह्मणी । नखम्पचा यवागूः ।

**१०९५ विध्वरुषोस्तुदः ३ । २ । ३५ ॥**

विधुन्तुदः । अरुन्तुदः ।

**१०९६ असूर्यललाटयोर्दृशितपोः ३ । २ । ३६ ॥**

असूर्यमित्यसमर्थसमासः । दृशिना नञः सम्बन्धात् । असूर्यम्पश्या राजदाराः । ललाटन्तपः सूर्यः ।

**१०९७ प्रियवशे वदः खच् ३ । २ । ३८ ॥**

प्रियंवदः । वशंवदः । (गमेः सुपि वाच्यः) मितङ्गमो हस्ती । (विहायसो विह च, खच्च डिद्वा वाच्यः) । विहङ्गमः । विहङ्गः । भुजङ्गमः । भुजङ्गः ।

**१०९८ द्विषत्परयोस्तापेः ३ । २ । ३९ ॥**

खच् ।

---

१–विधु; अरुस् अनयोः कर्मणोरुपपदयोः तुदः खश् स्यादित्यर्थः । २–विधुं=चन्द्रं तुदति=पीडयति **विधुन्तुदः**=राहुः । अरुर्मर्म तुदति–**अरुन्तुदः**=मर्मवेधी । 'अरुस्' शब्दे सकारात्पूर्वम् उकारात् परतो मुमि कृते सकारस्य संयोगान्तत्वेन लोपः । ३–असूर्ये ललाटे च कर्मण्युपपदे दृशेः तपेश्च खश् इत्यर्थः । असूर्यम्पश्या इत्युदाहरणे असूर्यमित्यसमर्थसमासः, सूर्येण नञः सम्बन्धाभावात् । सूर्यं न पश्यन्तीत्यर्थे नञो दृशिनाऽन्वितत्वेन सूर्यशब्देनाऽन्वयाभावादित्यर्थः । ४–खश् प्रत्यये शपि पश्यादेशः, मुम् । **ललाटन्तपः** सूर्यः, सूर्यं पश्यतो ललाटस्याऽवश्यतापात् । ५–प्रिये वशे च कर्मण्युपपदे वद् धातोः खच् इत्यर्थः । खशि प्रकृते खच् विधिरुत्तरार्थः । ६–प्रियं वदति, वशं वदति–इति विग्रहो । ७–सुबन्ते कर्मण्युपपदे गमेः खच् । असञ्ज्ञार्थमिदम् । ८–मितं गच्छति—मितङ्गमः । ९–(आकाशवाचिनि) 'विहायस्' शब्दे उपपदे गमेः खच्, विहायस् शब्दस्य विहादेशः स खच् प्रत्ययो वा डिद् वाच्यः डित्वादभस्यापि टेर्लोपः–**विहङ्गः** । डित्त्वाऽभावपक्षे **विहङ्गमः**=पक्षी । विहायसा गच्छतीति विग्रहः । १०–भुजैर्गच्छतीति **भुजङ्गः**, **भुजङ्गमः**=सर्पः । गमेः सुपीति खच्, खच्च डिद्वेति डित्वविकल्पः । ११–द्विषति परे च कर्मण्युपपदे तापेः खच् ।

**१०९९ खचि ह्रस्वः ६ । ४ । ९४ ॥**

खचि परे णौ उपधाया ह्रस्वः । द्विषन्तं परं वा तापयति द्विषन्तपः[1], परन्तपः ।

**११०० वाचि यमो व्रते ३ । २ । ४० ॥**

खच्[2] ।

**११०१ वाचंयम-पुरन्दरौ च ६ । ३ । ६९ ॥**

वाक्पुरोरमन्तत्वं निपात्यते[3] । वाचंयमो=मौनव्रती । व्रते किम् । अशक्त्यादिना वाचं यच्छतीति वाग्यामः[4] ।

**११०२ पूःसर्वयोर्दारिसहोः ३ । २ । ४१ ॥**

खच्[5] । पुरं दारयतीति पुरन्दरः[6] । सर्वंसहः । कथं तर्हि भगं दारयतीति भगन्दरः[7] ? बाहुलकात्[8] ।

**११०३ सर्व-कूलाभ्र-करीषेषु कषः ३ । २ । ४२ ॥**

सर्वंकषः[9]=खलः । कूलंकषा=नदी । अभ्रंकषो=वायुः । करीषंकषा=वात्या ।

**११०४ मेघर्तिभयेषु[10] कृञः ३ । २ । ४३ ॥**

मेघंकरः । ऋतिंकरः । भयंकरः । भय[11]शब्देन तदन्तविधिः । अभयंकरः

---

१–द्विषत् तापि+अ, इति स्थिते, 'खचि ह्रस्वः इति उपधाह्रस्वे मुमि संयोगान्तलोपे, **द्विषन्तपः**, एवं **परन्तपः** । २–वाक् शब्दे उपपदे व्रते गम्ये यमेः खच् स्यादित्यर्थः । ३–वाचं यच्छति पुरं दारयति, इति विग्रहे यमेर्दारेश्च खच् । सुपो लुकि वाच्-यम, पुर्-यम, इति स्थिते वाक्पुरोरमन्तत्वं निपात्यते, इत्यर्थः । ४–कर्मण्यण् 'अत उपधायाः' वृद्धिः । ५–पुर् शब्दे सर्वशब्दे च कर्मवाचिन्युपपदे दारेः सहेश्च खच् स्यादित्यर्थः । ६–दारेः खच् प्रत्यये णिलोपे 'खचि ह्रस्व, इत्युपधाह्रस्वे, सुपो लुकि 'वाचंयमे, ति निपातनादमन्तत्वं निपात्यते **पुरन्दरः**=इन्द्रः । सर्वं सहते **सर्वसहः** । ७–भगन्दरो=रोगविशेषः । ८–बाहुलकादप्राप्तोऽपि खच् भवतीत्यर्थः । कृत्यल्युटो बहुलमित्यत्र बहुलमिति योगं विभज्य कृन्मात्रस्योपाधिव्यभिचारादिति भावः । ९–एषूपपदेषु कषधातोः खच् प्रत्यय इत्यर्थः । १०–एषूपपदेषु कृञः खच् इत्यर्थः । ११–भयशब्दान्त उपपदेऽपि भवतीत्यर्थः । ' समासप्रत्ययविधौ प्रतिषेधः, इति तदन्तविधेरप्राप्तौ वाचनिकोऽयमत्र तदन्तविधिरिति भाष्यम् ।

**११०५ क्षेम-प्रिय-मद्रेऽण् च ३ । २ । ४४ ॥**

एषु कृञोऽण् चात्खच् । क्षेमङ्करः, क्षेमकारः[1] । प्रियङ्करः, प्रियकारः । मद्रङ्करः, मद्रकारः । कथं तर्हि अल्पारम्भाः क्षेमकराः[2] इति । कर्मणः[3] शेषत्व-विवक्षायां पचाद्यच् । एवं गङ्गाधर[4]-भूधरादयः ।

**११०६ आशिते[5] भुवः करणभावयोः ३ । २ । ४५ ॥**

खच् । आशितो[6] भवत्यनेन—आशितम्भव ओदनः । आशितस्य भवनम् आशितम्भवः ।

**११०७ संज्ञायां भृ-तॄ-वृ-जि-धारि-सहि-तपि-दमः ३ । २ । ४६ ॥**

खच् । विश्वं बिभर्तीति विश्वम्भरः । रथन्तरं[7]=साम । शत्रुञ्जयो=हस्ती । युगन्धरः=पर्वतः । शत्रुसहः । शत्रुन्तपः । अरिन्दमः ।

**११०८ गमश्च[8] ३ । २ । ४७ ॥**

सुतङ्गमः ।

**११०९ अन्तात्यन्ताध्व-दूर-पार-सर्वानन्तेषु डः[9] ३ । २ । ४८ ॥**

गमेः । अन्तगः । ( सर्वत्र-पन्नयोरिति वाच्यम् ) सर्वत्रगः । पन्नं=पतितं गच्छतीति पन्नगः । ( उरसो[10] लोपश्च ) उरसा गच्छतीत्युरगः[11] ।

---

१-खचोऽभावपक्षे कर्मण्यण्, वृद्धिः क्षेमकारः । २-कथं तर्हि-"अल्पारम्भाः क्षेमकराः" इति चेत्, कर्मणः शेषत्वविवक्षायां पचाद्यच् क्षेमकरः । ३-तथाच कर्मोपपदाऽभावात् अणोऽभावेऽच् प्रत्ययः । ४-धरतीति धरः, गङ्गाया धर इत्यादिविग्रहाः । ५-आशितशब्दे उपपदे करणे भावे चार्थे भूधातोः खच् स्यादित्यर्थः । ६-पुरुष इति शेषः, यावता ओदनेन आतिथ्यादिभिर्भोजितो भवति स ओदन **आशितम्भव** उच्यते, करणे प्रत्ययः । भावे प्रत्यये आशितस्य भवनमिति विग्रहः । ७-सामविशेषस्य सञ्ज्ञेयम् । रथेन तरतीति व्युत्पत्तिमात्रम्, नत्ववयवार्थोऽनुगमः । ८-सञ्ज्ञायां खच् इति शेषः । सुतं गच्छति इति विग्रहः । ९-एषूपपदेषु गमेर्डः स्यादित्यर्थः । डित्त्वाट्टिलोपः, **अन्तगः** अन्तं गच्छति-इति विग्रहः, एवम् अत्यन्तगः अध्वगः इत्यादि । १०-उरस्, शब्दे उपपदे गमेर्डः 'उरस्, शब्दान्त्यस्य ( सस्य ) लोपश्चेति वक्तव्यमित्यर्थः । ११-डित्त्वाट्टिलोपे उरगः =सर्पः ।

( सुदुरोरधिकरणे[1] ) । सुखेन गच्छन्त्यत्र, सुगः । दुर्गः[2] । ( अन्यत्रापि[3] दृश्यत इति वाच्यम् ) । ग्रामगः[4] । ( डे च विहायसो विहादेशो वाच्यः ) विहगः[5] ।

**१११० आशिषि हनः[6] ३ । २ । ४६ ॥**

शत्रुं वध्यात् शत्रुहः । आशिषि किम्—शत्रुघातः[7] । ( दारावाहनोऽणन्तस्य च टः संज्ञायाम् । ) दारुशब्दे उपपदे आङ्पूर्वाद्धन्तेरण् टकारश्चान्तादेशो वक्तव्य इत्यर्थः । दार्वाघाटः[8] । ( चारौ वा ) चार्वाघाटः । चार्वाघातः[9] ।

**११११ अपे क्लेशतमसोः ३ । २ । ५० ॥**

अपपूर्वाद्धन्तेर्डः । अनाशीरर्थमिदम्[10] । क्लेशापहः[11] पुत्रः । तमोऽपहः सूर्यः ।

**१११२ कुमार-शीर्षयोर्णिनिः[12] ३ । २ । ५१ ॥**

कुमारघाती[13] । शिरसः शीर्षभावो निपात्यते । शीर्षघाती ।

**१११३ लक्षणे जायापत्योष्टक् ३ । २ । ५२ ॥**

---

१—सु—दुर् इत्येतयोरुपपदयोः गमेर्डः स्यादधिकरणे वाच्ये । २—दुःखेन गम्यतेऽत्र **दुर्गः** । ३—अन्येष्वप्युपपदेषु—अन्येभ्योऽपि धातुभ्यो डप्रत्ययो दृश्यते इत्यर्थः । ४—ग्रामं गच्छति—**ग्रामगः** डित्वाट्टिलोपः । ५—विहायसा गच्छति-**विहगः** । ६—कर्मण्युपपदे हन्तेर्डः स्यादाशिषि गम्यायामित्यर्थः । **शत्रुहः** । डित्वाट्टिलोपः । ७—शत्रुं हन्ति—**शत्रुघातः** आशीर्वादाऽभावेन डो न किन्तु 'कर्मण्यण्, इत्यण्, 'हो हन्ते, रिति हस्य घत्वं, 'हनस्त, इति नस्य तकारः 'अत उपधायाः, वृद्धिः । ८—दारु—आहन्ति इति विग्रहः, अणि घत्वे नस्य टकारे वृद्धौ **दार्वाघाटः** । ९—चारु—आहन्तीति विग्रहः, सिद्धिः पूर्ववत् । १०—'आशिषि हनः, इत्येव सिद्धे किमर्थमिदमित्यत आह—**अनाशीरर्थ**मिति, आशीर्वादभिन्नविषयार्थमित्यर्थः । ११—क्लेशम्-अपहन्ति, तमोऽपहन्तीति विग्रहौ, डित्वाट्टिलोपः **क्लेशापहः, तमोऽपहः** । १२—अनयोरुपपदयोर्हन्तेर्णिनिः स्यादित्यर्थः । १३—कुमारं हन्तीति **कुमारघाती** णिनिः, उपधावृद्धिः, घत्वम्, नस्य तकारः । एवं शिरो हन्तीति **शीर्षघाती** ।

हन्तेष्टक् लक्षणवति कर्तरि । जायाघ्नो ना । पतिघ्नी स्त्री ।

**१११४ अमनुष्यकर्तृके च ३ । २ । ५३ ॥**

जायाघ्नस्तिलकालकः । पतिघ्नी पाणिरेखा । पित्तघ्नं घृतम् । अमनुष्येति किम्—आखुघातः शूद्रः । अथ कथं बलभद्रः प्रलम्बघ्नः कृतघ्न इत्यादि । मूलविभुजादित्वात्सिद्धम् । चोरघातो नगरघातो हस्तीति तु बाहुलकादण् ।

**१११५ शक्तौ हस्ति-कपाटयोः ३ । २ । ५४ ॥**

हन्तेष्टक् । मनुष्यकर्तृकार्थमिदम् । हस्तिघ्नो ना । कपाटघ्नश्चोरः । कवाटेति पाठान्तरम् ।

**१११६ पाणिघ-ताडघौ शिल्पिनि ३ । २ । ५५ ॥**

शिल्पिनि किम्—पाणिघातः । ( राजघ उपसंख्यानम् ) । राजानं हन्ति राजघः ।

---

१-जायां हन्तीति-**जायाघ्नः**=जाया-हननसूचक-लक्षणवान् पुरुष इत्यर्थः । टकः कित्त्वाद् गमहनेत्युपधालोपः, हस्य घत्वम् । २-अमनुष्यकर्तृके धात्वर्थे वर्तमानाद् हन्तेः कर्मण्युपपदे टक् स्यादित्यर्थः । ३-जायां हन्तीति विग्रहः, सिद्धिः पूर्ववत्, **तिलकालकः**=तिलाकारः कृष्णबिन्दुरित्यर्थः । ४-आखून्=मूषकान् हन्तीति विग्रहः, मनुष्यकर्तृकत्वेन टकोऽभावे 'कर्मण्यण्, इत्यण्, उपधावृद्धिः हस्य घत्वं, नस्य तकारः । ५-प्रलम्बम्= तन्नामानम् असुरं हन्तीति **प्रलम्बघ्नः**=बलभद्रः, कृतं हन्तीति **कृतघ्नः**= उपकारविस्मर्ता पुरुषः, उभयत्रापि हन्तेर्मनुष्यकर्तृकतया कथं टक् इति प्रश्नः । तत्रोत्तरम्—**मूलविभुजादित्वात्सिद्ध**मिति, मूलविभुजादिगण-पाठात् कप्रत्यये सति, गमहनेत्युपधालोपे; इष्टरूपसिद्धिरिति भावः । ६-ननु नगरं हन्तीति नगरघातो हस्तीत्यत्राऽमनुष्यकर्तृकत्वेन हन्तेः कुतो न टक् इति चेत्तत्राह—**बाहुलकादण्** इति । कृत्यल्युटो बहुलमिति सूत्रे बहुलग्रहणादण्प्रत्यये समाधेयमिति भावः । ७-हस्तिकपाटयोः कर्मणोरुपपदयोर्हन्तेष्टक् स्यात् शक्तौ द्योत्यायामित्यर्थः । ८-पाणिताडयोरुपपदयोः हन्तेष्टक् टिलोपो घत्वं च निपात्यते शिल्पिनि गम्ये, इत्यर्थः । पाणिं पाणिना वा हन्तीति **पाणिघः** । ताडनं=ताडः, तेन तं वा हन्तीति **ताडघः**=मल्लादिः । ९-शिल्पिनोऽन्यत्र कर्मण्यण् १०-हन्तेः टक् टिलोपः, घत्वं च निपातितम् ।

**१११७ आढ्य-सुभग-स्थूल-पलित-नग्नाऽन्ध-प्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ३ । २ । ५६ ॥**

एषु च्व्यर्थेष्वच्व्यन्तेषु कर्मसूपपदेषु कृञः ख्युन्[1]। अनाढ्यमाढ्यं कुर्वन्त्यनया आढ्यङ्करणी[2] । अच्वौ किम्—आढ्यीकुर्वन्त्यनेन[3] ।

**१११८ कर्तरि भुवः खिष्णुच्-खुकञौ ३ । २ । ५७ ॥**

आढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु भवतेरेतौ स्तः । अनाढ्य आढ्यो भवति आढ्यम्भविष्णुः[4] । आढ्यम्भावुकः[5] ।

**१११९ सत्सू-द्विष-द्रुह-दुह-युज-विद-भिद-च्छिद-जि-नी-राजामुपसर्गेऽपि क्विप् ३ । २ । ६१ ॥**

एभ्यः क्विप्स्यादुपसर्गे सत्यसति च सुप्युपपदे । द्युसत्[6]। सदिरप्रतेरिति षः, उपनिषत् । अण्डसूः[7] । प्रसूः । मित्रद्विट्[8] । प्रद्विट् । मित्रध्रुट्[9] । प्रध्रुट् । गोधुक्[10] । प्रधुक् । अश्वयुक्[11] । प्रयुक् । वेदवित्[12] । निवित् । ( अप्र-

---

१–ख इत्, खित्वान्मुम्, 'यु' इत्यस्य अनादेशः । नित्त्वं स्वरार्थम् । २–ख्युन् प्रत्यये मुमादौ—'आढ्यङ्करण' इत्यस्मात् नञ्स्नञीकक्ख्युँस्तरुणतलुनानामुपसङ्ख्यानमिति स्त्रियां ङीप्, **आढ्यङ्करणी**=युक्तिर्नीतिर्वा । ३–अत्र च्विप्रत्ययत्वेन न ख्युनितिभावः । ४–आढ्यपूर्वकाद् भूधातोः खिष्णुच्, खित्त्वान्मुम्, सार्वधातुकेति गुणे **आढ्यम्भविष्णुः** । ५–खुकञ् प्रत्यये, मुमि, वृद्धौ, आवादेशे रूपम्, **आढ्यम्भावुकः** । ६–दिवि सीदतीति विग्रहः, (द्युसद्+क्विप्) क्विपः सर्वापहारे **द्युसत्** । ७–अण्डानि सूते—**अण्डसूः**, एवम् प्रसूते **प्रसूः** । ८–मित्रं द्वेष्टि—**मित्रद्विट्**, षस्य जश्त्वे वाऽवसाने, चर्त्वम् । ९–मित्राय द्रुह्यति—विग्रहः क्विपः सर्वापहारे, प्रथमैकवचने 'वा द्रुह मुहे'ति विकल्पेन हस्य घत्वे, बशो भष् झषन्तस्येति दस्य धत्वे रूपम् । मित्रध्रुक्,—**मित्रध्रुट्** । ( घत्वाऽभावे ढत्वम् ) । एवं प्रद्रुह्यतीति-प्रध्रुक्—**प्रध्रुट्** । १०–गां दोग्धि=इति विग्रहः, 'दादेर्धातोर्घः' इति हस्य घत्वम्, जश्त्वम्, चर्त्वम्, **गोधुक्** । प्रदोग्धीति **प्रधुक्** । ११–अश्वं युनक्ति–इति विग्रहः । १२–वेदं वेत्तीति **वेदवित्** । नि–विद्यते–अनया इति **निवित्** काचिद् ऋक् ।

ग्रामाभ्यां नयतेर्णो वाच्यः ) अग्रणीः[1] । ग्रामणीः ।

**११२० भजो ण्विः[2] ३ । २ । ६२ ॥**

अंशभाक्[3] । प्रभाक् ।

**११२१ अदोऽनन्ने[4] ३ । २ । ६८ ॥**

विट् स्यात् । आममत्तीत्यामात्[5] । सस्यात् । अनन्ने किम्—अन्नादः ।

**११२२ क्रव्ये च ३ । २ । ६९ ॥**

अदेर्विट् । पूर्वेण सिद्धे वचनं वाऽसरूपेति[6] प्राप्ताण्बाधनार्थम् । क्रव्यात्= आममांसभक्षकः ।

**११२३ दुहः कप् घश्च ३ । २ । ७० ॥**

कामदुघा[8] ।

**११२४ अन्येभ्योऽपि दृश्यन्ते ३ । २ । ७५ ॥**

मनिन् क्वनिप् वनिप् विच् एते प्रत्यया धातोः स्युः ।

**११२५ नेड्वशि कृति ७ । २ । ८ ॥**

वशादेः[10] कृत इण्न । सुशर्मा[11] । प्रातरित्वा[12] ।

**११२६ विड्वनोरनुनासिकस्यात्[13] ६ । ४ । ४१ ॥**

---

१—अग्रं नयतीति, नयतेः क्विप्, णत्वे रूपम् । एवं ग्रामं नयतीति **ग्रामणीः**=ग्राममुख्यः । २—सुपि—उपसर्गे चोपपदे भजधातोर्ण्विप्रत्यय इत्यर्थः । ३—ण्वित्वाद्, 'अत उपधायाः, वृद्धिः । अंशं भजतीति विग्रहः । ४—अन्नभिन्नोपपदेऽदेर्विट् स्यादित्यर्थः । ५—आमम् अत्तीति विग्रहः । सस्यम् अत्तीति—**सस्यात्** । ६—'कर्मण्यण्, इत्यण् । ७—क्रव्यस्याऽन्न-भिन्नत्वेन—'अदोऽनन्ने' इत्यनेन विट् सिद्ध्यतीति पुनर्विड्विधानं किमर्थ-मित्यत्रोत्तरमाह—**वाऽसरूपेति** । वासरूपन्यायेन पक्षेऽणपि प्राप्तस्तद्बा-धनार्थं पुनर्विधिरित्यर्थः । क्रव्येऽदेर्विडेवेति भावः । ८—सुप्युपपदे दुहेः कप् स्यात् प्रकृतेर्घश्चात्रादेशः—इत्यर्थः । ९—कामम्=यावदपेक्षितं दुग्धे **कामदुघा**=कामधेनुः, स्त्रीत्वे टाप् । १०—वश्प्रत्याहारघटितवर्णादेः कृत्प्रत्ययस्येत्यर्थः । ११—सुष्ठु शृणातीति—**सुशर्मा** शॄधातोर्मनिन् । १२—प्रातरेतीति विग्रहः ( प्रातर् इ+क्वनिप् ) ह्रस्वस्येति तुक्, **प्रातरित्वा** । १३—विड्वनोः परतोऽनुनासिकस्य आत्स्यादित्यर्थः ।

विजायत इति विजावा। ओणृ अपनयने। अवावा। रोट्। रेट्। सुगण्।

**११२७ क्विप् च ३। २। ७३॥**

अयमपि दृश्यते। उखास्रत्। पर्णध्वत्। वाहभ्रट्।

**११२८ अन्तः ८। ४। २०**

पदान्तस्यानितेर्नस्य णत्वं स्यादुपसर्गस्थान्निमित्तात्परश्चेत्। हे प्राण्। (आशासः क्वावुपधाया इत्वं वाच्यम्) आशीः। इत्वोत्वे। गीः। पूः। 'मो नो धातोः'। प्रतान्। प्रशान्।

**११२९ गमः क्वौ ६। ४। ४०॥**

अनुनासिकलोपः। अङ्गगत्। (गमादीनामिति वक्तव्यम्) परीतत्।

१–(वि–जन्+वनिप्) नकारस्याऽऽकारः, सवर्णदीर्घः। विजावन्शब्दस्य, **विजावा** इति प्रथमैकवचने रूपम्। २–ओणति=अपनयति,—**अवावा** (ओण्+वनिप्) णकारस्य आत्वे ओकारस्य अवादेशे अवावन्शब्दः सिद्ध्यति। ३–रुष् रिष् हिंसायाम् इत्याभ्यां विच् प्रत्ययः। वेरपृक्तस्येति वलोपः। रोषति—**रोट्**, रेषति–**रेट्**, जश्त्वे चर्त्वम्। गणेर्विच् **सुगण्**–सुष्ठु गणयतीति विग्रहः। ४–उखायाः स्रंसते इति—**उखास्रत्**, क्विपि, "अनिदिता"मिति नलोपः, "वसुस्रंसु" इति दत्वम्। एवं पर्णाद् ध्वंसते इति **पर्णध्वत्**। वाहाद् भ्रश्यति इति **वाहभ्रट्**, व्रश्चादिना षत्वे जश्त्वम्। ५–प्रपूर्वादन् धातोः क्विबन्तात्सम्बोधनैकवचने हल्ङ्यादिलोपः, नस्य णत्वम्, **हे प्राण्**। नलोपस्तु न 'न ङिसम्बुद्ध्योः' इति निषेधात्। प्राणितीति विग्रहः। ६–आङ्पूर्वकात् शासेरुपधाया इत्वं क्विपि, इत्यर्थः। ७–आशासनम्=**आशीः**, इत्वे, रुत्वे, र्वोरिति दीर्घः। ८–गॄधातोः क्विप्, पॄधातोः क्विप्, पूर्वत्र 'ॠत इद्'ति इत्वे रपरत्वे, उत्तरत्र 'उदोष्ठ्यपूर्वस्ये'ति ॠत उत्वे रपरत्वे, उभयत्र सुलोपे उपधादीर्घे **गीः, पूः**। ९–प्रताम्यतीति **प्रतान्**। क्विपि रूपम्। 'शमामष्टानाम्' इति दीर्घः। एवं **प्रशान्**। १०–अङ्गान्=तदाख्यदेशं गच्छति—**अङ्गगत्**, क्विपि–अनुनासिकलोपः ह्रस्वस्येति तुक्। ११–परि–तन्+क्विप्, परितनोति–इति विग्रहः, क्विपि–अनुनासिकलोपः तुक्,। 'नहिवृति, इत्यादिना पूर्व-

संयत् । ( ऊङ् च गमादीनामिति वक्तव्यम्, लोपश्च ) । गूः । भ्रूः ।

**११३० स्थः क च ३ । २ । ७७ ॥**

चात्क्विप् । शंस्थः । शंस्थाः ।

**११३१ सुप्यजातौ णिनिस्ताच्छील्ये ३ । २ । ७८ ॥**

अजात्यर्थे सुपि धातोर्णिनिस्ताच्छील्ये द्योत्ये । उष्णभोजी । शीतभोजी ।

**११३२ मनः ३ । २ । ८२ ॥**

सुपि मन्यतेर्णिनिः । दर्शनीयमानी ।

**११३३ आत्ममाने खश् च ३ । २ । ८३ ॥**

स्वकर्मके मनने वर्तमानान्मन्यतेः सुपि खश् चाण्णिनिः । पण्डितमात्मानं मन्यते पण्डितम्मन्यः । पण्डितमानी ।

**११३४ इच एकाचोऽम्प्रत्ययवच्च ६ । ३ । ६८ ॥**

इजन्तादेकाचोऽम्स्यात्स च स्वाद्यम्वत् खिदन्ते परे । 'औतोऽम्शसोः'

---

पदस्य दीर्घः । **परीतत्**, 'पुरीतत्' इति पाठान्तरम्, तत्र पुरिः=हृदयाख्यो मांसखण्डः तं तनोतीति पुरीतत् सिद्धिः पूर्ववत्, । एवं संपूर्वकाद् यम् धातोः क्विपि रूपम्, **संयत्** संयच्छति–इति विग्रहः ।

१–क्विपि गमादीनामुपधाया ऊङ् भवति, चकारादनुनासिकलोपश्च वक्तव्य इत्यर्थः । २–गच्छतीति विग्रहः, गमेरकारस्य ऊङ् मकारस्य लोपः, **गूः** । एवम् भ्रमतीति **भ्रूः**, भ्रमेरकारस्य ऊङ् मलोपश्च । ३–उपसर्गेऽनुपसर्गे च सुप्युपपदे स्थाधातोः कप्रत्ययः क्विप् च स्याद् इत्यर्थः । ४–'शम्' पूर्वकात् स्थाधातोः कप्रत्यये 'आतो लोपः' **शंस्थः** । क्विप् प्रत्यये **शंस्थाः**=सुखं स्थापयतीत्यर्थः । ( अन्तर्भावितण्यर्थोऽत्र स्थाधातुः ) शंस्था इति भाष्यप्रयोगाद् घुमास्थेति ईत्वं न । ५-**उष्णभोजी** उष्णं भुङ्क्ते तच्छीलः, इति विग्रहः । उपधागुणः । एवम्—**शीतभोजी** । ६–दर्शनीयं मन्यते इति विग्रहः, उपधावृद्धिः । **दर्शनीयमानी** । ७–खशः शित्वात् सार्वधातुकत्वेन श्यन्, **पण्डितम्मन्यः**, मुम् । पक्षे णिनिः **पण्डितमानी** । ८–स्वाद्यन्तर्गतो यथा 'अम्' तथा इत्यर्थः । तेन 'औतोऽम्शसोः', 'वाऽम्शसोः', इत्यादयः प्रवर्तन्ते इति भावः ।

गाम्मन्यः[1] । 'वाऽमृशसोः' स्त्रियम्मन्यः[2] । स्त्रीम्मन्यः । नृ—नरम्मन्यः[3] । भुवम्मन्यः । श्रियमात्मानं मन्यते श्रिम्मन्यं[4] कुलम् । भाष्यकारप्रयोगाच्छ्रीशब्दस्य ह्रस्वो मुममोरभावश्च ।

**११३५ भूते ३ । २ । ८४ ॥**

अधिकारोऽयं वर्तमाने लडिति यावत् ।

**११३६ करणे यजः ३ । २ । ८५ ॥**

करणे उपपदे भूतार्थाद्यजेर्णिनिः कर्तरि । सोमेनेष्टवान्सोमयाजी[5] ।

**११३७ कर्मणि हनः[6] ३ । २ । ८६ ॥**

पितृव्यघाती[7] ।

**११३८ ब्रह्म-भ्रूण-वृत्रेषु[8] क्विप् ३ । २ । ८७ ॥**

ब्रह्महा[9] । भ्रूणहा । वृत्रहा । क्विप् चेत्येव सिद्धे ब्रह्मादिष्वेव क्विबेवेति द्विविधनियमार्थमिदम् । एवमग्रेऽपि ।

---

१—गाम् आत्मानं मन्यते, इत्यर्थे मनेः खशि श्यन्, सुपो लुक्, गोशब्दादम्, स्वाद्यम्वत्त्वात् 'न विभक्तौ तुस्माः' इति मस्य नेत्वम् 'औतोऽमृशसो' रिति ओकारस्य आकारः, **गाम्मन्यः** । २—स्त्रियम् आत्मानं मन्यते **स्त्रियम्मन्यः, स्त्रीम्मन्यः** । वाऽमृशसोरितीयङभावपक्षेऽमिपूर्वः, इति पूर्वरूपम् । ३—नरम् आत्मानं मन्यते **नरम्मन्यः** । सुपो लुकि 'नृ मन् श्यन्' नृशब्दादम्, ऋतो ङि' इति गुणः । एव भुवम् आत्मानं मन्यते **भुवम्मन्यः** । ४—भाष्यकारवचनात् श्रीशब्दस्य ह्रस्वो मुममोरभावश्चेति । अत्र मननक्रियां प्रति कुलत्वेन रूपेण कुलं कर्तृ, तस्यैव कुलस्य अध्यारोपितश्रीत्वेन रूपेण कर्मत्वं चेति स्थितिः । एवञ्च श्रीशब्दस्य नित्यस्त्रीलिङ्गस्यापि कुले लक्षणाया वृत्तेर्नपुंसकत्वम् । तेन 'ह्रस्वो नपुंसके, इति ह्रस्व इत्यर्थः । मुममोरभावश्च वाचनिकः । ५—सोम—यज्+णिनि, अत उपधायाः, वृद्धिः । ६—कर्मण्युपपदे भूतार्थवृत्तेर्हन्धातोर्णिनिरित्यर्थः । ७—पितृव्यं हतवान् इति विग्रहः, वृद्धिः, घत्वं, तकारः । ८—एतेषु पूर्वपदेषु हनो भूते क्विप् स्यादित्यर्थः । ९—ब्रह्म हतवान् **ब्रह्महा**, ब्रह्महणौ, ब्रह्महणः । एवम्—भ्रूणं =गर्भ हतवान् **भ्रूणहा**, वृत्रम्=असुरविशेषं हतवान् **वृत्रहा** ।

**११३९ सु-कर्म-पाप-मन्त्र-पुण्येषु कृञः ३ । २ । ८९ ॥**

सुकृत्[1] । कर्मकृत् । पापकृत् । मन्त्रकृत् । पुण्यकृत् ।

**११४० सोमे सुञः[2] ३ । २ । ९० ॥**

सोमसुत् ।

**११४१ अग्नौ चेः[3] ३ । २ । ९१ ॥**

अग्निचित्[4] ।

**११४२ कर्मण्यग्न्याख्यायाम् ३ । २ । ९२ ॥**

कर्मण्युपपदे कर्मण्येव कारके चिनोतेः क्विप् । अग्न्याधारस्थलविशेषस्याख्यायाम् । श्येन इव चितः श्येनचित्[5] ।

**११४३ कर्मणीनि विक्रियः ३ । २ । ९३ ॥**

कर्मण्युपपदे विपूर्वात्क्रीणातेरिनिः । ( कुत्सितग्रहणं[6] कर्तव्यम् ) । सोमविक्रयी[7] । घृतविक्रयी ।

**११४४ दृशेः क्वनिप् ३ । २ । ९४ ॥**

कर्मणि भूते । पारं दृष्टवान्पारदृश्वा ।

**११४५ राजनि[8] युधि कृञः ३ । २ । ९५ ॥**

क्वनिप् । युधिरन्तर्भावितण्यर्थः[9] । राजानं योधितवान्—राजयुध्वा । राजकृत्वा[10] ।

**११४६ सहे[11] च ३ । २ । ९६ ॥**

---

१-सुष्ठु कृतवान् , **सुकृत्** क्विप्, ह्रस्वस्येति तुक्, एवमग्रेऽपि । २-सोमे कर्मण्युपपदे भूते सुञ् धातोः क्विप् स्यादित्यर्थः । सोमं सुतवान् इति **सोमसुत्** । ३-अग्नौ कर्मण्युपपदे भूते चिनोतेः क्विप् स्यादित्यर्थः । ४-**अग्निचित्**=अग्न्याख्यं स्थण्डिलविशेषम् इष्टकाभिश्चितवानित्यर्थः । क्विप्, ह्रस्वस्येति तुक् । ५-समुदायोऽयम् आहवनीयधारणार्थे इष्टकानिर्मितस्थलविशेषे निरूढः । ६-कुत्सिते कर्मण्युपपद उक्तविधिर्भवतीत्यर्थः । ७-सोमं विक्रीतवान्=**सोमविक्रयी**, एवं **घृतविक्रयी** । सोमस्य घृतस्य च विक्रयो विक्रेतुः कुत्सामावहति-इति भावः । ८-राजनि कर्मण्युपपदे युध्-कृञ्भ्यां भूते क्वनिप् स्यादित्यर्थः । ९-ण्यर्थोऽन्तर्भूतः इत्यर्थः, तथैव विग्रहः । १०-एवं राजानं कृतवान्—**राजकृत्वा** । ११-सहशब्दे उपपदे युधि-कृञ्भ्यां क्वनिप् स्यादित्यर्थः ।

सहयुध्वा। सहकृत्वा।

**११४७ सप्तम्यां जनेर्डः ३। २। ६७॥**

**११४८ तत्पुरुषे कृति बहुलम् ६। ३। १४॥**

ङेरलुक्। सरसिजम्। सरोजम्।

**११४९ उपसर्गे च संज्ञायाम् ३। २। ९९॥**

प्रजाः।

**११५० अनौ कर्मणि ३। २। १००॥**

अनुपूर्वाज्जनेः कर्मण्युपपदे डः। पुमांसमनुरुध्य जाता पुमनुजा।

**११५१ अन्येष्वपि दृश्यते ३। २। १०१॥**

अजः। द्विजः। ब्राह्मणजः। अपिशब्दः सर्वोपाधिव्यभिचारार्थः। तेन धात्वन्तरादपि कारकान्तरेष्वपि क्वचित्। परितः खाता परिखा।

**११५२ पञ्चम्यामजातौ ३। २। ९८॥**

जातिशब्दवर्जिते पञ्चम्यन्ते उपपदे जनेर्डः। संस्कारजः। अदृष्टजः।

**११५३ क्त-क्तवतू निष्ठा १। १। २६॥**

एतौ निष्ठासंज्ञौ स्तः।

**११५४ निष्ठा ३। २। १०२॥**

भूतार्थवृत्तेर्धातोर्निष्ठा स्यात्। तत्र तयोरेवेति भावकर्मणोः क्तः। क्तर्तरि कृदिति कर्तरि क्तवतुः। स्नातं मया। स्तुतस्त्वया विष्णुः। विश्वं कृतवान्।

---

१–सप्तम्यन्ते उपपदे जनेर्भूतार्थात् डप्रत्ययः स्यादित्यर्थः। २–तत्पुरुषे बहुलं सप्तम्या अलुक् स्यात् कृदन्त उत्तरपदे, इति सूत्रार्थः। ३–सरसि जातमिति विग्रहः, बाहुलकात् पक्षे ङेर्लुकि **सरोजम्**। ४–प्रजायन्ते स्मेति **प्रजाः**। 'प्रजा स्यात्सन्ततौ जने, इत्यमरः। डप्रत्यये टिलोपे सिद्धिः। ५–( पुमस्–अनु–जन्+ड, ) पूर्वपदे सकारस्य संयोगान्तत्वेन लोपः। स्त्रीत्वे टाप्। ६–अन्येष्वप्युपपदेषु जनेर्डप्रत्ययः स्यादित्यर्थः। न जातः, इत्यजः। द्वाभ्यां जातः **द्विजः** इत्यादयो विग्रहाः। ७–परि खन्+ड (:) डित्त्वाट्टिलोपः, स्त्रीत्वे टाप्। **परिखा**। ८–संस्काराज्जातः, अदृष्टाज्जातः, इति विग्रहौ। ९–भावे प्रत्यये कर्तुरनुक्तत्वाद् मयेति तृतीया। १०–कर्मणि प्रत्ययः, कर्मणोऽनुक्तत्वाऽभावान्न द्वितीया, किन्तु प्रातिपदिकार्थमात्रे प्रथमा, कर्तुश्च तृतीया। ११–कित्त्वान्न गुणः, कर्तरि क्तवतुप्रत्ययः।

**११५५ अदो जग्धिर्ल्यप्ति किति २ । ४ । ३६ ॥**

ल्यपि तादौ किति च । इकार उच्चारणार्थः । जग्धम्[1] ।

**११५६ निष्ठायामण्यदर्थे ६ । ४ । ६० ॥**

ण्यदर्थौ भावकर्मणी ततोऽन्यत्र निष्ठायां क्षियो दीर्घः स्यात् ।

**११५७ क्षियो दीर्घात् ८ । २ । ४६ ॥**

निष्ठातस्य नः । क्षीणवान्[2] । भावकर्मणोस्तु—क्षितः[3] कामो मया । ( ऊर्णोतेर्णुवद्भावो वाच्यः ) तेन एकाच्त्वान्नेट्[4] । ऊर्णुतः ।

**११५८ रदाभ्यां निष्ठातो नः पूर्वस्य च दः ८ । २ । ४२ ॥**

रदाभ्यां परस्य निष्ठातस्य[5] नो निष्ठापेक्षया पूर्वस्य धातोर्दस्य च[6] । शॄ—शीर्णः[7] । भिन्नः । छिन्नः ।

**११५९ संयोगादेरातो धातोर्यण्वतः ८ । २ । ४३ ॥**

यण्वत्संयोगादेरादन्तान्निष्ठातस्य नः । द्राणः । ग्लानः ।

**११६० ल्वादिभ्यः ८ । २ । ४४ ॥**

एकविंशतेर्लूञादिभ्यः प्राग्वत्[8] । लूनः । ज्या—प्रहिज्यौ[9] ।

**११६१ हलः ६ । ४ । २ ॥**

अङ्गावयवाद्धलः परं यत्सम्प्रसारणं तदन्तस्याङ्गस्य दीर्घः । जीनः । ( दुग्वोर्दीर्घश्च[10] ) दु गतौ । दूनः । गु पुरीषोत्सर्गे । गूनः । ( पूञो

---

१-अद् धातोः क्तप्रत्यये जग्धादेशः, 'झषस्तथोर्धोऽधः' इति तकारस्य धत्वम्, झरो झरीति पूर्वधकारस्य लोपे जग्धमिति । २-क्षिधातोः कर्तरि क्तवतुः, निष्ठायामिति दीर्घः, तकारस्य नत्वं षात्परत्वाण्णत्वम् । क्षीणवान् । ३-क्षपित इत्यर्थः, अन्तर्भावितण्यर्थोऽत्र क्षिः । अण्यदर्थे इत्युक्तेः न दीर्घनत्वे । ४-ऊदृदन्तैर्यौतीत्यादौ परिगणितभिन्नानामेकाचामनिट्त्वादित्यर्थः । ५-क्त क्तवतुप्रत्ययावयवीभूतस्य तकारस्येत्यर्थः । नो=नकारः स्यादिति । ६-क्तक्तवतु प्रत्ययाऽवयवीभूततकारात्पूर्वस्य दकारस्य च नकारो भवतीत्यर्थः । ७-शॄधातोः क्तप्रत्यये, ॠत इद्धातोरिति इत्वं रपरत्वं हलि चेति दीर्घः, नत्वम्, णत्वम् , शीर्णः । ८-निष्ठातकारस्य नकार इत्यर्थः । ९-प्रहिज्येति सम्प्रसारणम् इत्यर्थः । यकारस्य सम्प्रसारणम् इकारः, सम्प्रसारणाच्चेति, आकारस्य पूर्वरूपम् । १०-निष्ठानत्वं दीर्घश्चेति भावः ।

विनाशे ) पूना यवाः। विनष्टा इत्यर्थः। पूतमन्यत्[2]। ( सिनोतेर्ग्रासकर्मकर्तृकस्य[3] )। सिनो ग्रासः। ग्रासेति किम्। सितौ पाशेन सूकरौ[4]। कर्मकर्तृकेति किम्। सितो ग्रासो देवदत्तेन।

**११६२ ओदितश्च ८। २। ४५॥**

प्राग्वत्[5]। भुजो—भुग्नः। टु ओश्वि—शूनः[6]।

**११६३ द्रवमूर्तिस्पर्शयोः श्यः ६। १। २४॥**

द्रवस्य मूर्तौ=काठिन्ये स्पर्शे चार्थे श्यैङः सम्प्रसारणं स्यान्निष्ठायाम्।

**११६४ श्योऽस्पर्शे ८। २। ४७॥**

श्यैङो निष्ठातस्य नः स्यादस्पर्शेऽर्थे। शीनं[7] घृतम्। अस्पर्शे किम्। शीतं[8] जलम्। द्रवमूर्तिस्पर्शयोरिति किम्। संश्यानो वृश्चिकः। शीतात्संकुचित इत्यर्थः।

**११६५ प्रतेश्च[9] ६। १। २५॥**

सम्प्रसारणं निष्ठायाम्। प्रतिशीनः।

**११६६ विभाषाभ्यवपूर्वस्य ६। १। २६॥**

तथा[10]। अभिश्यानं घृतम्। अभिशीनम्। अवश्यानः। अवशीनो वृश्चिकः। व्यवस्थित[11]विभाषेयम्। तेनेह न—समवश्यानः।

**११६७ अञ्चोऽनपादाने[12] ८। २। ४८॥**

निष्ठातस्य नः।

१—विनाशार्थात् पूञ् धातोः परस्य निष्ठातकारस्य नकार इत्यर्थः। २—पवित्रमित्यर्थः। ३-कर्मैव कर्ता=कर्मकर्ता, ग्रासः कर्मकर्तायस्य तथाभूतस्य सिनोतेः, ( षिञ् बन्धने, इत्यस्मात् ) परस्य निष्ठातकारस्य नत्वमित्यर्थः। ४—बद्धा इत्यर्थः। ५—ओदितो धातोः परस्य निष्ठातकारस्य नत्वमित्यर्थः। ६—श्विधातो क्तप्रत्यये यजादित्वात्सम्प्रसारणम्, पूर्वरूपम्, 'हल' इति दीर्घः, निष्ठानत्वम्, शूनः। ७—शनिम्=घनीभूतमित्यर्थः। धातूनामनेकार्थत्वात्। ८—शतिम्=शीतस्पर्शवदित्यर्थः। ९—प्रतिपूर्वस्य श्यैङः सम्प्रसारणं स्यान्निष्ठायाम्, इत्यर्थः। १०—निष्ठायां वा सम्प्रसारणमित्यर्थः। ११—व्यवस्थिता, लब्धव्यवस्था विभाषा इत्यर्थः। १२—अञ्चेः परस्य निष्ठातस्य नकारः स्यान्नत्वपादाने, इत्यर्थः।

**११६८ यस्य विभाषा ७ । २ । १५ ॥**

यस्य क्वचिद्विभाषयेड् विहितस्ततो निष्ठायामिण् न । उदितो वेति क्त्वायां वेट्त्वादिह नेट् । समक्तः[1] । अनपादाने किम्—उदक्तमुदकं[2] कूपात् ।

**११६९ दिवो[3]ऽविजिगीषायाम् ८ । २ । ४९ ॥**

द्यूनः[4] । विजिगीषायां तु—द्यूतम्[5] ।

**११७० निर्वाणोऽवाते ८ । २ । ५० ॥**

अवाते इति च्छेदः । निपूर्वाद्वातेर्निष्ठातस्य नत्वं स्याद्वातश्चेत्कर्ता न । निर्वाणोऽग्निर्मुनिर्वा[6] । वाते तु—निर्वातो[7] वातः ।

**११७१ शुषः कः ८ । २ । ५१ ॥**

निष्ठातस्य कः । शुष्कः ।

**११७२ पचो वः ८ । २ । ५२ ॥**

पक्वः ।

**११७३ क्षायो मः ८ । २ । ५३ ॥**

क्षामः[8] ।

**११७४ स्त्यः प्रपूर्वस्य ६ । १ । २३ ॥**

प्रात् स्त्यः संप्रसारणं निष्ठायाम् ।

**११७५ प्रस्त्योऽन्यतरस्याम् ८ । २ । ५४ ॥**

निष्ठातस्य मो वा । प्रस्तीमः[9] । प्रस्तीतः । प्रात्किम् । स्त्यानः[10] ।

---

१—सम्पूर्वकादञ्चतेः क्तप्रत्यये, इटो निषेधे, अनिदितामिति नलोपः, चस्य कुत्वम्, **समक्तः**=सङ्गतः । २—उद्धृतम्—इत्यर्थः, अत्रापादानसमभिहारस्य सत्वान्नत्वं नेति भावः । ३—दिवो निष्ठातस्य नकारः स्यादविजिगीषायाम् । ४—दिवः क्तप्रत्यये 'च्छ्वो' रित्यूठ्, **द्यूनः**=स्तुत इत्यर्थः । ५—द्यूतस्य विजिगीषया प्रवृत्तेरिति भावः । ६—**निर्वाणः**=शान्त इत्यर्थः, नत्वे णत्वम् । ७—**निर्वातः**=निर्गत इत्यर्थः । ८—क्षै धातोः क्तप्रत्यये, तकारस्य मकारः, 'आदेच उपदेश' इत्यात्वम्, **क्षामः** । ९—प्रस्त्यै इत्यस्मात् क्तप्रत्यये सम्प्रसारणम् । पूर्वरूपम्,—'हल' इति दीर्घः, तकारस्य मत्वे रूपम् —**प्रस्तीमः**=सङ्घीभूत इत्यर्थः । १०—'आदेच उपदेश, इत्यात्वम्, संयोगादेरिति निष्ठातकारस्य नत्वम्, **स्त्यानः** ।

**११७६ अनुपसर्गात्फुल्ल-क्षीब-कृशोल्लाघाः ८ । २ । ५५ ॥**

एते निपात्यन्ते । ञिफला—फुल्लः । निष्ठातस्य लत्वं निपात्यते । क्तवत्वेकदेशस्यापीदं निपातनमिष्यते । फुल्लवान् । अनुपसर्गात्किम्—

**११७७ आदितश्च ७ । २ । १६ ॥**

आकारेतो निष्ठाया इण्न ।

**११७८ ति च ७ । ४ । ८६ ॥**

चरफलोरत उत् तादौ किति । प्रफुल्तः । प्रक्षीबितः । प्रकृशितः । प्रोल्लाघितः । ( उत्फुल्ल-संफुल्लयोरुपसंख्यानम् । )

**११७६ नुद-विदोन्द-त्रा-घ्रा-ह्रीभ्योऽन्यतरस्याम् ८।२।५६॥**

निष्ठातस्य नो वा स्यात् । नुन्नः । नुत्तः । विन्नः । वित्तः । उन्दी—

**११८० श्वीदितो निष्ठायाम् ७ । २ । १४ ॥**

श्वयतेरीदितश्च निष्ठाया इण् न। उन्नः । उत्तः । इत्यादि ।

**११८१ न ध्या-ख्या-पॄ-मूर्छि-मदाम् ८ । २ । ५७ ॥**

एभ्यो निष्ठातस्य नो न । ध्यातः । ख्यातः । पूर्तः ।

**११८२ राल्लोपः ६ । ४ । २१ ॥**

---

१—एते निपात्यन्ते उपसर्गात्परा न चेदित्यर्थः । २—फुल्ल इत्यत्र निष्ठातस्य लत्वं, 'ति चे'ति उत्वं तु सिद्धमेव, आदितश्चेतडिभावः । क्षीबः, कृशः, उल्लाघ इत्यत्र क्तप्रत्ययावयवस्य तकारस्य लोपो निपात्यते । यद्यपि तलोपस्याऽसिद्धत्वादिट् प्राप्नोति तथापि तदभावस्य निपातनान्न दोषः । क्षीबो=मत्तः कृशः=तनुः, उल्लाघो=नीरोगः । ३—चरफलोश्चेत्यतः 'चरफलोः' इत्यनुवर्तते तदाह-वृत्तौ । ४—निष्ठातस्य लत्वं वाच्यमिति भावः । सोपसर्गार्थं वचनम् । ५—ह्रीधातोरप्राप्ते, इतरेभ्यश्च 'रदाभ्या'मिति 'संयोगादे'रिति च नित्यं प्राप्ते उभयत्र विभाषेयम् । प्राप्तेऽपि विकल्पः, अप्राप्तेऽपि विकल्प इत्युभयत्रविभाषा । ६—उन्दी क्लेदने, इति ईदित्, इडभावे रदाभ्यामिति तकारस्य दकारस्य च नत्वे रूपम्—उन्नः । ७—रदाभ्यामिति संयोगादेरिति प्राप्तं नत्वमनेन निषिद्ध्यते । ८—पॄधातोः क्तः, श्र्युकः कितीति—इण्निषेधे 'उदोष्ठ्यपूर्वस्य' इति उत्वं रपरत्वं, नत्वनिषेधे 'हलि चे'ति दीर्घः, पूर्तः ।

राच्छ्वोर्लोपः स्यात्क्वौ झलादावनुनासिकादौ च प्रत्यये। मूर्तः[1]। मत्तः[2]।

**११८३ वित्तो भोग-प्रत्यययोः ८। २। ५८॥**

विदन्तेर्निष्ठान्तस्य निपातोऽयं भोग्ये प्रतीते चार्थे। वित्तः[3]=पुरुषः। अनयोः किम्—विन्नः।

**११८४ भित्तं शकलम्[4] ८। २। ५९॥**

भिन्नमन्यत्।

**११८५ ऋणमाधमर्ण्ये[5] ८। २। ६०॥**

ऋतमन्यत्र[6]।

**११८६ स्फायः स्फी निष्ठायाम् ६। १। २२॥**

स्फीतः[7]।

**११८७ इरिणनिष्ठायाम् ७। २। ४७॥**

निरः कुषो[8] निष्ठाया इट्। यस्य[9] विभाषेति निषेधे प्राप्ते पुनर्विधिः।

---

१–मुर्छा मोहसमुच्छ्राययोः, इत्यस्मात् क्तप्रत्यये छ्लोपे, आदितश्चेत्यनिट्, रदाभ्यामिति प्राप्तस्य नत्वस्य निषेधे हलि चेति दीर्घे **मूर्त्तः**। २–मदी हर्षग्लेपनयोः, इत्यस्मात् क्तप्रत्ययः, स्वीदित इति नेट्। नत्वनिषेधे चर्त्वे रूपम्–**मत्तः**। ३–विन्दतेः ( विद्लृ लाभे इत्यस्मात् ) क्तप्रत्यये, नुदविदोन्देति प्राप्तस्य पाक्षिक-नत्वस्याऽभावनिपातने **वित्तः**। भोग्ये प्रतीते चार्थे निपातोऽयम्। वित्तः=प्रतीतः=प्रख्यातः। ४–शकले=खण्डे वाच्ये भिदेः क्तस्य नत्वाभावो निपात्यते, इत्यर्थः। ५–ऋणेऽधमः=अधमर्णः, यद्वा,=अधमं=दुःखप्रदम् ऋणं यस्य सोऽधमर्णः, तस्य भावः कर्म वा आधमर्ण्यम्, तेन व्यवहारविशेषो लक्ष्यते, सच ( व्यवहारः ) अन्यदीयं द्रव्यं गृहीतम् इयता कालेन इयत्या च वृद्धया प्रतिदीयते इत्येवंरूपस्तस्मिन् विषये ऋधातोः क्तप्रत्यये **ऋणमिति** रूपं निपात्यते। ( अप्राप्तस्य नत्वस्य निपातनम् )। ६–अन्यत्र=आधमर्ण्यव्यवहारभिन्ने विषये, **ऋतम्** =सत्यम्। ७–स्फायी वृद्धौ इत्यस्मात् क्तप्रत्यये, 'श्वीदित' इतीण्निषेधे स्फीभावे **स्फीतः** इति रूपम्। ८–निरः कुष इत्यनुवर्तते। आर्धधातुकस्येत्येव सिद्धे किमर्थमिदं सूत्रमित्यत आह— ९–**यस्य विभाषेति**। कुषधातोः तृजादौ' 'निरः कुषः' इति पूर्वसूत्रेण वेट्कत्वात्, 'यस्य विभाषा, इति प्राप्तस्य इण्निषेधस्य बाधनार्थं पुनरिह विधानमित्यर्थः।

मिष्कुषितः ।

**११८८ वसतिक्षुधोरिट्[1] ७ । २ । ५२ ॥**

आभ्यां क्त्वानिष्ठयोर्नित्यमिट् । उषितः[2] । क्षुधितः ।

**११८९ अञ्चेः पूजायाम्[3] ७ । २ । ५३ ॥**

क्त्वानिष्ठयोरिट् । अञ्चितः । गतौ तु—अक्तः[4] ।

**११९० लुभोऽविमोहने[5] ७ । १ । ५४ ॥**

क्त्वानिष्ठयोरिट् नतु गार्ध्ये । लुभितः । गार्ध्ये तु—लुब्धः[6] ।

**११९१ क्लिशः क्त्वानिष्ठयोः[7] ७ । २ । ५० ॥**

इट् वा । क्लिशितः । क्लिष्टः[8] ।

**११९२ पूङश्च[9] ७ । २ । ५१ ॥**

क्त्वानिष्ठयोरिड् वा ।

**११९३ पूङः क्त्वा च १ । २ । २२ ॥**

निष्ठा सेट् किन्न स्यात् । पवितः[10] । पूतः । क्त्वाग्रहणमुत्तरार्थम्[11] ।

---

१–'एकाच' इतीण्निषेधबाधनार्थमिदं सूत्रम्, इडित्यनुवर्तमाने पुनरिड्ग्रहणं 'स्वरतिसूतिसूयति' इत्यतो वाग्रहणानुवृत्तिर्माभूदित्येवमर्थम् । तथा च नित्यत्वं सिद्ध्यति, तदाह–वृत्तौ **नित्य**मिति । २–यजादित्वात्सम्प्रसारणम्, 'शासिवसिघसी'ति षत्वम् । वस्+क्तः=उष्+इतः, **उषितः** । ३–उदितो वेति क्त्वाप्रत्यये विकल्पात्, निष्ठायां 'यस्य विभाषे'ति निषेधे प्राप्ते वचनम् । ४–पूजार्थाऽभावात्–इडभावे क्त्वादनिदितामिति नलोपे 'चोः कु,'रिति कुत्वे—**अक्तः** । ५–तीषसहलुभेति विकल्पात् निष्ठायां यस्य विभाषेति निषेधे प्राप्ते वचनमिदम् । ६–इडभावे, झषस्तथोरिति तकारस्य धत्वे, जश्त्वम्, **लुब्धः** । ७–'स्वरतिसूति' इत्यतो वेत्यनुवर्तते तदाह—**इड् वा** । क्लिश उपतापे, इत्यस्य नित्यं प्राप्ते, 'क्लिशू विबाधने, इत्यस्य ऊदित्वाद् विकल्पे निष्ठायां यस्य विभाषेति निषेधे प्राप्ते विकल्पार्थोऽयमारम्भः । ८–इडभावपक्षे 'व्रश्चे'ति षत्वे ष्टुत्वम्, **क्लिष्टः** । ९–'श्र्युकः किति,' इति निषेधे प्राप्ते विकल्पोऽयम् । १०–निष्ठायाः कित्वाऽभावाद् गुणः, अवादेशः—**पवितः** । ११–नोपधादित्यत्र सूत्रेऽनुवृत्त्यर्थमित्यर्थः ।

नोपधादित्यत्र हि क्त्वैव सम्बध्यते ।

**११६४ निष्ठा शीङ्-स्विदि-मिदि-क्ष्विदि-धृषः १।२।१६॥**

सेट् किन्न । शयितः । ( आदिकर्मणि निष्ठा वक्तव्या ) ।

**११६५ आदिकर्मणि क्तः कर्तरि च ३।४।७१॥**

चाद्भावकर्मणोः ।

**११६६ विभाषा भावादिकर्मणोः ७।२।१७॥**

आदितो निष्ठाया इड् वा । प्रस्वेदितश्चैत्रः । प्रस्वेदितं तेन । ञिष्विदेति भ्वादिरत्र गृह्यते । शीङ्भिः साहचर्यात् । स्विद्यतेस्तु—स्विदित इत्येव । ञिमिदा ञिक्ष्विदा दिवादी भ्वादी च । प्रमेदितः । प्रक्ष्वेदितः । प्रधर्षितः। धर्षितं तेन । सेट् किम् । प्रस्विन्नः । प्रस्विन्नं तेनेत्यादि ।

**११६७ मृषस्तितिक्षायाम् १।२।२०॥**

सेण् निष्ठा किन्न । मर्षितः । क्षमायां किम्—अपमृषितं वाक्यम् । अविस्पष्टमित्यर्थः ।

१–तत्र हि क्त्वाप्रत्ययस्यैवाऽनुवृत्तिरिष्टा, पूङश्चेत्येवोक्तौ तु निष्ठा शीङित्यतो निष्ठाग्रहणमेवाऽनुवर्तेत, इति भावः । २–कित्वाऽभावाद् गुणेऽयादेशः । ३–यत्र दीर्घकालव्यापिनी क्रिया तत्राद्येषु क्रियाक्षणेषु भूतेष्वपि सर्वस्याः क्रियाया भूतत्वाऽभावाद् भूते विहिता निष्ठा न प्राप्नोतीति तदर्थमिदमारभ्यते वार्तिकम्—**आदिकर्मणीति** । क्रियाया आरम्भकालविशिष्टोऽशः=आदिकर्म, तत्र विद्यमानाद् धातोर्निष्ठा वक्तव्येत्यर्थः । ४–आदिकर्मणि क्रियाया भूतांशविवक्षया विहितः क्तः कर्तरि स्यात्, चकाराद् भावकर्मणोरपीत्यर्थः । ५–आदितः=आकार इत् यस्य तस्मादित्यर्थः । भावे आदिकर्मणि च,–आदितो निष्ठाया इड् वा–इति सूत्रार्थः । ६–'निष्ठा शीङ्, इत्यादिना कित्वनिषेधे उपधागुणः, **प्रस्वेदितः** । चैत्रकर्तृका आरभ्यमाणप्रस्वेदनक्रियेत्यर्थः । ७–ष्विदा गात्रप्रक्षरणे इति दैवादिकस्येत्यर्थः । "निष्ठा शीङि"ति सूत्रे भ्वादेरेव ( ञिष्विदा इत्यस्यैव ) ग्रहणं नतु दैवादिकस्य, तेन नोपधागुणः । ८–गृह्येते इति शेषः । ९–'विभाषा भावादिकर्मणोः, इति इडभावपक्षे, कित्वनिषेधाऽभावात् न गुणः । **प्रस्विन्नः** । १०–तेन **मर्षित** इत्यत्रोपधागुणः ।

**११९८ उदुपधाद्भावादिकर्मणोरन्यतरस्याम् १ । २ । २१ ॥**

उदुपधात्परा भावादिकर्मणोः सेरिनष्ठा वा किन्नं । द्युतितम् । द्योतितम् । मुदितम् । मोदितं साधुना । प्रद्योतितः । प्रद्युतितः । प्रमुदितः । प्रमोदितः साधुः । उदुपधात्किम्—विदितम् । भावेत्यादि किम्—रुचितं कार्षापणम् । सेट् किम्—कुष्टम् । शब्विकरणेभ्य एवेष्यते । नेह गुध्यते-र्गुधितम् ।

**११९९ निष्ठायां सेटि ६ । ४ । ५२ ॥**

णेर्लोपः । भावितः । भावितवान् ।

**१२०० दृढः स्थूलबलयोः ७ । २ । २० ॥**

स्थूले बलवति च निपात्यते ।

**१२०१ दधातेर्हिः ७ । ४ । ४२ ॥**

तादौ किति । हितम् ।

**१२०२ दो दद्घोः ७ । ४ । ४६ ॥**

घुसंज्ञस्य दा इत्यस्य दथ् तादौ किति । चर्त्वम् । दत्तः ।

**१२०३ गत्यर्थाकर्मक-श्लिष-शीङ्-स्थास-वस-जन-रुह-जीर्यतिभ्यश्च ३ । ४ । ७२ ॥**

एभ्यः कर्तरि क्तः स्याद्भावकर्मणोश्च । गङ्गां प्राप्तः । ग्लानः सः । लक्ष्मीमाश्लिष्टो हरिः । शेषमधिशयितः ।

**१२०४ द्यति-स्यति-मा स्थामित्ति किति ७ । ४ । ४० ॥**

---

१—कित्वनिषेधो वेत्यर्थः । तेन वा गुणः, द्युतितम्, द्योतितम् इत्यादि । २—अत्र कर्मणि निष्ठा । ३—भ्वादिभ्य एवेत्यर्थः । तेन गुध्यतेर्दिवादिगणस्थस्य **गुधितम्** । ४—सेरिनष्ठायां णेर्लोप इत्यर्थः । णेरनिटि, इत्यतो णेरिति, आतो लोप इत्यतो लोप इति चानुवर्तते । ५—बलशब्द अर्शआद्यजन्तो बलवत्परः । अर्थो वृत्तौ स्पष्टः । 'दृह दृहि वृद्धौ इत्याभ्यां क्तप्रत्ययः, इडभावः, निष्ठातकारस्य ढत्वं, हकारस्य लोपश्च निपात्यते, इदितो नलोपश्चापि । दृढः । ६—'द्यतिस्यती'त्यतः—ति कितीत्यनुवर्तते । तादौ किति धाधातोः हिरादेशः स्यादित्यर्थः । ७—'थ्' इत्यस्य खरि चेति चर्त्वम्=तकारः, इत्यर्थः । **दत्तः** । ८-कर्तर्यप्राप्तः क्तप्रत्ययो विधीयते ।

एषामित्स्यात्तादौ क्तीति । वैकुण्ठमधिष्ठितः[1] । शिवमुपासितः । हरिदिनमुपोषितः[2] । राममनुजातः[3] । गरुडमारूढः[4] । विश्वमनुजीर्णः[5] । पक्षे प्राप्ता गङ्गा तेनेत्यादि ।

१२०५ क्तोऽधिकरणे च ध्रौव्य-गति-प्रत्यवसानार्थेभ्यः ३ । ४ । ७६ ॥

एभ्योऽधिकरणे क्तः, चाद्यथाप्राप्तम् ।

मुकुन्दस्यासितमिदमिदं यातं रमापतेः ।[6]
भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः ॥

पक्षे आसेरकर्मकत्वात्कर्तरि भावे च । आसितो मुकुन्दः । आसितं तेन । गत्यर्थेभ्यः[7] कर्तरि कर्मणि च—रमापतिरिदं यातः । तेनेदं यातम् । भुजेः कर्मणि—अनन्तेनेदं भुक्तम् । वर्तमाने इत्यधिकृत्य ।

१–अधिष्ठाधातोः क्तप्रत्यये, आकारस्य–इत्वे, **अधिष्ठितः** । वैकुण्ठे स्थितवानित्यर्थः । २–**उपोषितः** । वसेः क्तप्रत्यये यजादित्वात्सम्प्रसारणम् । 'वसतिक्षुधोरिट्' । शासिवसिघसीति षः, हरिदिने न भुक्तवानित्यर्थः । ३–अनुकृतवानित्यर्थः । ४–उपर्याक्रान्तवानित्यर्थः, आरुह्+क्तः, हस्य ढत्वं, तकारस्य धत्वे, ढत्वे, ढलोपे, दीर्घः—**आरूढः** । ५–जॄधातोः कर्तरि क्तः, 'ॠत इदिति इत्वं रपरत्वं, हलि चेति दीर्घः, रदाभ्यामिति नत्वे णत्वम्, **अनुजीर्णः** । ६–**मुकुन्दस्ये**ति, इदम्=पुरो दृश्यमानं मुकुन्दस्य=भगवतः श्रीकृष्णचन्द्रस्य **आसितम्**=आस्यतेऽस्मिन्नित्यासनस्थानमित्यर्थः, ध्रौव्योदाहरणमिदम् । इदं च रमापतेः=श्रीकृष्णस्य **यातम्**=यायते=गम्यतेऽत्रेति यातम्=मार्गः, गत्यर्थोदाहरणमिदम् । एतत्, अनन्तस्य=श्रीकृष्णस्य **भुक्तम्**=भुज्यतेऽस्मिन्निति भुक्तम्=भोजनस्थानमित्यर्थः, प्रत्यवसानो–( भक्षणो ) दाहरणमिदम् । दिदृक्षवः=दर्शनाभिलाषिण्योऽन्वेषमाणा गोप्य इति=पूर्वोक्तम् ऊचुः । इति । ७–गत्यर्थानां सकर्मकतया कर्तरि कर्मणि च क्तो नतु भावे इत्यर्थः । कर्तर्युदाहरणम्—**रमापतिरिदं यातः**, कर्तुरुक्तत्वात्प्रथमा, कर्मणश्चानुक्तत्वाद् द्वितीया । कर्मण्युदाहरणम्—**तेनेदं यातम्** इति कर्तुरनुक्तत्वात्तृतीया कर्मणश्चोक्तत्वान्न द्वितीया, किन्तु प्रथमा ।

**१२०६ ञीतः क्तः ३। २। १८७॥**

ञिक्ष्विदा[1]।

**१२०७ मति-बुद्धि-पूजार्थेभ्यश्च[2] ३। २। १८८॥**

राज्ञां मतः। इष्टः[3]। बुद्धः। विदितः। पूजितः। अर्चितः। चकारोऽनुक्तसमुच्चयार्थः[4]। "शीलितः, रक्षितः, क्षान्तः, आक्रुष्टो जुष्ट इत्यपि"[5] इत्यादि।

**१२०८ नपुंसके भावे क्तः ३। ३। ११४॥**

क्लीबत्वविशिष्टे भावे कालसामान्ये क्तः स्यात्। जल्पितम्। हसितम्।

**१२०९ सुयजोर्ङ्वनिप्[6] ३। २। १०३॥**

भूते। सुत्वा[7]। यज्वा।

**१२१० जीर्यतेरतृन्[8] ३। २। १०४॥**

जरन्। जरन्तौ। वासरूपन्यायेन[9] निष्ठापि। जीर्णः। जीर्णवान्।

**१२११ छन्दसि लिट् ३। २। १०५॥**

**१२१२ लिटः कानज्वा ३। २। १०६॥**

**१२१३ क्वसुश्च ३। २। १०७॥**

भूतसामान्ये छन्दसि लिट्। तस्य कानच्-क्वसू वा स्तः। 'तङानावात्मनेपदम्'[10]। चक्राणः[11]। 'म्वोश्च'। जगन्वान्[12]। कवयस्तु बाहुलकाल्लोकेऽपि

---

१-'ञि' इत् यस्य तस्माद् वर्तमानक्रियावृत्तेर्धातोः क्तप्रत्ययः स्यादित्यर्थः। यथा,-'ञिक्ष्विदा, इत्यस्य क्ष्विण्णः आदितश्चेति नेट्। रदाभ्यामिति तकारस्य दकारस्य च नत्वे, णत्वम्। २-वर्तमाने क्त इति शेषः। मतिरिहेच्छा, बुद्धेः पृथगुपादानात्। ३-तीषसहेति वेट्कत्वाद् यस्य विभाषेति इण्निषेधः, ष्टुत्वम्, इष्टः। ४-सूत्रेऽनुक्तार्थेभ्योऽपीत्यर्थः। ५-भाष्यश्लोकोऽयम्। ६-षुञ् अभिषवे, इत्यस्माद् यजधातोश्च ङ्वनिप् स्यादित्यर्थः। ७-पित्वात् तुक्, सुत्वन् शब्दः, प्रथमैकवचने सुत्वा, एवं यज्वा। ८-जॄधातोः अतृन्, गुणे 'जरत्' शब्दः, इदित्वान्नुम्, जरन्, जरन्तौ, जरन्तः इति। ९-अतृन्प्रत्ययो हि अपवादः, निष्ठा चोत्सर्गः, न्यायेनानेन उत्सर्गस्य विकल्पेन बाधः। तेन पक्षे निष्ठापीत्यर्थः। १०-इत्यनेनात्मनेपदसंज्ञेत्यर्थः। ११-कृधातोर्लिटः कानच्, द्वित्वेऽभ्यासकार्ये चकृ+आन(ः) इति स्थिते यणि चक्राणः। १२-गम्धातोः लिटः क्वसु द्वित्वे जगम्+वस्, इति। म्वोश्चेति मस्य नत्वम्

प्रयुञ्जते। 'तं तस्थिवांसं नगरोपकण्ठे'। 'श्रेयांसि सर्वाण्यधिजग्मुषस्ते'। इत्यादि।

**१२१४ वस्वेकाजाद्घसाम् ७। २। ६७॥**

कृतद्विर्वचनानामेकाचामादन्तानां घसेश्च वसोरिट् स्यान्नान्येषाम्। आदिवान्। आरिवान्। ददिवान्। जक्षिवान्। एषां किम्—बभूवान्।

**१२१५ भाषायां सद्-वस-श्रुवः ३। २। १०८॥**

सदादिभ्यो भूतसामान्ये भाषायां लिड् वा स्यात् तस्य च नित्यं क्वसुः। 'निषेदुषीमासनबन्धधीरः'। 'अध्यूषुषस्तामभवज्जनस्य'। शुश्रुवान्।

---

'जगन्वस्' शब्दः प्रथमायां नुमि दीर्घे, **जगन्वान्**, जगन्वांसौ इत्यादि।

१—स्थाधातोर्लिटः क्वसुः, द्वित्वादौ 'वस्वेकाजाद्घसा,मिति वसोरिट्। 'तस्थिवस्,-शब्दः प्रथमायां नुमादौ **तस्थिवान्** तस्थिवांसौ तस्थिवांसः, तस्थिवांसम् इत्यादि, शसि 'वसोः' इति सम्प्रसारणे **'तस्थुषः'** इति। २—अधिपूर्वकाद् गम्धातोर्लिटः क्वसुः अधिजगन्वान् इत्यादि। शसि—ङसि च **अधिजग्मुषः**, गमहनेत्युपधालोपः, वसोः सम्प्रसारणे पूर्वरूपम्। षत्वम्। ३—एकाजुदाहरणमिदम्—अद् भक्षणे इत्यस्माल्लिटः, क्वसुः, द्वित्वं हलादिशेषाभ्यासदीर्घसवर्णदीर्घेषु कृतेषु, कृतद्वित्वोऽप्ययमेकाज्—इति भवति 'इट्'। **आदिवान्** आदिवांसौ इत्यादि। शसि—आदुषः। एवम् ऋ गतौ इत्यस्य **आरिवान्**, ऋच्छत्यृतामिति गुणः, द्वित्वादि पूर्ववत्। शसि—आरुषः। आदन्तोदाहरणम्:—**ददिवान्**, डुदाञ् दाने धातुः, लिटः क्वसुः, द्वित्वादि, इट्, 'आतो लोपः' इत्यालोपः। घसधातूदाहरणम्:—**जक्षिवान्**। अदेर्लिटि लिट्यन्यतरस्यामिति घस्लादेशः, लिटः क्वसुः द्वित्वादि, इट्, गमहनेत्युपधालोपः। 'जक्षिवस्' शब्दः, प्रथमायां—**जक्षिवान्** जक्षिवांसौ इत्यादि, शसि जक्षुषः। ४—भूधातोर्लिटः क्वसुः, इडभावे द्वित्वादि बभूवस्—शब्दः, प्रथमायां **बभूवान्** बभूवांसौ, इत्यादि। शसि बभूवुषः,। ५—निपूर्वकात्सदेर्लिटः, क्वसुः, द्वित्वे 'अत एकहल्मध्ये, इत्येत्वाऽभ्यासलोपौ इति निषेदिवान् निषेदिवांसौ इत्यादि (पुँल्लिङ्गे)। स्त्रीत्वे, निषेदिवस्-शब्दात् उगितश्चेति ङीप्, वसोः सम्प्रसारणम्, इडभावे पूर्वरूपं षत्वम्, **'निषेदुषी'** इति। ६—अधिपूर्वाद् वस्धातोर्लिटः क्वसुः, यजादित्वाद्धातोर्वस्य सम्प्रसारणम्, पूर्वरूपम्, 'उस्' इत्यद्वित्वम्, हलादिशेषः, सवर्णदीर्घः।

**१२१६ उपेयिवाननाश्वाननूचानश्च ३ । २ । १०६ ॥**

एते निपात्यन्ते । उपादिणो लिड् वा तस्य क्वसुः । इट् । उपेयिवान् । नात्रोपसर्गस्तन्त्रम् । ईयिवान् । नञोऽश्नातेः क्वसोरिडभावश्च, अनाश्वान् । अनोर्वचेः कर्तरि कानच् , वेदस्यानुवचनं कृतवाननूचानः ।

**१२१७ लटः शतृशानचावप्रथमासमानाधिकरणे ३।२।१२४॥**

अप्रथमान्तेन सामानाधिकरण्ये लट एतौ वा स्तः । शबादिः । पचन्तं चैत्रं पश्य ।

**१२१८ आने मुक् ७ । २ । ८२ ॥**

अङ्गस्यातः । पचमानं चैत्रं पश्य । लडित्यनुवर्तमाने पुनर्लड्ग्रहणात् प्रथमासामानाधिकरण्येऽपि क्वचित् । सन् द्विजः ।

**१२१९ ईदासः ७ । २ । ८३ ॥**

आनस्य । 'आदेः परस्य' । आसीनः ।

**१२२० विदेः शतुर्वसुः ७ । १ । ३६ ॥**

वेत्तेः परस्य शतुर्वसुरादेशो वा । विद्वान् । विदन् ।

---

अध्यूषिवस्–शब्दः, प्रथमायां नुमादौ अध्यूषिवान् अध्यूषिवांसौ इत्यादि, शसि, ङसिङसोश्च वसोः सम्प्रसारणम्, पूर्वरूपम् ( इडभावे ) **अध्यूषुषः** । ७–श्रुधातोर्लिटः क्वसुः, द्वित्वम् । **शुश्रुवान्** ।

१–उपेत्युपसर्गग्रहणं न विवक्षितमित्यर्थः । तेन तदभावेऽपि भवतीति भावः । २–निपात्यते इति शेषः । ३–अनुवच्+कानच्, कित्वात्सम्प्रसारणम्, पूर्वरूपम् सवर्णदीर्घः, **अनूचानः** । ४–आने परे अङ्गस्यातो मुगागमः स्यादित्यर्थः । ५–६–आसधातोः परस्याऽऽनस्य 'ईत्' स्यादित्यर्थः । आदेः परस्येति नियमेन 'आन' इत्यस्याद्याऽवयवीभूतस्याऽऽकारस्य 'ईत्' **आसीनः**, ( आस्+शानच् ) । ७–'विद् ज्ञाने' इत्यस्मात् लटः 'शतृ' आदेशे तस्य विकल्पेन 'वसु' प्रत्यये 'विद्वस्' शब्दः सिद्ध्यति । कृत्तद्धितेति प्रातिपदिकत्वात् स्वादयः, उगित्वान्नुम्, 'सान्तमहत' इति दीर्घः, संयोगान्तत्वेन सलोपः, **विद्वान्**, विद्वांसौ, शसि वसोः सम्प्रसारणे, पूर्वरूपे, विदुषः । भ्यामादौ 'वसुस्रंस्वि'ति दत्वम्, विद्वद्भ्याम् । पक्षे ( शत्रन्तत्वे ) **विदन्**, विदन्तौ इत्यादि, उगित्वान्नुम्, तकारस्य संयोगान्तलोपः ।

**१२२१ तौ सत् ३ । २ । १२७ ॥**

तौ शतृशानचौ सत्संज्ञौ स्तः ।

**१२२२ लृटः सद्वा ३ । ३ । १४ ॥**

करिष्यन्तं[1] करिष्यमाणं वा पश्य ।

**१२२३ ताच्छील्य-वयोवचन-शक्तिषु चानश् ३ । २ । १२९**

अग्नौ जुह्वानः[2] । कवचं बिभ्राणः[3] । शत्रुं निघ्नानः[4] ।

**१२२४ आक्वेस्तच्छील-तद्धर्म-तत्साधुकारिषु ३। २। १३४॥**

क्विपमभिव्याप्य वक्ष्यमाणास्तच्छीलादिषु कर्तृषु बोध्याः ।

**१२२५ तृन्[5] ३ । २ । १३५**

कर्ता कटान् ।

**१२२६ स्पृहि-गृहि-पति—दयि—निद्रा-तन्द्रा—श्रद्धाभ्य आलुच् ३ । २ । १५८ ॥**

---

१—करिष्यतीति तम्=**करिष्यन्तं, करिष्यमाणम्**, कृञ उभयपदित्वेन शतृशानचावुभावपि भवतः-इति । २—हु दानादनयोः, इत्यस्मात् चानश् प्रत्यये, ( शचावितौ ) चानशः शित्वेन सार्वधातुकत्वाद्—शप्, जुहोत्यादित्वेन शपः श्लुः, 'श्लौ' इति द्वित्वं कुहोश्चुरिति चुत्वम्, जुहु+आन (:) इको यणिति यण्, **जुह्वानः**=हवनशील इत्यर्थः । ३—डुभृञ् धारणपोषणयोः, इत्यस्मात् चानशि रूपम् । बिभर्त्ति तच्छील इति विग्रहः, सिद्धिः पूर्ववत् । **बिभ्राणः** । वयस्युदाहरणमिदम्, यौवनबलात् कवचं बिभ्राण इत्यर्थः । ४—चानशो लादेशत्वाऽभावान्नात्मनेपदत्वम्, तेन परस्मैपदिभ्योऽपि धातुभ्यो भवति चानश् तथोदाहरति—**निघ्नानः** (नि-हन्+चानश्) शचावितौ, अदादित्वेन शपो लुक्, सार्वधातुकमपिदिति ङित्वेन गमहनेत्युपधालोपे, हो हन्तेरिति हस्य घत्वे रूपम् । 'आन' इत्यस्याऽतः परत्वाऽभावान्न मुक्, निहन्तुं शक्त इत्यर्थः । ५—धातोः तृन् प्रत्ययः स्यात्तच्छीलादिषु कर्तृषु—इत्यर्थः । करोति तच्छीलः **कर्ता** । 'कटान्' इति कर्म, तत्र 'कर्तृकर्मणो'रिति प्राप्ता षष्ठी न लोकाव्ययेति निषिद्धयते । साधु करोति, इत्यपि विग्रहः ।

आयादयश्चुरादावदन्ताः । स्पृहयालुः ( शीङो वाच्यः ) शयालुः ।

**१२२७ अलंकृञ्-निराकृञ्-प्रजनोत्पचोत्पतोन्मद्-रुच्यप-त्रप-वृतु-वृधु-सह-चर इष्णुच् ३ । २ । १३६ ॥**

अलङ्करिष्णुः ।

**१२२८ ग्ला-जि-स्थश्च ग्स्नुः ३ । २ । १३९ ॥**

गिदयं नतु कित् । तेन स्थ ईत्वं न । ग्लास्नुः । गित्वान्न गुणः । जिष्णुः । स्थास्नुः । चाद्भुवः । श्र्युकः कितीत्यत्र गकारप्रश्लेषान्नेट् । भूष्णुः ।

**१२२९ त्रसि-गृधि-धृषि-क्षिपेः क्नुः ३ । २ । १४० ॥**

त्रस्नुः । गृध्नुः । धृष्णुः । क्षिप्नुः ।

**१२३० शमित्यष्टाभ्यो घिनुण् ३ । २ । १४१ ॥**

उकार उच्चारणार्थ इति काशिका । अनुबन्ध इति भाष्यम् । तेन शमिनितरा शमिनीतरेत्यत्र उगितश्चेति ह्रस्वविकल्पः । नचैवं शमी शमि-

---

१–स्पृहधातोः चुरादिण्यन्तादालुच्, स्पृह इ+आलु (:), अतो लोपः, स्पृहि+आलु (:) अयामान्तात्विति णेरयादेशः स्पृहयालुः । अल्लोपस्य स्थानिवत्वान्नोपधागुणः, एवं गृहयालुरित्यादि । २–सूत्रोक्तेभ्यः तच्छीलादिषु कर्तृषु इष्णुच् स्यादित्यर्थः । अलङ्करोति तच्छील इति विग्रहः, एवमग्रेऽपि । ३–स्थास्नुरित्यत्र कित्वलक्षणं घुमास्थेति–ईत्वं नेत्यर्थः । ४–क्ङिति चेति सूत्रे गकारोऽपि प्रश्लिष्यत इति भावः । तेन गित्यपि गुणनिषेधः । ५–ननु भूष्णुरित्यत्र 'इट्' स्यात्, श्र्युकः किति, इति कित एव इण्निषेधात्, तत्रोच्यते—श्र्युकः कितीत्यत्रेति, तेन गित्यपि भवति इण्निषेध इति । ६–त्रस्नुरित्यत्र 'नेड् वशीति' इण् निषेधः । 'गृध्नुः' इत्यादौ कित्वाद् नोपधागुणः । ७–इतिशब्दोऽत्र आदिशब्दपर्यायः, शमादयो दिवादौ स्थिताः । तेभ्योऽष्टाभ्यो घिनुण् स्यात्तच्छीलादिषु कर्तृषु, इति भावः । 'घिनुण्' इत्यस्य 'इन्' इत्यवशिष्यते । ८–तेनेति—भाष्यमतेऽनुबन्धत्वेन उगित्वात् शमिनितरेति ह्रस्वः, काशिकामते उच्चारणार्थत्वेन उगित्वाऽभावात् न ह्रस्वः–शमिनीतरा, इति । एवं मतद्वयेन 'उगित'श्चेति ह्रस्वप्रवृत्त्यप्रवृत्तिभ्यां विकल्पः सिद्ध्यति । ( घिनुणन्तात् शमिन्शब्दात् स्त्रियां ऋन्नेभ्य इति ङीप्, ततस्तरप्प्रत्ययः; ततष्टाप्, उगितश्चेति मतभेदेन ह्रस्वविकल्पः ) ।

नावित्यादौ नुम्प्रसङ्गः । झल्ग्रहणमपकृष्य झलन्तानामेव तद्विधानात् । नोदात्तोपदेशस्येति वृद्धिनिषेधः । शमी । तमीत्यादि ।

**१२३१ संपृचानुरुधाङ्यमाङ्यस-परिसृ-संसृज-परिदेवि-संज्वर-परिक्षिप-परिरट-परिवद-परिदह-परिमुह-दुष-द्विष-द्रुह-दुह-युजाक्रीड-विविच-त्यज-रज-भजातिचरापचरामुषाभ्याहनश्च ३ । २ । १४२ ॥**

घिनुण् स्यात् । सम्पर्कीत्यादि ।

**१२३२ वौ कष-लस-कत्थ-स्रम्भः ३ । २ । १४३ ॥**

विकाषी ।

**१२३३ अपे च लषः ३ । २ । १४४ ॥**

चाद्वौ । अपलाषी । विलाषी ।

---

१–ननु भाष्यरीत्या उगित्वाऽभ्युपगमे शमी शमिनौ इत्यादौ उगिदचामिति नुम् स्यात्तत्राह–झल्ग्रहणमिति 'उगिदचाम्' इति सूत्रे 'नपुंसकस्य झलचः, इत्युत्तरसूत्रात् झल्ग्रहणमपकृष्य, झलन्तस्य नुम् भवतीति व्याख्यानान्न नुम् इत्यर्थः । इदं युवोरिति सूत्रभाष्ये स्पष्टम् । २–घिनुण्प्रत्ययस्य णित्वात् शमादीनामुपधावृद्धिः स्यादित्यत आह— नोदात्तोपदेशेति । ३–संपृच, अनुरुध, आङ्–यम, आङ्–यस, परिसृ, संसृज, परिदेवि, संज्वर, परिक्षिप्, परिरट, परिवद, परिदह, परिमुह, दुष, द्विष, द्रुह, दुह, युज, आ-क्रीड, वि-विच, त्यज, रज, भज, अति-चर, अप-चर, आमुष, अभ्याहन्, इत्येतेषां सप्तविंशतेः द्वन्द्वः । ४–सं-पृच्+( घिनुण् ) इन् । पुगन्तेति गुणः ' 'चजोः' इति कुत्वम् । **सम्पर्की** । सम्पृक्के तच्छील इत्यादिविग्रहाः । एवम् अनुरोधी, आयामी, ( अत उपधाया वृद्धिः ), आयासी, परिसारी, संसर्गी, परिदेवी, संज्वारी, परिक्षेपी, परिराटी, परिवादी, परिदाही, परिमोही, दोषी, द्वेषी, द्रोही, दोही, योगी, आक्रीडी, विवेकी, त्यागी, रागी, भागी, अतिचारी, अपचारी, आमोषी, अभ्याघाती (हो हन्तेरिति घत्वम्, हनस्त इति नस्य तकारः, उपधावृद्धिः)। ५–विपूर्वेभ्यः सूत्रोक्तेभ्यो घिनुण् स्यात्तच्छीलादिकर्तृष्वित्यर्थः। ६–अपपूर्वात् विपूर्वाच्च लषेर्घिनुण् ।

**१२३४ चलनशब्दार्थादकर्मकाद्युच् ३।२।१४८॥**

चलनार्थाच्छब्दार्थाच्च (अकर्मकात्) युच् स्यात्। चलनः। चोपनः। कम्पनः। शब्दनः। रवणः। अकर्मकात्किम्। पठिता विद्याम्।

**१२३५ अनुदात्तेतश्च हलादेः ३।२।१४९॥**

अकर्मकाद्युच्। वर्तनः। वर्धनः। अनुदात्तेतः किम्—भविता। हलादेः किम्—एधिता। अकर्मकात्किम्—वसिता वस्त्रम्।

**१२३६ निन्द-हिंस-क्लिश-खाद-विनाश-परिक्षिप-परिरट-परिवादि-व्याभाषासूञो वुञ् ३।२।१४६॥**

एभ्यो वुञ्। निन्दकः। हिंसक इत्यादि।

**१२३७ देविक्रुशोश्चोपसर्गे ३।२।१४७॥**

आदेवकः। आक्रोशकः। उपसर्गे किम्—देवयिता। क्रोष्टा।

**१२३८ लष-पत-पद-स्था-भू-वृष-हन-कम-गम-शॄभ्य उकञ् ३।२।१५४॥**

लाषुकः। पातुकः।

---

१—चल कम्पने (अकर्मकः) इत्यस्मात् 'युच्', अनादेशः, **चलनः**=कम्पनशील इत्यर्थः। २—चुप् मन्दायां गतौ, चोपति तच्छीलः, **चोपनः**। कपि संचलने, कम्पते तच्छीलः **कम्पनः**। शब्द शब्दने चुरादिः, शब्दयतीति शब्दनः। रु शब्दे रौति—इति **रवणः**। ३—हलादेरनुदात्तेतोऽकर्मकाद् युच् स्यात्ताच्छील्यादिषु—इत्यर्थः। ४—भूधातोः अनुदात्तेत्त्वाऽभावान्न युच् किन्तु तृन्, इटि **भविता**। ५—विनाशेति विपूर्वस्य नशेर्ण्यन्तस्य भाविना णिलोपेन निर्देशः—निन्द, हिंस, क्लिश, खाद, विनाश, परिक्षिप, परिरट, परिवादि, व्याभाष, आसूय, इत्येतेषां दशानां द्वन्द्वः। वुञो ञित्वेन यथाप्राप्तं गुणवृद्ध्यादिकम्। क्लेशकः, खादकः, विनाशकः, परिक्षेपकः, परिराटकः, परिवादकः, व्याभाषकः, असूयकः। निन्दति तच्छील इत्यादिविग्रहः। ६—वुञ् स्यादिति शेषः। ७—लषतेरुकञ्, लषति तच्छीलो लाषुकः, अत उपधाया वृद्धिः। एवम्—पातुकः, पादुकः, स्थायुकः (आतो युक्), भावुकः वर्षुकः, घातुकः (वृद्धिः, हस्य घत्वम्, नस्य तः), कामुकः, गामुकः, शारुकः।

**१२३९ जल्प-भिक्ष-कुट्ट-लुण्ट-वृङः षाकन् ३।२।१५५॥**

जल्पाकः।

**१२४० सनाऽऽशंस-भिक्ष उः ३।२।१६८॥**

चिकीर्षुः। आशंसुः। भिक्षुः।

**१२४१ स्थेश-भास-पिस-कसो वरच् ३।२।१७५॥**

स्थावरः। इत्यादि।

**१२४२ यश्च यङः ३।२।१७६॥**

यातेर्यङन्ताद्वरच्। अतो लोपः। तस्याचः परस्मिन्निति स्थानिवद्भावे प्राप्ते।

**१२४३ न पदान्त-द्विर्वचन-वरेयलोप-स्वर-सवर्णानुस्वार-दीर्घ-जश्चर्विधिषु १।१।५८॥**

पदस्य चरमावयवे द्विर्वचनादौ च कर्तव्ये परनिमित्तोऽजादेशो न स्थानिवत्। इति यलोपं प्रति स्थानिवत्वनिषेधाल्लोपो व्योर्वलीति यलोपः। अल्लोपस्य स्थानिवत्त्वमाश्रित्याल्लोपे प्राप्ते (वरे लुप्तं न स्थानिवत्) यायावरः।

---

१–जल्पति तच्छीलः=जल्पाकः, एवम्–भिक्षाकः, कुट्टाकः, लुण्टाकः, वराकः। षाकनः षित्त्वात् स्त्रियां, 'षिद्गौरादिभ्य' इति ङीष् जल्पाकी— इत्यादि। २–चिकीर्षतीति तच्छीलः—**चिकीर्षुः**। सन्नन्तात् कृधातोः उप्रत्ययः, चिकीर्ष+उ (:), अतो लोप इति 'अ'–लोपः। ३–सूत्रे 'स्था–ईश' इति छेदः, तिष्ठति तच्छीलः=**स्थावरः**। एवम् ईष्टे—**ईश्वरः**, भासते—**भास्वरः**, पेसति—**पेस्वरः**, कसति—**कस्वरः**। ४–याधातोः 'नित्यं कौटिल्ये गतौ' इति यङन्तात् (द्वित्वेऽभ्यासह्रस्वे, 'दीर्घोऽकित' इति पुनरभ्यासदीर्घे,) वरच्, यायाय+वर (:) इति स्थिते '**अतो लोपः**' इत्यल्लोपे। **तस्य=**अल्लोपस्य स्थानिवद्भावे प्राप्ते तन्निषेधे च सति लोपो व्योर्वलीति यलोपे, यायावर इति सिद्ध्यति। ननु अतो लोप, इत्यनेन कृतस्य अल्लोपस्य स्थानिवद्भावेनाश्रयणात् 'आतो लोप' इति–आलोपः स्यादित्यत्रोत्तरम्—**वरे लुप्तं न स्थानिवत्**, वरच् प्रत्यये यल्लुप्तं तन्न स्थानिवदिति निषेधेन अल्लोपस्य स्थानिवत्त्वाऽभावाद् आलोपो नेति भावः। यायायते=कुटिलं गच्छति तच्छीलः—**यायावरः**।

**१२४४ भ्राज-भास-धुर्वि-द्युतोर्जि-पॄ-जु-ग्रावस्तुवः क्विप् ३। २। १७७॥**

विभ्राट्। भाः। धूः। विद्युत्। ऊर्क्। पूः। दृशिग्रहणस्यापकर्षणाज्जवतेर्दीर्घः। जूः। ग्रावस्तुत्। (क्विब्वचि-प्रच्छ्यायतस्तु-कटप्रु-जु-श्रीणां दीर्घोऽसम्प्रसारणं च) वक्तीति वाक्। पृच्छतीति प्राट्। आयतं स्तौतीति आयतस्तूः। कटं प्रवते कटप्रूः। जूरुक्तः। श्रयति हरिं श्रीः। (ध्यायतेः सम्प्रसारणं च) धीः।

**१२४५ दाम्नी-शस-यु-युज-स्तु-तुद-सि-सिच-मिह-पत-दश-नहः करणे ३। २। १८२॥**

दाबादेः ष्ट्रन् करणेऽर्थे। दान्त्यनेन दात्रम्। नेत्रम्।

**१२४६ ति-तु-त्र-त-थ-सि-सु-सर-कसेषु च ७। २। ६॥**

---

१–भासते तच्छीलः—**भाः**, क्विपः सर्वापहारे रुत्वविसर्गौ। धूर्वति तच्छीलः—धूः 'राल्लोपः' इति वलोपः, धुर् शब्दः, र्वोरिति दीर्घे 'धूः' धुरौ धुरः। एवम्—विद्योतते-विद्युत्। ऊर्जयति—**ऊर्क्**। पिपर्ति—**पूः** क्विप्–उदोष्ठ्येति ॠत उत्वे रपरत्वे च 'पुर्' शब्दः, र्वोरिति दीर्घः, पूः पुरौ पुरः। २–'अन्येभ्योऽपि दृश्यते ३। २। १७८। इति सूत्रे दृशिग्रहणस्य (दृश्यते इत्यस्य) विध्यन्तरविशेषसमर्पकत्वमभिमतं विद्यते, इहापि तदपकर्षाद् विध्यन्तरसिद्धेर्दीर्घः, इति भावः। 'जु' इति सौत्रो धातुः क्विपि दीर्घे, जूः, जुवौ जुवः इत्यादि। **ग्रावस्तुत्**, क्विप्, तुक्। ३–क्विप्प्रत्ययेऽप्राप्तो दीर्घो निपात्यते, प्राप्तं च सम्प्रसारणं निषिध्यते। उणादिरूपमिदं वार्त्तिकञ्च। **कटप्रूः** कटप्रुवौ, इत्यादि (उवङ्)। ४–क्विपि दीर्घः, प्राञ्चस्तु श्रयन्त्येनामिति कर्मणि क्विपमुदाहरन्ति, तत्र–कर्तरि कृदिति शास्त्रविरोधोऽपरिहार्यः। ५–चात् क्विप्, ध्यैधातोः क्विपि सम्प्रसारणम्, 'हल' इति दीर्घः, **धीः**। ६–दाप्–नी, इति छेदः पकारस्याऽनुनासिको मकारः। ७–दा (प्) लवने धातुः, स्त्रियां षित्वाद् ङीष्, दात्री नेत्रीत्यादयः। ८–ति=क्तिन्–क्तिच् (१)। तु=तुन् (२)। त्र=ष्ट्रन् (३)। त=तन् (४)। थ=क्थन् (५)। सि=क्सि (६)। सु (७)। सर=सरन् (८)। क=कन् (९)। स (१०) इति दश।

एषां दशानां कृत्प्रत्ययानामिदन । शस्त्रम्¹ । योत्रम् । योक्त्रम् । स्तोत्रम् तोत्रम् । सेत्रम् । सेक्त्रम् । मेढ्रम्² । पत्त्रम् । दंष्ट्रा³ । नद्ध्री⁴ ।

**१२४७ हलसूकरयोः पुवः ३ । २ । १८३ ॥**

पूङ्पूञोः करणे ष्ट्रन् । तच्चेत्करणं हलसूकरयोरवयवः । हलस्य सूकरस्य वा पोत्रं मुखमित्यर्थः ।

**१२४८ अर्ति-लू-धू-सू-खन-सह-चर इत्रः ३ । २ । १८४ ॥**

अरित्रम् । लवित्रम् । धवित्रम् । सवित्रम् । खनित्रम् । सहित्रम् । चरित्रम् ।

**१२४९ पुवः संज्ञायाम् ३ । २ । १८५ ॥**

पवित्रम्⁶ । ॥ इति पूर्वकृदन्ताः ॥

# अथोणादयः ।

**१ कृ-वा-पा-जि-मि-स्वदि-साध्यशूभ्य उण् ।**

करोतीति कारुः⁷ । वायुः । पायुर्गुदम् । जायुरौषधम् । मायुः पित्तम् । स्वादुः । साध्नोति परकार्यमिति साधुः । आशु शीघ्रम् ।

---

१-दाप्-दात्रम् । नी-नेत्रम् । शस्-शस्त्रम् । यु-योत्रम् । युज्-योक्त्रम् । स्तु-स्तोत्रम् । तुद्-तोत्त्रम् । सि-सेत्रम् । सिच्-सेक्त्रम् । २-।मिह्-मेढ्रम् । (ढत्वधत्वष्टुत्वढलोपाः) । पत्-पत्त्रम् । ३-दंश्-दंष्ट्रा, अत्र न ङीष् । अनित्यः षितां ङीष्, मातामहीशब्दस्य गौरादिषु पाठात्, मातरि षिच्चेति ङीषः सिद्धेः । ४-नह्-नद्ध्री ( अत्र नहो धः ) । इति क्रमेणोदाहरणानि । ५-ऋ-**अरित्रम्**, लू-लवित्रम्, धू-धवित्रम्, खन्-खनित्रम्, सह-सहित्रम्, चर-चरित्रम् । ६-पूयतेऽनेनाज्यमिति, पू-**पवित्रम्** ।

॥ इति पूर्वकृदन्तप्रकरणम् ॥

७-**कारुः**,=शिल्पी, णित्वाद् वृद्धिः । वातीति **वायुः**, आतो युगिति युक् । एवम् **पायुः** । जयत्यभिभवति रोगम् इति **जायुः**=औषधम्, इकारस्य वृद्धौ-आयादेशः । (डुमिञ् प्रक्षेपणे) मिनोति=प्रक्षिपति देहे उष्माणमिति **मायुः**=पित्तम् । (स्वदते=रोचते इति स्वादुः-सिताखण्डः । **साधुः**= परोपकारी । अश्नुते-**आशु**=शीघ्रम् । )

२ हरिमितयोर्द्रुवः ।

द्रु गतौ । इत्यस्मात् हरिमितयोरुपपदयोः कुः स च डित् । हरिभिर्द्रूयते हरिद्रुर्वृक्षः[1] । मितं द्रवतीति मितद्रुः—समुद्रः ।

३ शते च ।

शतधा द्रवतीति शतद्रुर्नदीभेदः[2] ।

४ अन्दू-दृन्भू-जम्बू-कफेलू-कर्कन्धू-दिधिषूः[3] ।

एते कूप्रत्ययान्ता निपात्यन्ते ।

५ शमेर्ढः ।

बाहुलकात् इत्संज्ञा ढस्य एयादेश इट् च न भवति । 'शण्ढः[4] स्यात्पुंसि गोपतौ' ।

६ कमेरठः ।

'कमठः कच्छपे पुंसि भाण्डभेदे नपुंसकम्' इति मेदिनी ।

७ रमेर्वृद्धिः[5] ।

रामठं=हिङ्गु ।

८ शमेः खः ।

---

१—कुप्रत्यये डित्त्वात् टिलोपः । एवम् मितद्रुः । २—'सतलुज' इति भाषायाम् । ३—अदि बन्धने, इत्यस्मात् कूप्रत्यये अन्दूः=बन्धनम् । इदित्वान्नुम् । दृभी ग्रन्थे, निपातनान्नुम् दृम्भूः, निपातनादनुस्वाराभावो ऽपीत्येके दृन्भूरिति । जनी प्रादुर्भावे, कूप्रत्यये 'बुक्'—आगमः, नकारस्यानुस्वारपरसवर्णौ—जम्बूः=वृक्षविशेषः—( जामुन ), जमु—अदने—इत्यस्य जम्बूरित्येके । बाहुलकाद् ह्रस्वोऽपि जम्बुः । कफं लाति—इति कफेलूः,= श्लेष्मातकः=लसूढा इति भाषा । लाधातोः कूप्रत्ययः, पूर्वपदस्यैदन्तत्वं निपातनात् । कर्क=बदरीफलं दधाति कर्कन्धूः=बदरी( वृक्षः ), निपातनान्नुम् । कर्कपूर्वाद् धाधातोः कूप्रत्ययः । दिधिं=धैर्यं स्यति=त्यजति दिधिषूः= पुनर्भूः । दिधिपूर्वकात् षोऽन्तकर्मणि, इत्यस्मात् कूप्रत्ययः । ४—शम्धातोः ढप्रत्यये रूपम्—शण्ढः=गवेन्द्रः ( सांढ, इति भाषायाम् ), चुटू इति ढस्य इत्संज्ञा, आयनेयीति एयादेशः, इट् च बाहुलकान्न भवति, मकारस्यानुस्वारपरसवर्णौ । ५-रम्धातोः-अठप्रत्ययः, उपधावृद्धिश्चेत्यर्थः । रामठम् ।

शङ्कुः[1]।

६ कणेष्ठः।

कण्ठः[2]।

१० अमन्ताड्डः[3]।

अमिति प्रत्याहारः। 'दण्डोऽस्त्री लगुडेऽपि स्यात्' इत्यमरः। 'रण्डा मूषिकपर्ण्यां च विधवायां च योषिति' इति मेदिनी। 'खण्डोऽस्त्री नेक्षुविकारमणिभेदयोः' इति मेदिनी। मन ज्ञाने। 'मण्डः पञ्चाङ्गुले शाकभेदे क्लीबं तु वस्तुनि'। इति मेदिनी।

११ पति-चण्डिभ्यामालञ्[4]।

'पातालं नागलोके स्याद्विवरे वडवानले' इति मेदिनी। चण्डालो=मातङ्गः। प्रज्ञादित्वादणि चाण्डालोऽपीत्युज्ज्वलदत्तः। तन्न। 'कुलाल-वरुड-कर्मार-निषाद-चण्डाल-मित्राऽमित्रेभ्यश्छन्दसि' इति चण्डालशब्दात्स्वार्थे णं विदधता वार्तिकेन तद्भाष्येण च सह विरोधात्।

१२ गन् गम्यद्योः[5]।

गङ्गा। अद्गः=पुरोडाशः।

१३ भृञः कित् नुट् च[6]।

भृञो गन्कित्स्यात्तस्य नुट् च। 'भृङ्गाः षिड्गाऽलिधूम्याटाः'।

---

१-शमु उपशमे इत्यस्मात् खप्रत्ययः, अनुस्वारपरसवर्णौ शङ्कुः। २-कण निमीलने इत्यस्मात् ठप्रत्यये, कण्ठः=गलः। ३-'अमङ्णनम्, इति 'अम्' प्रत्याहारः, अमन्ताद् धातोः डः स्यादित्यर्थः, 'बाहुलकात् चुट्' इति डस्येत्वं न। दमु धातोः डप्रत्यये, अनुस्वारसवर्णौ, दण्डः=लगुडः, रमु धातोः—रण्डा। खनु अवदारणे इत्यस्य खण्डः। मन धातोः डप्रत्यये मण्डः। ४-पत् धातोः आलञ् प्रत्ययः, ञित्वादुपधावृद्धिः। पतन्त्यस्मिन्निति विग्रहः। ५-चडि कोपे—इत्यस्माद् आलञ्, इदित्त्वान्नुम् अदुपधत्वाभावान्न वृद्धिः चण्डालः। ६-गम्लृ गतौ, अद भक्षणे इत्याभ्यां 'गन्' प्रत्ययः स्यादित्यर्थः। गम्+गन्, नस्येत्वे मस्याऽनुस्वारपरसवर्णौ, स्त्रीत्वे टाप् गङ्गा=भागीरथी। अद्+गन्, अद्गः। ७-भृञ् भरणे इत्यस्मात् गन्प्रत्ययः, तस्य कित्वाद् गुणाऽभावः, नुडागमे च, अनुस्वारपरसवर्णौ, बहुवचने भृङ्गाः।

**१४ शृणातेर्ह्रस्वश्च[1]।**

शृङ्गम्।

**१५ अर्ति-स्तु-सु-हु-सृ-धृ-क्षि-क्षु-भा-या-वा-पदि-यक्षि-णीभ्यो मन्।**

एभ्यश्चतुर्दशभ्यो मन्। अर्मश्चक्षूरोगः[2]। स्तोमः। सोमः, होमः। सर्मो=गमनम्। धर्मः। क्षेम=कुशलम्। क्षौमम्। भामः=आदित्यः। यामः। वामः=शोभनदुष्टयोः। पद्मम्। यक्ष्मो=रोगराजः। नेमः।

**१६ अवतेष्टिलोपश्च[3]।**

मन्प्रत्ययस्यायं टिलोपो नतु प्रकृतेः। अन्यथा डिदित्येव ब्रूयात्।

**१७ ज्वर-त्वर-स्त्रिव्यवि-मवामुपधायाश्च ६। ४। २०॥**

एषामुपधावकारयोरूठ् क्वौ झलादावनुनासिकादौ च प्रत्यये। अत्र क्ङितीति नानुवर्तते[4]। अवतेस्तुनि कृते ओतुरिति दर्शनात्। स्वरादिपाठादव्ययत्वम्। अवतीति— ओम्[5]।

**१८ ग्रसेरा च[6]।**

ग्रामः।

**१९ अवि-सिवि-शुषिभ्यः कित्।**

एभ्यो मन्[7]। ऊमं=नगरम्। स्यूमो=रश्मिः। सिमः=सर्वः, शुष्ममग्निस-

---

१—शॄ हिंसायाम् इत्यस्मात् मन् प्रत्ययो भवति, धातोः ह्रस्वश्च, प्रत्ययस्य कित्वं नुट् चेत्यर्थः। शृङ्गम्। २—ऋ—अर्मः, मन् प्रत्यये गुणः। स्तु—स्तोमः, सु—सोमः, हु—होमः, सृ—सर्मः, धृ—धर्मः, क्षि—क्षेम, क्षु—क्षोमम् —प्रज्ञाद्यण् क्षौमम्। भा—भामः, या—यामः, वा—वामः, पद्—पद्मम्, यक्ष—यक्ष्मः, नी—नेमः। ३—अव रक्षणे इत्यस्मात् मन् प्रत्ययः, मन् प्रत्ययस्य टिलोपश्चेत्यर्थः। ४—क्ङित्यनुवर्तने तु उपधावकारयोरूठोऽभावेन 'ओतुः' इति न स्यात्। ५—अव्+म् (मन्) टिलोपे अव्+म् अकारसहितवकारस्य ऊठि गुणे, ओम्। अवतीति विग्रहः। ६—ग्रस् धातोः—मन् प्रत्ययः अन्त्यस्य आकारादेशश्च। ७—सच कित्। अवतेर्मन् प्रत्यये ज्वरत्वरेत्यूठि सवर्णदीर्घे रूपम्, ऊमम्। षिवु धातोः मनि, च्छ्वोरिति वस्योठि यणि रूपम्, स्यूमः। षिञ् धातोर्मनि, सिमः। शुष् धातोः मनि शुष्मम्।

मीपयोः । घर्मः । घृ धातोर्निपातोऽयम् । ग्रीष्मः । ग्रसतेर्निपातोऽयम् ।

२० अशू-प्रुषि-लटि-कणि-खटि-विशिभ्यः क्वन् ।

अश्वः । 'प्रुष्यः स्याद्दतुसूर्ययोः' । लट्वा=पक्षिभेदः फलं च । कण्वं=पापम् । खट्वा । विश्वा ।

२१ कनिन् यु-वृषि-तक्षि-राजि-धन्वि-द्यु-प्रतिदिवः ।

यौति—इति युवा । वृषा=इन्द्रः । तक्षा । राजा । धन्वा=मरुः । धन्व=शरासनम् । द्युवा=सूर्यः । प्रतिदीव्यत्यस्मिन्प्रतिदिवा=दिवसः ।

२२ उषि-कुषि-गर्तिभ्यस्थन्

ओष्ठः ; कोष्ठः । गाथा । 'अर्थोऽभिधेय-रै-वस्तु-प्रयोजन-निवृत्तिषु' इत्यमरः ।

२३ पा-तॄ-तुदि-वचि-रिचि-सिचिभ्यस्थक् ।

---

१—घृधातोर्मक् प्रत्ययः गुणश्च निपात्यते, एवं ग्रसतेर्मकि, इत्वे, ग्रीष्म इति निपातः । २—'अशू व्याप्तौ धातोः क्वन् प्रत्यये कनावितौ, अश्वः । प्रुष धातोः—प्रुष्यः । 'लट बाल्ये' इत्यस्य लट्वा, 'लट्वा करञ्जभेदे स्यात् फले वाद्ये खगान्तरे, इति विश्वः । 'कण निमीलने' धातोः कण्वम् । 'खटि काङ्क्षायाम्' इत्यस्मात् क्वनि खट्वा=मञ्चकः । विशधातोः—विश्वा अतिविषा (औषधभेदः) । ३—यु मिश्रणे, वृषु सेचने, तक्षू तनूकरणे, राजृ दीप्तौ, धन्वि गतौ, द्यु अभिगमने, दिवु क्रीडादौ, इत्येतेभ्यः कनिन् प्रत्ययः । कनावितौ ('अन्' शिष्यते) । ४—युधातोः कनिप् प्रत्यये, युवन् शब्दः सिद्ध्यति प्रातिपदिकत्वे स्वादयः, उपधादीर्घः, नलोपः, युवा । एवम्—वृषन्-तक्षन् -राजन्-धन्वन्-द्युवन्-प्रतिदिवन्-शब्दानां सिद्धिः । ५—उष दाहे-धातोस्थन् प्रत्यये नस्येत्वे गुणे, ष्टुत्वे ओष्ठः, कुष निष्कर्षे,-धातोः कोष्ठः । गैशब्दे—गाथा 'आदेच' इत्यात्वम् स्त्रीत्वे टाप् । ऋ गतौ—अर्थः । गुणः । ६—पा पाने, तॄ प्लवनसन्तरणयोः, तुद व्यथने, वच परिभाषणे, रिचिर् विरेचने, षिचिर् क्षरणे, इत्येतेभ्यो धातुभ्यस्थक् प्रत्यय इत्यर्थः । पीथः पा+थ (क्) घुमास्थेतीत्वम्, पीथः । तीर्थम् 'तॄ' धातोस्थकि 'ऋत इद्धातोः' इतीत्वे रपरत्वे रूपम् । एवम्—तुत्थः, वचेः—उक्-

'पीथो रविर्घृतं पीथम्'। 'तीर्थं शास्त्राऽध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु। अवतारर्षिजुष्टाम्भःस्त्रीरजः सु च विश्रुतम्' इति विश्वः। तुत्थोऽग्निः। उक्थं सामभेदः। रिक्थम्। बाहुलकादृचेरपि। 'रिक्थमृक्थं धनं वसु'। सिक्थम्।

**२४ ग्लानुदिभ्यां डौः[1]।**

ग्लौः। नौः।

**२५ च्विरव्ययम्[2]।**

डौरित्येव। ग्लौकरोति। 'कृन्मेजन्तः' इति सिद्धे नियमार्थमिदम्। उणादिप्रत्ययान्तशब्दश्च्व्यन्त एवेति[3]।

**२६ गमेर्डोः[4]।**

'गौर्नाऽऽदित्ये बलीवर्दे किरणक्रतुभेदयोः।
स्त्री तु स्याद्दिशि भारत्यां भूमौ तु सुरभावपि।
नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु'। इति

बाहुलकात् द्युतेरपि डोः। 'द्यौः[5] स्त्रीस्वर्गान्तरिक्षयोः'।

**२७ रातेर्डैः।**

रैः[6]।

**२८ भ्रमेश्च डूः।**

---

थम्। किरत्वात् सम्प्रसारणम्, पूर्वरूपम्। रिक्थम्। ऋचेः—ऋक्थम् (बाहुलकात्)।

१–ग्लै हर्षक्षये, णुद प्रेरणे, इत्याभ्यां डौप्रत्ययः—इत्यर्थः। डित्त्वाट्टिलोपः। ग्लौः=चन्द्रः, नौः=नौका। २–डौप्रत्ययान्तं शब्दस्वरूपं च्व्यन्तं चेदव्ययसञ्ज्ञं स्यादित्यर्थः, अव्ययत्वफलं सुब्लुक्। ३–च्व्यन्त एवाव्ययं स्यादित्यर्थः, तेन नौ–ग्लौ शब्दयोरेजन्तत्वेऽपि च्व्यन्तत्वाऽभावे नाव्ययत्वमिति। ४–गम् धातोः–डोप्रत्ययः स्यादित्यर्थः। गम्+डो, डित्त्वाट्टिलोपः, सौ रूपम्—गौः, (गावौ गावः)। ५–द्युत् धातोः, बाहुलकात् डोप्रत्यये टिलोपे द्योशब्दः। णिद्वद्भावे वृद्धौ द्यौः द्यावौ, द्यावः। ६–रा+डै, टिलोपे रैशब्दः, प्रथमायां राः, रायौ, रायः।

भ्रूः । चाद्रमेः । अग्रेगूः ।

२९ उन्देर्नलोपश्च ।

चाद्युच् । ओदनः ।

३० गमेर्गश्च ।

चाद्युच् । गगनम् ।

३१ कॄ-पॄ-वृजि-मन्दि-निधाञः क्युः ।

किरणः । पुरणः=समुद्रः । वृजिनमन्तरिक्षम् । मन्दनं=स्तोत्रम् । निधनं=कुलनाशयोः ।

३२ धृषेर्धिषं च संज्ञायाम् ।

धिषणो गुरुः । धिषणा=धीः ।

३३ तृन्-तृचौ शंसि-क्षदादिभ्यः संज्ञायां चानिटौ ।

शंसादिभ्यः क्षदादिभ्यश्च क्रमात्तृन्तृचौ स्तस्तौ चाऽनिटौ । शंस्ता, शंस्तारौ, शंस्तरः । क्षँदिः सौत्रो धातुः । 'क्षत्ता स्यात्सारथौ द्वाःस्थे वैश्यायामपि शूद्रजे' ।

३४ बहुलमन्यत्रापि ।

मन्-मन्ता । हन्-हन्ता । इत्यादि ।

३५ नप्तृ नेष्टृ त्वष्टृ होतृ पोतृ भ्रातृ जामातृ मातृ पितृ

---

१-भ्रम् धातोः डूप्रत्यये टिलोपे भ्रमतीति भ्रूः, भ्रुवौ, भ्रुवः । अग्रे गम्+डू-अग्रेगूः । २-उन्दी क्लेदने-धातोः युच् स्यात् नकारस्य लोपश्चेत्यर्थः, 'यु' इत्यस्य अनादेशः, उपधागुणः, ओदनः । ३-गम् धातोः युच् प्रत्ययः, अन्त्यस्य ( मकारस्य ) गकारादेशश्च स्यादित्यर्थः । गम्+( युच् ) अन ( म् ) गगनम्=आकाशम् । ४-कॄ विक्षेपे, धातोः क्युप्रत्यये अनादेशे; ॠत इत्वे, णत्वम्—किरणः । पॄ-धातोः पुरणः । उदोष्ठ्येत्युत्वम् । एवम्-वृजी वर्जने-वृजनम्, मदि-मन्दनम् । निधाञ्-निधनम्, ( आतो लोपः ) । ५-ञिधृषा प्रागल्भ्ये—इत्यस्मात् क्युप्रत्ययः, धातोः धिषादेशश्च, धिषणः, धिषणा । ६-नप्तादिनियमादप्तृन्तृचेति दीर्घो न । पितृवत् । ७-शकलीकरणे भक्षणे चार्थे । ८—तृन्तृचावित्यर्थः । ९—न पतन्त्यनेन पितरो नरके इति नप्ता=पौत्रो दौहित्रो वा, नञ्पूर्वकात्

दुहितृ।

एते तृजन्ता निपात्यन्ते। नप्ता। इत्यादि।

३६ सावसेर्ऋन्[1]।

स्वसा।

३७ यतेर्वृद्धिश्च[2]।

'भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्'।

३८ नञि च नन्देः[3]।

न नन्दतीति—ननान्दा। इह वृद्धिर्नानुवर्तत इत्येके। 'ननान्दा तु स्वसा पत्युर्ननन्दा नन्दिनी च सा' इति शब्दार्णवः।

३९ दिवेर्ऋः[4]।

देवा=देवरः। 'स्वामिनो देवृदेवरौ'।

४० नयतेर्डिच्च[5]।

ना। नरौ।

४१ अर्चि-शुचि-हु-सृपि-छादि-छर्दिभ्य इसिः।

---

पत् धातोः तृच् प्रत्यये, नञः प्रकृतिभावः, पत्, इत्यस्मिन् 'अत्' इत्यस्य लोपश्च निपात्यते, नप्तृशब्दः। नयतेः तृचि षुक् गुणश्च निपात्यते नेष्टा। त्विष् धातोः तृचि, इकारस्याऽत्वं निपात्यते। ष्टुत्वे त्वष्टा। हु-होता, पूञ् पोता, भ्राज्-भ्राता। जायां माति—जामाता 'या' लोपो निपात्यते। मान् पूजायाम्-माता। पा रक्षणे—पिता, आकारस्य-इत्वं निपातनात्। दुह्-दुहिता, इट् गुणाभावश्च निपात्यते।

१—सावुपपदे-असु क्षेपणे इत्यस्मात् ऋन् प्रत्यय इत्यर्थः। स्वसा-सु—अस्+ऋ(न्) यणादेशे, अप्तृन्निति दीर्घः। २—यती प्रयत्ने—धातोः ऋन् प्रत्ययो वृद्धिश्चेत्यर्थः। याता। ३—टुनदि समृद्धौ—धातोर्नञ्युपपदे ऋन् प्रत्ययो वृद्धिश्च इत्यर्थः। न नन्दतीति ननान्दा, 'वृद्धिर्नानुवर्तते, इति मते ननन्दा। ४—दिवु क्रीडादिषु-धातोः ऋप्रत्यय इत्यर्थः, नित्त्वाऽभावः स्वरभेदार्थः। देवृशब्दः, सौ गुणे देवा, पितृवत्। ५—णीञ् धातोः ऋप्रत्ययः स्यात्, स च डित् इत्यर्थः। डित्त्वात् टिलोपः। नृशब्दः स्वादौ ना नरौ नरः।

'अर्चिः शोचिरुभे क्लीबे प्रकाशो द्योत आतपः' । हविः । सर्पिः ।

**४२ इस्मन्त्रन्क्विषु च ३ । ४ । ९७ ॥**

छादेर्ह्रस्वः स्यात् । छदिः—पटलम् । छर्दिः ।

**४३ बृंहेर्नलोपश्च ।**

'बर्हिर्ना कुशशुष्मणोः' ।

**४४ द्युतेरिसिन्नादेश्च जः ।**

ज्योतिः ।

**४५ जनेरुसिः ।**

'जनुर्जननजन्मानि' इत्यमरः ।

**४६ अर्ति-पॄ-वपि-यजि-तनि-धनि-तपिभ्यो नित् ।**

अरुः । परुर्ग्रन्थिः । यजुः । वपुः । तनुः, तनुषी तनूंषि । धनुः । धनुरस्त्रियाम् । 'तपुः सूर्याग्निशत्रुषु' ।

**४७ एतेर्णिच्च ।**

आयुः । आयुषी ।

**४८ चक्षेः शिच्च ।**

चक्षुः ।

---

१–अर्च पूजायाम्—धातोः इसिप्रत्यये **अर्चिः** । सान्तोऽयम् । णयन्तादर्चेः, 'अच इरि, ति इप्रत्यये इदन्तोऽप्ययम् । शुच्–शोचिः, हु **हविः**–सृप् **सर्पिः**, उपधागुणः । छादि–**छदिः** । णिलोपे ह्रस्वः । छर्द्–**छर्दिः**=वमनम् । २–बृहि वृद्धौ इत्यस्मात् असिप्रत्ययः नलोपश्च, **बर्हिः**, उपधागुणः । ३–द्युत् दीप्तौ इत्यस्मात् इसिन् प्रत्ययः, आदेर्दकारस्य जकारादेशश्चेत्यर्थः । **ज्योतिः** । ४–जनी प्रादुर्भावे इत्यस्मात् उसिप्रत्यय इत्यर्थः । **जनुः**=जन्म । ५–एतेभ्यः उसिप्रत्ययः सच नित् । स्वरार्थं नित्वम् । ऋ गतौ–**अरुः**=मर्म । पॄ–**परुः** । यज्–**यजुः** । वप्–**वपुः**=शरीरम् तन्–**तनुः** । धन् धान्ये—**धनुः**=शरासनम् । तप्–**तपुः** । ६–इण् गतौ इत्यस्मादुसि प्रत्ययः, सच णित् । णित्वाद् वृद्धिः, **आयुः** । ७–चक्षिङ् धातोः उसिप्रत्ययः शित्, इत्यर्थः । शित्वात्सार्वधातुकत्वेन ख्याञादेशो न । चष्टे इति **चक्षुः** ।

**४६ मुहेः किच्च।**

मुहुः=पुनः, अव्ययम्।

**५० पा-नी-विषिभ्यः पः।**

पाति=रक्षत्यस्मादात्मानमिति—पापम्[2]। तद्योगात्पापः। नेपः=पुरोहितः। वेष्पः=पानीयम्।

**५१ स्तुवो दीर्घश्च[3]।**

स्तूपः=समुच्छ्रायः।

**५२ सुशॄभ्यां निच्च[4]।**

चात्कित्। सूपः। बाहुलकादूत्वम्। शूर्पः।

**५३ कुयुभ्यां च[5]।**

कुवन्ति मण्डूका अस्मिन्निति कूपः। युवन्ति बध्नन्ति अस्मिन्निति यूपः।

**५४ खर्ष्प-शिल्प-शष्प-बाष्प-रूप-पर्प-तल्पाः[6]।**

सप्तैते पप्रत्ययान्ता निपात्यन्ते।

**५५ स्तनि-हृषि-पुँषि-गदि-मदिभ्यो णेरित्नुच्[7]।**

---

१—मुह वैचित्ये—धातोः उसिप्रत्ययः किदित्यर्थः। कित्वाद् गुणाऽभावः **मुहुः**=वारं वारम्। २—पाधातोः पप्रत्यये **पापम्**। पापमस्याऽस्तीति **पापः**। पुरुषः, अर्श आद्यच्। नीधातोः पप्रत्यये गुणे **नेपः**, बाहुलकाद् गुणाऽभावे, नीपो=वृक्षविशेषः। विष्लृ व्याप्तौ धातोः पप्रत्यये **वेष्पः**। ३—स्तुधातोः पप्रत्ययो दीर्घश्च धातोरित्यर्थः। **स्तूपः**। ४—षुञ् अभिषवे, शॄ हिंसायाम् इत्याभ्यां पप्रत्ययः सच नित्, धातोर्दीर्घः **सूपः**। शॄधातोः **शूर्पः**। बाहुलकादूत्वं रपरत्वम्। ५—कु शब्दे, यु मिश्रणे, आभ्यां पप्रत्ययः, स नित्, धातोर्दीर्घश्चेत्यर्थः, **कूपः यूपः**। ६—खनधातोः पप्रत्यये नकारस्य षत्वम्। **खष्पः**=क्रोधः। शीलधातोः पः, ह्रस्वश्च, **शिल्पम्**=कौशलम्। शसु हिंसायां धातोः पप्रत्ययो निपातनात् षत्वम् **शष्पम्**=बालतृणम्। बाधतेः पप्रत्यये धकारस्य षत्वं निपातनात्। **बाष्पः**=नेत्रजलम्। बाष्पं च। रुधातोः पप्रत्यये दीर्घो निपातनात् **रूपम्**=सौन्दर्य्यम्। पॄधातोः पः, गुणः **पर्पम्**,=गृहं बालतृणं वा। चुरादिणयन्तात् तलधातोः प्रतिष्ठार्थात् पप्रत्यये, णिचः क् **तल्पम्**=शय्या। ७—एभ्यो णयन्तेभ्यः इत्नुच् प्रत्ययः स्यादित्यर्थः, इत्नुच् प्रत्यये सति 'अयामन्ते'ति णेरयादेशे—**स्तनयित्नुः**, इत्यादि।

अयामन्तेति णेरय् । स्तनयित्नुः=मेघः । हर्षयित्नुः । पोषयित्नुः । गदयित्नुः=वावदूकः । मदयित्नुः=मदिरा ।

**५६ अशेः सरः[१] ।**

अक्षरम् ।

**५७ वसेश्च[२] ।**

वत्सरः ।

**५८ संपूर्वाच्च[३] ।**

संवत्सरः । परिवत्सरः ।

**५९ कृ-शॄ-शलि-कलि-गर्दिभ्योऽभच्[४] ।**

करभः । शरभः । शलभः । कलभः=करिशावकः । गर्दभः ।

**६० ऋषि-वृषिभ्यां कित्[५] ।**

ऋषभः । वृषभः ।

**६१ रासिवल्लिभ्यां च[६] ।**

रासभः । वल्लभः ।

**६२ नियो मिः ।**

नेमिः[७] ।

**६३ अर्तेरूच्च ।**

ऊर्मिः[८] ।

**६४ भुवः कित् ।**

---

१—अशू व्याप्तौ इत्यस्मात् 'सर' प्रत्ययः । अश्+सर ( म् ) व्रश्चेति षत्वम्, षढोरिति कत्वम् , परस्य सस्य षत्वम्, क ष संयोगे क्षः, अक्षरम् । २—वस् धातोः सरप्रत्ययः 'सः स्यार्धधातुके' इति धातोः सस्य तः । वत्सरः=वर्षम् । ३—यत्किञ्चित्पूर्वपदाद् वसेरपि सरप्रत्यय इत्यर्थः । तेन —संवत्सरः, परिवत्सरः । ४—सूत्रोक्तेभ्योऽभच् प्रत्ययः इत्यर्थः । गर्द्+अभच् गर्दभः । ५—अभच् प्रत्ययः कित् इत्यर्थः । तेन गुणाऽभावः ऋषभः, वृषभः । ६—अभच् प्रत्ययः । ७—मिप्रत्यये गुणः, नेमिः । ८—ऋधातोर्मिप्रत्ययः धातोः—ऊत्,—ऊर्मिः । ९—भूधातोर्मिप्रत्ययः स च कित्, कित्त्वाद् गुणो न भूमिः ।

भूमिः ।

**६५ अङ्गेर्निर्नलोपश्च[1] ।**

अग्निः ।

**६६ वह्नि[2]-श्रि-श्रु-यु-द्रु-ग्ला-हा-त्वरिभ्यो नित् ।**

वह्निः । श्रेणिः । श्रोणिः । योनिः । द्रोणिः । ग्लानिः । हानिः । तूर्णिः ।

**६७ पातेर्[3]डतिः ।**

पतिः ।

**६८ सूङः क्रि[4]ः ।**

सूरिः ।

**६९ अ[5]दि-शदि-भू-शुभिभ्यः क्रिन् ।**

अद्रिः । शद्रिः=शर्करा । भूरि=प्रचुरम् । शुभ्रिः=ब्रह्मा ।

**७० वालि-मालि-तनि[6]भ्यः कयन् ।**

वलयः । मलयः । तनयः ।

**७१ मा-छा-सा[7]सिभ्यो यः ।**

माया । छाया । सँस्यम् । बाहु[8]लकात्सव्यं दक्षिणवामयोः ।

**७२ जनेर्यक्[9] ।**

'ये विभाषा' । जन्यं=युद्धम् । जाया ।

१-अगि गतौ इत्यस्मात् निप्रत्ययः, ( इदित्त्वेन नुम् ) तस्य धातोर्नकारस्य लोपश्चेत्यर्थः । **अग्निः** । २-एभ्यो निप्रत्ययो नित् इत्यर्थः, नित्वं स्वरार्थम् । क्रमश उदाहरणानि—वह्निरित्यादयः । **तूर्णिः**=त्वरा, त्वर धातो निप्रत्यये 'ज्वर त्वरे'ति-ऊठि, रषाभ्यामिति णत्वम् । ३-पा रक्षणे इत्यस्मात् डतिप्रत्ययः डित्त्वाट्टिलोपः, पातीति—**पतिः** । ४-षूङ् प्राणिप्रसवे इत्यस्मात् क्रिप्रत्ययः। सूरिः=धीमान् कित्त्वाद् गुणाऽभावः । ५-एभ्यः क्रिन् प्रत्ययः । कित्त्वाद् गुणाऽभावः । नित्त्वं स्वरार्थम् । ६-एभ्यः कयन् प्रत्ययः स्यादित्यर्थः, कनावितौ, **वलयः** इत्यादि । ७-षस् स्वप्ने इत्यस्मात् यप्रत्यये **सस्यम्** । ८-बाहुलकात् सुनोतेरपि यप्रत्ययः, गुणे 'वान्तो यी'ति-अवादेशः **सव्यम्** । ९-जन्धातोः यक् प्रत्यये 'ये विभाषे'ति नस्य आत्वविकल्पे **जाया, जन्यम्** ।

**७३ सर्वधातुभ्य इन् ।**

पचिरग्निः । तुडिः । तुण्डिः । वलिः । वटिः । यजिः । काशत इति काशिः । पतिः । मल्लिः । केलिः । 'मसी परिणामे'—मसिः । बोधिः । नन्दिः । कलिः ।

'हरिर्विष्णावहाविन्द्रे भेके सिंहे हये रवौ ।
चन्द्रे कीले प्लवङ्गे च यमे वाते च कीर्तितः' ॥ इति

**७४ इगुपधात्कित् ।**

ऋषिः । शुचिः ।

**७५ मनेरुच्च ।**

मुनिः ।

**७६ जनिघसिभ्यामिण् ।**

जनिर्जननम् । घासिर्भक्ष्यमग्निश्च ।

**७७ अर्चे इः ।**

रविः । तरिः । पविः । कविः । अरिः ।

**७८ कुण्डिकम्प्योर्नलोपश्च ।**

कुडिः । कपिः ।

**७९ इषेः क्सुः ।**

इक्षुः ।

**८० कृषेर्वर्णे ।**

१—इगुपधाद् धातोः 'इन्' प्रत्ययः स च कित् इत्यर्थः । कित्त्वाद् गुणाऽभावः । **ऋषिः, शुचिः** । २—मन् धातोः इन्प्रत्ययः, धातोरकारस्य उकारादेशश्चेत्यर्थः । मन्यते **मुनिः**=पाणिन्यादिः । ३—**जनिः**, जनिवध्योश्चेति वृद्धिनिषेधः । **घासिः**, 'अत उपधायाः' वृद्धिः । ४—अजन्ताद् धातोः 'इ' प्रत्ययः इत्यर्थः । रु—**रविः**, तॄ—**तरिः** पू—**पविः**=वज्रम् , कु—**कविः**, ऋ—**अरिः**, गुणो रपरः । ५—इप्रत्ययो नलोपश्चेत्यर्थः । ६—इष् धातोः क्सुप्रत्ययः, क इत्, षस्य 'षढो'रिति कः, परस्य सस्य षत्वम्, क ष संयोगे क्षः—**इक्षुः** ।

नेक् स्यात्। कृष्णः।

**८१ दाभाभ्यां नुः।**

दानुः=दाता। भानुः=सूर्यः।

**८२ विषेः किञ्च[2]।**

विष्णुः।

**८३ सित-नि-जनि-गमि-मसि-सच्यवि-धाञ्-क्रुशिभ्य[3]स्तुन्।**

सेतुः। तन्तुः। जन्तुः। गन्तुः। मस्तुर्दधिमण्डम्। सक्तुः। ओतुः। धातुः। क्रोष्टा।

**८४ अवि-तॄ-स्तॄ-तन्त्रिभ्य ईः।**

अवी[4]र्नारी रजस्वला। तरीः। स्तरीः। तन्त्रीः।

**८५ या[5]-पोः किद् द्वे च।**

ययीः। 'पपीः स्यात्सोमसूर्ययोः'।

**८६ वातप्रमीः।**

निपातोऽयम्[6]।

**८७ लक्षेर्मुट्[7] च।**

लक्ष्मीः।

**८८ सर्वधातुभ्यो मनिन्।**

---

१–नक्प्रत्ययः स्यादित्यर्थः। कित्त्वान्नोपधागुणः, णत्वम्—कृष्णः। २–विष्लृ व्याप्तौ इत्यस्मात् णुप्रत्ययः स च कित्। कित्त्वान्नोपधागुणः,—विष्णुः। ३–एभ्यस्तुन्प्रत्यय इत्यर्थः। सिनोतीति—सेतुः। तितुत्रेति नेट्,—तन्तुः। ओतुः, 'ज्वरत्वरे' त्यूठ्, गुणः, ओतुः=बिडालः। क्रुशधातोः तुन्प्रत्यये क्रोष्टुशब्दः सौ—तृज्वद्भावे क्रोष्टा। ४–अव्धातो ईप्रत्यये अवीः, ङीबन्तत्वाऽभावात् हल्ङ्याबिति सुलोपो न, एवमग्रेऽपि। ५–याधातोः पाधातोश्च ईप्रत्ययः कित् द्वित्वं च, कित्त्वाद् 'आतो लोपः' ययीः=मार्गः, पपीः=सूर्यः। ६–ईप्रत्ययान्तो निपात इत्यर्थः। ७–लक्ष्धातोः ईप्रत्ययो मुडागमश्चेत्यर्थः। लक्ष्मीः।

कर्म । चर्म । भस्म । जन्म । शर्म । स्थाम ।

८९ बृंहेर्नोऽच्च[2] ।

नकारस्य अकारः । 'ब्रह्म तत्त्वं तपो वेदो ब्रह्मा विप्रः प्रजापतिः' ।

९० नामन् सीमन् व्योमन् रोमन् लोमन् पाप्मन् धामन्[3] ।

सप्तैते निपात्यन्ते ।

९१ सात्तिभ्यां मनिन्मनिणौ[4] ।

साम । आत्मा ।

९२ हंसि-मसिभ्यां सिकन्[5] ।

'हंसिका हंसयोषिति' । मक्षिका ।

९३ गिर उडच्[6] ।

गरुडः ।

९४ शृ-दृ-भसोऽदि[7] ।

शरत् । शरद्धृदयकूलयोः । भसज्जघनम् ।

९५ त्यजि-तनि-यजिभ्यो डित्[8] ।

---

१-कृ—कर्म, गुणः । चर्—चर्म । भस्—भस्म । जन्—जन्म । शृ—शर्म । सर्वे नान्ता नपुंसकलिङ्गाः । २-बृंहिधातोर्मन् प्रत्ययो नकारस्य-अकारादेशश्च । ब्रह्म, नान्तोऽयम् । ३-एते मनिन्नन्ता निपात्यन्त इत्यर्थः । म्ना अभ्यासे इत्यस्मात् मनिन्, धातोर्नाभावो निपात्यते, म्नायतेऽनेनेति **नाम** । सिनोतेदीर्घः **सीमा**, सीमानौ । व्येञोऽन्त्यस्य ओत्वं निपातनात् **व्योम** । रुधातोः **रोम** । लू—**लोम** । पाधातोः मनिन्प्रत्यये पुगागमो निपात्यते **पाप्मा**=पापम् । धा धातोः—**धाम** । ४-षोऽन्तकर्मणि इत्यस्मात् मनिन्, अत सातत्यगमने, धातोश्च मनिण् स्यादित्यर्थः । **साम**, 'आदेच' इत्यात्वम् । **आत्मा**—मनिणो णित्त्वादुपधावृद्धिः । ५-हन हिंसागत्योः, मश शब्दे, इत्याभ्यां सिकन् प्रत्ययः इत्यर्थः । हन् धातोः—**हंसिका**, मश्—**मक्षिका** । म्रश्चेति षत्वे षढोरिति कत्वम्, परस्य षत्वे क्षः । ६-गृधातोः उडच् प्रत्यये गुणे **गरुडः** ७-एभ्यः अदिप्रत्ययः, इकार उच्चारणार्थः । **शरत्, दरत्, भसत्** । ८-एभ्यः-अदिप्रत्ययः स च डित्, डित्त्वाट्टिलोपः । त्यज्—**त्यत्** । तन्—**तत्** । यज्—**यत्** ।

त्यद् तद् यद् ।

**९६ एतेस्तुट् च ।**[1]

एतद् ।

**९७ युष्यसिभ्यां मदिक् ।**[2]

त्वम् । अहम् ।

**९८ इन्देः कमिन्नलोपश्च ।**[3]

इदम् ।

**९९ कायतेर्डिमिः ।**[4]

किम् ।

**१०० सर्वधातुभ्यः ष्ट्रन् ।**[5]

वस्त्रम् । अस्त्रम् । शास्त्रम् ।

**१०१ अमि-चि-मिदि-शसिभ्यः क्त्रः ।**[6]

अन्त्रम् । चित्रम् । मित्रम् । शस्त्रम् ।

**१०२ पुवो ह्रस्वः ।**[7]

पुत्रः ।

**१०३ स्त्यायतेर्ड्रट् ।**[8]

स्त्री ।

**१०४ सूचेः स्मन् ।**[9]

सूक्ष्मम् ।

---

१—इण्धातोः अदिप्रत्ययः तुडागमश्च, गुणः,—**एतत्** । २—युष् इति सौत्रो धातुः, तस्मात्, असु क्षेपणे इत्यस्माच्च मदिक्प्रत्ययः स्यादित्यर्थः, 'मद्' इति शिष्यते । 'युष्मद्' शब्दः, 'अस्मद्' शब्दः सौ **त्वम्** **अहम्** । ३—इन्दिधातोः कमन् प्रत्ययो नलोपश्च भवतीत्यर्थः, 'अम्' इति शिष्यते, **इदम्** । ४—कैधातोः डिमि प्रत्यये, डित्त्वाट्टिलोपे **किम्** । ५—ष इत् 'त्र'इति शेषः, वस्—**वस्त्रम्** । अस्—**अस्त्रम्** । शास्—**शास्त्रम्** । ६-कित्त्वाद् गुणाभावः । **चित्रम्, मित्रम्** । ७—क्त्र प्रत्यये, पूधातोः ह्रस्वश्चेत्यर्थः । ८—स्त्यैधातोः 'ड्रट्' डित्त्वाट्टिलोपः '**स्त्री**' । ९—सूचेः स्मनि चोः कुरिति कुत्वे परस्य षत्वं क्षः । **सूक्ष्मम्** ।

**१०५ पातेर्डुम्सुन् ।**

पुमान्[1] ।

**१०६ वसेस्तिः ।**

'वस्तिर्नाभिरधो द्वयोः' ।

**१०७ सावसेः ।**

स्वस्ति[2] ।

**१०८ वौ तसेः ।**

'वितस्तिर्द्वादशाङ्गुलः' इत्यमरः ।

**१०९ सर्वधातुभ्योऽसुन् ।**

चेतः[3] । सरः । पयः, पयसी, इत्यादि ।

**११० अशेर्देवने युट् च ।**

देवने=स्तुतौ । यशः[4] ।

**१११ उब्जेर्बले बलोपश्च ।**

ओजः[5] ।

**११२ श्रयतेः स्वाङ्गे शिरः किच्च ।**

श्रयतेः शिर आदेशोऽसुन्किच्च । शिरः ।

**११३ अर्तेरुच्च ।**

उरः[6] ।

**११४ भूरञ्जिभ्यां कित् ।**

भुवः[7] । रजः ।

१–पाधातोः डुम्सुन्, डित्त्वाट्टिलोपः 'पुम्स्' शब्दः सिद्ध्यति, स्वादौ पुंसोऽसुङिति, असुङादौ—**पुमान्** । २–सुपूर्वादस्तेस्तिप्रत्यय इत्यर्थः । **स्वस्ति**–स्वरादिपाठादव्ययत्वम् । ३–चिती संज्ञाने–**चेतः** । सृ गतौ–**सरः** । पीङ् पाने—**पयः** ( गुणोऽयादेशः ) । ४–अशधातोरसुन् स्याद्देवने=स्तुतौ । युडागमश्च, **यशः**=कीर्तिः । ५–उब्ज्+( असुन् ) अस्, बलोपः ओजस्–सौ–**ओजः** । बलमर्थः । ६–ऋधातोरसुन् प्रत्ययः, धातोरुत्, रपरत्वम् **उरः**। ७–असुन्प्रत्ययः कित् स्यादित्यर्थः । तेन **भुवः** इत्यत्र न गुणः किन्तु उवङ् । **रजः** इत्यत्र नलोपः ।

**११५ वसेर्णिच्च ।**

वासो=वस्त्रम् ।

**११६ चन्देरादेश्च छः ।**

छन्दः ।

**११७ पचि-वचिभ्यां सुट् च ।**

'पक्षसी तु स्मृतौ पक्षौ' । वक्षः ।

**११८ नञि हन एह च ।**

अनेहा । अनेहसौ ।

**११९ विधाञो वेध च ।**

वेधाः ।

**१२० चन्द्रे मो डित् ।**

चन्द्रोपपदान्माङोऽसिः स च डित् । चन्द्रमाः ।

**१२१ उषः कित् ।**

उषः ।

**१२२ सर्तेरप्पूर्वादसिः ।**

प्रायेणाऽयं भूम्नि । अप्सरसः ।

**१२३ वशेः कनसिः ।**

१–असुन्प्रत्ययो णित्, णित्त्वाद् उपधावृद्धिः, **वासः**, २–चन्देरसुन्, धातोरादेश्च छत्वं स्यादित्यर्थः, **छन्दः** । ३–असुन् सुडागमश्चेत्यर्थः । कुत्वषत्वे, क्षः । **पक्षः**, **वक्षः** । ४–नञ्पूर्वाद् हन्धातोरसुन् प्रत्ययः, हन एहादेशश्चेत्यर्थः । सौ ऋदुशनसेति–अनङ्, **अनेहा**=समयः । ५–विपूर्वाद् धाञ्धातोरसुन् प्रकृतेर्वेधादेशश्चेत्यर्थः । विदधातीति **वेधाः** । ६–डित्त्वाट्टिलोपे 'चन्द्रमस्' शब्दः अत्वसन्तस्येति दीर्घः—**चन्द्रमाः** । ७–उष दाहे धातोः, असिप्रत्ययः, सच कित्, कित्त्वान्नोपधागुणः, **उषः** । ८–भूम्नि=बहुवचने, **अप्सरसः** । ९–वश कान्तौ इत्यस्मात् कनसिप्रत्ययः, 'अनस्' इति शिष्यते । कित्त्वात्सम्प्रसारणम्, पूर्वरूपम्, सौ ऋदुशनसेति 'अनङ्', नान्तत्वेन दीर्घः, नलोपः, **उशना**=भार्गवः ।

उशना ।

**१२४ अदिभुवो डुतच् ।**

अद्भुतम् ।

**१२५ गुधेरूमः ।**

गोधूमः ।

**१२६ तृहेः क्नो हलोपश्च ।**

तृणम् ।

**१२७ उदि चेर्डैसिः ।**

उच्चैः ।

**१२८ नौ दीर्घश्च ।**

नीचैः ।

**१२९ पूञो यण्णुग्घ्रस्वश्च ।**

यत्प्रत्ययः । पुण्यम् ।

**१३० उदि दृणातेरजलौ पूर्वपदान्त्यलोपश्च ।**

उदरम् ।

**१३१ डित्खनेर्मुट् चोदात्तः ।**

१–अद् इत्यव्ययम्, आश्चर्ये 'अद्'–पूर्वात् भूधातोः डुतच् प्रत्ययः, डित्त्वाट्टिलोपः, **अद्भुतम्**=आश्चर्यम् । २–गुध परिवेष्टने इत्यस्माद्'ऊम' प्रत्ययः स्यादित्यर्थः । गुध्यते=परिवेष्ट्यते प्राणिभिरिति **गोधूमः**=अन्नम् उपधागुणः। ३–तृह् धातोः क्नप्रत्यये हलोपे'तृन'इत्यत्र ऋवर्णान्नस्य णत्वमिति **तृणम्** । ४–उत्पूर्वाच् चिधातोः डैसिप्रत्ययः, डित्त्वाट्टिलोपः । स्तोः श्चुरिति तकारस्य चत्वे—**उच्चैः**, इति । ५–निपूर्वात् चिधातोः डैसिप्रत्ययः, नीत्यस्य दीर्घः, **नीचैः** । ६–पूञ्धातोः, यत् प्रत्ययः, णुगागमश्च ह्रस्वश्चेत्यर्थः, **पुण्यम्**=सत्कर्म । ७–उदि–उपपदे, दॄ विदारणे इत्यस्मात् अच् प्रत्ययः, अल्प्रत्ययश्च स्यात् ( अजलोः स्वरे भेदः ), उदो दकारस्य लोपश्चेत्यर्थः । **उदरम्**, गुणः । ८– खनु अवदारणे इत्यस्मात् 'अच्' अल्, तौ च डितौ धातोर्मुडागमश्चेत्यर्थः । डित्त्वाट्टिलोपः । **मुखम्**, धातोरादिमुट्, तस्य ट एव इत् ।

अजल् च डिद्धातोर्मुट्। मुखम्।

**१३२ अमेः सन्**

अंसः।

**१३३ मुहेः खो मूर्च।**

मूर्खः।

**१३४ नहेर्हलोपश्च।**

नखः।

**१३५ शीङो ह्रस्वश्च।**

शिखा

**१३६ माङ ऊखो मय च।**

मयूखः।

**१३७ जनेष्टन्नलोपश्च।**

जटा।

**१३८ क्लिशेरन् ललोपश्च।**

केशः।

**१३९ फलेरितजादेश्च पः।**

पलितम्।

**१४० कृञादिभ्यः संज्ञायां वुन्।**

करकः। कटकः। नरकः। 'नरको नारकोऽपि च' इति द्विरूपकोशः।

**१४१ चीकयतेराद्यन्तविपर्ययश्च।**

१-अम् गतौ-सन् प्रत्ययः, **अंसः**। २-मुह् धातोः खप्रत्ययः, धातोः'मूर्' इत्यादेशः। ३-नह्+ख(:)हलोपे **नखः**। ४-शीङ्धातोः खप्रत्यये ह्रस्वे **शिखा**, स्त्रीत्वे, टाप्। ५-माङ्धातोः ऊखप्रत्ययः प्रकृतेर्मयादेशश्चेत्यर्थः, **मयूखः**=किरणः। ६-जन्धातोष्टन्प्रत्यये नलोपे **जटा**, स्त्रीत्वे टाप्। ७-क्लिश्धातोः अन् प्रत्यये, लकारलोपे च **केशः**। ८-फलधातोः इतन् प्रत्ययः फकारस्य पकारादेशः, **पलितम्**। ९-कृ-**करकः**=कमण्डलुः (वु-इत्यस्य अकादेशः, गुणः) कटे धातोः-**कटकः**। नृ धातोः-**नरकः**। १०-चीक आमन्त्रणे इत्यस्मात् वुन् प्रत्ययः आद्यन्तविपर्ययश्चेत्यर्थः। **कीचकः**=वेणुः।

कीचकः ।

**१४२ जनेररष्ठ च ।**

जठरम्[1] ।

**१४३ हर्यतेः कन्यन् हिर च ।**

हिरण्यम्[2] ।

**१४४ कृञः पासः ।**

कर्पासः[3] । बिल्वादित्वात्कार्पासम्[4] ।

**१४५ ऊर्णोतेर्डः ।**

ऊर्णा ।

**१४६ दधातेर्यन् नुट् च ।**

धान्यम्[5] ।

**१४७ चतेरुरन् ।**

चत्वारः[6] ।

**१४८ प्राततेररन् ।**

प्रातः[7] ।

**१४९ अमेस्तुट् च ।**

अन्तः[8] ।

**१५० दहेर्गो लोपो दश्च नः ।**

दहेर्गप्रत्ययो धातोरन्तस्य लोपो दस्य नः । नगः ।

---

१–जन् धातोः, 'अर' प्रत्ययः, धातोः ठकारश्चान्तादेशः । **जठरम्** =उदरम् । २–हर्य कान्तौ इत्यस्मात् कन्यन् प्रत्ययः, प्रकृतेर्हिरादेशश्चेत्यर्थः । **हिरण्यम्** । ३–कृञ्धातोः पासप्रत्यये **कर्पासः**, गुणे रूपम् । ४–अणि, कार्पासम्=वस्त्रम् । ५–धाधातोर्यन्प्रत्यये नुडागमे **धान्यम्** । ६–चते याचने इत्यस्मात् उरन् प्रत्ययः, प्रत्यये अकार उच्चारणार्थः, नकार इत्, चतुर्शब्दः सिद्ध्यति, जसि—चतुरनडुहोरित्याम्—**चत्वारः** । ७–प्र-पूर्वाद् अत्-धातोः अरन् प्रत्ययः, **प्रातः**—स्वरादिपाठादव्ययत्वम् । ८–अम् धातोः अरन् प्रत्यये तुडागमे रूपम् , **अन्तः** ।

**१५१ हन्तेरच्[1] घुर च।**

घोरम्।

**१५२ तरतेर्ड्रिः[2]।**

त्रयः।

**१५३ ग्रहेरणिः।**

ग्रहणिः।

**१५४ प्रथेरमच्।**

प्रथमः।

**१५५ चरेश्च[3]।**

चरमः।

**१५६ मङ्गेरलच्।**

मङ्गलम्[4]। ॥ इत्युणादयः ॥

## अथोत्तरकृदन्तम्।

**१२५० उणादयो बहुलम् ३। ३। १॥**

एते वर्तमाने संज्ञायां बहुलं स्युः[5]। केचिदविहिता अप्यूह्याः[6]।

"सञ्ज्ञासु[7] धातुरूपाणि प्रत्ययाश्च ततः परे।
कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु" ॥

१—हन्धातोः अच् प्रत्ययः घुरादेशश्च, गुणः, **घोरम्**। २—तॄधातोः ड्रिप्रत्ययः, डित्वाट्टिलोपे त्रिशब्दः सिद्ध्यति, जसि गुणे अयादेशे **त्रयः**। ३—अमच् प्रत्यय इत्यर्थः। ४—मगिधातोः अलच्, इदित्वान्नुम्, **मङ्गलम्**

॥ इत्युणादयः ॥

५—'वर्तमाने लट्' इत्यतः वर्तमाने 'पुवः सञ्ज्ञायाम्, इत्यतः सञ्ज्ञायाम् इत्यनुवर्तते। ६—बहुलग्रहणस्य प्रयोजनमाह—**केचिदविहिता अप्यूह्या** इति तेन शङ्करविहितोऽपि उलज् भवति, **शङ्कुला**। ७—बाहुलकत्वमेव विशदयति—**सञ्ज्ञास्विति**, सञ्ज्ञासु=यदृच्छाशब्देषु वायु-दारु-गवादिशब्देषु डित्थडवित्थादिषु च, धातुरूपाणि=सम्भवन्तस्ते ते धातवः ऊहनीयाः=कल्पनीया इति शेषः। ततः=धातुभ्यश्च परे यथासम्भवं प्रत्ययाः

**१२५१ दाशगोघ्नौ सम्प्रदाने ३ । ४ । ७३ ॥**

एतौ निपात्येते । दाशन्ति अस्मै दाशः । गां हन्ति अस्मै गोघ्नः =अतिथिः ।

**१२५२ तुमुण्ण्वुलौ क्रियायां क्रियार्थायाम् ३ । ३ । १० ॥**

क्रियार्थायां क्रियायामुपपदे भविष्यदर्थे धातोरेतौ स्तः । मान्तत्वादव्ययत्वम् । कृष्णं द्रष्टुं याति । कृष्णं दर्शको याति ।

=उण् जुण् डो-इत्यादयः कल्पनीयाः । तेषु च कार्यात्=कार्यानुरूपमित्यर्थः । गुणवृद्धिटिलोपसम्प्रसारणादिकार्यानुसारमिति यावत्, अनूबन्धम्=अनुबन्धम् ( 'उपसर्गस्य घञ्यमनुष्ये' इत्युपसर्गदीर्घः ) णकार-ककार-डकारादिकं विद्यात=जानीयात्, कल्पयेदिति यावत् । उणादिषु एतत्=पूर्वोक्तम् शास्त्रम्, शासितव्यमित्यर्थः । भाष्यस्थोऽयं श्लोक. । शाकटायनप्रणीतानि 'कृ-वा-पा-जि-इत्यादिसूत्राणि तु, अस्यैव बहुलग्रहणस्य प्रपञ्च इत्यर्थः । बहुलग्रहणेनैव पाणिनिना तानि सङ्गृहीतानीति भावः ।

१-कप्रत्ययान्तौ सम्प्रदानेऽर्थे निपात्येते इत्यर्थः । दाश्ट दाने, **दाशः** । गां=वाचम् ,='आगम्यताम्, आस्यताम्, स्वागतं वः' इत्यादिरूपां हन्ति= उच्चारयति गृहस्थोऽस्मै—इति **गोघ्नः**=अतिथिः । 'हनिः' उच्चारणार्थः= शब्दार्थः-प्रसिद्ध एव, यथा 'भेर्य आहन्यन्ते, इति । २-क्रिया-अर्थः प्रयोजनं यस्याःसा क्रियार्था क्रिया, तस्याम् उपपदे, क्रियोद्देश्यीभूतक्रियावृत्तिधातौ-उपपदे इत्यर्थः । तुमुन्प्रत्यये नकार इत् , मकार उच्चारणार्थः, 'तुम्' इत्यवशिष्यते, अयं हि मकारान्तः कृत्प्रत्ययोऽतः 'कृन्मेजन्तः' इति सूत्रेणाऽव्ययसञ्ज्ञा, ततश्च—'अव्ययकृतो भावे' इति वचनात् तुमुन् भावे भवति । ण्वुल् तु कर्तरि, णलावितौ 'वु' इत्यस्य अकादेशः। ३-दृश्+तुम्, 'सृजिदृशोर्झल्यमकिति, इत्यम्, ऋकारस्य यण् रेफः, व्रश्चेति शस्य षत्वं, ष्टुत्वम् **द्रष्टुम्**, कृष्णकर्मकभविष्यद्दर्शनार्थ यानम्=गमनमित्यर्थः । अत्रयातीत्युपपदम् । 'न लोकाव्यये, ति षष्ठीनिषेधात् कर्मणि द्वितीया । एवं 'कृष्णं **दर्शको** याति, इत्यत्रापि स एवार्थः । कृष्णं द्रक्ष्यन् तदर्थ यातीत्यर्थः । ''अकेनोर्भविष्यदाधमर्ण्ययोः, इति षष्ठीनिषेधः ।

**१२५३ काल समय-वेलासु तुमुन् ३ । ३ । १६७ ॥**

कालः समयो वेला वा भोक्तुम् ।

**१२५४ भावे ३ । ३ । १८ ॥**

सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ् । पाकः ।

**१२५५ अकर्तरि च कारके सञ्ज्ञायाम् ३ । ३ । १९ ॥**

कर्तृभिन्ने कारके घञ् ।

**१२५६ घञि च भावकरणयोः ६ । ४ । २७ ॥**

रञ्जेर्नलोपः । रागः । अनयोः किम्—रज्यत्यस्मिन्निति रङ्गः ।

**१२५७ निवास-चिति-शरीरोपसमाधानेष्वादेश्च कः । ३ । ४ । ४१ ॥**

एषु चिनोतेर्घञादेश्च कः । उपसमाधानं=राशीकरणम् । निकायः । आकायः । कायः । गोमयनिकायः ।

**१२५८ एरच् ३ । ३ । ५६ ॥**

१–कालसमयेति पर्यायग्रहणम् अर्थोपलक्षणार्थम्, तथा चायमर्थः—कालार्थेषूपपदेषु धातोः तुमुन्निति । २–भावो=धात्वर्थः, स द्विविधः साध्यावस्थापन्नः सिद्धावस्थापन्नश्च, तत्र तिङ्वाच्यो लिङ्गसङ्ख्याद्यन्वयाऽयोग्यः साध्यावस्थापन्नः, । कृद्वाच्यस्तु 'कृदभिहितो भावो द्रव्यवत् प्रकाशते, इति लिङ्गसङ्ख्याद्यन्वययोग्यः सिद्धावस्थापन्नः तस्मिन्=सिद्धावस्थापन्ने भावे=धात्वर्थे वाच्ये घञ् स्यादिति भावः । पदरुजेति सूत्रात् घञनुवर्तते । ३–पच्धातोः घञि, उपधावृद्धिः । 'चजोः कुः, इति कुत्वे **पाकः** । ४–रूढौ—इत्यर्थो व्याख्यानात् । ५–रञ्ज्धातोः—घञि, नलोपे, उपधावृद्धौ, 'चजोरिति कुत्वे रागः=रञ्जनम्, रञ्जनसाधनं वा । ६–अत्राधिकरणे घञ्, तेन नकारलोपो न । ७–निवासे—**निकायः** (काशी), वृद्धिः, आयादेशः, आदेश्चस्य कुत्वम् । चितौ यथा—**आकायः**=अग्न्याधारस्थलविशेषः, आचीयन्तेऽस्मिन्निष्टका इति विग्रहः, अधिकरणे घञ् । शरीरे यथा—**कायः**, चीयतेऽस्थ्यादिकमत्रेति विग्रहः । उपसमाधाने—गोमय**निकायः** । ८-एः अच्, इति छेदः, धातोरित्यधिकारः, तद्विशेषणम् एरिति, विशेषणं तदन्तस्येति—तदन्तत्वं लभ्यते तेन—इवर्णान्ताद् धातोः अच्प्रत्ययः स्यादित्यर्थः । चि—**चयः** 'सार्वधातुकेति गुणेऽयादेशः । एवम्–जि–जयः, इ–अयः ।

इवर्णान्तादच् । चयः ।

**१२५९ ॠदोरप् ३ । ३ । ५७ ॥**

ॠदन्तादुवर्णान्तादप् । करः[1] । गरः । शरः । यवः । लवः । स्तवः । पवः । ( घञर्थे कविधानम्[2] ) प्रस्थः[3] । विघ्नः ।

**१२६० ड्वितः क्त्रिः[4] ३ । ३ । ८८ ॥**

भावे स्वभावात् ।

**१२६१ क्त्रेर्मम्[5] नित्यम् ४ । ४ । २० ॥**

क्त्रिप्रत्ययान्तान्मप्निर्वृत्तेऽर्थे । पाकेन निर्वृत्तं पक्त्रिमम् । डुवप्–उप्त्रिमम्[6]

**१२६२ ट्वितोऽथुच्[7] ३ । ३ । ८९ ॥**

अयमपि भावे । टुवेपृ कम्पने—वेपथुः । श्वयथुः[8] ।

**१२६३ यज-याच-यत-विच्छ-प्रच्छ-रक्षो नङ् ३ । ३ । ९० ॥**

यज्ञः[9] । याच्ञा[10] । यत्नः । विश्नः[11] । प्रश्नः[12] । रक्षणः ।

**१२६४ स्वपो नन् ३ । ३ । ९१ ॥**

---

१–कॄ—**करः**, अप् प्रत्यये 'सार्वधातुके,ति गुणः, किरतीति विग्रहः । एवम्—गॄ–गरः शॄ–शरः । यु–यवः । लू–लवः । पू–पवः । स्तु—स्तवः । २–यस्मिन्नर्थे घञ् भवति, तस्मिन्नर्थे कप्रत्ययोऽपि वक्तव्य इत्यर्थः । ३–प्रस्था +(क) अ (:) कित्त्वात् आतो लोप इत्यालोपः **प्रस्थः, विघ्नः**, गमहने-त्युपधालोपः, हो हन्तेरिति कुत्वम् । ४–यस्य धातोः'डु' इत् स्यात्तस्माद् धातोः 'क्त्रि, प्रत्ययः स्यादित्यर्थः । अयं स्वभावात् भावे । ५–'मप्' इति । 'यरोऽनुनासिके'ति मत्वम् । ६–कित्त्वाद् 'वचिस्वपि' इति सम्प्रसारणम् **उप्त्रिमम्** । एवम् डुलभष्—लप्त्रिमम्, डुधाञ्—हित्रिमम् ('दधातेर्हिः' इति हित्त्वम् )। डुकृञ्—कृत्रिमम्, दत्त्रिमम् (दो दद्घोरिति दत् )। ७–'टु' इत्-यस्य स ट्वित्, तस्मात् (धातोः) भावे–अथुच् प्रत्ययः स्यादित्यर्थः । ८–टुओश्वि—श्वयथुः । टुभ्राजृ–भ्राजथुः । टुनदि–नन्दथुः । टुओस्फूर्जा –स्फूर्जथुः । ९–**यज्ञः**, नस्य श्चुत्वेन ञः, जञोर्ज्ञः । १०–नस्य श्चुत्वेन ञः । ११–विच्छधातुः, "च्छ्वोः शूडनुनासिके च" इति शत्वम्, विश्नः =प्रतापः । १२–प्रच्छ+न ( ङ् ) (:), नङो ङित्वेऽपि "प्रश्ने चासन्नकाले" इति निर्देशात् "ग्रहिज्ये" ति सम्प्रसारणं न ।

स्वप्नः ।

**१२६५ उपसर्गे घोः किः[1] ३ । ३ । ९२ ॥**

प्रधिः । उपधिः[2] ।

**१२६६ स्त्रियां क्तिन् ३ । ३ । ९४ ॥**

स्त्रीलिङ्गे भावादौ क्तिन् । घञोऽपवादः । कृतिः[3] । स्तुतिः । (ऋल्वादिभ्यः[4] क्तिन्निष्ठावद्वक्तव्यः) । तेन नत्वम् । कीर्णिः[5] । गीर्णिः । धूनिः । लूनिः । पूनिः[6] । (सम्पदादिभ्यः क्विप्) । सम्पत् । विपत् । आपत् । क्तिन्नपीष्यते । सम्पत्तिः । विपत्तिः । आपत्तिः ।

**१२६७ ऊँति[7]-यूति-जूति-साति-हेति-कीर्तयश्च ३ । ३ । ९७ ॥**

एते निपात्याः ।

**१२६८ कृञः ३ । ३ । ९९ ॥**

---

१–उपसर्गपूर्वकात् 'घु' संज्ञकाद् धातोः किप्रत्ययः । अत्रेदं बोध्यम्–सर्वेऽपि किप्रत्ययान्ताः पुंलिङ्गा भवन्ति । २–एवम्–व्याधिः, आधिः, समाधिः, जलधिः, विधिः, सन्धिः, अभिसन्धिः, इत्याद्याः किप्रत्ययान्ताः पुंलिङ्गाः । सर्वत्र "आतो लोपः" इत्यालोपः । ३–कित्त्वान्न गुणः । ४–ऋकारान्ताद् ल्वादिभ्यश्च परः क्तिन्प्रत्ययो निष्ठावद् भवति । निष्ठावद्वचनेन नत्वादि । ५–कॄ (विक्षेपे) ॠत इत्, हलि चेति दीर्घः निष्ठावद्भावे "रदाभ्याम्..." इति नत्वम्, णत्वम्, गॄ–गीर्णिः, सिद्धिः पूर्ववत् । धू–धूनिः, लू–लूनिः । ६–विनाशः । पवित्रतायान्तु-पूतिः "पूञो विनाशे" इति विनाश एव नत्वविधानात् । ७–अवधातोः क्तिनि, ज्वरत्वरेति, उपधावकारयोरूठ्, उदात्तस्वरो निपातनप्रयोजनम्, **ऊतिः**=अवनम् । **यूतिः**, **जूतिः**, उभयत्र दीर्घनिपातनम् । **सातिः**(सोऽन्तकर्मणि) इत्यस्य, अत्र 'द्यतिस्यति···' इत्वे प्राप्ते तदभावो निपात्यते, 'आदेच उपदेशे' इत्यात्वम् । **हेतिः**–हन् धातोः क्तिन्, अनुदात्तेति नलोपः, अकारस्य एत्वं च निपात्यते । **कीर्तिः** । कॄ धातोः ण्यासश्रन्थेति युच् प्राप्तः, क्तिन् निपात्यते, 'उपधायाश्च' इतीत्वे रपरत्वम् ।

क्यप् । कृत्या[1] ।

**१२६९ श च ३ । ३ । १०० ॥**

कृञः शः । चात् क्तिन् । प्रकरणम्=प्रक्रिया[2] । कृतिः ।

**१२७० इच्छा[3] ३ । ३ । १०१ ॥**

इषेर्निपातोऽयम् ।

**१२७१ अ प्रत्ययात् ३ । ३ । १०२ ॥**

प्रत्ययान्तेभ्यः स्त्रियामकारप्रत्ययः । चिकीर्षा[4] । पुत्रकाम्या[5] ।

**१२७२ गुरोश्च हलः ३ । ३ । १०३ ॥**

गुरुमतो हलन्तात्स्त्रियामप्रत्ययः । ईहा[6] । ऊहा ।

**१२७३ षिद्भिदादिभ्योऽङ्[7] ३ । ३ । १०४ ॥**

जृष् 'ऋदृशोऽङि गुणः' । जरा । त्रपूष् त्रपा । भिदा । विदारण एवायम्[8] । भित्तिरन्या । छिदा[9] । मृजा । ( कृपेः सम्प्रसारणं च[10] ) । कृपा ।

**१२७४ आतश्चोपसर्गे[11] ३ । ३ । १०६ ॥**

१-पित्त्वेन ह्रस्वस्येति तुक्, **कृत्या,** कित्त्वाद् गुणाभावः । २-प्रकृञः शप्रत्यये, 'रिङ् शयग्लिङ्क्ष्विति, ऋकारस्य रिङ्-**प्रक्रिया** स्त्रीत्वे टाप् । क्तिनि-कृतिः । ३-इषु-इच्छायाम् इत्यस्य शप्रत्ययान्तोऽयं निपातः, स्त्रियां टाप् । ४-सन्नन्तात् कृञः ('चिकीर्ष' इत्यस्मात्) 'अ' प्रत्यये 'अतो लोपः, इत्यकारलोपः स्त्रियां टाप्-**चिकीर्षा** । ५-काम्यच्प्रत्ययान्तात् 'पुत्र-काम्य'—धातोः 'अ' प्रत्यये, 'अतो लोपः' स्त्रियां टाप्—**पुत्रकाम्या** । ६-ईह् चेष्टायाम्, ऊह् वितर्के—इत्याभ्याम् 'अ' प्रत्यये स्त्रियां टापि **ईहा, ऊहा** । ७-षिद्भ्यो भिदादिभ्यश्च स्त्रियां भावे अङ् प्रत्ययः स्यादित्यर्थः । जृष् वयोहानौ—धातोः अङि, ङित्वलक्षणं गुणनिषेधं बाधित्वा 'ऋदृशोऽङि, इति गुणः, **जरा,** स्त्रियां टाप् । त्रपूष्—**त्रपा** । भिदिर्—**भिदा** =भेदनम् । अङो ङित्वान्न गुणः । ८-अन्यत्र क्तिन्नेवेति भावः । ९-छिदिर् **छिदा,** मृजूष्-**मृजा,** ङित्वान्नोपधागुणः । १०-गणसूत्रमिदम्, कृपधातोः 'अङ्' प्रत्ययः सम्प्रसारणं च भवतीत्यर्थः, **कृपा** । ११-उपसर्गे उपपदे आदन्ताद् धातोः अङ्-प्रत्ययः स्यात्, भावेऽकर्तरि च कारक इत्यर्थः । उप-दा धातोः अङि, 'आतो लोपः, इत्यालोपः, टाप् **उपदा** । एवम्—

अङ् स्यात् । उपदा । अन्तर्धा ।

१२७५ ण्यासश्रन्थो युच् ३ । ३ । १०७ ॥

अस्यापवादः । कारणा ।

१२७६ रोगाख्यायां ण्वुल् बहुलम् ३ । ३ । १०८ ॥

प्रच्छर्दिका । प्रवाहिका । विचर्चिका । क्वचिन्न । शिरोर्तिः । ( धात्वर्थनिर्देशे ण्वुल्वक्तव्यः । ) आसिका । ( इक्श्तिपौ धातुनिर्देशे । ) पचिः । पचतिः । (वर्णात्कारः) निर्देश इत्येव । अकारः । ककारः । (रादिफः ।) रेफः ।

१२७७ नपुंसके भावे क्तः ३ । ३ । ११४ ॥

१२७८ ल्युट् च ३ । ३ ।११५॥

अन्तर्–धा धातोः आङि, टाप्, **अन्तर्धा** । अदन्तरोरुपसर्गवद् वृत्तिः, इति 'अन्तर्' शब्दस्य उपसर्गत्वेन 'अङ्' । तथा च वार्तिकम् 'अन्तःशब्दस्याङ्–कि–विधि–णत्वेषूपसर्गत्वं वाच्यम्' इति ।

१–ण्यन्ताद्—आसधातोः श्रन्थेश्च युच् स्यादित्यर्थः । ण्यन्तात् यथा—**कारणा** ( कारि=(यु) अन ) णिलोपः, णत्वं स्त्रीत्वे टाप् । आस—आसना, श्रन्थ–श्रन्थना । २–'अ'–प्रत्ययस्य,–अप्रत्ययादिति विहितस्येत्यर्थः । ३–प्रछर्द्–धातोः–ण्वुल्, वोरकः स्त्रीत्वे टापि, अत इत्वम् **प्रच्छर्दिका**=वमनरोगः । प्र–वह्—**प्रवाहिका**=ग्रहणी । विचर्चे–**विचर्चिका**=पामा । ४–बहुलग्रहणादिति भावः । **शिरोऽर्त्तिः**=शिरःपीडा । अर्द् धातोः क्तिन् । तितुत्रेति नेट् । ५–आसधातोः ण्वुलि रूपम्, **आसिका**, 'अत उपधायाः, वृद्धिः । आसनमित्यर्थः । एवम्–शायिका–इत्यादयः । ६–धातुस्वरूपे निर्देष्टव्ये इक्–श्तिपौ वक्तव्यावित्यर्थः । पचः–इक्प्रत्यये **पचिः**, श्तिपप्रत्यये **पचतिः**=पचधातुरित्यर्थः । श्तिपः शित्वात् सार्वधातुकत्वेन शबादिः । ७–वर्णस्वरूपनिर्देशे कर्तव्ये वर्णानुकरणात् 'अ–इ–उ, इत्यादिप्रातिपदिकात् कारप्रत्ययः स्यादित्यर्थः । ७–वक्तव्य इति शेषः, कारप्रत्ययाऽपवादोऽयम्, वाऽसरूपन्यायेन कारप्रत्ययोऽपि, ( न च स्त्रियां क्तिन्नित्युत्तरपठितत्वाद् अस्त्रियामिति निषेधात् वाऽसरूपन्यायस्य प्रवृत्तिर्न स्यादिति वाच्यम् , अत्र स्त्रियाम् इत्यस्याऽनुवृत्तेरनभ्युपगमात् ) तेन 'रकारादीनि वर्णानि शृणवतो मम पार्वति !, इत्यादि संगच्छते ।

हसितम् । हसनम् ।

**१२७९ करणाधिकरणयोश्च ३ । ३ । ११७ ॥**

ल्युट् । अनुमानः । अनुमानी ।

**१२८० पुंसि संज्ञायां घः प्रायेण ३ । ३ । ११८ ॥**

**१२८१ छादेर्घेऽद्व्युपसर्गस्य ३ । ४ । ९६ ॥**

द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वो घे । दन्तच्छदः । आकुर्वन्त्यस्मिन्नित्याकरः ।

**१२८२ अवे तृस्त्रोर्घञ् ३ । ३ । १२० ॥**

अवतारः । अवस्तारो=जवनिका ।

**१२८३ हलश्च ३ । ३ । १२१ ॥**

हलन्ताद्घञ् । घापवादः । रमन्ते योगिनोऽस्मिन्निति रामः । अपमृज्यतेऽनेन व्याध्योदिकमित्यपामार्गः।

**१२८४ ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ३ । ३ । १२६ ॥**

एषु दुःखसुखार्थेषूपपदेषु खल् । तयोरेवेति भावे कर्मणि च । कृच्छ्रे-दुष्करः कटो भवता । अकृच्छ्रे । ईषत्करः । सुकरः ।

**१२८५ आतो युच् ३ । ३ । १२८ ॥**

खलोऽपवादः । ईषत्पानः सोमो भवता । दुष्पानः । सुपानः ।

---

१-अनुमीयतेऽनेन वह्न्यादिः सोऽनुमानो धूमादिः, स्त्रियां ल्युटः टित्वात् ङीप्—**अनुमानी** । २-करणाधिकरणयोरित्येव पूर्वसूत्रापवादः । ३-दन्ताः छाद्यन्तेऽनेन **दन्तच्छदः**=ओष्ठः । ४-'अव' इत्युपसर्गे उपपदे 'तॄ-स्तॄ, इत्याभ्यां घञ् पुंसि संज्ञायां प्रायेणेत्यर्थः । **अवतारः, अवस्तारः** । ५-पुंसि संज्ञायामिति विहितस्य घप्रत्ययस्याऽपवाद इत्यर्थः । ६-अधिकरणे घञ् **रामः**=परमात्मा तदवतारो दाशरथिश्च । ७-अप-मृज् धातोः-घञि, उपसर्गस्य घञ्यमनुष्य इत्युपसर्गस्य दीर्घः, मृजेर्वृद्धिः, 'चजोः कुः' इति कुत्वम्—**अपामार्गः**=औषधभेदः, (ऊंगा-पुठकंडा)। ८-न लोकाव्ययेति षष्ठीनिषेधात् कर्तरि तृतीया । ९-ईषदादिषु कृच्छ्राऽकृच्छ्रार्थेषूपपदेषु आदन्ताद् धातोः युच् स्यादित्यर्थः । युचः—'यु' इत्यस्य अनादेशः । **ईषत्पानः** इत्यादि ।

**१२८६ आवश्यकाधमर्ण्ययोर्णिनिः[1] ३ । ३ । १७० ॥**

अवश्यङ्कारी । शतंदायी ।

**१२८७ कृत्याश्च ३ । ३ । १७१ ॥**

तथा[2] धातोः । अवश्यं सेव्यो हरिः । शतं देयम् ।

**१२८८ क्तिच् क्तौ च संज्ञायाम् ३ । ३ । १७४ ॥**

आशिषि । वातिः=वायुः । शिवो देयादेनं शिवदत्तः ।

**१२८९ अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा ३ । ४ । १८ ॥**

प्राचाम्[3]इति पूजार्थम् । प्रतिषेधयोरलंखल्वोरुपपदयोः क्त्वा । 'दो दद् घोः' । अलं दत्त्वा[4] । 'घुमास्थे' तीत्वम् । पीत्वा खलु । अलंखल्वोः किम् । माकार्षीः । प्रतिषेधयोः किम् । अलङ्कारः[5] ।

**१२९० समानकर्तृकयोः पूर्वकाले ३ । २ । २१ ॥**

समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा । 'अव्यय-कृतो भावे'[6] । भुक्त्वा व्रजति । द्वित्वमतन्त्रम्[7] । स्नात्वा भुक्त्वा पीत्वा व्रजति ।

**१२९१ न क्त्वा सेट् १ । २ । १८ ॥**

---

१–आवश्यके–आधमर्ण्ये च गम्ये धातोः कर्तरि णिनिः स्यादित्यर्थः । २–आवश्यकाधमर्ण्ययोर्गम्ययोः धातोः कृत्यप्रत्ययाः=यत् तव्यदादयः स्युरित्यर्थः । **सेव्यम्** इत्यत्र ण्यत् । **देयम्** इत्यत्र 'अचो यत्' 'ईद्यति' । ३–'उदीचां माङो व्यतिहारे' इत्युत्तरसूत्रे उदीचां ग्रहणादस्य नित्यत्वा-वश्यकत्वात् प्राचां ग्रहणं व्यर्थमित्यत आह—**प्राचां ग्रहणं पूजार्थ**मिति, आदरार्थमित्यर्थः, न तु विकल्पार्थम् इति भावः । ४–अलं–दा धातोः क्त्वा प्रत्यये 'दद्' आदेशे, चर्त्वे, **अलंदत्वा**=दानेन किञ्चिदपि साध्यं नास्तीत्यर्थः । पाधातोः क्त्वाप्रत्यये ईत्वं **पीत्वा खलु** । ५–भूषणार्थोऽत्रा-ऽलंशब्दः घञि रूपम् । ६–इत्यनेन भावे क्त्वाप्रत्यय इत्यर्थः । ७–सूत्रे-समानकर्तृकयोरिति द्वित्वम् अविवक्षितम् इति भावः । तेन अधिकयोगेऽपि, –पूर्वकाले विद्यमानेभ्यः सर्वेभ्योऽपि ( द्विभ्यां त्रिभ्यो वा ) भवतीति यावत् । यथा–स्नात्वा भुक्त्वा–पीत्वा व्रजति । स्नानभोजनपानोत्तरकालिकं व्रजनमित्यर्थः ।

सेट् क्त्वा किन्न । शयित्वा[1] । सेट् किम् । कृत्वा[2] ।

**१२६२ रलो व्युपधाद्धलादेः संश्च १ । २ । २६ ॥**

इवर्णोवर्णोपधाद्धलादेरलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः । द्युतित्वा[3], द्योतित्वा । लिखित्वा, लेखित्वा । व्युपधात्किम् । वर्तित्वा[4] । रलः किम् । सेवित्वा[5] । हलादेः किम् । ऐषित्वा । सेट् किम् । भुक्त्वा ।

**१२६३ उदितो वा ७ । २ । ५६ ॥**

उदितः परस्य क्त्व इड् वा । शमित्वा, शान्त्वा[6] । देवित्वा, 'छ्वोः शूडनुनासिके च'ेति ऊठ्, द्यूत्वा[7] । दधातेर्हिः । हित्वा ।

**१२६४ जहातेश्च क्त्वि ७ । ४ । ४३ ॥**

हित्वा । हाङस्तु–हात्वा[8] ।

**१२६५ समासेऽनञ्पूर्वे क्त्वो ल्यप् ७ । १ । ३७ ॥**

अव्ययपूर्वपदेऽनञ्समासे क्त्वो ल्यबादेशः । तुक् । प्रकृत्य[10] । अनञ् किम् अकृत्वा । अव्ययपूर्वपदात्किम् । परमकृत्वा ।

**१२६६ वा ल्यपि ६ । ४ । ३१ ॥**

अनुदात्तोपदेश–वनति–तनोत्यादीनामनुनासिकलोपः । स च व्यवे-[11]

---

१–कित्त्वाभावाद् गुणनिषेधो न, किन्तु 'सार्वधातुके'ति भवति गुणः, अयादेशः, **शयित्वा** । २–कृञ् धातुर्हि–अनिट्, इति न कित्त्वनिषेधः, तेन गुणाभावः । ३–कित्त्वे गुणाभावः, अकित्त्वे गुणः, इति रूपद्वयं सिद्ध्यति । ४–वृत्धातुः ऋदुपधः, न इकारोकारोपधः । ५–सिव्धातुः रल्प्रत्याहार-घटितवर्णान्तो नास्तीति न कित्त्वविकल्पः 'किन्तु 'न क्त्वा सेट्, इति कित्त्वाऽभावे उपधागुणे रूपं **सेवित्वा** । ६–शमुधातुः, इडभावे 'अनुनासिकस्य क्वि' इति दीर्घः । अनुस्वारपरसवर्णौ, **शान्त्वा** । ७–दिवुधातुः –इडभावे ऊठि रूपं **द्यूत्वा** । ८–ओहाक् त्यागे इत्यस्य क्त्वा प्रत्यये हिभावो भवतीत्यर्थः । ९–ओहाङ् गतौ इत्यस्य रूपम्—**हात्वा** । १०–प्र-कृञ् धातोः क्त्वाप्रत्ययस्य ल्यपि, ल्यपः पित्त्वात् ह्रस्वस्येति तुक् **प्रकृत्य** । ११–सः= लोपो व्यवस्थितः, व्यवस्थितविभाषेयमित्यर्थः । तेन=व्यवस्थितविभाषात्वेन, मान्तानिटां वा, नान्तानिटां वनादीनां च नित्यम्–आगम्य, आगत्य, वाऽनुनासिकलोपः । प्रहत्य, नित्यं लोपः ।

स्थितः । ( मान्तानिटां वा ) । ( नान्तानिटां नित्यम् ) । आगम्य, आगत्य । प्रहत्य । अदो जग्धिः । प्रजग्ध्य ।

**१२९७ न ल्यपि ३ । ४ । ६९॥**

घुमास्थेतीत्वम् । प्रदाय । प्रमायेत्यादि ।

**१२९८ आभीक्ष्ण्ये णमुल् च ३ । ४ । २२ ॥**

पौनःपुन्ये द्योत्ये क्त्वा-विषये णमुल् क्त्वा च ।

**१२९९ नित्य-वीप्सयोः ८ । १ । ४ ॥**

आभीक्ष्ण्ये वीप्सायां च द्योत्ये पदस्य द्वित्वं स्यात् । आभीक्ष्ण्ये तिङन्तेष्वव्ययसंज्ञककृदन्तेषु च। पचति पचति । स्मारं स्मारं नमति गुरुम् । स्मृत्वा स्मृत्वा । पायम् २ । भोजम् २ । श्रावम् २ ।

**१३०० अन्यथैवं-कथमित्थंसु सिद्धाप्रयोगश्चेत् ३ । ४ । २७॥**

एषु कृञो णमुल्स्यात् सिद्धोऽप्रयोगोऽस्य एवंभूतश्चेत्कृञ् । व्यर्थत्वात्प्रयोगानर्ह इत्यर्थः । अन्यथाकारम्-एवङ्कारम्-कथङ्कारम्-इत्थङ्कारं भुङ्क्ते । इत्थं भुङ्क्ते इत्यर्थः । सिद्धेति किम् । शिरोऽन्यथाकृत्वा भुङ्क्ते ।

**१३०१ यावति विन्दजीवोः ३ । ४ । ३० ॥**

यावद्वेदं भुङ्क्ते । यावल्लभते तावदित्यर्थः । यावज्जीवमधीते ।

---

१–ल्यपि परे घुमास्थादेरीत्वं नेति सूत्रार्थः । २–प्र–दा धातोः क्त्वा-प्रत्ययस्य ल्यपि 'घुमास्था' इति ईत्वस्य न ल्यपीति निषेधः=**प्रदाय** एवं प्रधाय, प्रमाय । ३-तिङन्ते द्वित्वोदाहरणमिदम् । ४–स्मृधातोः–आभीक्ष्ण्ये णमुलि, णित्वाद् वृद्धिः, द्वित्वम्—**स्मारं स्मारम्** । पक्षे क्त्वा **स्मृत्वा स्मृत्वा** । पाधातोः णमुण्, ( आतो युक् ) **पायम्** । भुज् धातोः–**भोजम् भोजम्**, लघूपधगुणः । श्रुधातोः–श्रावं श्रावम्, वृद्धिः । ५–अन्यथादिशब्दानां योऽर्थस्तस्माद् विशिष्टोऽर्थः कृञो न स्यादिति भावः । अर्थस्याविवक्षितत्वेऽपि णमुल्प्रत्ययसाधुत्वार्थं तत्प्रयोगः ( कृञ्प्रयोगः ) इति बोध्यम् । ६-अत्र न कृञः प्रयोगोऽन्यथासिद्धः किन्तु–आवश्यकः । अतो न णमुल् । ७–यावत्–शब्दे उपपदे विन्दतेः जीवतेश्च णमुलित्यर्थः । यावद्–विद्धातोः—णमुल् लघूपधगुणः, **यावद् वेदम्** मान्तत्त्वादव्ययत्वम् । ८–यावद् जीवति तावदधीते इत्यर्थः ।

**१३०२ निमूलसमूलयोः[1] कषः ३ । ४ । ३४ ॥**

कर्मण्युपपदे ।

**१३०३ कषादिषु यथाविध्यनुप्रयोगः ३ । ४ । ४६ ॥**

यस्माण्णमुलुक्तः स एवानुप्रयोक्तव्यः । निमूलकाषं[2] कषति । समूलकाषं कषति । निमूलं-समूलं कषतीत्यर्थः ।

**१३०४ शुष्कचूर्णरूक्षेषु पिषः ३ । ४ । ३५ ॥**

एषु कर्मसु पिषेर्णमुल् । शुष्कपेषं पिनष्टि । शुष्कं पिनष्टीत्यर्थः । चूर्ण-पेषम् । रूक्षपेषम् ।

**१३०५ समूलाकृत-जीवेषु[3] हन्कृञ्ग्रहः ३ । ४ । ३६ ॥**

कर्मणीत्येव । समूलाघातं हन्ति । अकृतकारं करोति । जीवग्राहं गृह्णाति । जीवन्तं गृह्णातीत्यर्थः ।

**१३०६ करणे हनः[4] ३ । ४ । ३७ ॥**

पादघातं हन्ति । पादेन हन्तीत्यर्थः ।

**१३०७ स्नेहने पिषः ३ । ४ । ३८ ॥**

स्निह्यते येन तस्मिन्करणे पिषेर्णमुल् । उदपेषं[5] पिनष्टि । उदकेन पिनष्टीत्यर्थः ।

**१०३८ हस्ते वर्ति-ग्रहोः ३ । ४ । ३९ ॥**

हस्तार्थे करणे[6] । हस्तवर्तं वर्तयति । करवर्तम् । हस्तेन गुलिकां करोतीत्यर्थः । हस्तग्राहं गृह्णाति[7] । करग्राहम् । पाणिग्राहम् ।

**१०३९ स्वे पुषः ३ । ४ । ४० ॥**

---

१–निमूले समूले च कर्मण्युपपदे कषधातोः णमुलित्यर्थः । २–निर्गतं मूलमस्येति निमूलम्, सह मूलेनेति समूलम्, निमूलसमूहकषणाभिन्नं कषणमित्यर्थः । ३–समूलादिषु कर्मसूपपदेषु हन्–कृञ्–ग्रहधातुभ्यो णमुल् इत्यर्थः । **समूलघातम्** । णमुलि वृद्धिः, होहन्तेरिति घत्वं, हनस्त इति तत्वम् । ४–णमुलिति शेषः । ५–'उदकस्योदः' इत्यनुवृत्तौ 'पेषं–वास–वाहन–धिषु च, इति सूत्रेणोदकस्योदादेशः । ६–हस्तार्थे करणे उपपदे वर्तिग्रहोर्णमुल् स्यादित्यर्थः । ७–हस्तेन गृह्णातीत्यर्थः ।

करण इत्येव । स्व इत्यर्थग्रहणम् । तेन[1] स्वरूपे पर्याये विशेषे च णमुल् । स्[2]वपोषं पुष्णाति । धनपोषम् । गोपोषम् ।

**१३१० समासत्तौ ३ । ४ । ५० ॥**

तृतीयासप्तम्योर्णमुल् सन्नि[3]कर्षे । केशग्राहं युध्यन्ते । हस्तग्राहं युध्यन्ते ।

**१३११ स्वाङ्गे तस्[4]प्रत्यये कृभ्वोः ३ । ४ । ६१ ॥**

क्त्वाणमुलौ स्तः । मुखतःकृ[5]त्य । मुखतःकृत्वा । मुखतःकारम् । मुखतोभूय । मुखतोभूत्वा । मुखतोभावम् ॥ इति कृदन्तप्रक्रिया समाप्ता ॥

# अथ विभक्त्[6]यर्थाः ।

**१३१२ प्राति[7]पदिकार्थ-लिङ्ग-परिमाण-वचनमात्रे प्रथमा २ । ३ । ४६ ॥**

---

१-स्वरूपे=( स्वशब्दे ) पर्याये=( धनादिशब्दे ) विशेषे स्वविशेष-( धनविशेष )-गवादिशब्दे उपपदे पुषधातोर्णमुल् इत्यर्थः । २-धनेन पुष्णातीत्यर्थः । एवमग्रेऽपि । ३-सन्निकर्षोऽव्यवधानेन संयोगः । **केशग्राहं युध्यन्ते,** केशेषु ग्रहणं भवतु मा वा भवतु सन्निकर्षप्रतिपादनपरमेतत् । अत्यन्तं सन्निहिता युध्यन्ते इत्यर्थः । **एवं-हस्तग्राहं युध्यन्ते** । ४-तस् प्रत्ययो यस्मादिति बहुव्रीहिः, तस्प्रत्ययान्ते स्वाङ्गे उपपदे कृञो भुवश्च क्त्वा णमुल् चेत्यर्थः । इह यथासङ्ख्यं न व्याख्यानात् । ५-त्वा च, इति सूत्रेण समासपक्षे क्त्वाप्रत्ययस्य ल्यपि, तुकि रूपम्, मुखतःकृत्य । असमासपक्षे ल्यपोऽभावे मुखतः कृत्वा । णमुलि-मुखतःकारम्, एवमग्रेऽपि । इति श्रीप्रभाकरीविवृतौ मध्यकौमुदीटीकायां कृदन्तप्रकरणं सम्पूर्णम् ।

६-"ङ्याप्प्रातिपदिका" दित्यधिकृत्य "स्वौजसमौ" डित्यादिना ङ्याप्प्रातिपदिकेभ्यः स्वादिप्रत्ययाः (प्रथमादिसप्तम्यन्ताः सप्तविभक्तयः) सप्रपञ्चं निरूपिताः । अथेदानीं सप्तानामपि विभक्तीनामर्थविशेषव्यवस्थार्थं विभक्त्यर्थप्रकरणमारभ्यते । प्रायः कारकाधिकारात्कारकप्रकरणमपीदमेव ।

७-प्रातिपदिकार्थश्च लिङ्गञ्च प्रमाणञ्चेति द्वन्द्वः, मात्रशब्दस्य द्वन्द्वान्ते श्रूयमाणत्वात्प्रत्येकमभिसम्बन्धः । मात्रशब्दार्थश्चावधारणम् । तत्र प्रातिपदिकार्थलिङ्गप्रमाणवचनान्येव प्रातिपदिकार्थलिङ्गप्रमाणवचनमात्रम्-इत्यस्वपदविग्रहः । अर्थो वृत्तौ स्पष्टः ।

नियतोपस्थितिकः प्रातिपदिकार्थः । मात्रशब्दस्य प्रत्येकं योगः । प्रातिपदिकार्थमात्रे लिङ्गमात्राधिक्ये सङ्ख्यामात्रे च प्रथमा । प्रातिपदिकार्थमात्रे-उच्चैः । नीचैः । कृष्णः । श्रीः । ज्ञानम् । लिङ्गमात्रे-तटः । तटी । तटम् । परिमाणमात्रे-द्रोणो[४] व्रीहिः । वचनं=सङ्ख्या । एकः । द्वौ । बहवः ।

१-स्वार्थो द्रव्यञ्च लिङ्गञ्च सङ्ख्या कारकमेव च ।
अमी पञ्चैव नामार्थास्त्रयः केषाञ्चिदप्रिमाः ॥

इतिप्रातिपदिकार्थपञ्चकसिद्धान्ते त्रिकसिद्धान्ते चापि लिङ्गस्य नामार्थत्वात्=प्रातिपदिकार्थत्वात् पृथग्ग्रहणं व्यर्थमेवेत्याशङ्क्य प्रकृते विवक्षितं प्रातिपदिकार्थं निरूपयति—**नियतेति**। यस्मिन् प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः सोऽत्र प्रातिपदिकार्थो विवक्षित इत्यर्थः । २-अलिङ्गा नियतलिङ्गाश्च प्रातिपदिकार्थमात्रस्योदाहरणानि । उच्चैः, नीचैरादयोऽलिङ्गाः । कृष्णादयो नियतलिङ्गाः । ३-अनियतलिङ्गास्तु लिङ्गमात्राद्याधिकस्योदाहरणानि यथा तट इत्यादि । ४-न चेह प्रातिपदिकार्थमात्रे-इत्येव प्रथमास्त्विति वाच्यम् । तथा सति द्रोणरूपपरिमाणस्य व्रीहेश्च द्वयोरपि प्रातिपदिकार्थत्वेन=नामार्थत्वेन 'नामार्थयोरभेदेनान्वय' इति न्यायाद् द्रोणाभिन्नो व्रीहिरित्यनिष्टार्थलाभे द्रोणरूपपरिमाणस्य परिच्छेद्यपरिच्छेदकभावविधयाऽन्वयो न स्यात् । परिमाणार्थे पृथक् प्रथमाविधाने तु प्रत्ययार्थे परिमाणसामान्ये प्रकृत्यर्थो=द्रोणशब्दार्थो विशेषपरिमाणमभेदेन संसर्गेण विशेषणम् । द्रोणाभिन्नं यत्परिमाणमित्यर्थः । तस्य च परिच्छेद्यपरिच्छेदकभावेन व्रीहौ विशेषणतयाऽन्वयस्तथा चायमर्थः-द्रोणरूपं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरिति ।

चतुर्भिः कुडवैः प्रस्थः प्रस्थाश्चत्वार आढकः ।
आढकैस्तैश्चतुर्भिस्तु द्रोण इत्यभिधीयते ॥

५-ननु एको द्वौ बहव इत्यत्रैकत्व-द्वित्व-बहुत्वानां नियमेनोपस्थित्या 'प्रातिपदिकार्थे'—इत्येव सिद्धे सूत्रे वचनग्रहणं व्यर्थमिति चेन्न, प्रकृतिभिरेवैकत्वादीनामुक्तत्वादुक्तार्थानामप्रयोग इति न्यायेन प्रथमाविभक्तेरप्राप्तौ तदर्थं सूत्रे वचनग्रहणं न्याय्यमेवेति । तथा च विभक्तिरिहाऽनुवादिका शब्दसाधुत्वार्थं प्रयोज्या 'न केवला प्रकृतिः प्रयोक्तव्या नापि प्रत्ययः' इति

**१३१३ संबोधने च २ । ३ । ४७ ॥**

प्रथमा स्यात् । हे राम !

**१३१४ कर्तुरीप्सिततमं कर्म १ । ४ । ४९ ॥**

कर्तुः क्रिययाप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात् ।

**१३१५ कर्मणि द्वितीया २ । ३ । २ ॥**

अनुक्ते । हरिं भजति । अभिहिते तु कर्मादौ प्रथमैव । अभिधानं च प्रायेण तिङ्कृत्तद्धितसमासैः । हरिः सेव्यते । लक्ष्म्या सेवितो हरिः । शतेन क्रीतः शत्यः अश्वः । प्राप्तानन्दश्चैत्रः । क्वचिन्निपातेनाभिधानम् । 'क्रमादमुं नारद इत्यबोधि सः' ।

---

न्यायात् । अत एवोक्तं भाष्ये 'उक्तेष्वप्येकत्वादिषु प्रथमेति' ।

१–सम्बोधनेऽधिके गम्येऽपि प्रथमा स्यादित्यर्थः । सम्बोधनञ्च अभिमुखीकृत्य ज्ञापनम् । **हे राम** इति । मां पाहीति शेषः । २–कारके–इत्यधिकारादिदं लभ्यते । कारकत्वञ्च क्रियाजनकत्वम् । करोति=क्रियां निर्वर्तयतीति भाष्ये व्युत्पत्तिदर्शनात् । कारकाणि च षट्:—

कर्त्ता कर्म च करणं सम्प्रदानं तथैव च ।
अपादानाधिकरणे इत्याहुः कारकाणि षट् ॥

ब्राह्मणस्य पुत्रं पश्यतीत्यत्र ब्राह्मणस्याऽन्यथासिद्धत्वात् क्रियाम्प्रति जनकत्वाभावेन न कारकत्वम् । अत एव षष्ठी कारकत्वेन न व्यवह्रियते । ३–अनभिहिते—इत्यधिकारादिदं लभ्यते । अनुक्ते कर्मणि द्वितीया स्यादित्यर्थः । ४–अभिहिते=उक्ते तु प्रातिपदिकार्थमात्र इति प्रथमैव । ५–अभिधानम्=बोधनम् । तथा च तिङा=तिङ्प्रत्ययेनाभिधानम्=बोधनं भवति कृता=कृत्प्रत्ययेन चाभिधानम्=बोधनं भवति तथा तद्धितेन समासेन च । **'हरिः सेव्यते'** तिङन्तेनाभिहितत्वाद् हरेः कर्मणो न द्वितीया । **'लक्ष्म्या सेवितो हरि'** रित्यत्र कृदन्तेनाभिहितं कर्म हरिस्तेन प्रातिपदिकार्थमात्रे प्रथमा । तद्धितोदाहरणं 'शतेन क्रीतः' **शत्यः**=अश्वः । समासोदाहरणञ्च **'प्राप्तानन्द'**ः । ६–प्रायेणेत्यस्य फलं दर्शयति–**क्वचिन्निपाते**नेति । क्रमादमुमित्यत्र इतिशब्दरूपेण निपातेन नारदनिष्ठं कर्मत्वमभिहितमिति न द्वितीया किन्तु प्रातिपदिकार्थमात्रे प्रथमैव ।

**१३१६ अकथितं च १।४।५१॥**

अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात्।

"दुह्याच्-पच्-दण्ड्-रुधि-प्रच्छि-चि-ब्रू-शासु-जि मन्थ-मुषाम्।

कर्मयुक् स्यादकथितं तथा स्यान्नी-हृ-कृष्वहाम्"॥

गां दोग्धि पयः। बलिं याचते वसुधाम्। तण्डुलानोदनं पचति। गर्गान् शतं दण्डयति। व्रजमवरुणद्धि गाम्। माणवकं पन्थानं पृच्छति। वृक्षमवचिनोति फलानि। माणवकं धर्मं ब्रूते, शास्ति वा।

१—अकथितशब्दं व्याचक्षाण आह—**अपादानादिविशेषैरिति**। अर्थात् अपादानसम्प्रदानाधिकरणादिकं यदाऽपादानत्वादिविशेषरूपेण न विवक्षितं किन्तु सम्बन्धसामान्यात्मनैव विवक्षितं तदा तत्कारकं कर्मसञ्ज्ञकमित्यर्थः। २—ननु-नटस्य शृणोतीत्यत्र नटसम्बधिश्रवणमित्यर्थके (वाक्ये) नटस्यापि कर्मत्वं स्यात्तस्य क्रियान्वयित्वेन कारकत्वात् वस्तुतोऽपादानस्य सम्बन्धित्वेन विवक्षितत्वाच्चेत्याशङ्क्य परिगणयति—**दुह्याजिति**। दुह्यादीनां द्वादश-धातूनां तथा नीहृकृष्वहां चतुर्णां मुख्यकर्मणा यद् युज्यते (अपादानादि) तदेवाऽकथितं कर्मेति परिगणनार्थः। तेन च एत एव धातवो द्विकर्मका इति सिद्धम्। ३—पयःकर्मकं गोसम्बन्धि दोहनमर्थः। पयोऽत्र मुख्यं कर्म कर्तुरीप्सिततमत्वाद्, गोश्चावधित्वेन प्राप्तस्याऽपादानत्वस्याऽविवक्षणादक-थितकर्मत्वम्=गौणकर्मत्वम्। ४—प्रार्थनार्थस्य याचेर्वसुधा मुख्यं कर्म, तेन युक्तो बलिर्वस्तुतोऽवधिरपि (अपादानमपि) तदविवक्षायामकथितं कर्म। ५—निर्वर्त्तनार्थस्य पचेरोदनो मुख्यं कर्म तण्डुलास्तु करणत्वाऽविवक्षायाम-कथितं कर्म ६—ग्रहणार्थस्य दण्डधातोः शतं मुख्यं कर्म गर्गास्त्वपादान-त्वाविवक्षायां गौणं कर्म। ७—अत्र गौर्मुख्यं कर्म व्रजोऽधिकरणत्वाविवक्षा-यामकथितं कर्म। ८—अत्र पन्था मुख्यं कर्म माणवकस्य करणत्वाऽविवक्षायां गौणकर्मत्वे द्वितीया। माणवकेन पन्थानं ज्ञातुमिच्छतीत्यर्थः। ९—अत्र फलानि मुख्यं कर्म वृक्षश्चापादानत्वाऽविवक्षायां गौणं कर्म। वृक्षात्प्रचाव्य फलान्यादत्ते—इत्यर्थः। १०—अत्र धर्मो मुख्यं कर्म बोधनानुकूलव्यापारो ब्रूञोऽर्थो बोधविषयेण कर्मणाऽभिप्रेयमाणत्वाद् माणवकः सम्प्रदानं सम्प्रदा-नत्वाविवक्षायां तस्य गौणकर्मत्वे द्वितीया माणवकाय धर्मं बोधयतीत्यर्थः।

शतं जयति देवदत्तम् । सुधां क्षीरनिधिं मथ्नाति । देवदत्तं शतं मुष्णाति । ग्राममजां नयति हरति कर्षति वहति वा । अर्थनिबन्धनेयं संज्ञा । बलिं भिक्षते वसुधाम् । माणवकं 'धर्मं भाषते अभिधत्ते वक्ती'त्यादि । ( अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम् ) कुरून्

१–ग्रहणानुकूलताडनादिव्यापारो 'जि' धातोरर्थः, शतं प्रधानं कर्म देवदत्तस्त्वपादानत्वाऽविवक्षायां गौणं कर्म । देवदत्तात्ताडनादिना सुवर्णशतं गृह्णातीत्यर्थः । २–सुधा प्रधानं कर्म क्षीरनिधिस्तु सुधोद्भवप्रत्यपादानत्वाऽविवक्षायां गौणं कर्म । क्षीरनिधेः सकाशात्सुधां मन्थनदण्डभ्रामणेनोद्भावयतीत्यर्थः । ३–शतं मुख्यं कर्म परस्वामिकद्रव्यस्य स्वामिनः सकाशादपनीयाऽऽदानानुकूलो व्यापारो 'मुष्' धातोरर्थः, अपनयनावधित्वाद् देवदत्तोऽपादानम् अपादानत्वाऽविवक्षायां तस्य गौणकर्मत्वम् । अपश्यति देवदत्ते तदीयं सुवर्णशतं तस्मादपनीयाऽऽदत्ते—इत्यर्थः । ४–अत्राऽजा प्रधानं कर्म ग्रामस्य चाऽधिकरणत्वाऽविवक्षायां गौणकर्मत्वम् । अजां ग्रामे प्रापयतीत्यर्थः । ५–अयम्भावः—परिगणितानां धातूनां यो योऽर्थस्तत्तदर्थकधातुयोगेऽकथितकर्मत्वमिति । तथा चैतदर्थकधात्वन्तरसंयोगेऽपि द्विकर्मकत्वं लभ्यते कैयटादिभिरपीत्थमेव व्याख्यातम् । ६–ननु 'कुरून् स्वपिति देवदत्तः' 'मासमास्ते' इत्यादौ कुर्वादेरनुद्देश्यत्वा'त्कर्तुरीप्सिततम' मिति कर्मत्वं न सम्भवति । कर्तुरेव स्वापादिक्रियाश्रयत्वात्, 'तथा युक्त' मित्यपि न कर्मत्वमित्यत आह—**अकर्मकधातुभि**रिति । इह देशशब्देन कुरुपाञ्चालादिरूप एव देशो गृह्यते न तु ग्रामादिरपि । अन्यथा—"अधितिष्ठति वैकुण्ठ" मित्यत्रानेनैव कर्मत्वे सिद्धे "अधिशीङ्स्थासां कर्म" इत्यस्य वैयर्थ्यं स्यात् । अत्रोक्तं हरिणा—

कालभावाऽध्वदेशानामन्तर्भूतक्रियान्तरैः ।
सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते ॥

७–स्वपितीत्यकर्मकधातुना योगे देशः कर्मसञ्ज्ञः, जनपदवाचिनां स्वभावाद् बहुवचनान्तता । कुरुषु निद्रां करोतीत्यर्थः ।

स्वपिति । मासमास्ते । गोदोहमास्ते । क्रोशमास्ते ।

१३१७ गति-बुद्धि-प्रत्यवसानार्थ-शब्दकर्माकर्मकाणामणि कर्ता स णौ १ । ४ । ५२ ॥

गत्याद्यर्थानां शब्दकर्मकाणामकर्मकाणां चाणौ यः कर्ता स णौ कर्म स्यात् ।

"शत्रूनगमयत्स्वर्गं वेदार्थं स्वानवेदयत् ।
आशयच्चामृतं देवान् वेदमध्यापयद्विधिम् ।
आसयत् सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः" ।

( नीवह्योर्न ) नाययति वाहयति वा भारं भृत्येन । ( नियन्तृकर्तृकस्य वहे-

१-अकर्मकेणाऽऽस्धातुना योगे कालविशेषस्य मासस्य कर्मत्वम्, इहाऽधिकरणसञ्ज्ञां बाधित्वा कर्मसञ्ज्ञा । २-दोहनम्=दोहः । भावे घञ्, गवां दोहः=गोदोहो गोदोहनकाले लाक्षणिकः । नच तथा सति कालत्वादेव "कालाध्वनो" रिति सिद्धिः स्यादिति वाच्यम्, लोके कालत्वेन प्रसिद्धस्याहोरात्रसमूहस्य मासादेरेव तत्र ग्रहणात् । ३-गन्तव्याऽध्वोदाहरणमिदम् —क्रोशमास्ते-इति । ४-गतिः=गमनम्, बुद्धिः=ज्ञानम्, प्रत्यवसानम् =भक्षणम्, अर्थो येषाम्, शब्दः कर्म येषामिति बहुव्रीहिः । अविद्यमानं कर्म येषां तेऽकर्मकास्तेषाम् । तथैवाह वृत्तौ गत्याद्यर्थानामित्यादि । ५-शत्रूनगमयदिति । स श्रीहरिर्मे=मम गतिः=संरक्षको भूयात्, यः शत्रून् स्वर्गमगमयत्=शत्रवः स्वर्गमगच्छन् श्रीहरिस्तान् प्रेरयत्-इति श्रीहरिः शत्रून् स्वर्गमगमयत्, अण्यन्तावस्थायां कर्त्तारः शत्रवः ण्यन्तावस्थायां कर्मीभूताः सन्तीति द्वितीयाविभक्तिः, गत्यर्थोदाहरणमिदम् । बुद्ध्यर्थोदाहरणमाह —वेदार्थमिति स्वे=स्वकीया वेदार्थमविदुः श्रीहरिस्तानवेदयदिति । प्रत्यवसानार्थोदाहरणं ब्रूते-आशयच्चामृतमिति । देवा-अमृतमाश्नन् श्रीहरिर्देवानमृतमाशयत्=अभोजयदिति । शब्दकर्मोदाहरणमाह—वेदमध्यापयदिति । विधिः=ब्रह्मा वेदमध्यैत, श्रीहरिर्विधिं वेदमध्यापयत्=अपाठयदिति । अकर्मकोदाहरणमाह—आसयत् सलिले इति। सलिले=जले पृथ्वी-आस्त श्रीहरिः पृथ्वीमासयत्=उपावेशयदिति । ६-प्रापणमपि गत्यन्तर्गतमिति गत्यर्थत्वेन पूर्वसूत्रप्राप्तं कर्मत्वमनेन निषिध्यते । ण्यन्तयोरनयोः प्रयोज्यकर्त्तुर्न कर्मत्वमित्यर्थः । कर्मत्वाभावे प्रयोज्यकर्त्तुरनुक्तत्वात्तृतीया । ७-नियन्तृकर्तृकस्य च वहने निषेधः । प्रयोज्यकर्त्तुः कर्मत्वं भवत्येवेत्यर्थः ।

रनिषेधः ) । वाहयति रथं वाहान्सूतः[1] । ( आदिखाद्योर्न[2] ) । आदयति खादयति वा अन्नं वटुना । ( भक्षेरहिंसार्थस्य[3] न ) । भक्षयत्यन्नं वटुना । अहिंसार्थस्य किम् । भक्षयति बलीवर्दान् सस्यम्[4] । ( जल्पतिप्रभृतीनामुपसङ्ख्यानम्[5] ) । जल्पयति भाषयति वा धर्मं पुत्रं देवदत्तः । ( दृशेश्च[6] ) । दर्शयति हरिं भक्तान् । ( शब्दायतेर्न[7] ) । शब्दाययति देवदत्तेन ।

**१३१८ हृक्रोरन्यतरस्याम् १ । ४ । ५३ ॥**

हृक्रोरणौ[8] यः कर्ता स णौ वा कर्म स्यात् । हारयति कारयति भृत्येन[9] भृत्यं वा कटम् । ( अभिवादिदृशोरात्मनेपदे[10] वेति वाच्यम् ) । अभिवादयते दर्शयते देवं भक्तेन भक्तं वा ।

**१३१९ अधिशीङ्स्थासां कर्म १ । ४ । ४६ ॥**

अधिपूर्वाणामेषामाधारः[11] कर्म स्यात् । अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः ।

---

१–वाहा रथं वहन्ति सूतस्तान् प्रेरयति–इति वाहयति रथं वाहान् सूतः । २–प्रत्यवसानार्थत्वात्कर्मत्वे प्राप्ते निषेधमाह–**अदिखाद्योर्न**ेति । अत्ति खादति वाऽन्नं वटुस्तं प्रेरयतीति आदयति खादयति वाऽन्नं वटुना । ३–अहिंसार्थस्य 'भक्ष' धातोः प्रयोज्यकर्तुः कर्मत्वं नेत्यर्थः । चुरादिण्यन्ताद् भक्षधातोर्हेतुमण्णिचि भवत्युदाहरणम्—**भक्षयत्यन्नं वटुना** इति । ४–क्षेत्रे प्ररूढं हरितमलूनं सस्यमित्युच्यते, तस्यामवस्थायां तस्य चेतनत्वात् तद्भक्षणं हिंसैवेति भावः । तथाच भवति प्रयोज्यकर्तुः कर्मत्वम् । ५–एतेषामणौ यः कर्ता स णौ कर्म स्यादिति वक्तव्यमित्यर्थः । ६–दृशिर् प्रेक्षणे–इत्यस्यापि–अणौ यः कर्ता स णौ कर्म स्यादिति वक्तव्यम् । भक्ता हरिं पश्यन्ति तान् प्रेरयति गुरुरित्युदाहरणार्थः । ७–धात्वर्थसङ्गृहीतकर्मकत्वेनाऽकर्मकत्वाद् "गतिबुद्धी"ति प्राप्तं कर्मत्वमनेन निषिध्यते । **शब्दायते**त्यत्र शब्दं करोतीत्यर्थे 'शब्दवैरकलहे' त्यादिना क्यङ् ततो हेतुमण्णिच् शब्दायते देवदत्तस्तं यज्ञदत्तः प्रेरयतीत्यर्थः । ८–हाच का च हृक्रौ तयोरिति विग्रहः । ९–पक्षेऽनुक्तत्वात्प्रयोज्यकर्तरि तृतीया । १०–हेतुमण्ण्यन्तस्याऽभिपूर्वक'वद' धातोर्ण्यन्तस्य 'दृश्' धातोश्च—आत्मनेपदिनोऽणौ कर्ता णौ कर्म वा स्यादित्यर्थः । ११–अधिकरणसञ्ज्ञापवादोऽयम् ।

**१३२० अभिनिविशश्च १ । ४ । ४७ ॥**

*अभिनीत्येतत्संघातपूर्वस्य विशतेराधारः कर्म स्यात् । अभिनिविशते सन्मार्गम् । क्वचिन्न । पापेऽभिनिवेशः ।*

**१३२१ उपान्वध्याङ्वसः १ । ४ । ४८ ॥**

उपादिपूर्वस्य वसतेराधारः कर्म स्यात् । उपवसति अनुवसति अधिवसति आवसति वा वैकुण्ठं हरिः । अभुक्त्यर्थस्य तु न । वने उपवसति ।

'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।
द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते' ॥

---

१-"परिक्रयणे सम्प्रदान" मिति सूत्राद् मण्डूकप्लुत्याऽन्यतरस्यां ग्रहणमनुवर्त्य व्यवस्थितविभाषाश्रयणादाह—**क्वचिन्नेति** । समर्थसूत्रे-'एष्वर्थेष्वभिनिविष्टानाम्' इति भाष्यप्रयोगोऽत्र मानम् । वस्तुतस्तु क्वचिन्नेति चिन्त्यम्, अभिनिविशश्चेति सूत्रे अभि-नि-विश-इत्येतेषामविकृतरूपग्रहणेन प्रकृते='पापेऽभिनिवेशः' इत्यत्र प्रकृतसूत्रस्य प्राप्तिरेव नास्ति, अकारस्य पूर्वरूपेण विकृतत्वात् । नच 'अर्थेष्वभिनिविष्टानाम्' इति भाष्यप्रयोगः कथं सङ्गच्छेतेति वाच्यम्, अत्रापि 'विश' इत्यस्य 'व्रश्चे'ति षत्वेन विकृतत्वान्नास्ति तावत्काचिद्विप्रतिपत्तिरिति । २-उप-अनु-अधि-आङ् इत्येतेषां द्वन्द्वः, 'उपान्वध्याङ्पूर्वो वस् इति विग्रहे शाकपार्थिवत्वात्समासः । ३-उपेत्युपसर्गपूर्वस्य वसतेर्भोजनाभावोऽर्थस्तत्र तु भवति कर्मत्वमिति भावः । 'वसेरश्यर्थस्य प्रतिषेध'इति वार्तिकमत्र मूलम् । ४-अथोपपदविभक्तिं द्वितीयां श्लोकवार्तिकेन सङ्गृह्णाति, **उभसर्वतसो**रिति, अस्यायमर्थः —उभशब्दस्य तसन्तस्य प्रयोगे सर्वशब्दस्य च तसन्तस्य प्रयोगे द्वितीया कार्या यथा 'उभयतः कृष्णं गोपाः' 'सर्वतः कृष्णं गोपाः'। धिक्शब्दप्रयोग द्वितीया कार्या, यथा 'धिक् कृष्णाऽभक्तम् । तथाऽऽम्रेडितान्तेषु उपर्यादिषु त्रिषु द्वितीया कार्या, द्विरुक्तस्य पर रूपमाम्रेडितं तदन्तेषु कृतद्विर्वचनेष्विति यावत् ( उपर्यादिषु त्रिष्वित्यत्र 'उपर्यध्यधः सामीप्ये' इतिसूत्रोपात्तानि-उपरि-अधि-अधः-इति त्रीण्यव्ययानि गृह्यन्ते) उदाहरणत्रयं मूले स्पष्टम् । **ततोऽन्यत्रापि दृश्यते** उक्त प्रदेशेभ्योऽन्यत्रापि द्वितीया दृश्यत इत्यर्थः तदुदाहरणञ्च **'ऋते कृष्णम्'** इति ।

उभयतः कृष्णं गोपाः । सर्वतः कृष्णम् । धिक् कृष्णाऽभक्तम् । उपर्युपरि लोकं हरिः । अध्यधि लोकम् । अधोऽधो लोकम् । ऋते[1] कृष्णम् । ( अभितः–परितः–समया[2]–निकषा–हा–प्रति–योगेऽपि ) अभितः कृष्णम् । परितः कृष्णम् । ग्रामं समया । निकषा लङ्काम् । हा कृष्णाऽभक्तम् । बुभुक्षितं न प्रतिभाति किञ्चित् ।

**१३२२ अन्तरान्तरेण युक्ते २ । ३ । ४ ॥**

द्वितीया । अन्तरा त्वां मां वा हरिः । अन्तरेण हरिं न सुखम् ।

**१३२३ कर्मप्रवचनीयाः[3] १ । ४ । ८३ ॥**

इत्यधिकृत्य ।

**१३२४ अनुर्लक्षणे[4] १ । ४ । ८४ ॥**

लक्षणे द्योत्ये अनुः कर्मप्रवचनीयसंज्ञः स्यात् । गत्युपसर्गसंज्ञापवादः ।

**१३२५ कर्मप्रवचनीययुक्ते द्वितीया २ । ३ । ८ ॥**

जपमनु[5] प्रावर्षत् । हेतुभूतजपोपलक्षितं वर्षणमित्यर्थः ।

**१३२६ तृतीयार्थे[6] १ । ४ । ८५ ॥**

अनुरुक्तसंज्ञः । नदीमन्ववसिता सेना । नद्या सह सम्बद्धेत्यर्थः ।

**१३२७ हीने[7] १ । ४ । ८६ ॥**

अनुरुक्तसंज्ञः । अनु हरिं सुराः । हरेर्हीना इत्यर्थः ।

**१३२८ उपोऽधिके च १ । ४ । ८७ ॥**

१–यद्यपि–ऋते योगे 'अन्यारादितरर्ते' इति पञ्चमी प्राप्ता, तथापि ततोऽन्यत्रापीति वार्तिकोक्तेः भवति क्वचिद् द्वितीयापि । एतेन–'फलति पुरुषाराधनमृते' इति महिम्नः स्तोत्रपाठोऽपि व्याख्यातः । २–समया=समीपे । निकषेत्यस्याप्ययमेवार्थः । हा कृष्णाभक्तमित्यत्र तस्य शोच्यत इत्यर्थः । बुभुक्षितं न प्रतिभातीत्यस्य क्षुधार्त्तं न किञ्चिदपि परिस्फुरतीत्यर्थः । ३–अन्वर्थेयं सञ्ज्ञा कर्म=क्रियां प्रोक्तवन्त इति कर्मप्रवचनीयाः । अधिकारसूत्रमिदम् । ४–तेन क्रियायोग एव कर्मप्रवचनीय सञ्ज्ञेति संसूच्यते । ५–हेतुभूतजपोपलक्षितं वर्षणमित्यर्थः । कदा पर्जन्योऽवर्षदिति प्रश्ने—उत्तरमिदम् । जपो लक्षणं वर्षणं लक्ष्यम् । ६–तृतीयार्थे=साहित्ये–इत्यर्थः । ७–हीनेऽर्थे द्योत्ये 'अनुः' कर्मप्रवचनीय–सञ्ज्ञ इत्यर्थः ।

अधिके हीने च उपेत्यव्ययं प्राग्वत् । अधिके सप्तमी वक्ष्यते । हीने-उप हरिं सुराः ।

**१३२९ लक्षणेत्थम्भूताख्यान-भाग-वीप्सासु प्रतिपर्यनवः १ । ४ । ९०॥**

उक्तसंज्ञाः स्युः । लक्षणे—वृक्षं प्रति पर्यनु वा विद्योतते विद्युत् । इत्थम्भूताख्याने-भक्तो विष्णुं प्रति पर्यनु वा । भागे-लक्ष्मीर्हरिं प्रति पर्यनु वा । हरेर्भाग इत्यर्थः । वीप्सायाम्-वृक्षं वृक्षं प्रति पर्यनु वा सिञ्चति । एषु किम् । परिषिञ्चति ।

**१३३० अभिरभागे १ । ४ । ९१ ॥**

भागवर्जे लक्षणादावभिरुक्तसंज्ञः स्यात् । हरिमभिवर्तते । भक्तो हरिमभि । देवं देवमभि सिञ्चति । अभागे किम् । यदत्र ममाभिष्यात्तद्दीयताम् ।

**१३३१ सुः पूजायाम् १ । ४ । ९४ ॥**

सुसिक्तम् । सुस्तुतम् । अनुपसर्गत्वान्न षः । पूजायाम् किम् ।

१–कर्मप्रवचनीयसञ्ज्ञमित्यर्थः । २–उत्कृष्टादेव द्वितीया शब्दशक्तिस्वभावात् । ३–लक्षणम्=ज्ञापकम्, अयंप्रकारः=इत्थम्, तम्प्राप्त इत्थम्भूतः तस्याऽऽख्यानमित्थम्भूताख्यानम् । भागः=स्वीकार्योऽशः प्रकृते च तत्स्वामी विवक्षितः । वीप्सा=व्याप्तुं कार्त्स्न्येन सम्बद्धुमिच्छा, द्वन्द्वाद् विषयसप्तमी, एष्वर्थेषु विषयभूतेषु प्रतिपर्यनवः कर्मप्रवचनीयसञ्ज्ञका इत्यर्थः । ४–'नित्यवीप्सयोः' इति द्विर्वचनम्, द्विर्वचनेनैव च वीप्सा द्योत्यते । ५–लक्षणाद्यभावात्कर्मप्रवचनीयत्वाभावे उपसर्गात्सुनोतीति षत्वम् । ६–कर्मप्रवचनीयसञ्ज्ञ इत्यर्थः । ७–जयः क ? इति प्रश्ने-उत्तरमिदम् । हरिलक्ष्यो जय इत्यर्थः । लक्षणेऽभेः कर्मप्रवचनीयता । ८–इत्थम्भूताख्याने–उदाहरणमिदम् । हरिविषयकभक्तिमानित्यर्थः । ९–अत्र वीप्सायामभेः कर्मप्रवचनीयत्वेन द्वितीया । १०–अत्राऽभिर्भागद्योतकः । मम भागः स्यादित्यर्थः । अभागे-इति कर्मप्रवचनीयनिषेधादुपसर्गप्रादुर्भ्यामिति षत्वम् । ११–पूजार्थकः सुः कर्मप्रवचनीयसंज्ञ इत्यर्थः । १२–कर्मप्रवचनीयसञ्ज्ञयोपसर्गसञ्ज्ञाबाधात् "उपसर्गात्सुनोती"ति षत्वन्न । सुसिक्तं, सुस्तुतम् ।

सुषिक्तं किं तवात्र । क्षेपोऽयम् ।

**१३३२ अतिरतिक्रमणे च १ । ४ । ९५ ॥**

चात्पूजायामतिरुक्तसंज्ञः । अति देवान्कृष्णः[2] ।

**१३३३ कालाध्वनोरत्यन्तसंयोगे[3] २ । ३ । ५ ॥**

इह द्वितीया स्यात् । मासं[4] कल्याणी । मासमधीते । मासं गुडधानाः । क्रोशं[5] कुटिला नदी । क्रोशमधीते । क्रोशं गिरिः । अत्यन्तसंयोगे किम् । मासस्य द्विरधीते[6] । क्रोशस्यैकदेशे पर्वतः । स्वतन्त्रः कर्तेति कर्तृसंज्ञा ।

**१३३४ साधकतमं करणम् १ । ४ । ४२ ॥**

क्रियासिद्धौ प्रकृष्टोपकारकं[7] करणसंज्ञं स्यात् ।

**१३३५ कर्तृ-करणयोस्तृतीया २ । ३ । १८ ॥**

अनभिहिते[8] कर्तरि करणे च तृतीया स्यात् । रामेण[9] बाणेन हतो वाली । ( प्रकृत्यादिभ्य[10] उपसंख्यानम् ) । प्रकृत्या[11] चारुः । प्रायेण[12] याज्ञिकः । गोत्रेण[13] गार्ग्यः । समेनैति[14] । विषमेणैति । द्विद्रोणेन[15] धान्यं क्रीणाति । पञ्चकेन

१—अत्र निन्दा गम्यते नतु पूजा, तेन कर्मप्रवचनीयत्वाभावे उपसर्गत्वात् 'उपसर्गात्सुनोती'ति षत्वम् । २—संसार-संरक्षणविषये देवानतिक्रम्य वर्तते कृष्ण इत्यर्थः । देवानामपि पूज्य इति वार्थः । ३—निरन्तर-संयोगः=अत्यन्तसंयोगः । गुणक्रियाद्रव्यैः कालाध्वनोरविच्छिन्नसंयोगे गम्ये द्वितीया स्यादित्यर्थः । ४—मासेऽविच्छिन्नमङ्गलवतीत्यर्थः । एवं मासमधीत इत्यादि । ५—अध्वसंयोगोदाहरणमिदम् । एवं क्रोशमधीते—इत्यादि । ६—त्रिंशद्दिनात्मके मासे द्वयोर्दिनयोः प्रतिदिनमेकवारमेवाधीते—इत्यर्थः । ७—यद् व्यापारानन्तरं क्रियानिष्पत्तिस्तत्प्रकृष्टोपकारकम् । ८—अनभिहिते—इत्यधिकारः । अनुक्ते—इत्यर्थः । ९—हत इति हन् धातोः कर्मणि क्तः, तेन कर्त्ता ( रामः ) करणं ( बाणः ); अनभिहितमित्युभयत्रापि तृतीया कर्मणो बालीत्यस्योक्तत्वात् प्रातिपदिकार्थे प्रथमा नतु द्वितीया । १०—प्रकृत्यादिगणपठितेभ्यस्तृतीया वक्तव्येत्यर्थः । ११—स्वभावसम्बन्धिचारुत्ववानित्यर्थः । १२—बहुलाचारसम्बन्धियाज्ञिकत्ववानित्यर्थः । १३—गोत्रमस्य गार्ग्य इत्यर्थः । १४—समं विषमञ्च गमनं करोतीत्यर्थः । १५—द्वयोर्द्रोणयोः समाहारो द्विद्रोणम्,—द्विद्रोणसम्बन्धि धान्यमित्यर्थः ।

पशून्गृह्णाति । सुखेन[1] दुःखेन वा यातीत्यादि ।

**१३३६ दिवः कर्म च १ । ४ । ४३ ॥**

दिवः साधकतमं कर्मसंज्ञं स्याच्चात्करणसंज्ञं च । अक्षैरक्षान्वा दीव्यति ।

**१३३७ सहयुक्तेऽप्रधाने २ । ३ । १९ ॥**

सहार्थेन युक्तेऽप्रधाने तृतीया । पुत्रेण[3] सहागतः पिता । एवं साकं-सार्धं-समंयोगेऽपि । विनापि[4] तद्योगं तृतीया । वृद्धो यूनेति निर्देशात् ।

**१३३८ येनाङ्गविकारः २ । ३ । २० ॥**

येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीया । अक्ष्णा काणः । अक्षिसंबन्धिकाणत्वविशिष्ट इत्यर्थः ।

**१३३९ अपवर्गे तृतीया २ । ३ । ६ ॥**

अपवर्गः फलप्राप्तिः तस्यां द्योत्यायां कालाध्वनोरत्यन्तसंयोगे तृतीया स्यात् । अह्ना क्रोशेन वानुवाकोऽधीतः । अपवर्गे किम् । मासमधीतो नायातः ।

**१३४० हेतौ २ । ३ । २३ ॥**

तृतीया । दण्डेन घटः ।

१-सुखजनकं दुःखजनकं वा यानं करोतीत्यर्थः । २-दिवुधात्वर्थं प्रति साधकतममित्यर्थः । ३-पितुरागमनसम्बन्धः शाब्द इति तस्य प्राधान्यम्, पुत्रस्य तु—आर्थिक इति तस्याप्राधान्यमिति ततस्तृतीया । ४-ननु पुत्रेणा-गतः पितेत्यत्र सहादिशब्दाभावात्कथं तृतीया-इत्यत आह—**विनापि तद्योग**मिति । 'वृद्धो यूना' इति सूत्रे सहशब्दाऽयोगेऽपि तृतीयानिर्देशात् । ५-अङ्गान्यस्य सन्तीत्यङ्गम्=शरीरम्, "अर्श आद्यच्" अङ्गस्य विकार इति विग्रहः । येनेत्यनेनाङ्गं परामृश्यते । अर्थो वृत्तौ स्पष्टः । ६-काणशब्दः काणत्ववति वर्तते । सम्बन्धस्तृतीयार्थः, स च काणत्वेऽन्वेति, तदाह— **अक्षिसम्बन्धी**ति । ७-अहनि क्रोशे वा निरन्तरमध्ययनेनानुवाको गृहीत इत्यर्थः । ८-नायातो=न गृहीतः । निरन्तराध्ययनेऽपि फलप्राप्तिर्ना भूदिति न तृतीया किन्तु 'कालाध्वनो'रिति द्वितीयैव । ९-हेतौ=कारणे तृतीया स्यादित्यर्थः । १०-अत्र दण्डो घटम्प्रति हेतुः=कारणम् ।

**१३४१ इत्थंभूतलक्षणे २ । ३ । २१ ॥**

तृतीया । जटाभिस्तापसः । जटाज्ञाप्यतापसत्वविशिष्ट इत्यर्थः ।

**१३४२ संज्ञोऽन्यतरस्यां कर्मणि २ । ३ । २२ ॥**

संपूर्वस्य जानातेः कर्मणि तृतीया वा । पित्रा पितरं वा संजानीते ।

**१३४३ कर्मणा यमभिप्रैति स संप्रदानम् १ । ४ । ३२ ॥**

दानस्य कर्मणा यमभिप्रैति स संप्रदानसंज्ञः ।

**१३४४ चतुर्थी संप्रदाने २ । ३ । १३ ॥**

अनुक्ते । विप्राय गां ददाति ( क्रियया यमभिप्रैति सोऽपि संप्रदानम् ) पत्ये शेते ।

**१३४५ परिक्रयणे संप्रदानमन्यतरस्याम् १ । ४ । ४४ ॥**

नियतकालं भृत्यास्वीकरणं=परिक्रयणं तस्मिन्साधकतमं कारकं संप्र-

---

१–अयम्प्रकारः=इत्थं तं प्राप्त इत्थम्भूतस्तस्य लक्षणे=ज्ञापके, प्रकारविशेषं प्राप्तस्य ज्ञापके तृतीया स्यादित्यर्थः । २–ज्ञा–अवबोधने, इत्ययमेव गृह्यते नतु—'जनी'–प्रादुर्भाव, इति तस्याऽकर्मकत्वात् । द्वितीयापवादोऽयं तृतीयाविकल्पः । ३–अन्वर्थेयं सञ्ज्ञा । सम्यक् प्रदीयतेऽस्मै तत्सम्प्रदानमिति । अत एवाह–दानस्येति–अर्थात् दानक्रियाकर्मणा कर्ता यमभिप्रैति =सम्बध्नाति सम्बद्धुमीप्सति वा तत्कारकं सम्प्रदानमिति । तेन हस्तं निदधाति वृक्षे, इत्यादौ नातिप्रसङ्गः । दानञ्चाऽपुनर्ग्रहणाय स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वोत्पादनम् । अत एव रजकस्य वस्त्रं ददातीत्यत्र सम्प्रदानत्वन्न भवति । अत्र हि—अधीनीकरणेऽर्थे ददातिप्रयोगो भाक्त इति वृत्तिकाराः । भाष्यकारास्तु–अन्वर्थतायामाग्रहं निराकुर्वन् खण्डिकोपाध्यायः शिष्याय चपेटां ददातीति प्रयुञ्जते । तेन दानातिरिक्त–क्रियाकर्मणापि सम्बद्धुमिष्टस्य सम्प्रदानत्वम्भवत्येव । रजकस्य वस्त्रं ददातीति प्रयोगस्तु सम्प्रदानस्य शेषत्वविवक्षायां भविष्यति । ४–अनभिहिते सम्प्रदाने चतुर्थी स्यादित्यर्थः । ५–क्रियायाः कृत्रिमकर्मत्वाभावात् ( कर्मसञ्ज्ञाभावात् ) तयाऽभिप्रेयमाणस्य सूत्रेण सञ्ज्ञा न प्राप्नोति—इति वार्तिकमिदमारभ्यते । ६–शयनक्रियया पतिं सम्बद्धुमीप्सतीत्यर्थः । कर्मान्तरव्यापृतः पतिर्मदीयं शयनं दृष्ट्वा सोऽपि शयीतेत्यभिप्रायेण शयनं करोतीति भावः ।

दानं वा स्यात् । शतेन शताय वा परिक्रीतः । ( तादर्थ्ये चतुर्थी वाच्या ) मुक्तये हरिं भजति । ( उत्पातेन ज्ञापिते च ) । वाताय कपिला विद्युत् ।

**१३४६ नमः-स्वस्ति-स्वाहा-स्वधाऽलं-वषड्योगाच्च २ । ३ । १६ ॥**

एभिर्योगे चतुर्थी स्यात् । हरये नमः । प्रजाभ्यः स्वस्ति । अग्नये स्वाहा । पितृभ्यः स्वधा । ( अलमिति पर्याप्त्यर्थग्रहणम् ) तेन दैत्येभ्यो हरिरलं प्रभु समर्थः शक्त इत्यादि ।

**१३४७ ध्रुवमपायेऽपादानम् १ । ४ । २४ ॥**

अपायो विश्लेषस्तस्मिन् साध्ये ध्रुवमवधिभूतमपादानम् ।

**१३४८ अपादाने पञ्चमी २ । ३ । २८ ॥**

ग्रामादायति । धावतोऽश्वात्पतति इत्यादि ।

**१३४९ जनिकर्तुः प्रकृतिः १ । ४ । ३० ॥**

जायमानस्य हेतुरपादानं स्यात् । ब्रह्मणः प्रजाः प्रजायन्ते । (ल्यब्लोपे

---

१-सुवर्णादि यत्किञ्चिद् द्रव्यशतेनेत्यर्थः । २-'चतुर्थी सम्प्रदाने' इति सूत्रे वार्तिकमिदम् । तस्मा इदं तदर्थं तस्य भावः तादर्थ्यम्, तेनोपकार्य्योपकारकभावसम्बन्धो विवक्षितः । तत्र-उपकार्य्यादेव चतुर्थी । ३-मुक्त्यर्थमित्यर्थः । एवं यूपाय दारु, कुण्डलाय हिरण्यम् इति । ४-अशुभसूचक आकस्मिको भूतविकार उत्पातः । तेन सूचितेऽर्थे विद्यमानाच्चतुर्थीत्यर्थः । ५-महावातस्य सूचिकेत्यर्थः । अत्रायं समग्रः श्लोकः—

वाताय कपिला विद्युदातपायाऽतिलोहिनी ।
पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत् ॥

६-अलमित्यनेन पर्याप्त्यर्थकशब्दानां ग्रहणमित्यर्थः । ७-प्रकृतधात्वर्थानाश्रयत्वे सति तज्जन्यविभागाश्रयत्वं ध्रुवत्वम् । ८-अपायशब्दस्यार्थो विश्लेषः=वियोगः । ध्रुवशब्दस्याऽर्थमाह—**अवधिभूत**मिति । ध्रुवशब्दस्य स्थिरार्थत्वे तु 'धावतोऽश्वात्पततीत्यत्रापादानत्वं न स्यादश्वस्य स्थिरत्वाभावात् । ९-प्रकृतिरित्यस्य हेतुरर्थः । तदाह वृत्तौ **जायमानस्ये**ति । १०-हिरण्यगर्भादित्यर्थः । ११-ल्यबन्तस्य लोपे=अदर्शनेऽप्रयोगे वा सति गम्यमानतदर्थम्प्रति कर्मणि-अधिकरणे च पञ्चमी वाच्येत्यर्थः ।

कर्मण्यधिकरणे च)। प्रासादात्प्रेक्षते। आसनात्प्रेक्षते। प्रासादमारुह्य, आसने उपविश्य प्रेक्षत इत्यर्थः।

**१३५० विभाषा गुणेऽस्त्रियाम् २।३।२५॥**

गुणे हेतावस्त्रीलिङ्गे पञ्चमी वा स्यात्। जाड्याज्जाड्येन वा बद्धः। गुणे किम्। धनेन[1] कुलम्। अस्त्रियां किम्। बुद्ध्या मुक्तः। विभाषेति[2] योगविभागादगुणे[3] स्त्रियां[4] च क्वचित्। धूमादग्निमान्। नास्ति घटोऽनुपलब्धेः।

**१३५१ पृथग्विना-नानाभिस्तृतीयान्यतरस्याम् २।३।३२॥**

एभिर्योगे तृतीया स्यात् पञ्चमीद्वितीये च। पृथग्ग्रामेण ग्रामाद् ग्रामं वा। एवं विना[5] नाना।

**१३५२ अन्यारादितरर्ते-दिक्शब्दाञ्चूत्तरपदाजाहियुक्ते[6] २।३।२९॥**

अन्य इत्यर्थग्रहणम्। इतरग्रहणं प्रपञ्चार्थम्[7]। अन्यो भिन्न इतरो वा कृष्णात्। आरात्[8] वनात्। ऋते कृष्णात्[9]। पूर्वो ग्रामात्। दिशि दृष्टः शब्दो दिक्शब्दः, तेन सम्प्रति देशकालवृत्तिना योगेऽपि भवति[10]। चैत्रा-

---

१—धनं न गुणः किन्तु द्रव्यम्। तेन हेतौ तृतीयैव। २—ननु धूमादग्निमान् इत्यादौ कथं पञ्चमी धूमादेरगुणत्वादित्यत आह—**विभाषेति-योगविभागात्**, हेतौ वा पञ्चमी स्यादिति योगविभागार्थः। ३—अगुणेऽपि योगविभागात्पञ्चमी। ४—स्त्रियामपि योगविभागात्पञ्चमी। ५—विना रामेण रामाद् रामं वा, एवं नाना रामेण रामाद् रामं वा रामस्य वर्जने सुखं नास्तीत्यर्थः। नानाशब्दस्य वर्जनमर्थः, "पृथग् विनान्तरेणर्ते हिरुङ् नाना च वर्जने" इत्यमरात्। ६—अन्य-आरात्-इतर-ऋते-दिक्-शब्द-अञ्चूत्तरपद-आच्-आहि-एतैरष्टभिर्योगे पञ्चमी स्यादित्यर्थः। ७—अन्यशब्दस्याऽन्यार्थकशब्दग्रहणोपलक्षणार्थत्वकथनस्य प्रयोजनकथनार्थमिति यावत्। ८—वनस्य दूरं समीपं वेत्यर्थः। ९—कृष्णस्य वर्जने सुखं नास्तीत्यर्थः। क्वचिद् ऋतेशब्दयोगे 'फलति पुरुषाराधनमृते' इत्यादौ द्वितीयोपपत्तौ-आर्षत्वं शरणम्। ततोऽन्यत्रापि दृश्यत इति वा द्वितीया। चान्द्रास्तु "ऋते द्वितीया चेति" द्वितीयामपि साक्षादेव विदधति। १०—कदाचिद् दिग्वाचकानामिदानीं दिग्वाचकत्वाभावेऽपि भवति पञ्चमीत्यर्थः।

त्पूर्वः फाल्गुनः । प्राक् प्रत्यग्वा ग्रामात् । आच्[1], दक्षिणा ग्रामात् । आहि[2], दक्षिणाहि ग्रामात् ।

**१३५३ अप-परी वर्जने १ । ४ । ८८ ॥**

एतौ वर्जनार्थे कर्मप्रवचनीयसंज्ञौ स्तः ।

**१३५४ आङ् मर्यादावचने १ । ४ । ८९ ॥**

आङ् मर्यादायामुक्तसंज्ञः[3] । वचनग्रहणादभिविधावपि ।

**१३५५ पञ्चम्यपाङ्परिभिः २ । ३ । १० ॥**

एतैः कर्मप्रवचनीयैर्योगे पञ्चमी । अप हरेः, परि हरेः संसारः । परिरत्र वर्जने=साहचर्यात् । लक्षणादौ तु[4] हरिं परि । आमुक्तेः[5] संसारः । आसकलाद्ब्रह्म[6] ।

**१३५६ प्रतिः प्रतिनिधि-प्रतिदानयोः १ । ४ । ९२ ॥**

एतयोरर्थयोः प्रतिरुक्तसंज्ञः[7] स्यात् ।

**१३५७ प्रतिनिधि-प्रतिदाने[8] च यस्मात् २ । ३ । ११ ॥**

अत्र कर्मप्रवचनीययोगे पञ्चमी । प्रद्युम्नः कृष्णात्[9] प्रति । तिलेभ्यः[10] प्रतियच्छति माषान् ।

**१३५८ षष्ठी शेषे[11] २ । ३ । ५० ॥**

कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिः[12] शेषस्तत्र षष्ठी ।

---

१–आच् प्रत्ययः, तदन्तयोगे पञ्चमी–उदाह्रियते । २–आहि–इत्यपि प्रत्ययस्तदन्तयोगे पञ्चमी । एतयोर्योगे दिक्शब्दत्वादेव पञ्चमी-सिद्धौ चिन्त्यप्रयोजनम्–'आच्–आहि'–ग्रहणमिति तत्वबोधिनी । ३–कर्मप्रवचनीयसञ्ज्ञेत्यर्थः । ४–लक्षणेत्थम्भूतेत्यादिसूत्रप्रतिपादितेऽर्थे तु द्वितीयैव । ५–मुक्तेः प्रागित्यर्थः । मुक्तिपर्यन्तमिति भावः । ६–सकल-मभिव्याप्य ब्रह्म वर्त्तते–इत्यर्थः । ७–कर्मप्रवचनीयसञ्ज्ञक इत्यर्थः । ८–मुख्यस्याभावे तत्सदृशो य उपादीयते स प्रतिनिधिः, दत्तस्य प्रति निर्यातनं प्रतिदानम् । एतदर्थविषये–इत्यर्थः । ९–कृष्णप्रतिनिधिः प्रद्युम्न इत्यर्थः । १०–तिलग्रहणपूर्वकं तत्समानमूल्यकमाषप्रत्यर्पणमिति बोधः । ११–उक्ता-दन्यः शेषः कारकप्रातिपदिकार्थावुक्तौ तद्व्यतिरिक्तः स्वस्वामिभावादिसम्ब-न्धस्तत्र षष्ठी स्यात् । १२–आदिशब्देन जन्यजनकभावोऽवयवावयविभावः पाठ्यपाठकभावादिसम्बन्धश्च गृह्यते ।

राज्ञः पुरुषः । कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव । सतां गतम्[3] । सर्पिषो जानीते[4] । मातुः[5] स्मरति । एधोदकस्योपस्कुरुते[6] । भजे शम्भोश्चरणयोः[7] । फलानां तृप्तः[8] ।

**१३५९ कर्तृकर्मणोः कृति २ । ३ । ६५ ॥**

कृद्योगे[9] कर्तरि कर्मणि च षष्ठी । कृष्णस्य कृतिः[10] । जगतः[11] कर्ता कृष्णः । ( गुणकर्मणि वेष्यते[12] ) । नेताश्वस्य[13] स्रुघ्नं स्रुघ्नस्य वा । कृति[14]

१–प्रत्ययार्थस्य प्रकृत्यर्थम्प्रति प्राधान्यादप्रधानादेव षष्ठी । प्रत्ययार्थस्त्विह पुरुषविशेषणमेतदभिप्रेत्येदमुच्यते–"द्विष्ठो यद्यपि सम्बन्धः षष्ठ्युत्पत्तिस्तु भेदकात्" । २–सतां गतमित्यादौ कर्तृतृतीयादिकमाशङ्क्याऽऽह–**कर्मादीनामपि** । कर्मत्वकर्तृत्वादीनामपि सम्बन्धत्वसामान्यात्मना विवक्षायां षष्ठ्येव नतु कारकविभक्तय इत्यर्थः । ३–सत्सम्बधिगमनमित्यर्थः । कर्तृत्वाविवक्षायामिह षष्ठी । ४–सर्पिषोपायेन प्रवर्तते–इत्यर्थः । करणत्वस्य सम्बन्धत्वविवक्षायां षष्ठी । ५–मातृसम्बन्धिस्मरणमित्यर्थः । कर्मत्वस्य शेषत्वविवक्षायां षष्ठी । ६–एधाश्च दकानि चेति द्वन्द्वात् षष्ठी कर्मत्वस्य शेषत्वविवक्षायाम्, एधोदकसम्बन्ध्युपस्करणमिति बोधः । ७–शम्भुचरणसम्बन्धिभजनमित्यर्थः । 'चरणयोः' कर्मत्वस्य शेषत्वविवक्षायां षष्ठी । ८–फलसम्बन्धिनी तृप्तिरिति बोधः, करणत्वस्य शेषत्वविवक्षायां षष्ठी । ९–कृद्योगे=कृदन्तशब्दप्रयोगेऽनभिहिते कर्तरि कर्मणि च षष्ठी स्यादित्यर्थः । १०–करणम्=कृतिः, स्त्रियां क्तिन् भावे, कृष्णः कर्ताऽनुक्तः तस्मिन् षष्ठी । ११–कर्मण्युदाहरणमिदम् । कर्तरि तृच् । अनुक्ते कर्मणि षष्ठी । कर्तुस्तृचाऽभिहितत्वात्ततो न षष्ठी । १२–कृदन्तद्विकर्मकधातुयोगे गुणकर्मणि=अप्रधानकर्मणि षष्ठीविकल्प इष्यत इत्यर्थः । प्रधानकर्मणि तु नित्यैव षष्ठी । १३–अत्राऽश्वः प्रधानं कर्म स्रुघ्नस्तु कर्मत्वाऽविवक्षायाम् "अकथितञ्चे"ति गौणं कर्म तत्र वा षष्ठी । पक्षे कर्मणि द्वितीया । १४–नन्विह कर्तृकर्मभ्यां क्रियाऽऽक्षिप्यते तद्वाची तु धातुरेव धातोश्च द्विविधाः प्रत्ययास्तिङः कृतश्च तत्र तिङ् योगे 'कटं करोती' त्यादौ 'न लोकाव्यये'ति षष्ठीनिषेधः स्यादेव, ततश्च परिशेषात् कृद्योग एव षष्ठी भविष्यति तत्किं कृद्ग्रहणेनेति पृच्छति—**कृति किमिति**

किम्—तद्धिते मा भूत्। कृतपूर्वी कटम्।

**१३६० उभयप्राप्तौ कर्मणि २ । ३ । ६६ ॥**

उभयोः प्राप्तिर्यस्मिन्कृति तत्र कर्मण्येव षष्ठी। आश्चर्यो गवां दोहोऽगोपेन।

**१३६१ कृत्यानां कर्तरि वा २ । ३ । ७१ ॥**

षष्ठी। मया मम वा सेव्यो हरिः।

**१३६२ क्तस्य च वर्तमाने २ । ३ । ६७ ॥**

वर्तमानार्थस्य क्तस्य योगे षष्ठी। न लोकेति वक्ष्यमाणनिषेधस्यापवादः। राज्ञां मतः बुद्धः पूजितो वा।

**१३६३ अधिकरणवाचिनश्च २ । ३ । ६८ ॥**

क्तस्य योगे षष्ठी। इदमेषां शयितम्।

---

तत्रोत्तरम्—**तद्धिते मा भूत्** कृतपूर्वी कटमिति। तद्धितान्तशक्तिग्रहमात्र-प्रयोज्योपस्थितिविषयक्रियायाः कर्त्तरि कर्मणि च माभूदित्यर्थः। कृतपूर्वी कटमित्यत्र कटः पूर्वं कृतोऽनेनेति लौकिकविग्रहः 'सुप्सुपे'ति समासः। 'स पूर्वाच्च' इतीनिप्रत्ययस्तद्धितस्तत्र करोतिक्रियापेक्षया कटस्य कर्मत्वादनेन षष्ठीप्राप्तौ-तद्धितयोगान्न भवति। इति कृद्ग्रहणस्य सप्रयोजनत्वं सुस्पष्टमेव।

१-भावे क्तप्रत्यये कर्त्तुः कर्मणश्चोभयोरप्यनुक्तत्वादुभयत्र षष्ठीप्राप्तौ नियमोऽयं कर्मण्येव नतु कर्त्तरि। २-दोह इत्यत्र भावे घञ् गवामिति कर्मणि षष्ठी 'अगोपेने'ति कर्त्तरि तृतीया। अगोपकर्त्तृको गोकर्मको यो दोहः सोऽद्भुत इत्यर्थः। ३-कृत्यानामपि कृत्सञ्ज्ञत्वात्कर्तृकर्मणोरिति नित्यप्राप्तौ विकल्पोऽयम्। कृत्यप्रत्ययान्तयोगे कर्त्तरि षष्ठी वा स्यादि-त्यर्थः। यथा-मया मम वा सेव्यो हरिः। सेव्य इत्यत्र "ऋहलोर्ण्यद्" इति कर्मणि ण्यत्प्रत्ययः, अस्मच्छब्दार्थस्य कर्त्तुरभिहितत्वाद्वा षष्ठी, पक्षे तृतीया। ४-"न लोकाव्ययनिष्ठाखलर्थतृना" मिति सूत्रे निष्ठा-सञ्ज्ञत्वेन क्तयोगे षष्ठी निषिध्यते वर्त्तमानार्थकक्तयोगे तन्निषेधापवादोऽ-यमित्यर्थः। राज्ञां मत इत्यादौ "मतिबुद्धिपूजार्थे"ति वर्त्तमाने क्तः। ५-अधिकरणवाचिनः क्तस्य योगे षष्ठी स्यादित्यर्थः। इदमपि 'न लोके'ति निषेधापवादः। ६-शेतेऽस्मिन्निति शयितम्। शीङ् धातोः "क्तोऽधिकरणे च"ति अधिकरणे क्तप्रत्ययः, एषामिति कर्त्तरि षष्ठी।

**१३६४ न लोकाव्ययनिष्ठा-खलर्थ-तृनाम् २ । ३ । ६९ ॥**

एषां योगे षष्ठी न। लादेशः–कुर्वन् कुर्वाणः सृष्टिं हरिः। उः–हरिं दिदृक्षुः, अलङ्करिष्णुर्वा। उकः–दैत्यान् घातुको हरिः। (कमेरनिषेधः)। लक्ष्म्याः कामुकः। अव्ययम्–जगत्सृष्ट्वा। निष्ठा–दैत्यान् हतवान् विष्णुः। विष्णुना हता दैत्याः। खलर्थः–ईषत्करः प्रपञ्चो हरिणा। तृन्निति[12] प्रत्याहारः। शतृशानचाविति तृशब्दादारभ्य तृनो नकारात्। शानन्[13]–सोमं पवमानः। चानश्–आत्मानं मण्डयमानः। शतृ–वेदमधीयन्

१–लश्च–उश्च–उकश्च–अव्ययञ्च निष्ठा च खलर्थश्च तृन् चेति तेषाम्। ल इति लडादीनां सामान्येन ग्रहणम्। तेषाञ्च साक्षात्प्रयोगाभावात्तदाऽऽदेशाः शत्रादयः कृत्प्रत्यया गृह्यन्ते। 'कर्तृकर्मणो' रिति प्राप्तायाः षष्ठ्या निषेधोऽयम्। २–"लटः शतृशानचौ"। इह कर्मणि षष्ठीनिषेधाद्द्वितीया। ३–दृशेः सन्नन्तात् "सनाशंसभिक्ष उ" रित्युप्रत्ययः षष्ठीनिषेधात् कर्मणि द्वितीया। ४–अत्र हरिमित्यनुषज्यते। 'अलं कृञ्" इत्यादिना–इष्णुच्प्रत्यय उकारान्तः। ५–"लष पते'ति हन्धातोरुकञ्प्रत्यये—उपधावृद्धौ 'हो हन्ते' रिति घत्वे'हनस्तोऽचिण्णलो' रिति तकारे घ तुक इति सिद्ध्यति। ६–उकान्त-कमेर्योगे षष्ठ्या निषेधो नास्तीत्यर्थः। ७–हरिरास्ते–इति शेषः। समानकर्तृकयोरिति क्त्वाप्रत्ययः। 'क्त्वातोऽसुन्कसुन' इत्यव्ययत्वम्। ८–"क्तक्तवतू निष्ठा" तावुदाह्रियेते इत्यर्थः। ९–भूते कर्त्तरि क्तवतुः। कर्मणि षष्ठीनिषेधाद् द्वितीया। १०–अत्र "भूते" इति कर्मणि क्तः। कर्त्तरि षष्ठीनिषेधात्तृतीया। ११–खलर्थोदाहरणमिदम्। "ईषद्दुस्सु" इति कर्मणि खल्। अर्थग्रहणेन "आतो युच्" इत्यादयोऽपि खलर्था गृह्यन्ते। तेन ईषत्पानः सोमो भवता। १२–तृन्निति न केवलः प्रत्ययो गृह्यते किन्तु तृशब्दादारभ्य तृनो नकारपर्यन्तं प्रत्याहारः। १३–तृन् प्रत्याहारे शानन्-चानश्-शतृ-तृनां ग्रहणम्। ते च क्रमेणोदाहियन्ते। पवमान इत्यत्र 'पूङ्यजोः शानन्'। मण्डयमान इत्यत्र 'ताच्छील्यवयोवचने' इति चानश्। अधीयन्निति 'इङ्धार्य्यो' रिति शतृप्रत्ययः। **कर्त्ता लोकान्निति।** "तृन्" इति सूत्रेण तृन् प्रत्ययः।

तृन्-कर्ता लोकान्। (द्विषः शतुर्वा) मुरस्य मुरं वा द्विषन् (सर्वोऽयं कारकषष्ठ्याः प्रतिषेधः) शेषे षष्ठी तु स्यादेव। ब्राह्मणस्य कुर्वन्। नरकस्य जिष्णुः।

१३६५ अकेनोर्भविष्यदाधमर्ण्ययोः २। ३। ७०॥

*भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थेनश्च योगे षष्ठी न।* सतः पालकोऽवतरति। व्रजं गामी। शतं दायी। (निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्)। किंनिमित्तं वसति। केन निमित्तेन। कस्मै निमित्तायत्यादि। एवं किं कारणं को हेतुः किं प्रयोजनमित्यादि। प्रायग्रहणादसर्वनाम्नः प्रथमाद्वितीये न स्तः। ज्ञानेन निमित्तेन हरिः सेव्यः। ज्ञानाय निमित्तायेत्यादि।

---

१-शत्रन्तद्विष्धातुयोगे षष्ठीनिषेधो वा वक्तव्य इत्यर्थः। द्विषन्निति 'द्विषोऽमित्रे' इति शतृप्रत्ययः। २-अनन्तरस्य विधिर्वा प्रतिषेधो वेति न्यायेन कारकषष्ठ्या एव प्रतिषेधो नतु शेषषष्ठ्याः। शाब्दबोधे प्रकारवैलक्षण्यमेव फलम्। ३-हरिरिति शेषः। लटः शत्रादेशः। मुखतो ब्राह्मणसम्बन्धिसृष्ट्यनुकूलव्यापारवानित्यर्थः। कर्मत्वाऽविवक्षायां शेषषष्ठी। कर्मत्वविवक्षायांतु द्वितीयैव स्यात्। ४-"ग्लाजिस्थश्च" इति जिधातोः ग्स्नुप्रत्ययः। नरकासुरसम्बन्धिजयवानित्यर्थः। अत्रापि पूर्ववदेव शेषषष्ठी। ५-अकश्च-इन् च तयोरकेनोः। भविष्यच्च-आधमर्ण्यञ्च तयोरिति द्वन्द्वः। यथासङ्ख्यं नेष्यते तथा व्याख्यानात्। आधमर्ण्यमकेन नान्वेत्यसम्भवात्। इनेस्तूभयोरन्वयः सम्भवात्। तदेवाह वृत्तौ-**भविष्यत्यकस्येति**। ६-सज्जनान् पालयिष्यन् हरिः प्रादुर्भवतीत्यर्थः। 'तुमुन्ण्वुलौ क्रियायां क्रियार्थाया' मिति भविष्यति ण्वुल्। 'वु' इत्यस्य अकः। ७-गोष्ठं गमिष्यन्नित्यर्थः। ८-ऋणत्वेन गृहीतं शतं प्रत्यर्पयतीत्यर्थः। गामीत्यत्र 'भविष्यति गम्यादयः' इत्युक्तेरिनिप्रत्ययो बाहुलकाद्, वृद्धिः। दायीत्यत्र 'आवश्यकाधमर्ण्ययो'रिति णिनिप्रत्ययः। ९-निमित्तपर्यायाणां प्रयोगे तेभ्यस्तत्समानाधिकरणेभ्यश्च सर्वासां विभक्तीनां प्रयोगो भवति प्रायेणेत्यर्थः। १०-प्रायग्रहणप्रयोजनमाह—**प्रायग्रहणादिति** असर्वनाम्नः=सर्वनामभिन्नात्।

**१३६६ षष्ठ्यतसर्थप्रत्ययेन २ । ३ । ३० ॥**

ग्रामस्य दक्षिणतः, पुरः, पुरस्तात्, उपरि उपरिष्टात्।

**१३६७ एनपा द्वितीया २ । ३ । ३१ ॥**

एनपेति योगविभागात्षष्ठ्यपि। दक्षिणेन ग्रामं ग्रामस्य वा । एवमुत्तरेण।

**१३६८ दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् २ । ३ । ३४ ॥**

एतैर्योगे षष्ठी पञ्चमी च । दूरं निकटं वा ग्रामस्य ग्रामाद्वा ।

**१३६९ दिवस्तदर्थस्य २ । ३ । ५८ ॥**

द्यूतार्थस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि षष्ठी । शतस्य दीव्यति । तदर्थस्य किम् । ब्राह्मणं दीव्यति । स्तौतीत्यर्थः ।

**१३७० विभाषोपसर्गे २ । ३ । ५९ ॥**

शतस्य शतं वा प्रतिदीव्यति ।

**१३७१ आधारोऽधिकरणम् १ । ४ । ४५ ॥**

---

१–'दक्षिणोत्तराभ्याम्' इति विहितो योऽतसुच् प्रत्ययस्तस्यार्थो दिग्देशकालरूपः, स एवार्थो यस्य सोऽतसर्थप्रत्ययस्तद्योगे षष्ठी स्यादित्यर्थः । २-दक्षिणोत्तराभ्यामित्यतसुच्प्रत्ययः । ३–पुर इत्यत्र पूर्वशब्दादस्तात्यर्थे 'पूर्वाधरावराणामसिपुरधवश्चैषाम्' इत्यसिप्रत्ययः पूर्वशब्दस्य पुरादेशश्च । पुरस्तादित्यत्र पूर्वशब्दादस्तातिप्रत्यये "अस्ताति चे"ति पूर्वशब्दस्य पुरादेशः । अर्थः समानः । ४–'उपर्युपरिष्टाद्' इति सूत्रेण—ऊर्ध्वशब्दाद् रिल्प्रत्यये रिष्टातिल्प्रत्यये च प्रकृतेरुपादेशो निपात्यते, **उपरि—उपरिष्टात्** । ५–एनप् प्रत्ययान्तेन योगे द्वितीया स्यादित्यर्थः । ६–षष्ठ्यतसर्थेति षष्ठ्या नित्यम्प्राप्तौ–आह–**योगविभागा**दिति । एनपेति पृथक् सूत्रम् । तत्र षष्ठीत्यनुवर्त्तते–एनप् प्रत्ययान्तेन योगे षष्ठी स्यादित्यर्थः । ततो 'द्वितीयेति' सूत्रम् । एनबन्तेन योगे द्वितीया च स्यादित्यर्थः । ७–'एनबन्यतरस्यामदूरे पञ्चम्याः' इति सूत्रेणैनप् । ८–षष्ठ्यभावेऽपादाने पञ्चमीत्यतोऽनुवृत्ता पञ्चमीति भावः । द्वितीया तृतीये च सन्निहिते अपि न समुच्चीयेते व्याख्यानात् । ९–तच्छब्देन पूर्वसूत्रनिर्दिष्टौ व्यवहृ-पणौ परामृश्येते । तयोर्व्यवहृपणोरर्थ एवार्थो यस्येति विग्रहः । तदेवाह वृत्तौ–**द्यूतार्थस्ये**ति। १०–उपसर्गे सति व्यवहृपणार्थस्य दिवः कर्मणि षष्ठी वा स्यादित्यर्थः ।

कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणसंज्ञं स्यात् ।

**१३७२ सप्तम्यधिकरणे च २ । ३ । ३६ ॥**

चाद्दूरान्तिकार्थेभ्यः । औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा । कटे आस्ते । स्थाल्यां पचति । मोक्षे इच्छास्ति । सर्वस्मिन् आत्मास्ति । वनस्य दूरेऽन्तिके वा । ( क्तस्येन्विषयस्य कर्मण्युपसंख्यानम् ) । अधीती व्याकरणे । ( साध्वसाधुप्रयोगे च ) साधुः कृष्णो मातरि । असाधुर्मातुले । ( निमित्तात्कर्मयोगे ) ।

'चर्मणि द्वीपिनं हन्ति, दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति, सीम्नि पुष्कलको हतः' ॥

१-तन्निष्ठक्रियायाः=कर्तृकर्मनिष्ठक्रियाया इत्यर्थः । २-उपश्लेषः=संयोगादिसम्बन्धः, तत्प्रयोज्य आधार **औपश्लेषिकः** । विषयतासम्बन्धकृत आधारो **वैषयिकः** । सकलावयवव्याप्तिकृत आधारो**ऽभिव्यापकः** । ३-कर्तृद्वारकमौपश्लेषिकाधारमुदाहरति **'कटे-आस्ते'** इति । कर्मद्वारकौपश्लेषिकाधारोदाहरणमिदम्, **स्थाल्यां पचतीति** । ४-वैषयिकाधारोदाहरणमिदम् । मोक्षस्य विषयतासम्बन्धेनाधारत्वम् । ५-अभिव्यापकाधारमुदाहरति—**सर्वस्मिन्निति** । ६-इन् प्रत्ययान्तो यः क्तप्रत्ययान्तस्तस्य कर्मणि सप्तमी वाच्येत्यर्थः । ७-क्तप्रत्ययान्तादिष्टादिभ्यश्चेति कर्त्तरीनिः । तत्र कर्मविशेषजिज्ञासायां व्याकरणमध्ययने कर्मत्वेनान्वेति । अधीतीत्यस्य-अधीतवानित्यर्थः पर्य्यवस्यति । कृतपूर्वी कटमितिवद् द्वितीयायां प्राप्तायामनेन सप्तमी । ८-साध्वसाधुशब्दयोगे सप्तमी वक्तव्येत्यर्थः । ९-साधुः=हितकारी । असाधुः=अहितकारी । उभयत्र शेषषष्ठ्यपवादोऽयम् । 'साधुनिपुणाभ्यामर्चाया' मित्येव सिद्धे-इह साधुग्रहणमनर्चार्थम् । १०-कर्मयोगे हेतुवाचकात्सप्तमी वाच्येत्यर्थः । निमित्तशब्देनेह फलं गृह्यते । इष्टसाधनताज्ञानप्रवर्त्तकतया फलस्यापि हेतुत्वात् । योगश्च संयोगः समवाय एव वा ग्राह्यः । ११-**चर्मणीति** चर्मरूपफलप्राप्त्यर्थं व्याघ्रं हन्तीत्यर्थः, चर्मद्वीपिनोः समवायः सम्बन्धः । दन्तयोः=दन्तार्थं कुञ्जरम्=हस्तिनं हन्तीति, अत्रापि समवाय एव दन्तयोरवयवत्वात् । चमरीम्=तदाख्यमृगविशेषं केशेषु=केशार्थं हन्ति, सीम्नि=अण्डकोशप्राप्त्यर्थं ( तत्र कस्तूरिकासत्त्वात् )

**१३७३ यस्य च भावेन भावलक्षणम् २। ३। ३७॥**

यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी। गोषु दुह्यमानासु गतः

**१३७४ षष्ठी चानादरे २। ३। ३८॥**

अनादराधिक्ये भावलक्षणे षष्ठीसप्तम्यौ स्तः। रुदति रुदतो वा प्राव्राजीत्। रुदन्तं पुत्रादिकमनादृत्य संन्यस्तवानित्यर्थः।

**१३७५ स्वामीश्वराधिपति-दायाद-साक्षि-प्रतिभू-प्रसूतैश्च २। ३। ३९॥**

एभिर्योगे षष्ठीसप्तम्यौ स्तः। गवां गोषु वा स्वामी।

**१३७६ आयुक्त-कुशलाभ्यां चासेवायाम् २। ३। ४०॥**

आभ्यां योगे षष्ठीसप्तम्यौ स्तः। आयुक्तो=व्यापारितः। आयुक्तः कुशलो वा हरिपूजने हरिपूजनस्य वा। आसेवायां किम्। आयुक्तो गौः शकटे। ईषद्युक्त इत्यर्थः

**१३७७ यतश्च निर्धारणम् २। ३। ४१॥**

जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं यतस्ततः षष्ठी-सप्तम्यौ स्तः। नृणां नृषु वा ब्राह्मणः श्रेष्ठः। गवां गोषु वा कृष्णा गौर्ब-

---

पुष्कलकः=गन्धमृगो हतः। यद्वा-सीम्नि=सीमावापयर्थं पुष्कलकः=ग्राम-मुख्यो हतः।

१-सूत्रे भावशब्दौ क्रियापर्यायौ तथैवाहवृत्तौ। २-देवदत्तः कदाऽऽ-गत इति प्रश्ने-उत्तरमिदम्। गवां दोहनक्रियया गमनक्रिया लक्ष्यते। इति गोशब्दात्सप्तमी तद्विशेषणत्वेन दुह्यमानशब्दादपि सप्तमी। ३-भावलक्षणे-इत्यस्य क्रियया क्रियान्तरलक्षणे इत्यर्थः। अनादरे गम्यमाने सति यस्य क्रियया क्रियान्तरं लक्ष्यते ततः षष्ठी सप्तमी चेत्यर्थः। ४-कदा संन्यस्तवा-निति प्रश्ने-उत्तरमिदम्। अनादरविशिष्टं-प्रव्रजनं धात्वर्थः। वाक्यार्थबोध-माह-**रुदन्तं पुत्रादिक**मिति। ५-आसेवायामित्यस्य तात्पर्य्यमर्थः औत्सु-क्यमिति भावः। 'तत्परे प्रसितसक्ताविष्टार्थोद्युक्त उत्सुकः' इत्यमरः। ६-आयुक्तः=व्यापारितः प्रवर्तित इत्यर्थः। ७-जात्या गुणेन क्रियया सञ्ज्ञया वा पृथक्करणे-इत्यर्थः। ८-जात्या पृथक्करणमुदाहरति। अत्र ब्राह्मणत्वेन जात्या पृथक्करणम्। ९-अत्र कृष्णवर्णेन गुणेन पृथक्करणम्।

कुशीरा । गच्छतां गच्छत्सु वा धावन् शीघ्रः । छात्राणां छात्रेषु वा मैत्रैः पटुः
**१३७८ पञ्चमी विभक्ते २ । ३ । ४२ ॥**
विभागो=विभक्तम् । निर्धार्यमाणस्य यत्र भेद एव तत्र पञ्चमी । माथुराः पाटलिपुत्रेभ्य आढ्यतराः ।
**१३७९ साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः २ । ३ । ४३ ॥**
मातरि साधुर्निपुणो वा । अर्चायां किम् । निपुणो राज्ञो भृत्यः । इह तत्त्वकथने तात्पर्यम् । ( अप्रत्यादिभिरिति वक्तव्यम् ) । साधुर्निपुणो वा मातरं प्रति पर्यनु वा ।
**१३८० अधिरीश्वरे १ । ४ । ९७ ॥**
स्वस्वामिसम्बन्धेऽधिः कर्मप्रवचनीयः ।
**१३८१ यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी २ । ३ । ९।**
अत्र कर्मप्रवचनीययुक्ते सप्तमी । उपपरार्धे हरेर्गुणाः परार्धादधिका इत्यर्थः । ऐश्वर्ये तु स्वस्वामिभ्यां पर्यायेण सप्तमी । अधिभुवि रामः । अधिरामे भूः । ॥ इति विभक्त्यर्थाः ( कारकाणि ) ॥

---

१–अत्र धावनक्रियया पृथक्करणम् । २–अत्र मैत्रसञ्ज्ञया पृथक्करणम् । ३–विभक्ते–इत्यत्र भावे क्तप्रत्ययः । यतश्च निर्धारणमित्यनुवर्तते । यत्र निर्धारणावधेर्निर्धार्यमाणस्य च भेद एव स्यात् नतु केनाप्युपात्तरूपेणाभेदस्तत्रैवास्य प्रवृत्तिरित्यर्थः । ४–शेषषष्ठ्यपवादोऽयम् । ५–प्रति–परि–अनु–एतैर्योगे सति साधुनिपुणाभ्यां योगेऽपि न सप्तमीति भावः । ६–कर्मप्रवचनीया इत्यधिकारः । ईश्वरशब्दः स्वामिवाचकः । ततोलभ्यते इदम् । ७–अधिकार्थे, ऐश्वर्यार्थे च कर्मप्रवचनीययोगे सप्तमी । ८–अन्यतरस्मा दुत्पन्नयैव सप्तम्या तदितरनिष्ठसम्बन्धस्याप्युक्तत्वाद् युगपदुभाभ्यां न सप्तमीति भावः ।

९–अत्रायं सप्त-विभक्ति-प्रयोग-सङ्ग्रहश्लोकः—

कृष्णो रक्षतु नो जगत्त्रयगुरुः कृष्णं नमस्याम्यहम् ।
कृष्णेनाऽमरशत्रवो विनिहताः कृष्णाय तस्मै नमः ॥
कृष्णादेव समुत्थितं जगदिदं कृष्णस्य दासोऽस्म्यहम् ।
कृष्णे तिष्ठति सर्वमेतदखिलं हे कृष्ण ! रक्षस्व माम् ॥१॥
[ कुलशेखरस्य ]

इति श्रीप्रभाकरीविवृतौ मध्यकौमुदीटीकायां विभक्त्यर्थाः (कारकाणि) ।

# अथ समासप्रकरणम्।

समासः पञ्चधा। तत्र समसनं[1] समासः। स च विशेषसंज्ञाविनिर्मुक्तः केवलसमासः[2] प्रथमः। प्रायेण पूर्वपदार्थप्रधानोऽव्ययीभावो[3] द्वितीयः। प्रायेणोत्तरपदार्थप्रधानस्तत्पुरुषस्तृतीयः[4]। तत्पुरुषभेदः कर्मधारयः[5]। कर्मधारयभेदो द्विगुः[6]। प्रायेणान्यपदार्थप्रधानो बहुव्रीहिश्चतुर्थः[7]। प्रायेणोभयपदार्थप्रधानो द्वन्द्वः[8] पञ्चमः।

**१३८२ समर्थः[9] पदविधिः २।१।१॥**

पदसम्बन्धी यो विधिः स समर्थाश्रितो बोध्यः।

**१३८३ प्राक्कडारात्[10] समासः २।१।४॥**

कडाराः कर्मधारय इत्यतः प्राक् समास इत्यधिक्रियते।

**१३८४ सह सुपा[11] २।१।४॥**

१-अनेकपदानाम् एकीभवनमित्यर्थः। २-यथा-भूतपूर्वः। ३-यथा-अधिहरि। ४-यथा-राजपुरुषः। ५-यथा-नीलोत्पलम्। ६-यथा-पञ्चगवम्। ७-यथा-लम्बकर्णः, पीताम्बरः। ८-यथा-रामलक्ष्मणौ, धवखदिरौ। ९-सामर्थ्यं द्विविधम्, व्यपेक्षारूपं, एकार्थीभावरूपं च, तत्र—आकाङ्क्षादिवशात् पदानां परस्परसम्बन्धो **व्यपेक्षा**, तद्रूपं सामर्थ्यं वाक्य एव भवति यथा—'राज्ञः पुरुषः, इत्यादौ। अपृथगुपस्थितिविषयत्वमेकार्थीभावत्वम्=(**एकार्थीभावरूपं** सामर्थ्यम्) तच्च समासादिवृत्तावेव भवतीति बोध्यम्। १०-प्राक्कडारादिति-'आकडारात्'इत्येव 'प्राग्' इति सिद्धे प्राग्ग्रहणमेकसञ्ज्ञाधिकारेऽपि-अव्ययीभावादिसञ्ज्ञासमुच्चयार्थमिति भाष्ये स्पष्टम्। सम्पूर्वकस्य-अस्यतेरेकीकरणात्मकः संश्लेषोऽर्थः। समस्यतेऽनेकं पदमिति समासः। "अकर्त्तरि च कारके सञ्ज्ञायाम्" इति कर्मणि घञ्। अत एव मूले समस्यते इति वक्ष्यते। तथा च-अन्वर्थेयं सञ्ज्ञा। ११-"सुबामन्त्रिते" इत्यतः सुबित्यनुवर्त्तते। सुबन्तं सुबन्तेन सहोच्चारितं समाससञ्ज्ञं भवतीति फलति।

सुप् सुपा सह वा समस्यते । समासत्वात्प्रातिपदिकत्वे सुपो लुक् । परार्थाभिधानं=वृत्तिः । कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः । वृत्त्यर्थावबोधकं वाक्यं=विग्रहः । स च लौकिकोऽलौकिकश्च द्विधा । तत्र पूर्वं भूत इति लौकिकः । पूर्व अम् भूत सु इत्यलौकिकः । भूतपूर्वः । भूतपूर्वे चरडिति निर्देशात्पूर्वनिपातः । ( इवेन समासो विभक्त्यलोपश्च ) । वागर्थौ इव वागर्थाविव । इति केवलसमासः ।

## अथाव्ययीभावसमासः ।

**१३८५ अव्ययीभावः २ । १ । ५ ॥**

अधिकारोऽयं प्राक्तत्पुरुषात् ।

**१३८६ अव्ययं विभक्ति-समीप-समृद्धि-व्यृद्ध्यर्थाभावात्ययासंप्रति-शब्दप्रादुर्भाव-पश्चाद्यथानुपूर्व्य-यौगपद्य-सादृश्य-संपत्ति-साकल्यान्तवचनेषु २ । १ । ६ ॥**

विभक्त्यर्थादिषु वर्तमानमव्ययं सुबन्तेन नित्यं समस्यते । प्रायेणाविग्रहो नित्यसमासः, प्रायेणास्वपदविग्रहो वा । विभक्तौ-हरि ङि अधि इति स्थिते ।

**१३८७ प्रथमानिर्दिष्टं समास उपसर्जनम् १ । २ । ४३ ॥**

समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनं स्यात् ।

१-प्रयोगयोग्यो लौकिकस्तद्भिन्नोऽलौकिकः । २-'हरीतकीं भुङ्क्ष्व राजन् ! मातेव हितकारिणीम्' इति तु समासेऽसमासेऽपि च-उपमानोपमेययोर्भिन्नविभक्तिकत्वाद् असाध्वेव । मातरमिवेति भवितव्यम् । ३-न स्वपदैर्विग्रहो यत्र । ४-ननु समासे प्रथमानिर्दिष्टमुपसर्जनमिति व्याख्यानमयुक्तम्, समासे सति "सुपो धातु" इति प्रथमाया लुप्तत्वात् । समासे चिकीर्षिते प्रथमानिर्दिष्टमिति व्याख्याने तु कृष्णं श्रितः 'कृष्णश्रितः' इत्यत्र विग्रहे कृष्णशब्दस्य द्वितीयानिर्दिष्टत्वाद् उपसर्जनत्वं न स्यात् । अतो व्याचष्टे—**समासशास्त्रे** इति । समासपदं समासविधायकशास्त्रपरमिति भावः ।

**१३८८ उपसर्जनं पूर्वम् २। २। ३०॥**

समासे उपसर्जनं प्राक् प्रयोज्यम्। इत्यधेः[1] प्राक् प्रयोगः। सुपो[2] लुक्। एकदेशविकृतस्यानन्यत्वात् प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिः। अव्ययीभाव- श्चेत्यव्ययत्वात्सुपो लुक्। अधिहरि[3]।

**१३८९ अव्ययीभावश्च २। ४। १८॥**

नपुंसकं स्यात्। गाः पातीति गोपाः तस्मिन्नित्यधिगोपम्[4]।

**१३९० नाव्ययीभावादतोऽम्त्वपञ्चम्याः २। ४। ८३॥**

अदन्तादव्ययीभावात्सुपो न लुक्, तस्य पञ्चमीं विना अमादेशः। कृष्णस्य समीपम् उपकृष्णम्[5]।

**१३९१ तृतीयासप्तम्योर्बहुलम् २। ४। ८४॥**

अदन्तादव्ययीभावात् तृतीयासप्तम्योर्बहुलमम्भावः। उपकृष्णेन उपकृष्णम्। बहुलग्रहणात्, सुमद्रमुन्मत्तगङ्गमित्यादौ नित्यमम्भावः। मद्राणां समृद्धिः=संमद्रम्[6]। यवनानां व्यृद्धिर्दुर्यवनम्[7]। मक्षिकाणामभावो=निर्मक्षिकम्[8]। हिमस्यात्ययोऽतिहिमम्[9]। निद्रा संप्रति न युज्यतेऽतिनिद्रम्[10]। हरिशब्दस्य प्रकाशः इतिहरि[11]। विष्णोः पश्चादनुविष्णु[12]। योग्यता-वीप्सा-पदार्थानतिवृत्ति-

---

१–'अधि' इत्युपसर्गस्य'। २–'अव्ययादाप्सुपः' इति सूत्रेण। ३–सप्तम्यर्थस्यैवात्र द्योतकोऽधिः। हरौ इत्यधिहरि 'अव्ययीभावश्चे'ति अव्ययत्वात्सुपो लुक्। अदन्तत्वाभावान्नाम्भावः। विभक्त्यावुदाहरणमिदम्। ४–विभक्त्यर्थेऽव्ययीभावसमासे सुब्लुकि नपुंसकत्वे ह्रस्वत्वे सति "नाव्ययीभावाद्" इत्यमि पूर्वरूपमिति भावः। ५–समीपोदाहरणमिदम्। एतत्सूत्रविहितसमासस्य नित्यतयाऽस्वपदविग्रहः, एवमग्रेऽपि बोध्यम्। अत्र समस्यमानस्य–उपशब्दस्य स्थाने समीपमिति प्रयुक्तम्। ६–'सम्' इत्यव्ययपर्यायः समृद्धिशब्दो विग्रहवाक्ये बोध्यः। ७–विगता ऋद्धिः=व्यृद्धिः "दुर्" शब्दार्थकोऽत्र व्यृद्धिशब्दः। ८–विग्रहे 'निर्' शब्दसमानार्थकमभावपदमिति भावः। ९–अत्ययः=ध्वंसः। 'अति'–इत्यव्ययपर्यायोऽत्ययशब्दो विग्रहे ज्ञेयः। १०–'अति' इत्यव्ययस्याऽसम्प्रत्यर्थकस्य स्थाने 'सम्प्रति न युज्यते' इति विग्रहवाक्यं बोध्यम्। ११–'इति' इत्यव्ययं शब्दप्रकाशे वर्त्तते। तस्य हरिशब्देन स्वरूपपरेण षष्ठ्यन्तेन समास इति भावः। १२–'अनु' इत्यव्ययं

सादृश्यानि यथार्थाः[1]। रूपस्य योग्यमनुरूपम्[2]। अर्थमर्थं प्रति प्रत्यर्थम्[3]। शक्तिमनतिक्रम्य यथाशक्ति[4]।

**१३१२ अव्ययीभावे चाकाले ६ । ३ । ८१ ॥**

सहस्य सः स्यादव्ययीभावे न तु काले[5]। हरेः सादृश्यं सहरि[6]। काले तु सहपूर्वाह्णम्[7]। ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम्। चक्रेण युगपत् सचक्रम्[8]। सदृशः सख्या ससखि[9]। क्षत्राणां सम्पत्तिः सक्षत्रम्[10][11]। तृणमप्यपरित्यज्य सतृणम्[11][12] अत्ति, *साकल्येनेत्यर्थः। अग्निग्रन्थपर्यन्तमधीते साग्नि[13]।*

**१३१३ यथाऽसादृश्ये २ । १ । ७ ॥**

असादृश्ये एव यथाशब्दः समस्यते। नेह—यथा हरिस्तथा हरः।

पश्चादर्थे वर्त्तते इत्यर्थः।

१–'यथा' शब्दस्यार्था इत्यर्थः। २–अत्र 'अनु' इत्यव्ययं योग्यतायां वर्त्तते। अतो यथार्थ इति भावः। ३–अत्र (विग्रहे) वीप्सायां द्विर्वचनम्। "लक्षणेत्थम्भूताख्यान" इति वीप्सायां द्योत्यायां प्रतेः कर्मप्रवचनीयत्वात् तद्योगे द्वितीया (विग्रहे)। समासे तु द्विर्वचनन्न, समासेन वीप्साया द्योतितत्वात्। ४–अत्र 'यथा' इत्यव्ययं पदार्थानतिक्रमे वर्त्तते–इत्यर्थः। अव्ययत्वात्सुपो लुक्। ५–कालवाचके परे सहस्य सो नेत्यर्थः। ६–अत्र 'सह' इत्यव्ययं सादृश्ये वर्त्तते–इति भावः। ७–अत्र सामीप्यादावव्ययीभावः। ८–कार्यं कृतमिति शेषः। ९–युगपत्पर्यायस्य सहशब्दस्य चक्रेण–इत्यनेन समासः। १०–'सह' इत्यव्ययं सदृशार्थकमिति भावः। ११–क्षत्रियाणामनुरूपं कर्मेत्यर्थः। 'सह' इत्यव्ययमत्र सम्पत्तौ वर्त्तते–इति भावः। ननु सम्पत्तिसमृद्धिशब्दयोः को भेदः? इति चेच्छृणु–ऋद्धेः=धनधान्यादेराधिक्यं=समृद्धिः। अनुरूपः=योग्यः आत्मभावः=स्वोचितं कर्म सम्पत्तिरिति भेदः। १२–तृणशब्दोऽत्राऽपरिवर्जने वर्त्तते। ननु तृणसहभावेऽपीति भावः। नन्वेवं सति साकल्ये कथमिदमुदाहरणं स्यादित्यत आह—**साकल्येनेत्यर्थ** इति। पात्रे परिविष्टं सकलं भक्षयतीति यावत्। १३–अन्ते,—उदाहरणमिदम्। सूत्रेऽन्तशब्देन अन्तावयवसाहित्यं विवक्षितमित्यभिप्रेत्योदाहरति—**अग्निग्रन्थपर्यन्तेति**। अत्र कृत्स्नस्यानध्येतव्यत्वाद् अग्निग्रन्थपर्यन्ताध्ययने तत्कात्स्न्यानवगमात्साकल्यात्पृथगुक्तिः।

**१३९४ यावदवधारणे २ । १ । ८ ॥**

यावन्तः श्लोकास्तावन्तोऽच्युतप्रणामा इति—यावच्छ्लोकम्[1] ।

**१३९५ सुप्प्रतिना मात्रार्थे[2] २ । १ । ९ ॥**

शाकस्य लेशः शाकप्रति ।

**१३९६ विभाषा २ । १ । ११ ॥**

अधिकारोऽयम् ।

**१३९७ अपपरिबहिरञ्चवः पञ्चम्या २ । १ । १२ ॥**

अप विष्णु[3] संसारः । अप विष्णोः । परि विष्णु । परि विष्णोः । बहिर्वनम्[4] । बहिर्वनात् । प्राग्वनम्[5] । प्राग्वनात् ।

**१३९८ तिष्ठद्गुप्रभृतीनि च २ । १ । १७ ।**

एतानि निपात्यन्ते । तिष्ठन्ति गावो यस्मिन्काले स तिष्ठद्गुर्दोहनकालः[6] ।

**१३९९ पारे मध्ये षष्ठ्या वा २ । १ । १८ ।**

पारमध्यशब्दौ षष्ठ्यन्तेन सह वा समस्येते । एदन्तत्वं चानयोर्निपात्यते । पारेगङ्गम् । गङ्गापारम् । मध्येगङ्गम् । गङ्गामध्यम् । महाविकल्पेन वाक्यमपि ।

**१४०० संख्या वंश्येन २ । १ । १९ ।**

वंशो[7] द्विधा विद्यया जन्मना च । तत्र भवो वंश्यः तद्वाचिना सह

---

१–इयत्तापरिच्छेदे गम्ये 'यावद्' इत्यव्ययं समस्यते सोऽव्ययीभाव इति सूत्रार्थः । अवधारणे किम् ? यावद्दत्तं तावद्भुक्तम् । इयद्भुक्तमिति नावधारयतीत्यर्थः । २–सुबितिच्छेदः । मात्रा=लेशः । तस्मिन्नर्थे विद्यमानेन प्रतिना सुबन्तं समस्यत इत्यर्थः । ३-अत्र 'अप' इत्यव्ययं वर्जने । विष्णुं वर्जयित्वा संसरणमित्यर्थः । 'अपपरी वर्जने' इति–अपेत्यव्ययस्य कर्मप्रवचनीयत्वात्तद्योगे 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी । तदन्तेन अपेत्यस्याऽव्ययीभावसमासः, सुब्लुक् । अपेत्यव्ययस्य प्रथमानिर्दिष्टत्वात्पूर्वनिपातः । समासात्सुबुत्पत्तिः "अव्ययादाप्सुपः" इति लुक् । एवं यथायथमग्रेऽपि ज्ञेयम् । **परिविष्णु** अत्रापि परिर्वर्जने । पञ्चम्यादि पूर्ववत् । ४–अस्मादेव ज्ञापकाद् बहिर्योगे पञ्चमी । इतरत्पूर्ववत् । अदन्तत्वादम्भावः । ५–अञ्चूत्तरपदयोगे पञ्चमी । ६–इह शत्रादेशः 'स्त्रियाः पुंवत्' इति प्राप्तपुंवद्भावविरहः 'तिष्ठद्गो' शब्दस्य नपुंसकह्रस्वत्वञ्च निपात्यते । ७–वंशः=सन्ततिः ।

संख्या समस्यते । द्वौ मुनी वंश्यौ द्विमुनि । व्याकरणस्य त्रिमुनि । विद्यात-द्वतामभेदविवक्षायां तु त्रिमुनि=व्याकरणम् । एकविंशति भारद्वाजम्[1] ।

**१४०१ नदीभिश्च २ । १ । २० ॥**

*नदीभिः संख्या वा समस्यते । ( समाहारे चायमिष्यते ) ।* पञ्चगङ्गम्[2] द्वियमुनम्[3] ।

**१४०२ अन्यपदार्थे च संज्ञायाम् २ । १ । २१ ॥**

अन्यपदार्थे सुबन्तं नदीभिः सह नित्यं समस्यते संज्ञायाम् । विभाषा-धिकारेऽपि वाक्येन संज्ञानवगमादिह नित्यसमासः । उन्मत्तगङ्गं नाम देशः । लोहितगङ्गम् ।

**१४०३ तद्धिताः ४ । १ । ७६ ॥**

आपञ्चमसमाप्तेरधिकारोऽयम् ।

**१४०४ अव्ययीभावे शरत्प्रभृतिभ्यः ५ । ४ । १०७ ॥**

शरदादिभ्यष्टच् स्यात्समासान्तोऽव्ययीभावे । शरदः समीपमुपशरदम्[5] । प्रतिविपाशम् । शरद् । विपाश् । अनस् । मनस् । उपानह् । दिव् । हिम-वत् । अनडुह् । दिश् । दृश् । विश् । चेतस् । चतुर् । त्यद् । तद् । यत् । कियत् । 'जराया जरस् च' ( ग. सू. ) उपजरसम्[6] ।

---

१-अथ जन्मना वंशमुदाहरति—**एकविंशतीति** । एकविंशतिर्भार-द्वाजा इति कर्मधारयं बाधित्वाऽव्ययीभावः । २-पञ्चानां गङ्गानां समाहार इति विग्रहे "तद्धितार्थोत्तरपदसमाहारे च" इति द्विगुसमासं बाधित्वाऽव्ययी-भावसमासः । ३-द्वयोर्यमुनयोः समाहार इति विग्रहः । अत्र नदीशब्देन नदीशब्दविशेषस्य नदीवाचकानाञ्च ग्रहणमिति संख्यासञ्ज्ञासूत्रे भाष्ये स्पष्टम् । तेन पञ्चनदम्, सप्तगोदावरम्, इत्यादि सिद्ध्यति । ४-सम्यग् ज्ञायते-इति सञ्ज्ञा । उन्मत्ता गङ्गा यस्मिन्निति वाक्येन देशविशेषस्यानवग-मादिह नित्यसमास इत्यर्थः । ५-'अव्ययं विभक्ति.......' इत्यादिना समी-पार्थकस्य उपेत्यव्ययस्य 'शरदः' इति षष्ठ्यन्तेनाऽव्ययीभावः, टच्, टचः समासावयवत्वेन तदन्तस्याऽव्ययीभावसमासत्वात् 'नाव्ययीभावाद' इत्यम् । अत्र झयन्तानां 'झयः' इति विकल्पे प्राप्ते नित्यार्थो गणपाठः । ६-जरायाः समीपमित्यर्थः । सामीप्ये उपेत्यव्ययस्य जराया इति षष्ठ्यन्तेनाऽव्ययीभाव-

**१४०५ अनश्च ५। ४। १०८॥**

अन्नन्तादव्ययीभावाट्टच्।

**१४०६ नस्तद्धिते ६। ४। १४४॥**

मान्तस्य भस्य टेर्लोपस्तद्धिते। उपराजम्[1]। अध्यात्मम्[2]।

**१४०७ नपुंसकादन्यतरस्याम् ५। ४। १०९॥**

अन्नन्तं यत् क्लीबं तदन्तादव्ययीभावाट्टच् वा स्यात्। उपचर्मम्[3]। उपचर्म।

**१४०८ झयः ५। ४। १११॥**

झयन्तादव्ययीभावाट्टच् वा स्यात्। उपसमित्। उपसमिधम्।

**१४०९ नदीपौर्णमास्याग्रहायणीभ्यः ५। ४। ११०॥**

वा टच् स्यात्। उपनदम्[4]। यस्येति चेति इलोपः। उपनदीत्यादिः।

**१४१० गिरेश्च सेनकस्य ५। ४। ११२॥**

टच् वा स्यात् उपगिरम्[6]। उपगिरि। (प्रतिपरसमनुभ्योऽक्ष्णः)। टच् स्यात्। अक्ष्णोऽभिमुखं प्रत्यक्षम्[7]।

समासे कृते टच्, सुब्लुक्, उपेत्यस्य पूर्वनिपातः। टचो विभक्तित्वाभावात्तस्मिन् परे अप्राप्ते जरसि—अनेन (गणसूत्रेण) जरस्। टजन्ताद् यथायथं सुपोऽम्भावः।

१—राज्ञः समीपमित्यर्थः। सामीप्ये—उपेत्यव्ययस्याऽव्ययीभावः। "अनश्चेति" टच्, सुब्लुक्, टिलोपः, उपराज—शब्दाद् यथायथं सुप्, अम्भावः। २—आत्मनीत्यर्थः। विभक्त्यर्थेऽव्ययीभावः। शेषं पूर्ववत्। ३—चर्मणः समीपमित्यर्थः। सामीप्ये—उपेत्यव्ययस्याऽव्ययीभावः। टचि, टिलोपः, अम्भावः। टजभावे—**उपचर्मे**ति रूपम्। ४—नद्याः समीपमित्यर्थः। सामीप्ये—उपेत्यव्ययस्याव्ययीभावसमासः, टच्, 'यस्येति च' इतीकारलोपः। उपनदशब्दात् सुप्, अम्भावः। ५—टजभावे **उपनदि** इति रूपम्, नपुंसकह्रस्वः। 'अव्ययादाप्सुपः' इति लुक्। ६—सेनको नामाचार्यः। गिरेः समीपमित्यर्थः। टचि, यस्येति चेतीकारलोपेऽम्भावः। ७—अक्षिणी प्रतीति विग्रहः। अक्ष्णोरभिमुखमित्यर्थः। 'लक्षणेत्थं...' कर्मप्रवचनीयत्वाद् द्वितीया। 'लक्षणेनाभिप्रती' इत्यव्ययीभावः, टच्, सुब्लुक्,

अक्ष्णः परं परोक्षम्। अत एव समासः। परोक्षे लिडिति निपातनात्पर-स्यौकार इत्यादि। इत्यव्ययीभावः॥

# अथ तत्पुरुषसमासः

**१४११ तत्पुरुषः २। १। २२।**

अधिकारोऽयं प्राग्बहुव्रीहेः।

**१४१२ द्विगुश्च २। १। २३।**

तत्पुरुषसंज्ञः।

**१४१३ द्वितीया-श्रितातीत-पतित-गतात्यस्त-प्राप्तापन्नैः २। १। २४।**

द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह वा समस्यते। कृष्णं श्रितः, कृष्णश्रितः। इत्यादि।

**१४१४ तृतीया तत्कृतार्थेन गुणवचनेन २। १। ३०।**

तृतीयान्तं तृतीयान्तार्थकृतगुणवचनेनार्थेन च सह प्राग्वत्। शङ्कुलया खण्डः शङ्कुलाखण्डः। धान्येनार्थो धान्यार्थः। तत्कृतेति किम्। अक्ष्णा काणः।

यस्येति चेतीकारलोपः। प्रत्यक्षशब्दाद् यथायथं सुबुत्पत्तिः, अम्भावः।

१—अक्ष्णः परमिति विग्रहे परमित्यस्य अक्षीत्यनेनाऽव्ययीभावसमासः टच्, सुब्लुक्। परशब्दस्य ओकारोऽन्तादेशः पूर्वरूपम्। परोक्षाद् यथायथं सुबम्भावः। २—समासान्तविधानसामर्थ्यादेव। ॥ इत्यव्ययीभावः॥

३—द्वितीया हि प्रत्ययरूपा, 'प्रत्ययग्रहणे तदन्तग्रहणम्' तदाह द्वितीयान्तम्। ४—दुःखमतीतः, दुःखातीतः। गर्तं पतितः, गर्तपतितः। ग्रामं गतः, ग्रामगतः। ग्राममत्यस्तः=अतिक्रान्तः, ग्रामात्यस्तः। ग्रामम्प्राप्तः, ग्रामप्राप्तः। संशयमापन्नः,—संशयापन्नः। ५—'तत्कृत' इति लुप्ततृतीयाकम्। ६—देवदत्त इति शेषः। शङ्कुलयेति करणे तृतीया। शङ्कुलाकृतखण्डनक्रियावानित्यर्थः। ७—अर्थशब्दो धनपरः। हेतौ तृतीया। धान्यहेतुकं धनमित्यर्थः.। अत्र धनस्य धान्यहेतुकत्वेऽपि तत्करणकत्वाभावादप्राप्तौ पृथगुक्तिः। 'धान्येन' इति प्रकृत्यादित्वात्तृतीया। ८—नह्यक्ष्णा काणत्वं कृतं, किन्तु रोगादिनेति भावः। 'येनाङ्गविकारः' इति तृतीया।

**१४१५ पूर्व-सदृश-समोनार्थ-कलह-निपुण-मिश्र-श्लक्ष्णैः २। १। ३१॥**

तृतीयान्तमेतैः प्राग्वत्। मासपूर्वः। मातृसदृशः। पितृसमः। ऊनार्थे माषोनं=कार्षापणम्। माषविकलम्। वाक्कलहः। आचारनिपुणः। गुडमिश्रः। आचारश्लक्ष्णः। ( अवरस्योपसंख्यानम् )। मासावरः।

**१४१६ अन्नेन व्यञ्जनम् २। १। ३४॥**

संस्कारकद्रव्यवाचकं तृतीयान्तमन्नेन सह प्राग्वत्। दध्ना उपसिक्तमोदनं दध्योदनम्।

**१४१७ भक्ष्येण मिश्रीकरणम् २। १। ३५॥**

गुडेन मिश्रा धाना गुडधानाः।

**१४१८ कर्तृकरणे कृता बहुलम् २। १। ३२॥**

कर्तरि करणे च तृतीया कृदन्तेन बहुलं प्राग्वत्। हरिणा त्रातो हरित्रातः। नखभिन्नः।

*** कृद्ग्रहणे गति-कारकपूर्वस्यापि ग्रहणम् ***

नखनिर्भिन्नः।

गुणवचनेति किम्? 'गोभिर्वपावान्' गोसम्बन्धिक्षीरादिभोजनेन (देवदत्तस्य) वपावत्वमित्यस्ति तत्कृतत्वम्। किन्तु न गुणवचनोऽसौ।

१–मासेन पूर्व इति विग्रहः। मासात् प्रागुत्पन्न इत्यर्थः। एवम्–मात्रा सदृशः। पित्रा समः, तुल्यार्थैरिति तृतीया। **ऊनार्थे** उदाहरणसूचनमिदम्। माषेणोनम्। अर्थग्रहणञ्च–ऊनेनैव सम्बध्यते, नतु पूर्वादिभिरपि, समसदृशयोः पृथगुपादानात्। अर्थग्रहणस्य प्रयोजनमाह—**माषविकल**मिति माषेण विकलमिति विग्रहः, हीनमित्यर्थः। वाचा कलहः। आचारेण निपुणः। गुडेन मिश्रः। आचारेण श्लक्ष्णः। २–मासेन पूर्व इत्यर्थः, न्यून इत्यर्थे–ऊनार्थकत्वादेव सिद्धम्। ३–मिश्रीक्रियते खाद्यं द्रव्यमनेनेति मिश्रीकरणं गुडादि। तद्वाचकं तृतीयान्तं भक्ष्यवाचकेन सह समस्यते–इत्यर्थः। कठिनद्रव्यं खाद्यम्। ४–बहुलग्रहणं सर्वोपाधिव्यभिचारार्थम्। तेन 'दात्रेण लूनवान्' इत्यादौ न। ५–नखैर्भिन्न इति विग्रहः। ६–इदं गतिपूर्वस्योदाहरणम्। कारकपूर्वस्य तु 'अवतप्ते नकुलस्थितम्' इति बोध्यम्।

**१४१९ चतुर्थी तदर्थार्थ-बलि-हित-सुख-रक्षितैः २।१।३६॥**

चतुर्थ्यन्तार्थाय यत्तद्वाचिनार्थादिभिश्च चतुर्थ्यन्तं प्राग्वत् । यूपाय दारु यूपदारु । तदर्थेन प्रकृतिविकारभावः एवेष्टः । तेनेह न—रन्धनीय स्थाली[1] । अश्वघासादयस्तु षष्ठीतत्पुरुषाः । ( अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम् )[2] । द्विजायायं द्विजार्थः सूपः । द्विजार्था यवागूः । द्विजार्थं पयः । भूतबलिः[3] । गोहितम् । गोसुखम् । गोरक्षितम् ।

**१४२० पञ्चमी भयेन[4] २ । १ । ३७ ॥**

चोराद्भयं चोरभयम् ।

**१४२१ स्तोकान्तिक-दूरार्थ-कृच्छ्राणि क्तेन[5] २ । १ । ३९ ॥**

**१४२२ पञ्चम्याः स्तोकादिभ्यः[6] ६ । ३ । २ ॥**

अलुगुत्तरपदे । स्तोकान्मुक्तः[7] । अल्पान्मुक्तः । अन्तिकादागतः[8] । अभ्याशादागतः । दूरादागतः । विप्रकृष्टादागतः[9] । कृच्छ्रादागतः ।

**१४२३ षष्ठी[10] २ । २ । ८ ॥**

---

१—नात्र स्थाल्या विकृतिभावः (विपरिणामः)। २—अन्यथा विभाषाधिकारात् पक्षे द्विजायार्थ इत्यपि प्रयोगः स्यादिति भावः । अर्थशब्दस्य नित्यपुंल्लिङ्गत्वेऽपि "परवल्लिङ्गं...." इति पुंलिङ्गं बाधित्वाऽनेन विशेष्यलिङ्गानुसारेण स्त्रीलिङ्गता नपुंसकता च । द्विजायेयमिति द्विजार्था, द्विजायेदमिति द्विजार्थमिति विग्रहौ । ३—भूतेभ्यो बलिरिति विग्रहः । तादर्थ्यचतुर्थ्यन्तस्य बलिशब्देन समासः । एवम्—गोभ्यो हितम्, गोभ्यः सुखम्, गोभ्यो रक्षितम्, तृणादिकमिति शेषः । ४—पञ्चम्यन्तं भयशब्देन सुबन्तेन समस्यत इत्यर्थः । 'भी—त्रार्थानां भयहेतुः' इति—अपादानत्वात्पञ्चमी । ५—स्तोक, अन्तिक, दूर—एतदर्थकानि, कृच्छ्र एतानि पञ्चम्यन्तानि क्तप्रत्ययान्तेन समस्यन्त इत्यर्थः । अर्थग्रहणं स्तोकान्तिकदूरेषु सम्बध्यते । ६—स्तोकादिशब्देभ्यः पञ्चम्या अलुग् उत्तरपदे परतः । 'उत्तरपद' शब्दो हि समासस्य चरमावयवे रूढः । ७—इदं स्तोकपर्यायस्योदाहरणम् । ८—इदम् अन्तिकपर्यायस्योदाहरणम् । ९—इदं दूरशब्दपर्यायस्योदाहरणम् । १०—षष्ठ्यन्तं सुबन्तेन समस्यते, स तत्पुरुष इत्यर्थः । राजपुरुष इत्यत्र अन्तर्वर्तिनीं विभक्तिं प्रत्ययलक्षणेनाश्रित्य नकारलोपः । न च लुका लुप्त-

सुबन्तेन प्राग्वत्। राज्ञः पुरुषः। राजपुरुषः।

**१४२४ याजकादिभिश्च २। २। ९॥**

षष्ठ्यन्तं समस्यते। वक्ष्यमाणस्यापवादः। ब्राह्मणयाजकः, देवपूजकः, (याजक, पूजक, परिचारक, परिषेचक, स्नातक, अध्यापक, उत्सादक, उद्वर्तक, होतृ, पोतृ, भर्तृ, रथगणक, पत्तिगणक, इति याजकादिः)। (गुणात्तरेण तैरलोपश्च)। तरबन्तं यद् गुणवाचि तेन समासः। सर्वेषां श्वेततरः सर्वश्वेतः। सर्वेषां महत्तरः सर्वमहान्।

**१४२५ न निर्धारणे २। २। १०॥**

षष्ठी न समस्यते। नृणां द्विजः श्रेष्ठः।

**१४२६ पूरण-गुण-सुहितार्थ-सदव्यय-तव्य-समानाधिकरणेन २। २। ११॥**

पूरणाद्यर्थैः सदादिभिश्च षष्ठी न समस्यते। पूरणे-सतां षष्ठः। गुणे काकस्य कार्ष्ण्यम्। सुहितार्थास्तृप्त्यर्थाः फलानां सुहितः। सत्-द्विजस्य कुर्वन्कुर्वाणो वा। अव्ययम्—ब्राह्मणस्य कृत्वा। पूर्वोत्तरसाहचर्यात् कृदव्ययमेव गृह्यते। तेन तदुपरीत्यादि सिद्धम्। तव्यः—ब्राह्मणस्य कर्तव्यम्। समानाधिकरणे-तक्षकस्य सर्पस्य।

**१४२७ क्तेन च पूजायाम् २। २। १२॥**

मतिबुद्धिसूत्रेण विहितो यः क्तस्तदन्तेन षष्ठी न समस्यते। राज्ञां

---

त्वान्न प्रत्ययलक्षणमिति वाच्यम्, पदत्वस्य सुब्घटितसमुदायधर्मत्वेन तस्या ऽङ्गकार्य्यत्वाभावादिति भावः, अङ्गकार्य एव 'न लुमताङ्गस्य' इति प्रत्ययलक्षणनिषेधः।

१–"तृजकाभ्यां कर्त्तरि" इत्यस्य। २–ब्राह्मणस्य याजक इति विग्रहः। "कर्त्तृकर्मणोः कृति" इति कर्मणि षष्ठी। एवं देवानां पूजक इति विग्रहः। ३–गुणवाचकाद् विहितो यस्तरप् तदन्तेन षष्ठी वा समस्यते तरपो लोपश्चेत्यर्थः। ४–"यतश्च निर्धारणम्" इति षष्ठी। ५–तव्यता तु भवत्येव समासः, स्वकर्त्तव्यमिति। स्वरे भेदः। ६–"मतिबुद्धि..." इति वर्त्तमाने क्तः, 'क्तस्य च वर्त्तमाने' इति षष्ठी। 'राजपूजितः' इत्यादौ तु भूते क्तान्तेन सह तृतीयान्तस्य समासः।

मतो बुद्धः पूजितो वा ।

**१४२८ अधिकरणवाचिना च २ । २ । १३ ॥**

क्तेन षष्ठी न समस्यते । इदमेषामासितं गतं भुक्तं वा ।

**१४२९ कर्मणि च २ । २ । १४ ॥**

उभयप्राप्तौ कर्मणीति या षष्ठी सा न समस्यते । आश्चर्यो गवां दोहोऽगोपेन ।

**१४३० तृजकाभ्यां कर्तरि २ । ३ । १५ ॥**

कर्त्रर्थतृजकाभ्यां षष्ठ्या न समासः । अपां स्रष्टा । वज्रस्य भर्ता । ओदनस्य पाचकः ।

**१४३१ कर्तरि च २ । २ । १६ ॥**

कर्तरि षष्ठ्या अकेन न समासः । भवतः शायिका ।

**१४३२ पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे २ । २ । १ ॥**

अवयविना सह पूर्वादयः समस्यन्ते एकत्वसंख्याविशिष्टश्चेदवयवी । षष्ठीसमासापवादः । पूर्वं कायस्य पूर्वकायः । अपरकायः । एकदेशिना किम् । पूर्वं नाभेः कायस्य । एकाधिकरणे किम् । पूर्वश्छात्राणाम् ।

**१४३३ अर्धं नपुंसकम् २ । २ । २ ॥**

---

१–'क्तोऽधिकरणे च ध्रौव्यगति...' इति अधिकरणे क्तः, 'अधिकरणवाचिनश्चे'ति षष्ठी । २–'ण्वुल्तृचौ' इति कर्त्तरि तृच्, "कर्तृकर्मणोः" इति कर्मणि षष्ठी । एवम् ओदनस्य पाचक इति पचेः कर्त्तरि ण्वुल्, अकादेश इति विशेषः । ३–"स्त्रियां क्तिन्" इत्यधिकारे धात्वर्थनिर्देशे ण्वुल्, अकादेशः, टाप् 'कर्तृकर्मणोः कृती'ति षष्ठी । अत्राऽकस्य कर्त्रर्थकत्वाभावात् "तृजकाभ्याम्" इत्यस्य न प्राप्तिः । ४–अवयववाचकाः शब्दा इत्यर्थः । ५–अत्र पूर्वकायः, इत्यादौ "षष्ठी"ति समासप्राप्तावपि सूत्रान्तरविधानं पूर्वादिशब्दस्य पूर्वनिपातार्थम् । अन्यथा "षष्ठी"ति समासशास्त्रे प्रथमानिर्दिष्टत्वेन षष्ठ्यन्तस्य ( कायादिशब्दस्य ) पूर्वनिपातः स्यादिति भावः । ६–अत्र पूर्वस्य अंशस्य नाभिरवधिरेव नत्ववयवी । अतो नाभिशब्देन पूर्वशब्दस्य समासो न भवतीत्यर्थः । ७–छात्राणां बहुत्वेन नात्राधिकरणैकत्वमिति न समासः ।

समांशवाच्यर्धशब्दो नित्यं क्लीबे स प्राग्वत् । अर्धं पिप्पल्या अर्धपिप्पली । ( एकविभक्ताविषष्ठ्यन्तवचनम् ) इत्युपसर्जनसंज्ञाबाधाद्ध्रस्वो न । क्लीबे किम्—ग्रामार्धः । द्रव्यैक्य एव । अर्धं पिप्पलीनाम् ।

**१४३४ द्वितीय-तृतीय-चतुर्थ-तुर्याण्यन्यतरस्याम् २ ।२।३।**

एतान्येकदेशिना सह प्राग्वद्वा । द्वितीयं भिक्षायाः–द्वितीयभिक्षा, एकदेशिना किम् । द्वितीयं भिक्षाया भिक्षुकस्य । अन्यतरस्यांग्रहणसामर्थ्यात्पूरणगुणेति निषेधं बाधित्वा पक्षे षष्ठीसमासः । भिक्षाद्वितीयम् ।

**१४३५ प्राप्तापन्ने च द्वितीयया २ । २ । ४ ॥**

पक्षे द्वितीयाश्रितेति समासः । प्राप्तो जीवनं–प्राप्तजीवनः । जीवनप्राप्तः आपन्नजीवनः । जीवनापन्नः । इह सूत्रे द्वितीयया अ इति छित्वा अकारो-

---

१–अर्धमिति नपुंसकलिङ्गनिर्देशादेव नपुंसकत्वे लब्धे पुनर्नपुंसकग्रहणं नित्यनपुंसकलिङ्गस्य ग्रहणार्थमित्यभिप्रेत्याह–**समांशवाच्यर्धशब्द** इति । २–ननु–अर्धं पिप्पल्याः, अर्धपिप्पली । अर्धेन पिप्पल्याः, अर्धपिप्पल्या । अर्धाय पिप्पल्याः, अर्धपिप्पल्यै । अर्धात्–अर्धस्य वा पिप्पल्याः, अर्धपिप्पल्याः । अर्धे पिप्पल्याः, अर्धपिप्पल्याम् । इति विग्रहेषु पिप्पलीशब्दस्य नियतविभक्तितया 'एकविभक्ति चापूर्वनिपाते' इत्युपसर्जनत्वात् "गोस्त्रियो" रिति ह्रस्वःस्यादित्यत आह–**एकविभक्ताविति** 'एकविभक्ति चापूर्वनिपाते' इति सूत्रे 'अषष्ठ्यन्तम्' इति वक्तव्यमित्यर्थः । पिप्पलीशब्दस्य च षष्ठ्यन्तत्वान्नोपसर्जनत्वमिति न ह्रस्वः । ३–अत्र नायं समासः किन्तु षष्ठीसमासः । अर्धशब्दस्य समांशवाचित्वाभावेन नित्यनपुंसकत्वाभावात् । ४–अत्र द्रव्यैक्याभवान्न समासः । ५–"परवल्लिङ्ग" मित्यादिना स्त्रीत्वम् । ६–अत्र द्वितीयमित्यस्य भिक्षुकस्येत्यनेन समासो न भवति । द्वितीयंप्रति भिक्षुकस्यैकदेशित्वाभावात् । ७–ननु विभाषाधिकारेण विकल्पे सिद्धेऽन्यतरस्यांग्रहणं व्यर्थमित्यत आह—**अन्यतरस्यामिति** । अन्यथा षष्ठ्यपवादभूतेनाऽनेन समासेन मुक्ते विषये–उत्सर्गः प्रवर्तेत, विभाषाधिकारे अपवादेन मुक्ते उत्सर्गो न प्रवर्त्तते, इति 'पारे मध्ये षष्ठ्या वा, इति वाग्रहणेन ज्ञापितत्वात् । ८–प्राप्त-आपन्न, एतौ शब्दौ द्वितीयान्तेन समस्येते इत्यर्थः । ( तयोरकारोऽन्तादेशश्च ) ।

ऽपि विधीयते । तेन[1] जीविकां प्राप्ता स्त्री प्राप्तजीविका । आपन्नजीविका ।

**१४३६ कालाः परिमाणिना २ । २ । ५ ॥**

परिच्छेद्यवाचिना' सुबन्तेन सह कालाः समस्यन्ते । मासो जातस्य यस्य स मासजातः ।

**१४३७ सप्तमी शौण्डैः २ । १ । ४० ॥**

सप्तम्यन्तं शौण्डादिभिः प्राग्वत् । अक्षेषु शौण्डः अक्षशौण्डः[2] । शौण्ड, धूर्त, कितव, व्याड, प्रवीण, संवीत, अन्तर, अधिप, पटु, पण्डित, कुशल, चपल, निपुण, इति शौण्डादिः । द्वितीया तृतीयेत्यादि-योगविभागादन्यत्रापि द्वितीयादीनां प्रयोगवशात्समासो ज्ञेयः ।

**१४३८ दिक्संख्ये संज्ञायाम् २ । १ । ५० ॥**

विशेषणं विशेष्येण बहुलमित्येव सिद्धे संज्ञायामेवेति नियमा[3]र्थं सूत्रम् । पूर्वेषुका[4]मशमी । सप्तर्षयः[5] । तेनेह[6] न उत्तरा वृक्षाः । पञ्च ब्राह्मणाः ।

**१४३९ तद्धितार्थोत्तरपदसमाहारे च २ । १ । ५१ ॥**

तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्संख्ये प्राग्वत् । पूर्वस्यां शालायां भवः पूर्वशाला इति समासे जाते । सर्वनाम्नो वृत्तिमात्रे पूर्वं पुंवत्—

**१४४० दिक्पूर्वपदादसंज्ञायां ञः ४ । २ । १०७ ॥**

अस्माद्भवाद्यर्थे ञः स्यादसंज्ञायाम् ।

**१४४१ तद्धितेष्वचामादेः ७ । २ । ११७ ॥**

ञिति णिति च तद्धिते अचामादेरचो वृद्धिः स्यात् । 'यस्येति च[7]' । पौर्वशालः[8] । पूर्वा शाला प्रिया यस्येति त्रिपदे बहुव्रीहौ कृते प्रियाशब्दे

१—तेन=प्राप्तापन्नयोराकारस्य—अन्तस्य स्थानेऽकारविधानेन । २—अक्षविषयकक्रीडाकुशल इत्यर्थः । ३—नियमाकारश्चायम्ः—तत्पुरुषे दिक्सङ्ख्ये सञ्ज्ञायामेव समस्येते इति । ४—पूर्वः+इषुकामशमी, इति विग्रहः । ग्रामविशेषस्येयं सञ्ज्ञा । ५—मरीच्यत्रिप्रभृतीनां सप्तानामृषीणां सञ्ज्ञेयम् । ६—सत्त्वेऽपि दिक्सङ्ख्ययोः सञ्ज्ञाया अभावादिति भावः । ७—इत्याकार-लोपः । ८—तद्धितार्थे दिक्समासोदाहरणमिदम् ।

उत्तरपदे पूर्वयोस्तत्पुरुषः । तेन शालाशब्दे आकार उदात्तः । पूर्वशालाप्रियः[1] । दिक्षु समाहारो नास्त्यनभिधानात्[2] । संख्यायास्तद्धितार्थे[3]—षण्णां मातॄणामपत्यं षाण्मातुरः । 'मातुरुत्संख्यासंभद्रपूर्वायाः' इति वक्ष्यमाणोऽण् (प्रकृतेरुकारादेश आदिवृद्धिश्च) । पञ्च गावो धनं यस्येति त्रिपदे बहुव्रीहौ अवान्तरतत्पुरुषस्य[4] विकल्पे[5] प्राप्ते । (द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्[6]) ।

**१४४२ गोरतद्धितलुकि ५ । ४ । ९२ ॥**

गोन्तात्तत्पुरुषाट्टच् स्यात्समासान्तो न तद्धितलुकि । पञ्चगवधनः[7] ।

**१४४३ संख्यापूर्वो द्विगुः २ । १ । ५२ ॥**

तद्धितार्थेत्यत्रोक्तः[8] संख्यापूर्वो द्विगुः ।

**१४४४ द्विगुरेकवचनम् २ । ४ । १ ॥**

द्विग्वर्थः समाहार एकवत्स्यात् ।

**१४४५ स नपुंसकम् २ । ४ । १७ ॥**

समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात् । पञ्चानां गवां समाहारः पञ्चगवम् ।

**१४४६ विशेषणं विशेष्येण बहुलम् २ । १ । ५७ ॥**

भेदकं भेद्येन समानाधिकरणेन बहुलं प्राग्वत् । नीलमुत्पलं—नीलोत्पलम् । बहुलग्रहणात्क्वचिन्नित्यम् । कृष्णसर्पः । क्वचिन्न । रामो जामदग्न्यः । ( अपरस्यार्धे पश्चभावो वक्तव्यः ) । अपरश्चासावर्धश्च पश्चार्धः ।

---

१—उत्तरपदे परतो दिक्समासोदाहरणमिदम् । २—समाहारे दिक्पूर्वपदसमासो नास्तीति भावः । ३—समासे उदाह्रियत—इत्यर्थः । षाण्मातुर इति । ४—उत्तरपदे परतो विहितस्येत्यर्थः । ५—महाविभाषाधिकारादिति शेषः । ६—उत्तरपदे परतो यौ द्वन्द्वतत्पुरुषौ तयोर्नित्यत्वं वक्तव्यमित्यर्थः । ७—( सङ्ख्यायाः ) उत्तरपदे परत उदाहरणमिदम् । त्रिपदबहुव्रीहौ कृते सति धनशब्दे उत्तरपदे परे पूर्वयोस्तत्पुरुषे टचि, अवादेश इति भावः । अत्र द्वन्द्वतत्पुरुषयोरिति वार्तिके द्वन्द्वस्योदाहरणन्तु वाक् च त्वक् च प्रिया यस्य स 'वाक्त्वचप्रियः' इत्यादि बोध्यम् । ८—त्रिविधः । अर्थात्—तद्धितार्थे विषये, उत्तरपदे च परतः, समाहारे च वाच्ये, इत्येवं त्रिप्रकारो यः सङ्ख्यापूर्वः समास उक्तः स द्विगुरिति ।

**१४४७ सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः २ । १ । ६१ ॥**

समानाधिकरणैः सह समस्यन्ते । सद्वैद्यः ।

**१४४८ आन्महतः समानाधिकरणजातीययोः ६ । ३ । ४६॥**

महावैयाकरणः ।[1]

**१४४९ तत्पुरुषः समानाधिकरणः कर्मधारयः १ । २ । ४२ ॥**

**१४५० पुंवत्कर्मधारयजातीयदेशीयेषु ६ । ३ । ४२ ॥**

कर्मधारये जातीयदेशीययोश्च परतो भाषितपुंस्कात्पर ऊङभावो यस्मिन्तथाभूतं पूर्वं पुंवत् । पूरण्यां प्रियादिष्वप्राप्तः पुंवद्भावो विधीयते । महानवमी[3] । कृष्णाचतुर्दशी । महाप्रिया । पूज्यमानैः किम्—उत्कृष्टो गौः । पङ्कादुद्धृत इत्यर्थः ।

**१४५१ उपमानानि सामान्यवचनैः २ । १ । ५५ ॥**[4]

घनश्यामः ।

**१४५२ उपमितं व्याघ्रादिभिः सामान्याप्रयोगे २ । १ । ५६ ॥**[5]

पुरुषो व्याघ्र इव पुरुषव्याघ्रः । सामान्याप्रयोगे किम् । पुरुषो व्याघ्र इव शूरः । ( शाकपार्थिवादीनां सिद्धये-उत्तरपदलोपश्च ) शाकप्रियः[6]

---

१—महत आकारोऽन्तादेशः स्यात्समानाधिकरणे उत्तरपदे जातीये च परे इत्यर्थः । २—समानाधिकरणानेकपदावयवकस्तत्पुरुषः कर्मधारयसञ्ज्ञको भवतीत्यर्थः । ३—महती चासौ नवमी चेति विग्रहः । "सन्महत्" इत्यादिना समासः, नवानां पूरणी नवमी । 'तस्य पूरणे डट्" 'नान्तादसङ्ख्यादेर्मट्' टित्वात् ङीप् । एवम्—कृष्णा चासौ चतुर्दशी चेति विग्रहः । चतुर्दशानां पूरणी चतुर्दशी । डट्, "नस्तद्धिते" इति टिलोपः, टित्वान् ङीप् । महती चासौ प्रिया चेति कर्मधारयः । ४—उपमानवाचकानि समानधर्मवाचकैः समस्यन्त इत्यर्थः । घन इव श्याम इति विग्रहः, इवशब्दोपादानं विग्रहे स्पष्टप्रतिपत्त्यर्थम् । ५—उपमेयं व्याघ्रादिभिः प्राग्वत्साधारणधर्मस्याऽप्रयोगे सतीत्यर्थः । ६—शाकपार्थिवः, शाकः प्रियो यस्य स शाकप्रियः, शाकप्रियश्चासौ पार्थिव इति बहुव्रीहिगर्भो विशेषणसमासः । उत्तरपदस्य प्रियशब्दस्य लोपः । एवम्—देवाः प्रिया यस्य स देवप्रियः, सचासौ ब्राह्मणश्चेति विग्रहः, देवपूजको ब्राह्मणो वेति विग्रहः ।

पार्थिवः शाकपार्थिवः । देवब्राह्मणः ।

**१४५३ कडाराः कर्मधारये २ । २ । ३८ ॥**

कडारादयः शब्दाः कर्मधारये वा पूर्वं प्रयोज्याः । कडारजैमिनिः । जैमिनिकडारः ।

**१४५४ मयूरव्यंसकादयश्च २ । १ । ७२ ॥**

एते निपात्यन्ते । मयूरो व्यंसको मयूरव्यंसकः, व्यंसको=धूर्तः । उदक् च अवाक् च उच्चावचम् । निश्चितं च प्रचितं च निश्चप्रचम् । नास्ति किञ्चन यस्य सोऽकिञ्चनः । ( आख्यातमाख्यातेन क्रियासातत्ये ) । अश्नीतपिबतेत्येवं सततं यत्राभिधीयते सा अश्नीतपिबता । पचतभृज्जता । खादतमोदता । नास्ति कुतो भयं यस्य सः—अकुतोभयः । अन्यो राजा राजान्तरम् । चिदेव चिन्मात्रम् ।

**१४५५ नञ् २ । २ । ६ ॥**

सुपा प्राग्वत् ।

**१४५६ नँलोपो नञः ६ । ३ । ७३ ॥**

नञो नस्य लोप उत्तरपदे । अब्राह्मणः ।

**१४५७ तस्मान्नुडचि ६ । ३ । ७४ ॥**

लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुट् । अनश्वः । नैकधेत्यादौ तु नश-

---

१–'कडाराः' इति बहुवचननिर्देशात्तदादिग्रहणम् । तदाह मूले **कडारादय** इति । कडारश्चासौ जैमिनिश्चेति विग्रहः । २–उदक्शब्दस्य 'उच्च' इत्यादेशः । अवाक्शब्दस्य 'अवच' आदेशश्च । 'उच्चावचं नैकभेद' मित्यमरः । ३–निश्चितशब्दस्य निश्चाऽऽदेशः । प्रचितशब्दस्य प्रचादेशः । ४–'चन' इत्यव्ययमप्यर्थे । नास्ति किमपि यस्येत्यर्थे बहुव्रीह्यपवादस्त्रिपदस्तत्पुरुषः, नञो नकारस्य लोपश्च निपात्यते । ५–आख्यातम्=तिङन्तम्, क्रियासातत्ये गम्ये तिङन्तं तिङन्तेन समस्यते स तत्पुरुष इत्यर्थः । 'अश्नीतपिबता' इत्यत्र क्रियारूपस्याऽन्यपदार्थस्य प्राधान्यात् स्त्रीत्वाट्टाप् । एवं 'पचतभृज्जता' इत्यादावपि । ६–अत्र बहुव्रीहेरपवादस्तत्पुरुषः । ७–'न' इति लुप्तषष्ठीकं पदं तदाह—**नञो नस्येति** । ८–न अश्वः, इत्यत्र नञो नकारस्य लोपे तत्परिशिष्टाऽकारस्य नुट्, टकार इत्, उकार उच्चारणार्थः, टित्वादाद्यवयव इति । ९–ननु–नैकधेत्यत्र नञ् समासे नकारलोपे 'तस्मान्नु-

ब्देन सह सुप्सुपेति समासः ।

**१४५८ कुगतिप्रादयः २ । २ । १८ ॥**

एते समर्थेन नित्यं समस्यन्ते । कुत्सितः पुरुषः कुपुरुषः ।

**१४५९ ऊर्यादिच्विडाचश्च १ । ४ । ६१ ॥**

ऊर्यादयश्च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसंज्ञाः स्युः । ऊरीकृत्य । शुक्लीकृत्य । पटपटीकृत्य । ( कारिकाशब्दस्योपसंख्यानम् ) । कारिका= क्रिया, कारिकाकृत्य ।

**१४६० अनुकरणं चानितिपरम् १ । ४ । ६२ ।**

खाट्कृत्य । अनितिपरं किम् । खाडितिकृत्वा निरष्ठीवत् ।

**१४६१ आदरानादरयोः सदसती १ । ४ । ६३ ॥**

सत्कृत्य । असत्कृत्य ।

**१४६२ भूषणेऽलम् १ । ४ । ६४ ॥**

अलङ्कृत्य । भूषणे किम्—अलङ्कृत्वौदनं गतः । पर्याप्तमित्यर्थः । अनुकरणमित्यादि त्रिसूत्री स्वभावात्कृञ्विषया ।

**१४६३ अन्तरपरिग्रहे १ । ४ । ६५ ॥**

---

डाचि' इति त्रुटि, अनेकधेत्येव स्यादित्यत आह–नैकधेत्यादौ त्विति । एतदर्थमेव 'नञ्' इति सूत्रे 'नलोपो नञः' इति सूत्रे च ञकारानुबन्धग्रहणमिति ।

१–गतिसञ्ज्ञायां "कुगतिप्रादयः" इति समासे "समासेऽनञ्पूर्वे क्त्वो ल्यप्' 'इति ल्यप् । २–अशुक्लं शुक्लं कृत्वेत्यर्थः । "कृभ्वस्तियोगे" इत्यभूततद्भावे च्विः । गतिसमासे सति क्त्वो ल्यप् । "वेरपृक्तस्ये"ति वलोपः । 'अस्य च्वौ' इति–ईत्वम् । ३–पटपटा इति शब्दं कृत्वेत्यर्थः । 'अव्यक्तानुकरणाद्' इति डाच् 'डाचि बहुलं द्वे भवतः' इति द्वित्वम्, टिलोपः "नित्यमाम्रेडिते डाचि" इति तकारपकारयोः पकार एकादेशः, गतिसमासे क्त्वो ल्यप् । ४–अनुकरणं गतिसञ्ज्ञं स्यात्–इतिपरं वर्जयित्वेत्यर्थः । ५–सदिति, असदिति च अव्यये आदरानादरयोः क्रमेण विद्यमाने गतिसञ्ज्ञके स्त इत्यर्थः । ६–भूषणे विद्यमानमलमित्यव्ययं गतिसञ्ज्ञकं स्यादित्यर्थः । ७–कृञ्योगे एव भवतीत्यर्थः । ८–अपरिग्रहे विद्यमानम् अन्तरित्यव्ययं गतिसञ्ज्ञकं स्यादित्यर्थः ।

अन्तर्हत्य। मध्ये हत्वेत्यर्थः। अपरिग्रहे किम्—अन्तर्हत्वा गतः, हतं परिगृह्य गत इत्यर्थः।

**१४६४ कणे-मनसी श्रद्धाप्रतीघाते १।४।६६॥**

कणेहत्य पयः पिबति। मनोहत्य। कणे-शब्दः सप्तमीप्रतिरूपको निपातोऽभिलाषाऽतिशये वर्तते। मनस्-शब्दोऽप्यत्रैव।

**१४६५ पुरोऽव्ययम् १।४।६७॥**

पुरस्कृत्य।

**१४६६ अस्तं च १।४।६८॥**

अस्तमिति मान्तमव्ययं गतिसंज्ञं स्यात्। अस्तंगत्य।

**१४६७ अच्छ-गत्यर्थवदेषु १।४।६९॥**

अव्ययमित्येव। अच्छगत्य। अच्छोद्य। अभिमुखं गत्वा, उक्त्वा चेत्यर्थः। अव्ययं किम्। जलमच्छं गच्छति।

**१४६८ अदोऽनुपदेशे १।४।७०॥**

अदःकृत्यादःकृतम्। परं प्रत्युपदेशे प्रत्युदाहरणम्। अदः कृत्वा–अदः कुरु।

**१४६९ तिरोऽन्तर्द्धौ १।४।७१॥**

तिरोभूय।

**१४७० विभाषा कृञि १।४।७२॥**

**१४७१ तिरसोऽन्यतरस्याम् ८।३।४२॥**

---

१–कणेशब्दो मनःशब्दश्च श्रद्धाप्रतिघाते=अत्यन्ताभिलाषनिवृत्तौ गतिसञ्ज्ञकौ स्त इत्यर्थः। कणेहत्य पिबति पयः, अत्यन्तमभिलष्य तन्निवृत्तिपर्यन्तं पयः पिबतीत्यर्थः। २–पुर इत्यव्ययं गतिसञ्ज्ञकं स्यादित्यर्थः। गतिसमासे क्त्वो ल्यप्। अव्ययं किम्? (पुरम्, पुरौ,) 'पुरः कृत्वा गतः'। ३–गत्यर्थधातुषु वदधातौ च प्रयुज्यमाने 'अच्छ' इत्यव्ययं गतिसञ्ज्ञं स्यादित्यर्थः। ४–वदधातोः क्त्वा, सम्प्रसारणम्। ५–अदशब्दोऽनुपदेशे गतिसञ्ज्ञः स्यादित्यर्थः। ६–अन्तर्धिः=व्यवधानम्। तत्र तिरस् इत्यव्ययं गतिसञ्ज्ञकं स्यादित्यर्थः। ७–कृञि प्रयुज्यमाने तिरस् इत्यव्ययं गतिसञ्ज्ञं वा स्यादित्यर्थः।

तिरसः सकारो वा स्यात्कुभ्वोः । तिरःकृत्य । तिरस्कृत्य । तिरःकृत्वा ।

**१४७२ उपाजेऽन्वाजे १ । ४ । ७३ ॥**

एतौ कृञि वा गतिसंज्ञौ । उपाजेकृत्य । अन्वाजेकृत्य[1] । उपाजे कृत्वा अन्वाजे कृत्वा । दुर्बलस्य बलमाधायेत्यर्थः ।

**१४७३ साक्षात्प्रभृतीनि च १ । ४ । ७४ ॥**

कृञि वा गतिसंज्ञानि स्युः । ( च्व्यर्थ इति वक्तव्यम् ) । साक्षात्कृत्य[2] । साक्षात्कृत्वा । लवणंकृत्य । लवणं कृत्वा । मान्तत्वं निपातनात् ।

**१४७४ अनत्याधान उरसि-मनसी[3] १ । ४ । ७५ ॥**

उरसिकृत्य । उरसि कृत्वा । अभ्युपगम्येत्यर्थः । मनसिकृत्य । मनसि कृत्वा । निश्चित्येत्यर्थः । अत्याधानमुपश्लेषस्तत्र न । उरसि कृत्वा पाणिं शेते ।

**१४७५ मध्ये पदे निवचने च १ । ४ । ७६ ॥**

एते कृञि गतिसंज्ञा वा स्युरनत्याधाने । मध्येकृत्य । मध्ये कृत्वा । पदेकृत्य । पदे कृत्वा । निवचनेकृत्य । निवचने कृत्वा । वाचं नियम्येत्यर्थः ।

**१४७६ नित्यं हस्ते पाणावुपयमने[4] १ । ४ । ७७ ॥**

कृञि । उपयमनं=विवाहः । स्वीकारमात्रमित्यन्ये । हस्तेकृत्य । पाणौकृत्य ।

**१४७७ प्राध्वं बन्धने[5] १ । ४ । ७८ ।**

प्राध्वमित्यव्ययम् । प्राध्वंकृत्य । बन्धनेनानाकूलं कृत्वेत्यर्थः । प्रार्थनादिना त्वानुकूल्यकरणे-प्राध्वं कृत्वा ।

**१४७८ जीविकोपनिषदावौपम्ये[6] १ । ४ । ७९ ॥**

---

१-उपाजे, अन्वाजे, इत्यव्यये दुर्बलस्य बलाधाने वर्तेते । गतिसमासे क्त्वो ल्यप् । २-अप्रत्यक्षं प्रत्यक्षं कृत्वेत्यर्थः । गतिपक्षे क्त्वो ल्यप् । ३-अनत्याधाने=अनुपश्लेषे 'उरसि' 'मनसि' इति विभक्तिप्रतिरूपके अव्यये गतिसञ्ज्ञे स्त इत्यर्थः । ४-'हस्ते' इति 'पाणौ' इति च शब्दौ कृञि नित्यं गतिसञ्ज्ञौ भवतः उपयमने इत्यर्थः । उपयमने किम् ? 'हस्ते कृत्वा सुवर्णं गतः' । अन्यदीयमिति बुद्ध्या दातुं परावृत्त इत्यर्थः । ५-प्राध्वमित्यव्ययं ननु द्वितीयान्तम् । बन्धने गम्ये प्राध्वमित्यव्ययं गतिसञ्ज्ञकं स्यादित्यर्थः । ६-उपमैव=औपम्यम् । तस्मिन् विषये जीविकाशब्दः, उपनिषच्छब्दश्च कृञो योगे गतिसञ्ज्ञौ स्त इत्यर्थः ।

जीविकामिव कृत्वा—जीविकाकृत्य । औपम्ये किम्—जीविकां कृत्वा । प्रादिग्रहणमगत्यर्थम् । सुपुरुषः । ( प्रादयो गताद्यर्थे प्रथमया ) । प्रगत आचार्यः प्राचार्यः[1] ( अत्यादयः क्रान्ताद्यर्थे द्वितीयया ) । अतिक्रान्तो मालामिति विग्रहे—

**१४७९ एकविभक्ति चापूर्वनिपाते १ । २ । ४४ ॥**

विग्रहे यन्नियतविभक्तिकं तदुपसर्जनं न तु तस्य पूर्वनिपातः ।

**१४८० गोस्त्रियोरुपसर्जनस्य १ । २ । ४८ ॥**

उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वः । [2]अतिमालः । ( अवादयः क्रुष्टाद्यर्थे तृतीयया ) अवक्रुष्टः कोकिलयाऽवकोकिलः । ( पर्यादयो ग्लानाद्यर्थे चतुर्थ्या ) परिग्लानोऽध्ययनाय-पर्यध्ययनः । ( निरादयः क्रान्ताद्यर्थे पञ्चम्या ) निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः ।

**१४८१ तत्रोपपदं सप्तमीस्थम्[3] ३ । १ । ९२ ॥**

**१४८२ उपपदमतिङ् २ । २ । १९ ॥**

उपपदं समर्थेन नित्यं समस्यते । अतिङन्तश्चायं समासः । कुम्भं करोतीति कुम्भकारः । अतिङ् किम् । माभवान्भूत् । माङि लुङिति सप्तमीनिर्देशान्माङुपपदम् । (गतिकारकोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेः) । [4]व्याघ्री ।[5] कच्छपी[6] । अश्वक्रीतीत्यादि ।

१–'एकविभक्ति चा' इति मालाशब्दस्योपसर्जनत्वाद् 'गोस्त्रियो' रिति ह्रस्वः । २–उपसर्जनत्वात् 'गोस्त्रियो' रिति ह्रस्वः । ३–सप्तम्यन्ते पदे कर्मणीत्यादौ वाच्यत्वेन स्थितं यत्कुम्भादि तद्वाचकं पदमुपपदसञ्ज्ञं स्यात्तस्मिंश्च सत्येव वक्ष्यमाणाः प्रत्ययाः । ४–व्याजिघ्रतीति व्याघ्री "आतश्चोपसर्गे" इति कप्रत्ययः । व्याङः ( सुबुत्पत्तेः प्राक् ) घ्रशब्देन गतिसमासः, ततः स्त्रियां जातिलक्षणे ङीष् । अन्यथा ( सुबन्तेन समासे तु ) केवलस्य 'घ्र' शब्दस्य जातिवाचकत्वाऽभावात् जातिलक्षणे ङीष् न स्यात्; किन्तु टाप् स्यात् । ५–कच्छेन पिबतीति कच्छपी, 'क' प्रत्ययः, जातिलक्षणे ङीष्, व्याघ्रीवत् । ६–अश्वेन क्रीता, इति विग्रहः "क्रीतात्करणपूर्वात्" इति ङीष् । अत्रापि सुबुत्पत्तेः प्रागेव समासः । सुबन्तेन समासे तु टाप् स्यात्; नतु ङीष् ।

**१४८३ अमैवाव्ययेन २ । २ । २० ॥**

अमैव तुल्यविधानं यदुपपदं तदेवाव्ययेन सह समस्यते । स्वादुङ्कारम्[1] । 'स्वादुमि णमुल्' इति णमुल् । नेह[2] । 'कालसमयवेलासु तुमुन्' । कालः समयो वेला वा भोक्तुम् । अमैवेति किम् । अग्रे भोजम् । अग्रे भुक्त्वा । विभाषाग्रे प्रथमपूर्वेष्विति क्त्वाणमुलौ । अमा चान्येन च तुल्यविधानमेतत्[3] ।

**१४८४ तृतीयाप्रभृतीन्यन्यतरस्याम् २ । २ । २१ ॥**

उपदंशस्तृतीयायामित्यादीन्युपपदान्यमन्तेनाव्ययेन सह वा समस्यन्ते । मूलकेनोपदंशं भुङ्क्ते । मूलकोपदंशम् । उपदंशस्तृतीयायामिति णमुल् ।

**१४८५ क्त्वा च २ । २ । २२ ॥**

तृतीयाप्रभृतीन्युपपदानि क्त्वान्तेन सह वा समस्यन्ते । उच्चैःकृत्य । उच्चैःकृत्वा ।

**१४८६ अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वा-णमुलौ ३ । ४ । ५९ ॥**

**१४८७ तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः ५ । ४ । ८६ ॥**

संख्याव्ययादेरङ्गुल्यन्तस्य तत्पुरुषस्य समासान्तोऽच् स्यात् । द्वे अङ्गुली प्रमाणमस्य—द्व्यङ्गुलम्[4] । निरङ्गुलम्[5] ।

**१४८८ अहःसर्वैकदेश-संख्यात-पुण्याच्च रात्रेः । ५ । ४ । ८७ ॥**

एभ्यो रात्रेरच् स्यात् । चात्संख्याव्ययादेः । अहर्ग्रहणं द्वन्द्वार्थम्[6] ।

---

१—स्वादुशब्दस्य मान्तत्वं निपातनात्, 'कृन्मेजन्तः' इत्यव्ययत्वम् । २ उपपदसमास इति शेषः । यद्यपि 'कालसमयवेलासु' इति सप्तमीनिर्देशात्कालसमयवेलानामुपपदत्वम्, तथापि कालादीनामुपपदसञ्ज्ञा तुमुना तुल्यविधानैव, नत्वमा । अतस्तेषामुपपदत्वेऽपि न समास इत्यर्थः । ३—अम् प्रत्ययेन क्त्वाप्रत्ययेन च सहोपपदसञ्ज्ञाऽग्रे-प्रथम-पूर्वशब्दानां विहिता, ततश्चोपपदत्वस्याऽमैव तुल्यविधानत्वाभावान्न समास इति भावः । ४— "तद्धितार्थे" इति द्विगुः, "प्रमाणे ल........" इति लुक् । द्व्यङ्गुलिशब्दादचि तस्य तद्धितत्वात्तस्मिन् परे 'यस्येति च' इतीकारलोपः । ५—'निरादयः क्रान्ताद्यर्थे' इति समासः, अच्, इलोपः । ६—'अह्नो रात्रिः' इति षष्ठीतत्पुरुषस्याऽसम्भवादिति ।

**१४८९ रात्राह्नाहाः पुंसि २ । ४ । २९ ॥**

एते पुंस्येव । अहश्च रात्रिश्चाहोरात्रः । सर्वरात्रः । पूर्वरात्रः । संख्यातरात्रः । ( संख्यापूर्वं रात्रं क्लीबम् ) । द्विरात्रम् । अतिरात्रः ।

**१४९० राजाहःसखिभ्यष्टच् ५ । ४ । ९१ ॥**

एतदन्तात्तत्पुरुषाट्टच् । परमराजः । कृष्णसखः ।

**१४९१ अह्नष्टखोरेव ६ । ४ । १४५ ॥**

टिलोपः । परमाहः ।

**१४९२ अह्नोऽह्न एतेभ्यः ५ । ४ । ८८ ॥**

सर्वादिभ्योऽहन्शब्दस्याह्नादेशः समासान्ते परे ।

**१४९३ अह्नोऽदन्तात् ८ । ४ । ७ ॥**

अदन्तपूर्वपदस्थान्निमित्तादह्नो नस्य णः । सर्वाह्णः ।

---

१–द्वन्द्वाद् अच्, इलोपः, 'जातिरप्राणिना' मित्येकवत्वम् । 'सनपुंसक' मिति बाधित्वा 'रात्राह्नाहाः' इति पुंस्त्वम् । २–सर्वा रात्रिरिति विग्रहे 'पूर्वकालैक' इति कर्मधारयः, अच्, इकारलोपः । ३–सूत्रे 'एकदेश' इत्यर्थग्रहणन् । इदं तस्योदाहरणम् । पूर्वं रात्रेरिति विग्रहे 'पूर्वापराधरोत्तरम्' इत्येकदेशिसमासः । अच्, इलोपः, 'रात्राह्नाहाः' इति पुंस्त्वम् । ४–सङ्ख्यातरात्रः, सङ्ख्याता रात्रिरिति विग्रहे कर्मधारयः । 'पुंवत्कर्मधारय' इति पुंवत्वम् । एवं पुण्यरात्रः । ५–तद्धितार्थे इति द्विगुः । सङ्ख्यादित्वादच्, इलोपः 'सङ्ख्यापूर्वं रात्रं क्लीबम्' इति नपुंसकत्वम् । ६–'अत्यादयः क्रान्ताद्यर्थे' इति समासः । अव्ययादित्वादच्, इलोपः, 'रात्राह्नाः' इति पुंस्त्वम् । ७–परमश्चासौ राजा चेति विग्रहः । समासान्तष्टच् 'नस्तद्धिते' इति टिलोपः । एवं महाराजः, धर्मराजः, भोजराजः, इति । ८–कृष्णस्य सखेति विग्रहः । समासान्तष्टच् । यस्य चेति इकारलोपः । ९–एतयोरेव परतोऽह्नष्टिलोपः स्यान्नान्यत्र । टप्रत्यये उदाहरणम् 'परमाहः, इति । परमञ्च तदहश्चेति विशेषणसमासः 'राजाह......' इति टच्, प्रकृतसूत्रेण टिलोपः 'रात्राह्ना' इति पुंस्त्वम् 'खे' उदाहरणन्तु 'द्व्यहीनः' ( क्रतुः' ) इति । १०–सर्वमहरिति विग्रहे 'पूर्वकाल' इति समासे 'राजाहःसखि' इति टच्, अह्नादेशः, णत्वं, पुंस्त्वञ्चेति ।

**१४६४ न संख्यादेः समाहारे ५ । ४ । ८९ ॥**

अह्नोऽह्नादेशो न । द्व्यहः[1][2] ।

**१४६५ उत्तमैकाभ्यां च ५ । ४ । ९० ॥**

अह्नोऽह्नादेशो न । उत्तमशब्दोऽन्त्यार्थः पुण्यशब्दमाह[3] । (पुण्य-सुदिनाभ्यामह्नः क्लीबतेष्टा) । पुण्याहम्[4] । सुदिनाहम्[5] । एकाहः[6] ।

**१४६६ अग्राख्यायामुरसः[7] ५ । ४ । ९३ ॥**

टच् । अश्वानामुर इव अश्वोरसम्[8] । मुख्योऽश्व इत्यर्थः ।

**१४६७ ग्रामकौटाभ्यां च तक्ष्णः ५ । ४ । ९५ ॥**

ग्रामतक्षः[9][10] । कौटतक्षः[11] ।

**१४६८ अतेः शुनः[12] ५ । ४ । ९६ ॥**

अतिश्वो=वराहः[13] ।

**१४६९ उपमानादप्राणिषु ५ । ४ । ९७ ॥**

१—समाहारे वर्त्तमानस्य सङ्ख्यादेरह्नादेशो न स्यादित्यर्थः । २—समाहारे द्विगुः, टच्, 'रात्राह्नाहाः' इति पुंस्त्वम् । सङ्ख्यादित्वात्प्राप्तस्याऽह्नादेशस्य निषेधः । ३—अन्त्यत्वं च पुण्यशब्दस्य "१४८८ अहः सर्वैक-देश..." इति सूत्रनिर्दिष्टं बोध्यम् । ४—पुण्यमहरिति विग्रहे विशेषणसमासः, टच् टिलोपः, 'पुण्यसुदिनाभ्याम्' इति नपुंसकत्वम् । ५—पुण्याहवत् सिद्धिः । ६—एकमहरिति विग्रहे 'पूर्वकाल' इति समासः । टच्, टिलोपः । ७—अग्राख्यायाम्=मुख्ये । अग्रे भवमग्रयम्=मुख्यम् । ८—उरश्शब्देन मुख्यवाचिना षष्ठी-समासः, टच्, "परवल्लिङ्गम्" इति नपुंसकत्वम् । अग्राख्यायां किम् ? देवदत्तोरः । ९—ग्रामकौटाभ्यां परो यस्तक्षन्शब्दस्तदन्तात्तत्पुरुषाद् टच् स्यादि-त्यर्थः । १०—साधारण इत्यर्थः । ग्रामे यावन्तो जनाः सन्ति तावतां विधेय इति भावः । टचि टिलोपः । ११—स्वतन्त्र इत्यर्थः । कुटीमेकां सम्पाद्य तत्र वसति नतु परकीयभूमिप्रदेशे । टचि टिलोपः । १२—अतीत्यव्ययात्परो यः श्वन्शब्दस्तदन्तात्तत्पुरुषाट्टजित्यर्थः । १३—श्वानमतिक्रान्त इति विग्रहः । "अत्यादय" इति समासः, टचि टिलोपः । श्वापेक्षयाधिकवेगवान् वराह इत्यर्थः ।

**१५७९ राजदन्तादिषु परम् २।२।३१॥**

एषु पूर्वप्रयोगार्हं परं स्यात्। दन्तानां राजा राजदन्तः। धर्मादिष्वनियमः। अर्थधर्मौ। धर्मार्थौ। दम्पती। जम्पती। जायापती। जायाशब्दस्य दम्भावो जम्भावश्च वा निपात्यते। आकृतिगणोऽयम्।

**१५८० द्वन्द्वे घि २।२।३२॥**

द्वन्द्वे घिसंज्ञं पूर्वं स्यात्। हरिहरौ।

**१५८१ अजाद्यदन्तम् २।२।३३॥**

[illegible]।

**१५८२ अल्पाच्तरम् २।२।३४॥**

शिवकेशवौ। (ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण)। हेमन्त-शिशिर-वसन्ताः। कृत्तिकारोहिण्यौ। समाक्षराणां किम्—ग्रीष्मवसन्तौ। (लघ्वक्षरं पूर्वम्)। कुशकाशम्। (अभ्यर्हितं च)। तापसपर्वतौ। (वर्णानामानुपूर्व्येण)। ब्राह्मण-क्षत्रिय-विट्-शूद्राः। (भ्रातुर्ज्यायसः)। युधिष्ठिरार्जुनौ।

**१५८३ द्वन्द्वश्च प्राणि-तूर्य-सेनाङ्गानाम् २।४।२॥**

एषां द्वन्द्व एकवत्। पाणिपादम्।

---

१—दन्तशब्दस्य षष्ठीतत्पुरुषेऽप्रधानतयोपसर्जनत्वेऽपि परनिपातः। २—अजाद्यदन्तशब्दस्य पूर्वनिपातनियमे प्राप्ते तदनियमो वक्तव्य इत्यर्थः। ३—हरिश्च हरश्च 'हरिहरौ' हरिशब्दस्य घित्वात्पूर्वनिपातः। ४—अत्र कृष्णस्याऽदन्तत्वेऽपि—अजादित्वाभावान्न पूर्वनिपातः। ५—अल्पसङ्ख्याच्कं पदं द्वन्द्वे पूर्वं प्रयोज्यमित्यर्थः। ६—समानसङ्ख्याच्कानाम् ऋतूनां नक्षत्राणाञ्च द्वन्द्वे आनुपूर्व्येण=क्रमेण निपातो वक्तव्य इत्यर्थः। ७—विषमाक्षरत्वाद्वसन्तस्य न पूर्वनिपातः, किन्तु—अल्पाच्त्वाद् ग्रीष्मस्य पूर्वनिपातः। ८—लघु अक्षरम्=अच् यस्य तत् द्वन्द्वे पूर्वं प्रयोज्यमित्यर्थः। ९—श्रेष्ठः पूर्वं प्रयोज्य इति वक्तव्यमित्यर्थः। पर्वतस्य स्थावरजन्मतया तापसस्य तदपेक्षयाऽभ्यर्हितत्वं बोध्यम्। १०—पाण्योः पादयोश्च समाहार इति विग्रहः। समाहारे एकवत्वं नपुंसकत्वञ्च प्राण्यङ्गोदाहरणमिदम्, **पाणिपादम्**।

मार्दङ्गिकवैणविकम्[1]। रथिकाश्वारोहम्[2]।

**१५८४ अध्ययनतोऽविप्रकृष्टाख्यानाम् २।४।५॥**

अध्ययनेन प्रत्यासन्ना आख्या येषां तेषां द्वन्द्व एकवत्। पदक-क्रमकम्[3]।

**१५८५ जातिरप्राणिनाम् २।४।६॥**

प्राणिवर्ज्यजातिवाचिनां द्वन्द्व एकवत्। धानाशष्कुलि[4]। प्राणिनां तु विट्शूद्राः[5]।

**१५८६ विशिष्टलिङ्गो नदीदेशोऽग्रामाः २।४।७॥**

ग्रामवर्जनदीदेशवाचिनां भिन्नलिङ्गानां द्वन्द्व एकवत्। उध्यश्च इरावती च उध्येरावति। गङ्गाशोणम्[6]। कुरवश्च कुरुक्षेत्रं च कुरुकुरुक्षेत्रम्।

**१५८७ क्षुद्रजन्तवः २।४।८॥**

एषां द्वन्द्व एकवत्। यूकालिक्षम्[7]। आनकुलात्क्षुद्रजन्तवः।

**१५८८ येषां च विरोधः शाश्वतिकः २।४।९॥**

प्राग्वत्। अहिनकुलम्[8]। गोव्याघ्रम्। काकोलूकमित्यादौ परत्वाद्विभाषा वृक्षेति प्राप्तं चकारेण बाध्यते।

**१५८९ शूद्राणामनिरवसितानाम् २।४।१०॥**

---

१–मृदङ्गपणवशब्दौ वाद्यविशेषपरौ। मार्दङ्गिकवैणविकयोः समाहार इति विग्रहः। तूर्याङ्गोदाहरणमिदम्, **मार्दङ्गिकवैणविकम्**। २–रथेन चरन्तीति रथिकाः। "पर्पादिभ्यष्ठन्"। रथिकानामश्वारोहाणाञ्च समाहार इति विग्रहः। सेनाङ्गोदाहरणमिदम्, **रथिकाश्वारोहम्**। ३–पदान्यधीयते पदकाः। क्रमान् अधीयते क्रमकाः। "क्रमादिभ्यो वुन्" पदकानां क्रमकाणाञ्च समाहार इति विग्रहः। ४–धानाश्च शष्कुल्यश्च तासां समाहार इति विग्रहः। जातिवाचित्वादेकवत्त्वम्। नपुंसकत्वाद् ह्रस्व इति भावः। ५–विशश्च शूद्राश्चेति विग्रहः। ६–गङ्गा च शोणश्च=**गङ्गाशोणम्**। ७–यूकाश्च लिक्षाश्चेति विग्रहः। केशबहुले शिरःप्रदेशे स्वेदजा-जन्तुविशेषाः= यूकाः। लिक्षाश्च प्रसिद्धाः। एकवत्त्वं नपुंसकह्रस्वत्वञ्च। ८–**अहिनकुलम्**। अहयो नकुलाश्चेति विग्रहः। अनयोः स्वाभाविको विरोधः प्रसिद्धः। विरोधः=वैरम्। नतु सहानवस्थितिः। तेन 'छायातपौ' इत्यत्र न भवति। 'देवासुराः' इत्यत्र तु नायमेकवद्भावः, तद्विरोधस्य कादाचित्कत्वात्।

अबहिष्कृतानां शूद्राणां द्वन्द्वः प्राग्वत् । तक्षायस्कारम्[1] । पात्राद्बहिष्कृतानां तु चण्डाल-मृतपाः ।

**१५६० गवाश्वप्रभृतीनि च २ । ४ । ११ ॥**

यथोच्चारितानि तथैव साधूनि । गवाश्वम् । दासीदासमित्यादि[2] ।

**१५६१ विभाषा वृक्ष-मृग-तृण-धान्य-व्यञ्जन-पशु-शकुन्यश्व-वडव-पूर्वापराधरोत्तराणाम् २ । ४ । १२ ॥**

वृक्षादीनां सप्तानां द्वन्द्वोऽश्ववडवेत्यादि द्वन्द्वत्रयं च प्राग्वद्वा । वृक्षादौ[3] विशेषाणामेव ग्रहणम् । प्लक्षन्यग्रोधम्[4] । प्लक्षन्यग्रोधाः । रुरुपृषतम्[5] । रुरुपृषताः । कुशकाशम्[6] । कुशकाशाः । व्रीहियवम्[7] । व्रीहियवाः । दधिघृतम्[8] । दधिघृते । गोमाहिषम्[9] । गोमहिषाः । शुकबकम्[10] । शुकबकाः[11] । अश्ववडवम्[12] । अश्ववडवौ । पूर्वापरम् । पूर्वापरे । अधरोत्तरम् । अधरोत्तरे । ( फल-सेना-वनस्पति-मृग-शकुनि-क्षुद्रजन्तु-धान्य-तृणानां बहुप्रकृतिरेव द्वन्द्व एकवदिति वाच्यम् ) बदराणि[13] चामलकानि च बदरामलकम् । नेह[14] । बदरामलके । रथिकाश्वारोहावित्यादि ।

**१५६२ न दधि-पय-आदीनि[15] २ । ४ । १४ ॥**

---

१–तक्षाणश्च अयस्काराश्चेति विग्रहः । २–अत्रैकवत्वनियमः, "पुमान् स्त्रिया" इत्येकशेषस्तु निपातान्न । ३–"स्वं रूपं" इति सूत्रे भाष्य-वार्तिकयोस्तथोक्तत्वादिति भावः । ४–प्लक्षाश्च न्यग्रोधाश्चेति विग्रहः, वृक्ष-द्वन्द्वोदाहरणमिदम् । ५–रुरवश्च पृषताश्चेति विग्रहः, इदं मृगद्वन्द्वोदाहरणम् । ६–कुशाश्च काशाश्चेति विग्रहः । इदं तृणद्वन्द्वोदाहरणम् । ७–व्रीहयश्च यवाश्चेति विग्रहः, धान्यद्वन्द्वोदाहरणमिदम् । ८–दधि च घृतञ्चेति विग्रहः, इदं व्यञ्जनद्वन्द्वोदाहरणम् । ९–गावश्च महिषाश्चेति विग्रहः, इदं पशुद्वन्द्वोदाहरणम् । १०–शुकाश्च बकाश्चेति विग्रहः, इदं शकुनिद्वन्द्वोदाहरणम् । ११–शुकाश्च बकाश्चेति विग्रहः । १२–'पूर्ववदश्ववडवौ' इति पूर्वपदवत्पुंलिङ्गता । १३–'जातिरप्राणिनाम्' इत्येकवत्वम्, बहुवचनान्तावयवकद्वन्द्वात् । १४–बहुवचनान्तावयवकद्वन्द्वाभावान्न 'जातिरप्राणिना'-मित्येकवत्वम् । १५–एषां समाहारद्वन्द्वो नास्तीत्यर्थः ।

न एकवत्स्युः । दधिपयसी । इध्माबर्हिषी, निपातनाद्दीर्घः । ऋक्सामे वाङ्मनसे ।

**१५६३ आनङ् ऋतो द्वन्द्वे ६ । ३ । २५ ॥**

विद्यायोनिसम्बन्धवाचिनां ऋदन्तानां द्वन्द्वे आनङ् स्यादुत्तरपदे। होतापोतारौ । मातापितरौ । पुत्रे इत्यनुवृत्तेः–पितापुत्रौ ।

**१५६४ देवताद्वन्द्वे च ६ । ३ । २६ ॥**

इहोत्तरपदे पूर्वपदस्यानङ् । मित्रावरुणौ । ( वायोः प्रयोगे प्रतिषेधः ) अग्निवायू । वाय्वग्नी ।

**१५६५ ईदग्नेः सोमवरुणयोः ६ । ३ । २७ ॥**

देवताद्वन्द्व इत्येव ।

**१५६६ अग्नेः स्तुत्–स्तोम–सोमाः ८ । ३ । ८२ ॥**

अग्नेः परेषामेषां सस्य षः समासे । अग्निष्टुत् । अग्निष्टोमः । अग्नीषोमौ । अग्नीवरुणौ ।

**१५६७ इद् वृद्धौ ६ । ३ । २८ ॥**

वृद्धिमत्युत्तरपदे अग्नेरिदादेशो देवताद्वन्द्वे । अग्नीमरुतौ देवते अस्य आग्निमारुतं कर्म । अग्नीवरुणौ देवते अस्य आग्निवारुणम्, देवताद्वन्द्वे चेत्युभयपदवृद्धिः । ( विष्णौ न ) । आग्नावैष्णवम् ।

**१५६८ दिवो द्यावा ६ । ३ । २९ ॥**

---

१–दधि च पयश्चेति विग्रहः । इध्मम्=समित् च बर्हिश्चेति विग्रहः । इध्मशब्दस्य निपातनाद्दीर्घः । २–ऋक् च साम चेति विग्रहः । वाक् च मनश्चेति विग्रहः । उभयत्रापि "अचतुर..." इत्यादिनाऽच समासान्तः । ३–होता पोता चेति विग्रहः, इदं विद्यासम्बन्धोदाहरणम् । एवम्—माता च पिता च, इदं योनिसम्बन्धोदाहरणम् । ४–वायुशब्दस्य पूर्वपदत्वेनोत्तरपदत्वेन वा प्रयोगे सति आनङः प्रतिषेधो वक्तव्य इत्यर्थः । ५–अग्निष्टुत् =क्रतुविशेषः । अग्निष्टोमः=स्तोत्रविशेषस्य संस्थाविशेषस्य च नाम । अग्नीवरुणौ–अग्निश्च वरुणश्चेति विग्रहः । ईत्वम् । ६–विष्णुशब्दे परेऽग्नेरिकारो नेति वक्तव्यमित्यर्थः, **आग्नावैष्णवम्** इत्वाभावे पूर्वपदस्याऽऽनङ् ।

देवताद्वन्द्वे उत्तरपदे । द्यावाभूमी[1] ।

**१६९९ मातरपितरावुदीचाम् ६ । ३ । ३२ ॥**

उदीचां किम्—मातापितरौ[2] ।

**१६०० द्वन्द्वाच्चु-द-ष-हान्तात्समाहारे ५ । ४ । १०६ ॥**

चवर्गान्ताद्-ष-हान्ताच्च द्वन्द्वाट्टच् समाहारे । वाक्त्वचम्[3] । त्वक्स्रजम् । शमीदृषदम् । वाक्त्विषम् । छत्रोपानहम् । समाहारे किम्—प्रावृट्शरदौ[4] ।

॥ इति द्वन्द्वसमासः ॥

## अथैकशेषः ।

( विरूपाणामपि समानार्थानाम्[5] ) । वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डौ । कुटिलदण्डौ ।

**१६०१ वृद्धो यूना तल्लक्षणश्चेदेव विशेषः १ । २ । ६५ ॥**

यूना सहोक्तौ गोत्रं शिष्यते गोत्रयुवप्रत्ययमात्रकृतं चेत्तयोः कृत्स्नं वैरूप्यं स्यात् । गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ[6] । वृद्धः किम् । गर्गगार्ग्यायणौ[7] । यूना किम् । गर्गगार्ग्यौ[8] । कृत्स्नं किम् । गार्ग्यवात्स्यायनौ[9] ।

**१६०२ स्त्रीपुंवच्च १ । २ । ६६ ॥**

---

१—द्यौश्च भूमिश्चेति विग्रहः । २—उदीचां मतेऽनङ् । तदभावे 'आनङ् ऋत' इत्यानङ् । ३—वाक् च त्वक् चेति समाहारद्वन्द्वः । क्रमेणोदाहरणानि । विग्रहास्तु स्पष्टा एव । ४—प्रावृट् च शरच्चेति विग्रहः । इतरेतरयोगद्वन्द्वान्न टजिति भावः । ॥ इति द्वन्द्वसमासः ॥

५—एकार्थकत्वे विरूपाणामप्येकशेषो वक्तव्य इत्यर्थः । ६—अत्र गार्ग्यशब्दस्य गार्ग्यायणशब्दस्य च गोत्रयुवप्रत्ययकृतमेव वैरूप्यमिति गोत्रप्रत्ययान्तो गार्ग्यशब्दः शिष्यते—इति भावः । ७—अत्र गर्गशब्दस्य गार्ग्यायणशब्दस्य च युवप्रत्ययमात्रकृतवैरूप्येऽपि गोत्रप्रत्ययान्तत्वाभावान्नैकशेष इति भावः । ८—अत्र गर्गशब्दस्य गार्ग्यशब्दस्य च गोत्रप्रत्ययमात्रकृतवैरूप्येऽपि गोत्रप्रत्ययान्तो गार्ग्यशब्दो न शिष्यते, यूना सहोक्त्या अभावादिति भावः । ९—अत्र गार्ग्यशब्दस्य वात्स्यायनशब्दस्य च न गोत्रयुवप्रत्ययमात्रकृतं वैरूप्यम्, प्रकृतिवैरूप्यस्य गोत्रयुवप्रत्ययमात्रकृतत्वाभावाद् अतो गोत्रप्रत्ययान्तो गार्ग्यशब्दो न शिष्यत इति भावः ।

यूना सहोक्तौ वृद्धा स्त्री शिष्यते तदर्थश्च पुंवत्। गार्गी च गार्ग्यायणौ च गर्गाः।

**१६०३ पुमान्स्त्रिया १।२।६७॥**

स्त्रिया सहोक्तौ पुमान् शिष्यते तल्लक्षण एव विशेषश्चेत्। हंसी च हंसश्च हंसौ।

**१६०४ भ्रातृपुत्रौ स्वसृदुहितृभ्याम् १।२।६८॥**

भ्राता च स्वसा च भ्रातरौ। पुत्रश्च दुहिता च पुत्रौ।

**१६०५ नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् १।२।६९॥**

अक्लीबेन सहोक्तौ क्लीबं शिष्यते तच्च वा एकवत् स्यात्तल्लक्षण एव विशेषश्चेत्। शुक्लः पटः, शुक्ला शाटी, शुक्लं वस्त्रम्, तदिदं शुक्लम्। तानीमानि शुक्लानि।

**१६०६ पिता मात्रा १।२।७०॥**

मात्रा सहोक्तौ पिता वा शिष्यते। माता च पिता च पितरौ, मातापितरौ।

**१६०७ श्वशुरः श्वश्र्वा १।२।७१॥**

सहोक्तौ वा शिष्यते। श्वशुरौ। श्वश्रूश्वशुरौ।

**१६०८ त्यदादीनि सर्वैर्नित्यम् १।२।७२॥**

सर्वैः सहोक्तौ त्यदादीनि शिष्यन्ते। स च देवदत्तश्च तौ। (त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते)। स च यश्च यौ। (पूर्वशेषोऽपि

---

१-तस्य=शिष्यमाणस्य स्त्रीवाचकगोत्रप्रत्ययान्तस्याऽर्थः पुमानिव स्यादित्यर्थः। २-गर्गस्यापत्यं स्त्रीत्यर्थः। गर्गादियञन्तात् 'यञश्च' इति ङीप्। गर्गाद्यञन्ताद् यून्यपत्ये 'यञिञोश्चेति' फक्, आयन्। अत्र स्त्रीत्वकृतवैरूप्याधिक्येऽपि गोत्रप्रत्ययान्तः स्त्रीवाचको गार्गीशब्दः शिष्यते, स पुंवत्, यञो लुक्। ३-स्वसृदुहितृभ्यां सहोक्तौ क्रमाद् भ्रातृपुत्रौ शिष्येते-इत्यर्थः। ४-नपुंसकत्वानपुंसकत्वमात्रकृतवैरूप्यश्चेदित्यर्थः। ५-"पुमान् स्त्रिया" इत्यत्र स्वरूपाणामित्यनुवृत्तेरप्राप्तौ वचनमिदं विकल्पार्थञ्च। ६-त्यदादिगणे यत्परं पठितं तच्छिष्यत इत्यर्थः। शब्दपरविप्रतिषेधाश्रयणादिति भावः। ७-परशब्दस्येष्टवाचित्वात्क्वचित्पूर्वमपि शिष्यत इति भावः।

दृश्यते ) इति भाष्यम् । स च यश्च तौ । ( त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि )[1] । सा च देवदत्तश्च तौ । तच्च देवदत्ता च यज्ञदत्तश्च तानि ।

**१६०९ ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री १ । २ । ७३ ॥**

एषु सह विवक्षायां स्त्री शिष्यते[2] । गाव इमाः । ग्राम्येति किम् । रुरव[3] इमे । पशुग्रहणं किम् । ब्राह्मणाः[4] । सङ्घेषु किम् । एतौ गावौ[5] । अतरुणेषु किम् । वत्सा[6] इमे । ( अनेकशफेष्विति वाच्यम् ) । अश्वा[7] इमे । इत्येकशेषः ।

# अथ समासान्ताः ।

**१६१० ऋक्पूरब्धूःपथामानक्षे ५ । ४ । ७४ ॥**

ऋगाद्यन्तस्य[8] समासस्य अप्रत्ययोऽन्तावयवः, अक्षे या धूस्तदन्तस्य न । अर्धर्चः[9] । (अनृचबह्वृचावध्येतर्येव)[10] । नेह । अनृक्[11]=साम । बह्वृक्[12]=सूक्तम् । विष्णुपुरम् । विमलापं=सरः ।

**१६११ द्व्यन्तरुपसर्गेभ्योऽप ईत्[13] ६ । ३ । ९७ ॥**

---

१–त्यदादीनां स्त्रीशेषेऽपि सह विवक्षितेषु यः पुमान् यच्च नपुंसकं तद्वशेन लिङ्गप्रतिपादकानि भवन्तीत्यर्थः । २–'पुमान् स्त्रिया' इत्येतद् बाधित्वा स्त्री शिष्यत इति भावः । ननु स्त्रीशेषे पुंशेषे न कोऽपि रूपभेद इत्यत आह—**इमा** इति । ३–रुरुः=कृष्णाख्यो मृगः । अग्राम्यपशुत्वान्न स्त्री शिष्यते । ४–अपशुत्वान्न स्त्री शिष्यते । ब्राह्मणी च ब्राह्मणाश्चेति विग्रहः ५–असङ्घत्वान्न स्त्री शिष्यते । ६–तरुणत्वान्न स्त्री शिष्यते । ७–एकशफत्वान्न स्त्री शिष्यते । ॥ इत्येकशेषः ॥

८–ऋक्, पुर्, अप्, धुर्, पथिन्, एतदन्तस्येत्यर्थः । ९–ऋचोऽर्धमिति विग्रहः । 'अर्धं नपुंसक'मिति समासः, अकारः समासान्तः, 'अर्धर्चाः पुंसि च' इति पुंस्त्वम् । १०–अविद्यमाना ऋचो यस्येति विग्रहः । **अनृचः**=केवलयजुरध्येता । बहव ऋचो यस्येति **बह्वृचः**=ऋक्शाखी । इत्युदाहरणम् । ११–अविद्यमाना ऋचो यस्मिन्निति विग्रहः । ऋच्यनध्यूढं प्रजापतेर्हृदयंसाम । १२–बहव ऋचो यस्मिन्निति विग्रहः । १३–द्वि–अन्तर्–उपसर्ग–एतेभ्यः परस्याऽप–शब्दस्याऽप्रत्ययान्तस्याऽकारस्य ईत्स्यादित्यर्थः । 'आदेः परस्य ।

द्वीपम्[१] । अन्तरीपम् । प्रतीपम् । समीपम् । (अवर्णान्ताद्वा[२]) । प्रेपम् । प्रापम् ।

**१६१२ ऊदनोर्देशे[३] ६ । ३ । ९८ ॥**

अनूपो=देशः । राजधुरा । अक्षे तु-अक्षधूः । दृढधूरक्षः । सखिपथः । रम्यपथो=देशः ।

**१६१३ अच्प्रत्यन्ववपूर्वात्सामलोम्नः[५] ५ । ४ । ७५ ॥**

प्रतिसामम्[६] । अनुसामम् । अवसामम् । प्रतिलोमम् । अवलोमम् । (कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरजिष्यते) कृष्णभूमः[७] । उदग्भूमः । पाण्डुभूमः । द्विभूमः । त्रिभूमः=प्रासादः । (संख्याया नदीगोदावरीभ्यां च[८]) पञ्चनदम्[९] । सप्तगोदावरम् । अजिति योगविभागादन्यत्रापि-पद्मनाभः[१०] ।

**१६१४ अक्ष्णोऽदर्शनात् ५ । ४ । ७६ ॥**

अचक्षुःपर्यायादक्ष्णोऽच् स्यात् । गवामक्षीव गवाक्षः ।

**१६१५ अचतुर-विचतुर-सुचतुर-स्त्रीपुंस-धेन्वनडुहर्क्-साम-वाङ्मनसाक्षिभ्रुव-दारगवोर्वष्ठीव-पदष्ठीव-नक्तन्दिव-**

---

१-द्वयोः पार्श्वयोर्गता आपो यस्मिन्निति विग्रहः । अन्तर्गता आपो यत्र, प्रतिकूला आपो यस्मिन्, सङ्गता आपो यत्र, इति विग्रहाः । २-अवर्णान्तादुपसर्गात्परस्याऽपस्य (अप्रत्ययान्तस्य) ईत्वं वा वक्तव्यमित्यर्थः । परागता आपो यस्येति विग्रहः । ३-अनोः परस्याऽपस्य ऊत्स्याद्देशे । ईत्वस्यापवादः । ४-अनुकूला आपो यस्मिन्निति विग्रहः । ५-एतत्पूर्वात्सामलोमान्तात्समासादच् स्यादित्यर्थः । ६-प्रतिगतं साम, अनुगतं साम, अवकृष्टं साम, प्रतिगतं लोम, अनुगतं लोम, अवगतं लोम, इति विग्रहाः, सर्वत्र-अच् प्रत्ययः, 'नस्तद्धिते' इति टिलोपः । ७-कृष्णा भूमिर्यस्य, उदीची भूमिर्यस्य, पाण्डुर्भूमिर्यस्य, द्वे भूमी यस्य, तिस्रो भूमयो यस्येति विग्रहाः । ८-सङ्ख्यायाः परो यो नदीशब्दो गोदावरीशब्दश्च ताभ्यामजिष्यते-इत्यर्थः । ९-पञ्चानां नदीनां समाहारः, सप्तानां गोदावरीणां समाहारः, इति विग्रहौ । "नदीभिश्च" इत्यव्ययीभावः । अचि, यस्येति च ईकारलोपः । 'नाव्ययीभावात्' इत्यम् । १०-पद्मं नाभौ यस्येति विग्रहः । वस्तुतस्तु योगविभागस्य भाष्येऽदर्शनात्पृषोदरादित्वमेवोचितमिति ।

सुकेशमानिनी।

**१५३३ जातेश्च ६।३।४१॥**

न पुंवत्। ब्राह्मणीभार्यः। शूद्राभार्यः।

**१५३४ संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये २।२।२५॥**

संख्येयार्थया संख्ययाऽव्ययादयः समस्यन्ते स बहुव्रीहिः।

**१५३५ बहुव्रीहौ संख्येये डजबहुगणात् ५।४।७३॥**

संख्येये यो बहुव्रीहिस्तस्माड्डच् समासान्तः। दशानां समीपे ये सन्ति ते उपदशाः। अबहुगणात् किम्। उपबहवः। उपगणाः।

**१५३६ ति विंशतेर्डिति ६।४।१४२॥**

विंशतेर्भस्य टेर्लोपो डिति। आसन्नविंशाः। विंशतेरासन्ना इत्यर्थः। अदूरत्रिंशाः। अधिकचत्वारिंशाः। द्वौ वा त्रयो वा—द्वित्राः।

**१५३७ दिङ्नामान्यन्तराले २।२।२६॥**

दिशो नामान्यन्तराले वाच्ये प्राग्वत्। दक्षिणस्याः पूर्वस्याश्च दिशो यदन्तरालं—दक्षिणपूर्वा।

**१५३८ तत्र तेनेदमिति सरूपे २।२।२७॥**

---

१—सुकेशीं मन्यते इत्यर्थे 'मनश्च' इति णिनिः, उपधावृद्धिः, उपपदसमासः, सुपो लुक्। पुंवत्वे ङीषो निवृत्तिरिति भावः। २—जातेः परो यः स्त्रीप्रत्ययस्तदन्तं न पुंवदित्यर्थः। ३—नवैकादश वेत्यर्थः। 'नस्तद्धिते' इति टिलोपः। ४—बहूनां समीपे ये सन्ति, गणानां समीपे ये सन्ति, इति विग्रहौ। 'बहुगणवतुडति सङ्ख्या' इति सङ्ख्यात्वात्समासः। ५—विंशतिसङ्ख्यासन्नसङ्ख्यावन्त इत्यर्थः। ६—त्रिंशतोऽदूरा इति विग्रहः। डचि टिलोपः। ७—'द्व्यष्टनः सङ्ख्यायाः' मिति सूत्रादधस्तादस्य सिद्धिर्द्रष्टव्या। ८-समस्यन्ते, सच बहुव्रीहिरित्यर्थः। ९—स्त्रीत्वं लोकात्। यद्वा—अन्तरालमिह दिगेव गृह्यते 'सर्वनाम्नो वृत्तिमात्रे पुंवत्वम्' इति भाष्यम्। यद्यपि—उपसर्जनत्वान्न सर्वनामत्वम्। तथापि भूतपूर्वगत्या सर्वनामत्वमादाय पुंवत्वं भवति दक्षिणाशब्दस्य।

सप्तम्यन्ते ग्रहणविषये[1] सरूपोपपदे तृतीयान्ते च प्रहरणविषये[2] इदं युद्धं प्रवृत्तमित्यर्थे समस्येते कर्मव्यतिहारे।

**१५३९ इच् कर्मव्यतिहारे ५।४।१२७॥**

**१५४० अन्येषामपि दृश्यते ६।३।१३७॥**

दीर्घः। केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तं-केशाकेशि[3]। दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तं दण्डादण्डि। मुष्टीमुष्टि।

**१५४१ तेन सहेति तुल्ययोगे २।२।२८॥**

तुल्ययोगे वर्तमानं सहेत्यन्तं तृतीयान्तेन प्राग्वत्।

**१५४२ वोपसर्जनस्य ६।३।८२॥**

बहुव्रीहेरवयवस्य सहस्य सः स्याद्वा। पुत्रेण सह-सपुत्रः सहपुत्रो वागतः।

**१५४३ प्रकृत्याशिषि ६।३।८३॥**

सहशब्दः[4]। स्वस्ति राज्ञे सहपुत्राय सहामात्याय। (अगोवत्सहलेष्विति वक्तव्यम्)। सगवे। सवत्साय। सहलाय।

**१५४४ बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् ५।४।११३॥**

स्वाङ्गवाचिनः सक्थ्यन्ताद्बहुव्रीहेः षच्। दीर्घसक्थः[5]। जलजाक्षी[6]। स्वाङ्गात्किम्। दीर्घसक्थि[7]=शकटम्। स्थूलाक्षा[8]=वेणुयष्टिः। अक्ष्णोऽदर्शनादिति वक्ष्यमाणोऽच्।

**१५४५ द्वित्रिभ्यां ष मूर्ध्नः ५।४।११५॥**

१-गृह्यतेऽस्मिन्निति ग्रहणं=केशादि, अधिकरणे ल्युट्, तद्विषयो वाच्यं ययोस्ते, ग्रहणविषये=ग्रहणवाचके—इति यावत्। २-प्रह्रियतेऽनेनेति प्रहरणं=दण्डादि, तद्विषयो वाच्यं ययोस्ते, प्रहरणविषये=प्रहरणवाचके इति यावत्। ३-अव्ययत्वात् सुपो लुगिति भावः। एवमग्रेऽपि। ४-सहशब्दः प्रकृत्या स्यादाशिषि इत्यर्थः। ५-षच् प्रत्ययः 'यस्येति च' इतीकारलोपः। ६-जलजे इवाऽक्षिणी यस्या इति विग्रहः। समासे षचि 'नस्तद्धिते' इति टिलोपः, षित्वात् ङीष्। षित्वं ङीषर्थमिति भावः। ७-दीर्घे सक्थिनी (सक्थिसदृशौ ईषादण्डौ) यस्येति विग्रहः। प्राणिस्थस्यैवाङ्गसञ्ज्ञेति न षच्। ८-स्थूलानि अक्षाणि=पर्वग्रन्थयो यस्या इति विग्रहः। अस्वाङ्गत्वादिह न षच् इति भावः।

आभ्यां मूर्ध्नः षः स्याद्बहुव्रीहौ। द्विमूर्धः। त्रिमूर्धः।[1]

**१५४६ अन्तर्बहिर्भ्यां च लोम्नः ५। ४। ११७॥**

अप् स्यात्। अन्तर्लोमः। बहिर्लोमः।[2]

**१५४७ पादस्य लोपोऽहस्त्यादिभ्यः ५। ४। १३८॥**

हस्त्यादिवर्जितादुपमानात्परस्य पादस्य लोपः। व्याघ्रस्येव पादौ यस्य-व्याघ्रपात्।[3] अहस्त्यादिभ्यः किम्। हस्तिन इव पादौ यस्य-हस्तिपादः। कुसूलपादः।

**१५४८ संख्यासुपूर्वस्य ५। ४। १४०॥**

पादशब्दस्य लोपः। द्विपात्[4]। सुपात्।

**१५४९ उद्विभ्यां काकुदस्य ५। ४। १४८॥**

लोपः। उत्काकुत्[5]। विकाकुत्।

**१५५० पूर्णाद्विभाषा ५। ४। १४९॥**[6]

पूर्णकाकुत्। पूर्णकाकुदः।

**१५५१ सुहृद्दुर्हृदौ मित्रामित्रयोः ५। ४। १५०॥**

सुहृन्मित्रम्।[7] दुर्हृदमित्रः। (नेतुर्नक्षत्रे अब्वक्तव्यः)[8]। मृगो नेता यासां रात्रीणां ताः मृगनेत्राः=रात्रयः।

**१५५२ अच् नासिकायाः संज्ञायां नसं चास्थूलात् ५। ४। ११८॥**

नासिकान्ताद्बहुव्रीहेरच् नासिकाशब्दश्च नसं प्राप्नोति न तु स्थूलपूर्वात्।

---

१—द्वौ मूर्धानौ यस्य, त्रयो मूर्धानो यस्येति विग्रहौ। 'नस्तद्धिते इति टिलोपः। २—अन्तः लोमानि यस्येति विग्रहः। अप् प्रत्ययः टिलोपः। एवं बहिर्लोमः। ३—व्याघ्रपादाविव पादावस्येति विग्रहः। 'सप्तम्युपमानपूर्वपदस्ये'ति समासः। ४—द्वौ पादावस्येति, शोभनौ पादावस्येति विग्रहौ। ५—उद्, विभ्यां परस्य काकुदस्य लोपो वा स्याद्बहुव्रीहावित्यर्थः। उन्नतं काकुदं=तालु यस्येति विग्रहः। ६—पूर्णात्परस्य काकुदस्य लोपो वा स्यादित्यर्थः। पूर्णं काकुदं यस्येति विग्रहः। ७-सुदुर्भ्यां हृदयस्य हृद्भावो निपात्यते। शोभनं हृदयं यस्येति विग्रहः। ८—नक्षत्रे विद्यमानो यो नेतृशब्दस्तदन्ताद्बहुव्रीहेरप्—वक्तव्य इत्यर्थः। मृगः=मृगशीर्षम्। नेता=नायकः। मृगनेतृशब्दादप्, यण्, टाप्।

**१५५३ पूर्वपदात्संज्ञायामगः ८ । ४ । ३ ॥**

पूर्वपदस्थान्निमित्तात्परस्य नस्य णो न तु गकारव्यवधाने । द्रुरिव नासिका यस्य द्रुणसः[1] । ( खुरखराभ्यां वा नस् )[2] । खुरणाः । खरणाः । पक्षे अजपीष्यते । खुरणसः । खरणसः ।

**१५५४ उपसर्गाच्च ५ । ४ । ११९ ॥**

उन्नसः[3] । ( वेर्ग्रो वक्तव्यः )[4] । विगता नासिकाऽस्य—विग्रः । ( ख्यश्च )* । विख्यः ।

**१५५५ नञ्-दुः-सुभ्यो हलि-सक्थ्योरन्यतरस्याम् ५ । ४ । १२१ ॥**

अच् वा स्यात् । अहलः[5] । अहलिः । असक्थः । असक्थिः । एवं दुःसुभ्याम् । शक्त्योरिति पाठान्तरम् । अशक्तः । अशक्तिः ।

**१५५६ नित्यमसिच् प्रजामेधयोः[6] ५ । ४ । १२२ ॥**

नञ्दुःसुभ्य एव । अप्रजाः[7] । अमेधाः । दुर्मेधाः । सुमेधाः ।

**१५५७ धर्मादनिच् केवलात् ५ । ४ । १२४ ॥**

---

१—बहुव्रीहेरच्, नासिकाशब्दस्य नसादेशः, णत्वम् । द्रुरिव=वृक्ष इव । २—खुरखराभ्यां परस्य नासिकाशब्दस्य बहुव्रीहौ सञ्ज्ञायां नसादेशो वा वक्तव्य इत्यर्थः । खुराविव नासिके यस्येति विग्रहः । नसादेशः, पूर्वपदादिति णत्वम्, "अत्वसन्तस्य" इति दीर्घः । खररूपा नासिका यस्येति विग्रहः, खुरणाः, खरणाः । ३—प्रादेर्यो नासिकाशब्दस्तदन्ताद्बहुव्रीहेरच्, नासिकाया नसादेशश्च उन्नता नासिका यस्येति विग्रहः, उन्नसः । ४—वेः परो यो नासिकाशब्दः स ग्रादेशम्प्राप्नोतीति भावः । विगता नासिका यस्येति विग्रहः, विग्रः । ५—अविद्यमानो हलिर्यस्येति विग्रहः, अहलः । अचि, यस्येति चेतीकारलोपः, एवमग्रेऽपि । ६—एतेभ्यः पराभ्यां प्रजामेधाशब्दाभ्यां नित्यमसिच् समासान्तः स्यात् स तद्धित इत्यर्थः । असिचः चकार इत्, इकार उच्चारणार्थः । ७—अविद्यमाना प्रजा यस्येति सः—अप्रजाः । 'नञोऽस्त्यर्थाना'मिति समासः । असिचि यस्येति चेत्याकारलोपः 'प्रजस्' शब्दः । तस्मात्सौ 'अत्वसन्तस्ये'ति दीर्घः, 'हल्ङ्याप्' इति सुलोपः । एवं प्रायोऽग्रेऽपि । *—नासिकायाः ख्यादेशश्च भवतीत्यर्थः ।

केवलपूर्वपदाद्यो धर्मशब्दस्तदन्ताद्बहुव्रीहेरनिच् । कल्याणधर्मा । केवलात् किम्—परमः स्वो धर्मो यस्येति त्रिपदे बहुव्रीहौ मा भूत् । परमस्वधर्मः । १५३६ इच्कर्मव्यतिहारे—केशाकेशि । मुसलामुसलि ।

**१५५८ प्रसंभ्यां जानुनोर्ज्ञुः ५ । ४ । १२९ ॥**

प्रज्ञुः । संज्ञुः ।

**१५५९ ऊर्ध्वाद्विभाषा ५ । ४ । १३० ॥**

ऊर्ध्वज्ञुः । ऊर्ध्वजानुः ।

**१५६० ऊधसो नङ् ५ । ४ । १३१ ॥**

कुण्डोध्नी ।

**१५६१ धनुषश्च ५ । ४ । १३२ ॥**

धनुरन्ताद्बहुव्रीहेरनङादेशः । शार्ङ्गधन्वा ।

**१५६२ वा संज्ञायाम् ५ । ४ । १३३ ॥**

शतधन्वा । शतधनुः ।

**१५६३ जायाया निङ् ५ । ४ । १३४ ॥**

जायान्तस्य बहुव्रीहेर्निङादेशः ।

**१५६४ लोपो व्योर्वलि ६ । १ । ६६ ॥**

---

१—कल्याणो धर्मो यस्येति विग्रहः । अनिचि "यस्येति च" इत्यकारस्य लोपः । सौ 'सर्वनामस्थाने' इति दीर्घः, **कल्याणधर्मा** । २—आभ्यां परयोर्जानुशब्दयोर्ज्ञुरादेशः स्याद्बहुव्रीहावित्यर्थः । प्रगते जानुनी यस्य, संगते जानुनी यस्येति विग्रहौ 'प्रादिभ्यो धातुजस्य' इति समासः, **प्रज्ञुः**, **सञ्ज्ञुः** । ३—ऊर्ध्वशब्दात्परो यो जानुशब्दः तस्य ज्ञुरादेशो वा स्याद्बहुव्रीहौ इत्यर्थः । ऊर्ध्वे जानुनी यस्येति विग्रहः, **ऊर्ध्वज्ञुः** । ४—ऊधोऽन्तस्य बहुव्रीहेरनङादेशः स्यात्स्त्रियाम् । कुण्डमिव ऊधो यस्या इति विग्रहः । अनङि कृते 'बहुव्रीहेरूधसः' इति ङीषि "अल्लोपोऽनः" इति भावः, **कुण्डोध्नी** । ५—शार्ङ्गधनुश्शब्दे सकारस्यानङ्, ङकार इत्, अकार उच्चारणार्थः । उकारस्य यण्, दीर्घो नलोपश्चेति भावः, **शार्ङ्गधन्वा** । ६—'धनुषश्च' इत्युक्तोऽनङ् सञ्ज्ञायां वा स्यादित्यर्थः, **शतधन्वा**=राजविशेषः ( स्यमन्तकोपाख्याने प्रसिद्धः ) ।

युवतिर्जाया यस्य युवजानिः ।

**१५६५ गन्धस्येदुत्-पूति-सु-सुरभिभ्यः ५ । ४ । १३५ ॥**

उद्गन्धिः । पूतिगन्धिः । सुगन्धिः ।

**१५६६ उपमानाच्च ५ । ४ । १३७ ॥**

पद्मस्येव गन्धोऽस्य-पद्मगन्धिः ।

**१५६७ वयसि दन्तस्य दतृ ५ । ४ । १४१ ॥**

संख्यासुपूर्वस्येत्येव । द्विदन् । चतुर्दन् ।

**१५६८ अग्रान्त-शुद्ध-शुभ्र-वृष-वराहेभ्यश्च ५ । ४ । १४५ ॥**

एभ्यो दन्तस्य दतृ वा । कुड्मलाग्रदन्तः । कुड्मलाग्रदन् ।

**१५६९ उरःप्रभृतिभ्यः कप् ५ । ४ । १५१ ॥**

व्यूढोरस्कः । प्रियसर्पिष्कः । ( अर्थान्नञः ) अनर्थकम् । नञः किम् । अपार्थम् ।

**१५७० इनः स्त्रियाम् ५ । ४ । १५२ ॥**

१-**युवजानिः**-युवतिशब्दस्य पुंवत्वात् तिप्रत्ययस्य निवृत्तिः, नलोपः । २-उत्, पूति, सु, सुरभि, एतेभ्यो गन्धस्येकारोऽन्तादेशः स्यादित्यर्थः । ३-उद्गतो गन्धो यस्य, स **उद्गन्धिः** । पूतिः=असुरभिर्गन्धो=यस्य, सः=**पूतिगन्धिः** । शोभनो गन्धो यस्य सः=**सुगन्धिः** । सर्वत्र 'वायुः' इति विशेष्यम् । ४-उपमानवाचिपूर्वपदात्परस्यापि गन्धशब्दस्य इकारोन्तादेशः स्याद्बहुव्रीहावित्यर्थः । सप्तम्युपमानपूर्वपदस्येति समासः । ५-सङ्ख्यासुपूर्वस्य दन्तस्य दतृ-इत्यादेशः स्याद्वयसि-इत्यर्थः । ६-द्वौ दन्तौ यस्येति **द्विदन्** । शिशुत्वं गम्यते । दन्तस्य दत्रादेशः । ऋकार इत्, उगित्वान्नुम्, सुलोपः, संयोगान्तलोपः, तस्यासिद्धत्वाद्दीर्घो न । चत्वारो दन्ता यस्येति **चतुर्दन्** । शेषं पूर्ववत् । ७-कुड्मलानाम्=मुकुलानाम् अग्राणीव दन्ता यस्येति **कुड्मलाग्रदन्** । ८-व्यूढम्=विशालम् उरः=वक्षो यस्येति **व्यूढोरस्कः** । कप्, 'सोऽपदादौ' इति सत्वम् । ९-प्रियं सर्पिर्यस्येति **प्रियसर्पिष्कः** । कप्, 'इणः षः' इति षत्वम् । १०-नञः परो योऽर्थशब्दस्तदन्ताद्बहुव्रीहेः कप् स्यादित्यर्थः । अविद्यमानोऽर्थो यस्येति—**अनर्थकम्** ।

इन्नन्ताद्बहुव्रीहेः कप्। बहुदण्डिका[1]=नगरी। (अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति) बहुवाग्मिका[2]।

**१५७१ शेषाद्विभाषा ५। ४। १५४॥**

अनुक्तसमासान्ताद्बहुव्रीहेः कब्वा। महायशाः[3]। महायशस्कः। अनुक्तेत्यादि किम्—व्याघ्रपाद्[4]।

**१५७२ आपोऽन्यतरस्याम् ७। ४। १५॥**

कपि ह्रस्वः[5]। बहुमालाकः[6]। बहुमालकः। बहुमालः।

**१५७३ न संज्ञायाम् ५। ४। १५५॥**

शेषादिति प्राप्तः कब् न। विश्वेदेवा अस्य-विश्वेदेवः।

**१५७४ ईयसश्च ५। ४। १५६॥**

ईयसन्तोत्तरपदान्न कप्। बहवः श्रेयांसोऽस्य-बहुश्रेयान्। गोस्त्रियोरिति ह्रस्वे प्राप्ते। (ईयसो बहुव्रीहेर्न[7])। बहुश्रेयसी। बहुव्रीहेः किम्—अतिश्रेयसी[8]।

**१५७५ वन्दिते भ्रातुः ५। ४। १५७॥**

पूजार्थभ्रात्रन्तान्न कप्। प्रशस्तो भ्राताऽस्य प्रशस्तभ्राता। सुभ्राता। वन्दिते किम्—मूर्खभ्रातृकः। नद्यृतश्चेति कप्। (सर्वनामसंख्येययोर्बहुव्रीहौ

१–दण्डोऽस्यास्तीति दण्डी "अत इनिठनौ" इति इनिः। बहवो दण्डिनो यस्यामिति **बहुदण्डिका**। २–वागस्यास्तीति वाग्मी 'वाचो ग्मिनिः' इति ग्मिनिप्रत्ययः, नकारादिकार उच्चारणार्थः। तद्धितत्वाद् गकारस्य नेत्सञ्ज्ञा। चकारस्य कुत्वं जस्त्वं वाग्मीति रूपम्। बहवो वग्मिनो यस्यामिति विग्रहः। ३–महद् यशो यस्येति विग्रहः। "आन्महत" इत्यात्वम्। 'अत्वसन्तस्य' इति दीर्घः। **महायशाः**। कप्पक्षे 'सोऽपदादौ' इति सत्वम्। ४–"पादस्य लोपोऽहस्त्यादिभ्यः" इत्युक्तसमासान्तोऽयम्। स्थानिद्वारा लोपस्यापि समासान्तत्वात्। ५–कपि आबन्तस्य ह्रस्वो वा स्यादित्यर्थः। ६–बह्वयो माला यस्येति विग्रहः। सर्वत्र 'स्त्रियाः पुंवत्' इति पुंवत्वम्। ७–ईयसन्ताद्बहुव्रीहेः परस्य स्त्रीप्रत्ययस्य ह्रस्वो नेति वाच्यमित्यर्थः। ८–श्रेयसीमतिक्रान्त इति तत्पुरुषोऽयम् इति भावः।

पूर्वनिपातः )। सर्वश्वेतः। द्विशुक्लः। ( संख्याया अल्पीयस्याः )। द्वित्राः। ( द्वन्द्वेऽपि )। द्वादश। ( वा प्रियस्य )। गुडप्रियः। प्रियगुडः। ( गड्वादेः परा सप्तमी )। गडुकण्ठः। क्वचिन्न। वहेगडुः।

**१५७६ निष्ठा २। २। ३६॥**

निष्ठान्तं बहुव्रीहौ पूर्वं स्यात्। कृतकृत्यः। ( जातिकालसुखादिभ्यः परा निष्ठा वाच्या )। सारङ्गजग्धी। मासजाता। सुखजाता।

**१५७७ वाहिताग्न्यादिषु २। २। ४७॥**

आहिताग्निः। अग्न्याहितः। आकृतिगणोऽयम्। इति बहुव्रीहिः।

## अथ द्वन्द्वसमासः

**१५७८ चार्थे द्वन्द्वः २। २। २९॥**

अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते स द्वन्द्वः। समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः। तत्रेश्वरं गुरुं च भजस्वेति परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयः=समुच्चयः। भिक्षामट गां चानयेति अन्यतरस्यानुषङ्गिकत्वेनान्वयोऽन्वाचयः। अनयोरसामर्थ्यात् समासो न। धवखदिरौ छिन्धीति मिलितानामन्वयः=इतरेतरयोगः। संज्ञापरिभाषमिति समूहः=समाहारः।

---

१—न्यूनाधिकसङ्ख्यावाचकशब्दानां समासे न्यूनसङ्ख्यायाः पूर्वप्रयोग इति वक्तव्यमित्यर्थः। २—इदं वार्तिकं द्वन्द्वेऽद्वन्द्वेऽपि प्रवर्त्तते इत्यर्थः। ३—बहुव्रीहौ पूर्वं प्रयोगो वक्तव्य इत्यर्थः। ४—बहुव्रीहौ योज्येति वक्तव्यमिति शेषः। ५—कृतं कृत्यं येनेति विग्रहः। ६—सारङ्गो जग्धो=भक्षितो ययेति विग्रहः। 'अस्वाङ्गपूर्वपदाद्वा' इति ङीष्। इदं जातिपूर्वस्योदाहरणम्। कालपूर्वस्योदाहरणम्:—मासो जाता यस्या इति **मासजाता**। सुखपूर्वस्योदाहरणम्—सुखं जातं यस्या इति। ७—निष्ठायाः पूर्वं प्रयोग इति शेषः। आहिताः=आधानेन संस्कृता अग्नयो येनेति विग्रहः।

॥ इति बहुव्रीहिः॥

८—तत्र=तेषु चार्थेषु समुच्चयेऽन्वाचये च न द्वन्द्वसमास इत्यन्वयः। ९— धवश्च खदिरश्चेति विग्रहः, इतरेतरद्वन्द्वोदाहरणमिदम्। १०—सञ्ज्ञा च परिभाषा च तयोः समाहार इति विग्रहः। समाहारोदाहरणमिदम्।

**१५७९ राजदन्तादिषु परम् २ । २ । ३१ ॥**

एषु पूर्वप्रयोगार्हं परं स्यात् । दन्तानां राजा राजदन्तः[1] । धर्मादिष्वनियमः । अर्थधर्मौ । धर्मार्थौ । दम्पती । जम्पती । जायापती । जायाशब्दस्य दम्भावो जम्भावश्च वा निपात्यते । आकृतिगणोऽयम् ।

**१५८० द्वन्द्वे घि २ । २ । ३२ ॥**

द्वन्द्वे घिसंज्ञं पूर्वं स्यात् । हरिहरौ[3] ।

**१५८१ अजाद्यदन्तम् २ । २ । ३३ ॥**

ईशकृष्णौ[4] ।

**१५८२ अल्पाच्तरम् २ । २ । ३४ ॥**

शिवकेशवौ । ( ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण[6] ) । हेमन्त-शिशिर-वसन्ताः । कृत्तिकारोहिण्यौ । समाक्षराणां किम्—ग्रीष्मवसन्तौ[7] । ( लघ्वक्षरं पूर्वम्[8] ) । कुशकाशम् । ( अभ्यर्हितं[9] च ) । तापसपर्वतौ । ( वर्णानामानुपूर्व्येण ) । ब्राह्मण-क्षत्रिय-विट्-शूद्राः । ( भ्रातुर्ज्यायसः ) । युधिष्ठिरार्जुनौ ।

**१५८३ द्वन्द्वश्च प्राणि-तूर्य-सेनाङ्गानाम् २ । ४ । २ ॥**

एषां द्वन्द्व एकवत् । पाणिपादम्[10] ।

---

१–दन्तशब्दस्य षष्ठीतत्पुरुषेऽप्रधानतयोपसर्जनत्वेऽपि परनिपातः । २–अजाद्यदन्तशब्दस्य पूर्वनिपातनियमे प्राप्ते तदनियमो वक्तव्य इत्यर्थः । ३–हरिश्च हरश्च 'हरिहरौ' हरिशब्दस्य घित्वात्पूर्वनिपातः । ४–अत्र कृष्णस्याऽदन्तत्वेऽपि–अजादित्वाभावान्न पूर्वनिपातः । ५–अल्पसङ्ख्याचकं पदं द्वन्द्वे पूर्वं प्रयोज्यमित्यर्थः । ६–समानसङ्ख्याच्कानाम् ऋतूनां नक्षत्राणाञ्च द्वन्द्वे आनुपूर्व्येण=क्रमेण निपातो वक्तव्य इत्यर्थः । ७–विषमाक्षरत्वाद्वसन्तस्य न पूर्वनिपातः, किन्तु–अल्पाच्त्वाद् ग्रीष्मस्य पूर्वनिपातः । ८–लघु अक्षरम्=अच् यस्य तत् द्वन्द्वे पूर्वं प्रयोज्यमित्यर्थः । ९–श्रेष्ठः पूर्वं प्रयोज्य इति वक्तव्यमित्यर्थः । पर्वतस्य स्थावरजन्मतया तापसस्य तदपेक्षयाऽभ्यर्हितत्वं बोध्यम् । १०–पाण्योः पादयोश्च समाहार इति विग्रहः । समाहारे एकवत्त्वं नपुंसकत्वञ्च प्राण्यङ्गोदाहरणमिदम्, पाणिपादम् ।

मार्दङ्गिकवैणविकम्[1] । रथिकाश्वारोहम्[2] ।

**१५८४ अध्ययनतोऽविप्रकृष्टाख्यानाम् २ । ४ । ५ ॥**

अध्ययनेन प्रत्यासन्ना आख्या येषां तेषां द्वन्द्व एकवत् । पदक-क्रमकम्[3] ।

**१५८५ जातिरप्राणिनाम् २ । ४ । ६ ॥**

प्राणिवर्ज्यजातिवाचिनां द्वन्द्व एकवत् । धानाशष्कुलि[4] । प्राणिनां तु विट्शूद्रौ[5] ।

**१५८६ विशिष्टलिङ्गो नदीदेशोऽग्रामाः २ । ४ । ७ ॥**

ग्रामवर्जनदीदेशवाचिनां भिन्नलिङ्गानां द्वन्द्व एकवत् । उध्यश्च इरावती च उध्येरावति । गङ्गाशोणम्[6] । कुरवश्च कुरुक्षेत्रं च कुरुकुरुक्षेत्रम् ।

**१५८७ क्षुद्रजन्तवः २ । ४ । ८ ॥**

एषां द्वन्द्व एकवत् । यूकालिक्षम्[7] । आनकुलात्क्षुद्रजन्तवः ।

**१५८८ येषां च विरोधः शाश्वतिकः २ । ४ । ९ ॥**

प्राग्वत् । अहिनकुलम्[8] । गोव्याघ्रम् । काकोलूकमित्यादौ परत्वाद्विभाषा वृक्षेति प्राप्तं चकारेण बाध्यते ।

**१५८९ शूद्राणामनिरवसितानाम् २ । ४ । १० ॥**

---

१-मृदङ्गपणवशब्दौ वाद्यविशेषपरौ । मार्दङ्गिकवैणविकयोः समाहार इति विग्रहः । तूर्य्याङ्गोदाहरणमिदम्, **मार्दङ्गिकवैणविकम्** । २-रथेन चरन्तीति रथिकाः । "पर्पादिभ्यष्ठन्" । रथिकानामश्वारोहाणाञ्च समाहार इति विग्रहः । सेनाङ्गोदाहरणमिदम्, **रथिकाश्वारोहम्** । ३-पदान्यधीयते पदकाः । क्रमान् अधीयते क्रमकाः । "क्रमादिभ्यो वुन्" पदकानां क्रमकाणाञ्च समाहार इति विग्रहः । ४-धानाश्च शष्कुल्यश्च तासां समाहार इति विग्रहः । जातिवाचित्वादेकवत्वम् । नपुंसकत्वाद् ह्रस्व इति भावः । ५-विशश्च शूद्राश्चेति विग्रहः । ६-गङ्गा च शोणश्च=**गङ्गाशोणम्** । ७-यूकाश्च लिक्षाश्चेति विग्रहः । केशबहुले शिरःप्रदेशे स्वेदजा-जन्तुविशेषाः= यूकाः । लिक्षाश्च प्रसिद्धाः । एकवत्वं नपुंसकह्रस्वत्वञ्च । ८-**अहिनकुलम्** । अहयो नकुलाश्चेति विग्रहः । अनयोः स्वाभाविको विरोधः प्रसिद्धः । विरोधः=वैरम् । न तु सहानवस्थितिः । तेन 'छायातपौ' इत्यत्र न भवति । 'देवासुराः' इत्यत्र तु नायमेकवद्भावः, तद्विरोधस्य कादाचित्कत्वात् ।

अबहिष्कृतानां शूद्राणां द्वन्द्वः प्राग्वत्। तक्षायस्कारम्[1]। पात्राद्बहिष्कृतानां तु चण्डाल–मृतपाः।

**१५९० गवाश्वप्रभृतीनि च २।४।११॥**

यथोच्चारितानि तथैव साधूनि। गवाश्वम्। दासीदासमित्यादि[2]।

**१५९१ विभाषा वृक्ष मृग-तृण-धान्य-व्यञ्जन-पशु-शकुन्यश्व-वडव-पूर्वापराधरोत्तराणाम् २।४।१२॥**

वृक्षादीनां सप्तानां द्वन्द्वोऽश्ववडवेत्यादि द्वन्द्वत्रयं च प्राग्वद्वा। वृक्षादौ[3] विशेषाणामेव ग्रहणम्। प्लक्षन्यग्रोधम्[4]। प्लक्षन्यग्रोधाः। रुरुपृषतम्[5]। रुरुपृषताः। कुशकाशम्[6]। कुशकाशाः। व्रीहियवम्[7]। व्रीहियवाः। दधिघृतम्[8]। दधिघृते। गोमहिषम्[9]। गोमहिषाः। शुकबकम्[10][11]। शुकबकाः[11]। अश्ववडवम्[12][13]। अश्ववडवौ। पूर्वापरम्। पूर्वापरे। अधरोत्तरम्। अधरोत्तरे। (फल-सेना-वनस्पति-मृग-शकुनि-क्षुद्रजन्तु–धान्य-तृणानां बहुप्रकृतिरेव द्वन्द्व एकवदिति वाच्यम्) बदराणि[13] चामलकानि च बदरामलकम्। नेह[14]। बदरामलके। रथिकाश्वारोहावित्यादि।

**१५९२ न दधि–पय–आदीनि[15] २।४।१४॥**

---

१–तक्षाणश्च अयस्काराश्चेति विग्रहः। २–अत्रैकवत्वनियमः, "पुमान् स्त्रिया" इत्येकशेषस्तु निपातान्न। ३–"स्वं रूपं" इति सूत्रे भाष्यवार्तिकयोस्तथोक्तत्वादिति भावः। ४–प्लक्षाश्च न्यग्रोधाश्चेति विग्रहः, वृक्षद्वन्द्वोदाहरणमिदम्। ५–रुरवश्च पृषताश्चेति विग्रहः, इदं मृगद्वन्द्वोदाहरणम्। ६–कुशाश्च काशाश्चेति विग्रहः। इदं तृणद्वन्द्वोदाहरणम्। ७–व्रीहयश्च यवाश्चेति विग्रहः, धान्यद्वन्द्वोदाहरणमिदम्। ८–दधि च घृतञ्चेति विग्रहः, इदं व्यञ्जनद्वन्द्वोदाहरणम्। ९–गावश्च महिषाश्चेति विग्रहः, इदं पशुद्वन्द्वोदाहरणम्। १०–शुकाश्च बकाश्चेति विग्रहः, इदं शकुनिद्वन्द्वोदाहरणम्। ११–शुकाश्च बकाश्चेति विग्रहः। १२–'पूर्ववदश्ववडवौ' इति पूर्वपदवत्पुंलिङ्गता। १३–'जातिरप्राणिनाम्' इत्येकवत्वम्, बहुवचनान्तावयवकद्वन्द्वात्। १४–बहुवचनान्तावयवकद्वन्द्वाभावान्न 'जातिरप्राणिना'-मित्येकवत्वम्। १५–एषां समाहारद्वन्द्वो नास्तीत्यर्थः।

न एकवत्स्युः। दधिपयसी। इध्माबर्हिषी, निपातनाद्दीर्घः। ऋक्सामे वाङ्मनसे।

**१५६३ आनङ् ऋतो द्वन्द्वे ६। ३। २५॥**

विद्यायोनिसम्बन्धवाचिनां ऋदन्तानां द्वन्द्वे आनङ् स्यादुत्तरपदे। होतापोतारौ। मातापितरौ। पुत्रे इत्यनुवृत्तेः—पितापुत्रौ।

**१५६४ देवताद्वन्द्वे च ६। ३। २६॥**

इहोत्तरपदे पूर्वपदस्यानङ्। मित्रावरुणौ। ( वायोः प्रयोगे प्रतिषेधः ) अग्निवायू। वाय्वग्नी।

**१५६५ ईदग्नेः सोमवरुणयोः ६। ३। २७॥**

देवताद्वन्द्व इत्येव।

**१५६६ अग्नेः स्तुत्-स्तोम-सोमाः ८। ३। ८२॥**

अग्नेः परेषामेषां सस्य षः समासे। अग्निष्टुत्। अग्निष्टोमः। अग्नीषोमौ। अग्नीवरुणौ।

**१५६७ इद् वृद्धौ ६। ३। २८॥**

वृद्धिमत्युत्तरपदे अग्नेरिदादेशो देवताद्वन्द्वे। अग्नीमरुतौ देवते अस्य आग्निमारुतं कर्म। अग्नीवरुणौ देवते अस्य आग्निवारुणम्, देवताद्वन्द्वे चेत्युभयपदवृद्धिः। ( विष्णौ न ) । आग्नावैष्णवम्।

**१५६८ दिवो द्यावा ६। ३। २९॥**

---

१-दधि च पयश्चेति विग्रहः। इध्मम्=समित् च बर्हिश्चेति विग्रहः। इध्मशब्दस्य निपातनाद्दीर्घः। २-ऋक् च साम चेति विग्रहः। वाक् च मनश्चेति विग्रहः। उभयत्रापि "अचतुर..." इत्यादिनाऽच समासान्तः। ३-होता पोता चेति विग्रहः, इदं विद्यासम्बन्धोदाहरणम्। एवम्—माता च पिता च, इदं योनिसम्बन्धोदाहरणम्। ४-वायुशब्दस्य पूर्वपदत्वेनोत्तरपदत्वेन वा प्रयोगे सति आनङः प्रतिषेधो वक्तव्य इत्यर्थः। ५-अग्निष्टुत् =क्रतुविशेषः। अग्निष्टोमः=स्तोत्रविशेषस्य संस्थाविशेषस्य च नाम। अग्नीवरुणौ-अग्निश्च वरुणश्चेति विग्रहः। ईत्वम्। ६-विष्णुशब्दे परेऽग्नेरिकारो नेति वक्तव्यमित्यर्थः, **आग्नावैष्णवम्** इत्वाभावे पूर्वपदस्याऽऽनङ्।

देवताद्वन्द्वे उत्तरपदे । द्यावाभूमी[1] ।

**१६६६ मातरपितरावुदीचाम् ६ । ३ । ३२ ॥**

उदीचां किम्—मातापितरौ[2] ।

**१६०० द्वन्द्वाच्चु-द-ष-हान्तात्समाहारे ५ । ४ । १०६ ॥**

चवर्गान्ताद्-ष-हान्ताच्च द्वन्द्वाट्टच् समाहारे । वाक्त्वचम्[3] । त्वक्स्रजम् । शमीदृषदम् । वाक्त्विषम् । छत्रोपानहम् । समाहारे किम्—प्रावृट्शरदौ[4] ।

॥ इति द्वन्द्वसमासः ॥

## अथैकशेषः ।

( विरूपाणामपि समानार्थानाम्[5] ) । वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डौ । कुटिलदण्डौ ।

**१६०१ वृद्धो यूना तल्लक्षणश्चेदेव विशेषः १ । २ । ६५ ॥**

यूना सहोक्तौ गोत्रं शिष्यते गोत्रयुवप्रत्ययमात्रकृतं चेत्तयोः कृत्स्नं वैरूप्यं स्यात् । गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ[6] । वृद्धः किम् । गर्गगार्ग्यायणौ[7] । यूना किम् । गर्गगार्ग्यौ[8] । कृत्स्नं किम् । गार्ग्यवात्स्यायनौ[9] ।

**१६०२ स्त्रीपुंवच्च १ । २ । ६६ ॥**

---

१—द्यौश्च भूमिश्चेति विग्रहः । २—उदीचां मतेऽनङ् । तदभावे 'आनङ् ऋत' इत्यानङ् । ३—वाक् च त्वक् चेति समाहारद्वन्द्वः । क्रमेणोदाहरणानि । विग्रहास्तु स्पष्टा एव । ४—प्रावृट् च शरच्चेति विग्रहः । इतरेतरयोगद्वन्द्वान्न टजिति भावः । ॥ इति द्वन्द्वसमासः ॥

५—एकार्थकत्वे विरूपाणामप्येकशेषो वक्तव्य इत्यर्थः । ६—अत्र गार्ग्यशब्दस्य गार्ग्यायणशब्दस्य च गोत्रयुवप्रत्ययकृतमेव वैरूप्यमिति गोत्रप्रत्ययान्तो गार्ग्यशब्दः शिष्यते—इति भावः । ७—अत्र गर्गशब्दस्य गार्ग्यायणशब्दस्य च युवप्रत्ययमात्रकृतवैरूप्येऽपि गोत्रप्रत्ययान्तत्वाभावान्नैकशेष इति भावः । ८—अत्र गर्गशब्दस्य गार्ग्यशब्दस्य च गोत्रप्रत्ययमात्रकृतवैरूप्येऽपि गोत्रप्रत्ययान्तो गार्ग्यशब्दो न शिष्यते, यूना सहोक्त्या अभावादिति भावः । ९—अत्र गार्ग्यशब्दस्य वात्स्यायनशब्दस्य च न गोत्रयुवप्रत्ययमात्रकृतं वैरूप्यम्, प्रकृतिवैरूप्यस्य गोत्रयुवप्रत्ययमात्रकृतत्वाभावात् अतो गोत्रप्रत्ययान्तो गार्ग्यशब्दो न शिष्यत इति भावः ।

यूना सहोक्तौ वृद्धा स्त्री शिष्यते तदर्थश्च पुंवत्। गार्गी च गार्ग्यायणौ च गर्गाः।

**१६०३ पुमान्स्त्रिया १। २। ६७॥**

स्त्रिया सहोक्तौ पुमान् शिष्यते तल्लक्षण एव विशेषश्चेत् । हंसी च हंसश्च हंसौ।

**१६०४ भ्रातृपुत्रौ स्वसृदुहितृभ्याम् १। २। ६८॥**

भ्राता च स्वसा च भ्रातरौ। पुत्रश्च दुहिता च पुत्रौ।

**१६०५ नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् १। २। ६९॥**

अक्लीबेन सहोक्तौ क्लीबं शिष्यते तच्च वा एकवत् स्यात्तल्लक्षण एव विशेषश्चेत् । शुक्लः पटः, शुक्ला शाटी, शुक्लं वस्त्रम्, तदिदं शुक्लम् । तानीमानि शुक्लानि।

**१६०६ पिता मात्रा १। २। ७०॥**

मात्रा सहोक्तौ पिता वा शिष्यते । माता च पिता च पितरौ, मातापितरौ।

**१६०७ श्वशुरः श्वश्र्वा १। २। ७१॥**

सहोक्तौ वा शिष्यते। श्वशुरौ। श्वश्रूश्वशुरौ।

**१६०८ त्यदादीनि सर्वैर्नित्यम् १। २। ७२॥**

सर्वैः सहोक्तौ त्यदादीनि शिष्यन्ते । स च देवदत्तश्च तौ। ( त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते )। स च यश्च यौ। ( पूर्वशेषोऽपि

---

१-तस्य=शिष्यमाणस्य स्त्रीवाचकगोत्रप्रत्ययान्तस्याऽर्थः पुमानिव स्यादित्यर्थः। २-गर्गस्यापत्यं स्त्रीत्यर्थः। गर्गादियञन्तात् 'यञश्च' इति ङीप्। गार्ग्ययञन्ताद् यून्यपत्ये 'यञिञोश्चेति' फक्, आयन् । अत्र स्त्रीत्वकृतवैरूप्याधिक्येऽपि गोत्रप्रत्ययान्तः स्त्रीवाचको गार्गीशब्दः शिष्यते, स पुंवत्, यञो लुक्। ३-स्वसृदुहितृभ्यां सहोक्तौ क्रमाद् भ्रातृपुत्रौ शिष्येते-इत्यर्थः । ४-नपुंसकत्वानपुंसकत्वमात्रकृतवैरूप्यश्चेदित्यर्थः । ५-"पुमान् स्त्रिया" इत्यत्र स्वरूपाणामित्यनुवृत्तेरप्राप्तौ वचनमिदं विकल्पार्थञ्च। ६-त्यदादिगणे यत्परं पठितं तच्छिष्यत इत्यर्थः। शब्दपरविप्रतिषेधाश्रयणादिति भावः। ७-परशब्दस्येष्टवाचित्वात्क्वचित्पूर्वमपि शिष्यत इति भावः।

दृश्यते ) इति भाष्यम्। स च यश्च तौ। ( त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि )। सा च देवदत्तश्च तौ। तच्च देवदत्ता च यज्ञदत्तश्च तानि।

**१६०९ ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री १। २। ७३॥**

एषु सह विवक्षायां स्त्री शिष्यते। गाव इमाः। ग्राम्येति किम्। रुरव इमे। पशुग्रहणं किम्। ब्राह्मणाः। सङ्घेषु किम्। एतौ गावौ। अतरुणेषु किम्। वत्सा इमे। ( अनेकशफेष्विति वाच्यम् )। अश्वा इमे। इत्येकशेषः।

# अथ समासान्ताः।

**१६१० ऋक्पूरब्धूःपथामानक्षे ५। ४। ७४॥**

ऋगाद्यन्तस्य समासस्य अप्रत्ययोऽन्तावयवः, अक्षे या धूस्तदन्तस्य न। अर्धर्चः। (अनृचबह्वृचावध्येतर्येव)। नेह। अनृक्=साम। बह्वृक्=सूक्तम्। विष्णुपुरम्। विमलापं=सरः।

**१६११ द्व्यन्तरुपसर्गेभ्योऽप ईत् ६। ३। ९७॥**

---

१–त्यदादीनां स्त्रीशेषेऽपि सह विवक्षितेषु यः पुमान् यच्च नपुंसकं तद्व-शेन लिङ्गप्रतिपादकानि भवन्तीत्यर्थः। २–'पुमान् स्त्रिया' इत्येतद् बाधित्वा स्त्री शिष्यत इति भावः। ननु स्त्रीशेषे पुंशेषे न कोऽपि रूपभेद इत्यत आह—**इमा** इति। ३–रुरुः=कृष्णाख्यो मृगः। अग्राम्यपशुत्वान्न स्त्री शिष्यते। ४–अपशुत्वान्न स्त्री शिष्यते। ब्राह्मणी च ब्राह्मणश्चेति विग्रहः ५–असङ्घत्वान्न स्त्री शिष्यते। ६–तरुणत्वान्न स्त्री शिष्यते। ७–एक-शफत्वान्न स्त्री शिष्यते। ॥ इत्येकशेषः ॥

८–ऋक्, पुर्, अप्, धुर्, पथिन्, एतदन्तस्येत्यर्थः। ९–ऋचोऽर्ध-मिति विग्रहः। 'अर्धं नपुंसक'मिति समासः, अकारः समासान्तः, 'अर्धर्चाः पुंसि च' इति पुंस्त्वम्। १०–अविद्यमाना ऋचो यस्येति विग्रहः। **अनृचः**= केवलयजुरध्येता। बहव ऋचो यस्येति **बह्वृचः**=ऋक्शाखी। इत्युदाहरणम्। ११–अविद्यमाना ऋचो यस्मिन्निति विग्रहः। ऋच्यनध्यूढं प्रजापतेर्हृदयं-साम। १२–बहव ऋचो यस्मिन्निति विग्रहः। १३–द्वि–अन्तर्–उपसर्ग– एतेभ्यः परस्याऽप–शब्दस्याऽप्रत्ययान्तस्याऽकारस्य ईत्स्यादित्यर्थः। 'आदेः परस्य।

द्वीपम्[१]। अन्तरीपम्। प्रतीपम्। समीपम्। (अवर्णान्ताद्वा[२])। प्रेपम्। प्रापम्।

**१६१२ ऊदनोर्देशे ६।३।९८॥**

· अनूपो[३]=देशः। राजधुरा। अक्षे तु-अक्षधूः। दृढधूरक्षः। सखिपथः। रम्यपथो=देशः।

**१६१३ अच्प्रत्यन्ववपूर्वात्सामलोम्नः ५।४।७५॥**

प्रतिसामम्[६]। अनुसामम्। अवसामम्। प्रतिलोमम्। अवलोमम्। (कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरजिष्यते) कृष्णभूमः[७]। उदग्भूमः। पाण्डुभूमः। द्विभूमः। त्रिभूमः=प्रासादः। (संख्याया नदीगोदावरीभ्यां च[८]) पञ्चनदम्[९]। सप्तगोदावरम्। अजिति योगविभागादन्यत्रापि-पद्मनाभः[१०]।

**१६१४ अक्ष्णोऽदर्शनात् ५।४।७६॥**

अचक्षुःपर्यायादक्ष्णोऽच् स्यात्। गवामक्षीव गवाक्षः।

**१६१५ अचतुर-विचतुर-सुचतुर-स्त्रीपुंस-धेन्वनडुहर्क्-साम-वाङ्मनसाक्षिभ्रुव-दारगवोर्वष्ठीव-पदष्ठीव-नक्तन्दिव-**

---

१-द्वयोः पार्श्वयोर्गता आपो यस्मिन्निति विग्रहः। अन्तर्गता आपो यत्र, प्रतिकूला आपो यस्मिन्, सङ्गता आपो यत्र, इति विग्रहाः। २-अवर्णान्तादुपसर्गात्परस्याऽपस्य (अप्रत्ययान्तस्य) ईत्वं वा वक्तव्यमित्यर्थः। परागता आपो यस्येति विग्रहः। ३-अनोः परस्याऽपस्य ऊत्स्याद्देशे। ईत्वस्यापवादः। ४-अनुकूला आपो यस्मिन्निति विग्रहः। ५-एतत्पूर्वात्सामलोमान्तात्समासादच् स्यादित्यर्थः। ६-प्रतिगतं साम, अनुगतं साम, अवकृष्टं साम, प्रतिगतं लोम, अनुगतं लोम, अवगतं लोम, इति विग्रहाः, सर्वत्र-अच् प्रत्ययः, 'नस्तद्धिते' इति टिलोपः। ७-कृष्णा भूमिर्यस्य, उदीची भूमिर्यस्य, पाण्डुर्भूमिर्यस्य, द्वे भूमी यस्य, तिस्रो भूमयो यस्येति विग्रहाः। ८-सङ्ख्यायाः परो यो नदीशब्दो गोदावरीशब्दश्च ताभ्यामजिष्यते-इत्यर्थः। ९-पञ्चानां नदीनां समाहारः, सप्तानां गोदावरीणां समाहारः, इति विग्रहौ। "नदीभिश्च" इत्यव्ययीभावः। अचि, यस्येति च ईकारलोपः। 'नाव्ययीभावात्' इत्यम्। १०-पद्मं नाभौ यस्येति विग्रहः। वस्तुतस्तु योगविभागस्य भाष्येऽदर्शनात्पृषोदरादित्वमेवोचितमिति।

**अचतुर-विचतुर-सुचतुर-स्त्रीपुंस-धेन्वनडुह-र्क्साम-वाङ्मनसाक्षिभ्रुव-दारगवोर्वष्ठीव-पदष्ठीव-नक्तंदिव-रात्रिंदिवाहर्दिव-सरजस-निःश्रेयस-पुरुषायुष-द्व्यायुष-त्र्यायुषर्ग्यजुष-जातोक्ष-महोक्ष-वृद्धोक्षोपशुन-गोष्ठश्वाः ५।४।७७॥**

एते पञ्चविंशतिरजन्ता निपात्यन्ते । आद्यास्त्रयो बहुव्रीहयः । अविद्यमानानि चत्वार्यस्य-अचतुरः । विगतानि चत्वार्यस्य-विचतुरः । सुचतुरः । ( त्र्युपाभ्यां चतुरोऽजिष्यते ) । त्रिचतुराः । चतुर्णां समीपे–उपचतुराः । तत एकादश द्वन्द्वाः । स्त्रीपुंसौ । धेन्वनडुहौ । ऋक्सामे । वाङ्मनसे । अक्षिणी च भ्रुवौ च–अक्षिभ्रुवम्[1] । दाराश्च गावश्च–दारगवम् । ऊरू च अष्ठीवन्तौ च—ऊर्वष्ठीवम्[2] , निपातनाट्टिलोपः । पदष्ठीवम् , निपातनात्पादशब्दस्य पद्भावः । नक्तं च दिवा च–नक्तन्दिवम् । रात्रौ च दिवा च-रात्रिन्दिवम्, रात्रेर्मान्तत्वं निपात्यते । अहनि च दिवा–च अहर्दिवम् , वीप्सायां द्वन्द्वो निपात्यते, अहन्यहनीत्यर्थः । सरजसमिति साकल्येऽव्ययीभावः । बहुव्रीहौ तु सरजः[3]=पङ्कजम् । निश्चितं श्रेयो–निःश्रेयसम् । तत्पुरुष एव । नेह निःश्रेयान्पुरुषः[4] । पुरुषस्यायुः पुरुषायुषम् । ततो द्विगू । द्व्यायुषम् । त्र्यायुषम् । ततो द्वन्द्वः । ऋग्यजुषम् । ततस्त्रयः कर्मधारयाः । जातोक्षः । महोक्षः । वृद्धोक्षः । शुनः समीपम् उपशुनम् । टिलोपाभावः सम्प्रसारणं च निपात्यते । गोष्ठे श्वा गोष्ठश्वः ।

**१६१६ ब्रह्महस्तिभ्यां वर्चसः ५ । ४ । ७८ ॥**

अच् । ब्रह्मवर्चसम्[5] । हस्तिवर्चसम् । (पल्यराजभ्यां च) पल्यवर्चसम्[6] । राजवर्चसम्[7] ।

१–प्राण्यङ्गत्वादेकवत्त्वम् । २–ऊरू=सक्थिनी, अष्ठीवन्तौ=जानुनी । प्राण्यङ्गत्वादेकवत्त्वम् । एवं पादौ चाष्ठीवन्तौ चेति द्वन्द्वः । विग्रहास्तु सुकरा एव । ३–रजोभिः=परागैः सहेति विग्रहः, 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । 'वोपसर्जनस्ये'ति सहस्य सः । बहुव्रीहित्वान्नाच् । ४–निश्चितं श्रेयो यस्येति बहुव्रीहित्वान्नाजिति भावः । ५–ब्रह्मणो वर्च इति, हस्तिनो वर्च इति च विग्रहः । ६–आभ्यां परो यो वर्चश्शब्दः तस्मादपि अजिति वक्तव्यमित्यर्थः । ७–पलम्=मांसं तदर्हति पल्यः=मांसभोजीत्यर्थः, तस्य वर्च इति विग्रहः । राज्ञो वर्च इति विग्रहः ।

**१६१७ अव-समन्धेभ्यस्तमसः ५ । ४ । ७६ ॥**

अवतमसम् । संतमसम् । अन्धतमसम् ।

**१६१८ अन्ववतप्ताद्रहसः ५ । ४ । ८१ ॥**

अनुरहसम् । अवरहसम् । तप्तरहसम् ।

**१६१९ प्रतेरुरसः सप्तमीस्थात् ५ । ४ । ८२ ॥**

उरसीति प्रत्युरसम् ।

**१६२० अनुगवमायामे ५ । ४ । ८३ ॥**

एतन्निपात्यते दीर्घत्वे । अनुगवं=यानम् । यस्य चायाम इति समासः ।

**१६२१ उपसर्गादध्वनः ५ । ४ । ८५ ॥**

प्रगतोऽध्वानं प्राध्वो रथः ।

**१६२२ न पूजनात् ५ । ४ । ६९ ॥**

पूजनार्थात्परेभ्यः समासान्ता न स्युः । सुराजा । अतिराजा । स्वतिभ्यामेव । नेह परमराजः ।

**१६२३ किमः क्षेपे ५ । ४ । ७० ॥**

समासान्तो नेत्यर्थः, कुत्सितो राजा किंराजा । किंसखा । किंगौः ।

**१६२४ नञस्तत्पुरुषात् ५ । ४ । ७१ ॥**

---

१-अव-सम्-अन्ध-एभ्यः परो यस्तमश्शब्दस्तस्मादच् स्यादित्यर्थः । २-अवहीनं तमः, सन्ततं तमः, इति विग्रहौ, प्रादिसमासः । अन्धं तम इति विग्रहः । ३-अनु-अव-तप्त-एभ्यः परो यो रहश्शब्दस्तस्मादच् स्यादित्यर्थः । ४-अनुगतं रहो यस्मिन्निति बहुव्रीहिः, तत्पुरुषो वा । अवहीनं रहः, तप्तं रह इति विग्रहौ ।

परेणानधिगम्यं हि यद्रहो वह्नितप्तवत् ।
तप्तञ्च तद्रहश्चेति तत्तप्तरहसं विदुः ॥ ( पाणिनीयमतदर्पणे )

५-सप्तम्यर्थद्योतकात्प्रतेः परो य उरश्शब्दस्तस्मादच् स्यादित्यर्थः । विभक्त्यर्थेऽव्ययीभावः । ६-अनुना दीर्घत्वे द्योत्येऽच् प्रत्ययान्तो निपात्यत इत्यर्थः । आयामशब्दो दीर्घपर इति भावः । ७-उपसर्गात्परो योऽध्वन्शब्दस्तस्मादच् स्यादित्यर्थः । 'अत्यादयः' इति समासः । 'नस्तद्धिते' इति टिलोपः । ८-'किं क्षेपे' इति समासः । ९-नञ् पूर्वपदात्तत्पुरुषात्समासान्तो नेत्यर्थः ।

अराजा। तत्पुरुषात्किम्—अधुरं[1]=शकटम्।

**१६२५ पथो विभाषा ५। ४। ७२॥**

अपथम्[2]। अपन्थाः। तत्पुरुषादित्येव। अपथो[3]=देशः।

॥ इति समासान्तः॥

# अथालुक्समासः।

**१६२६ अलुगुत्तरपदे ६। ३। १॥**

इत्यधिकृत्य[4]।

**१६२७ ओजःसहोऽम्भस्तमसस्तृतीयायाः[5] ६। ३। ३॥**

ओजसा कृतमित्यादि[6]। (अञ्जस उपसंख्यानम्[7])। अञ्जसाकृतम्।

**१६२८ आत्मनश्च ६। ३। ६॥**

तृतीयाया अलुक्। (पूरणे इति वक्तव्यम्)। पूरणप्रत्ययान्ते उत्तरपदे इत्यर्थः। आत्मनापञ्चमः[8]।

**१६२९ वैयाकरणाख्यायां चतुर्थ्याः ६। ३। ७॥**

आत्मन इत्येव। आत्मनेपदम्। आत्मनेभाषा।

---

१—अविद्यमाना धूर्यस्येति बहुव्रीहिः। नञ्पूर्वपदत्वेऽप्यतत्पुरुषत्वात् "अक्पूः" इति समासान्तस्य न निषेधः। २—न पन्था इति विग्रहे नञ्तत्पुरुषः। "अक्पू" रित्यप्रत्यये सति 'नस्तद्धिते' इति टिलोपः। "पथः सङ्ख्यादेः" इति नपुंसकत्वम्। ३—अविद्यमानः पन्था यस्येति बहुव्रीहिः।

॥ इति समासान्ताः॥

४—नायं विधिः, 'राजपुरुषः' इत्यादावतिप्रसङ्गात्, 'पञ्चम्याः स्तोकादिभ्यः' इत्याद्यारम्भसामर्थ्याच्च। किन्तु पदद्वयमधिक्रियते। ५—ओजस्, सहस्, अम्भस्, तमस्, एभ्यः परस्यास्तृतीयाया अलुक् स्यादुत्तरपदे इत्यर्थः। ६—"कर्तृकरणे कृता" इति समासः। एवं सहसाकृतम्, अम्भसाकृतम्, तमसाकृतम्। ७—अञ्जश्शब्दात्तृतीयाया अलुक उपसङ्ख्यानमित्यर्थः। अञ्जश्शब्द आर्जवे वर्तते। ८—आत्मा पञ्चम इत्यर्थः। प्रकृत्यादित्वात्प्रथमार्थे तृतीया। अथवा—आत्मकृतपञ्चमत्ववानित्यर्थः, करणे तृतीया। इदं पक्षद्वयमपि भाष्ये स्थितमिति।

**१६३० परस्य च ६ । ३ । ८ ॥**

परस्मैपदम् । परस्मैभाषा । हलदन्तादिति ङेरलुक् , त्वचिसारः ।

**१६३१ गवियुधिभ्यां स्थिरः ८ । ३ । ९५ ॥**

आभ्यां स्थिरस्य सस्य षः । गविष्ठिरः । युधिष्ठिरः । अरण्येतिलकाः । अत्र संज्ञायामिति सप्तमीसमासः । (हृद्द्युभ्यां च) । हृदिस्पृक् । दिविस्पृक् ।

**१६३२ मध्याद्गुरौ ६ । ३ । ११ ॥**

मध्येगुरुः । ( अन्ताच्च )-अन्तेगुरुः ।

**१६३३ अमूर्ध-मस्तकात्स्वाङ्गादकामे ६ । ३ । १२ ॥**

कण्ठेकालः । उरसिलोमा । अमूर्धमस्तकात्किम्—मूर्धशिखः । अकामे किम्—मुखे कामोऽस्य मुखकामः ।

**१६३४ तत्पुरुषे कृति बहुलम् ६ । ३ । १४ ॥**

स्तम्बेरमः । कर्णेजपः ।

**१६३५ शय-वास-वासिष्वकालात् ६ । ३ । १८ ॥**

वा लुक् । खेशयः, खशयः । ग्रामेवासः, ग्रामवासः । ग्रामेवासी, ग्रामवासी ।

---

१-वैयाकरणाख्यायां परशब्दस्यापि चतुर्थ्या अलुगित्यर्थः । २-हृच्छब्दाद् दिव्शब्दाच्च सप्तम्या अलुग् वक्तव्य इत्यर्थः । असञ्ज्ञार्थमिदम् । ३-'पद्दन्...' इति ङौ हृदयस्य हृदादेशः । हृदयं स्पृशतीत्यर्थः । दिवं स्पृशतीत्यर्थः । इहोभयत्रापि 'अमूर्धमस्तकात्' इत्यनेन न अलुक् तत्र सञ्ज्ञायामित्यनुवृत्तेः । ४-गुरुशब्दे परे मध्यशब्दात्सप्तम्या अलुक् स्यादित्यर्थः। ५-सप्तम्या अलुक् स्याद्गुरौ परे-इत्यर्थः । ६-मूर्धमस्तकवर्जितात् स्वाङ्गवाचकात् सप्तम्या अलुक् स्यान्नतु कामशब्दे उत्तरपदे-इत्यर्थः । ७-तत्पुरुषे सञ्ज्ञायां बहुलमलुक् स्यात्सप्तम्याः कृदन्ते उत्तरपदे इत्यर्थः । ८-स्तम्बः=तृणसमूहः, तस्मिन् रमते इति स्तम्बेरमः=हस्ती । ९-कर्णे जपति =परदोषमुपांशु ( एकान्ते ) आविष्करोतीति कर्णेजपः=पिशुनः । 'स्तम्ब-कर्णयो रमिजपोः' इत्यच् , उपपदसमासः । १०-शय-वास-वासिन्-एतेषु परेषु कालभिन्नात्सप्तम्या अलुक् स्यादित्यर्थः ।

**१६३६ षष्ठ्या आक्रोशे ६। ३। २१॥**

चोरस्य कुलम्। आक्रोशे किम्—ब्राह्मणकुलम्। (वाग्दिक्पश्यद्भ्यो युक्ति-दण्ड-हरेषु)। वाचोयुक्तिः। दिशोदण्डः। पश्यतोहरः। (आमुष्यायणामुष्यपुत्रिकामुष्यकुलिकेति च)। (देवानांप्रिय इति च मूर्खे)। अन्यत्र देवप्रियः। (शेष-पुच्छ-लाङ्गलेषु शुनः) शुनःशेपः। शुनःपुच्छः। शुनोलाङ्गलः। (दिवश्च दासे)। दिवोदासः।

**१६३७ ऋतो विद्या-योनिसम्बन्धेभ्यः ६। ३। २३॥**

होतुरन्तेवासी।

**१६३८ विभाषा स्वसृ-पत्योः ६। ३। २४॥**

ऋदन्तात्षष्ठ्या वाऽलुक् स्वसृपत्योः परयोः।

**१६३९ मातुःपितुर्भ्यामन्यतरस्याम् ८। ३। ८५॥**

स्वसुः सस्य षः समासे। मातुःष्वसा। मातुःस्वसा। पितुःष्वसा। पितुःस्वसा। लुक्पक्षे तु—

**१६४० मातृपितृभ्यां स्वसा ८। ३। ८४॥**

स्वसुः सस्य षः समासे। मातृष्वसा। पितृष्वसा। असमासे तु। मातुःस्वसा। पितुः स्वसा। ॥ इत्यलुक्समासः॥

१-आक्रोशे=निन्दायाम्। २-वाक्-दिक्-पश्यत्-एतेभ्यः परस्याः षष्ठ्या अलुक् स्यात् युक्ति-दण्ड-हर-एतेषु क्रमादुत्तरपदेष्वित्यर्थः। ३-वाचोयुक्तिः=शब्दप्रयोगः। पश्यतोहरः=स्वर्णकारः, पश्यन्तमनादृत्य हरतीत्यर्थः, 'षष्ठी चानादरे' इति षष्ठी। ४-अमुष्यापत्यमामुष्यायणः। नडादित्वात् फक्। अमुष्य पुत्रस्य भावः आमुष्यपुत्रिका, मनोज्ञादित्वाद्वुञ्। एवम् आमुष्यकुलिका। ५-(दिवु-क्रीडायाम्) देवाः=क्रीडासक्ता मूर्खास्तेषां प्रियोऽपि मूर्ख एव मूर्खप्रियस्यावश्यं मूर्खत्वात्—इति 'अजेर्वी' इत्यत्र कैयटः। ६-एता ऋषिविशेषाणां सञ्ज्ञाः। ७-कश्चिद्राजर्षिरयम्। ८-विद्यासम्बन्धयोनिसम्बन्धवाचिनः ऋदन्तात् षष्ठ्या अलुक् स्यादित्यर्थः। ९-इदं विद्यासम्बन्धवाचिनः—उदाहरणम्। योनिसम्बन्धवाचिनस्तु—'पितुरन्तेवासी' इति बोध्यम्। ॥ इत्यलुक्समासः॥

## अथ समासाश्रयविधयः ।

**१६४१ घ-रूप-कल्प-चेलड्-ब्रुव-गोत्र-मत-हतेषु ङ्योऽनेकाचो ह्रस्वः ६ । ३ । ४३ ॥**

भाषितपुंस्काद्यो ङी तदन्तस्यानेकाचो ह्रस्वः स्यात् । घरूपकल्पप्रत्यये चेलडादिषु चोत्तरपदेषु । ब्राह्मणितरा[1] । ब्राह्मणितमा । ब्राह्मणिरूपा । ब्राह्मणिकल्पा । ब्राह्मणिचेली । ब्राह्मणिब्रुवा । ब्राह्मणिगोत्रेत्यादि । ब्रुवः पचाद्यचि वच्यादेशगुणयोरभावो निपात्यते । ङ्यः किम्—दत्तातरा । भाषितपुंस्कात्किम्—आमलकीतरा[2] । कुवलीतरा ।

**१६४२ नद्याः शेषस्यान्यतरस्याम् ६ । ३ । ४४ ॥**

अङ्यन्तनद्याः ङ्यन्तैकाचश्च घादिषु ह्रस्वो वा । ब्रह्मबन्धुतरा । ब्रह्मबन्धूतरा । स्त्रितरा । स्त्रीतरा । ( कृन्नद्यां न )[3] । लक्ष्मीतरा ।

**१६४३ उगितश्च ६ । ३ । ४५ ॥**

उगितः परा या नदी तदन्तस्य घादिषु ह्रस्वो वा स्यात् । विदुषितरा[4] । ह्रस्वाभावपक्षे पुंवत्[5] । विद्वत्तरा ।

**१६४४ पादस्य पदाऽऽज्यातिगोपहतेषु ६ । ३ । ५२ ॥**

एषूत्तरपदेषु पादस्य पद इत्यदन्तादेशः स्यात् । पादाभ्याम् अजतीति पदाजिः । पदातिः । 'अज्यतिभ्यां पादे च' इतीण् प्रत्ययः । पदगः । पदोपहतः ।

**१६४५ पद्यत्यतदर्थे ६ । ३ । ५३ ॥**

पादस्य पत्स्यादतदर्थे यति । पादौ विध्यन्ति पद्याः=शर्कराः । विध्यत्यधनुषेति यत् । अतदर्थे किम् । पादार्थमुदकं=पाद्यम् । पादार्घाभ्यामिति यत् ।

---

१—'तसिलादिषु' इति पुंवद्भावस्तु न, 'जातेश्चे'ति निषेधात् । २—आमलकीकुवलीशब्दयोर्वृक्षवाचित्वे नित्यस्त्रीलिङ्गत्वाद् भाषितपुंस्कत्वाभावेन न ह्रस्व इति भावः । ३—कृदन्ता या नदी तस्या ह्रस्वो नेति वक्तव्यमित्यर्थः । 'लक्षेर्मुट् च' इत्यौणादिके ईप्रत्यये मुडागमे च लक्ष्मीशब्दः कृदन्त इति भावः । ४—"विदेः शतुर्वसुः" इति वसुप्रत्ययः, उगिदन्तत्वाद् 'उगितश्चेति' ङीप्, वसोः सम्प्रसारणम् । ५—'तसिलादिषु' इत्यनेन ।

**१६४६ उदकस्योदः संज्ञायाम् ६ । ३ । ५७ ॥**

उत्तरपदे । उदमेघः । (उत्तरपदस्य चेति वक्तव्यम् ) । क्षीरोदः ।

**१६४७ पेषं-वास-वाहन-धिषु च ६ । ३ । ५८ ॥**

उदपेषं पिनष्टि । उदवासः । उदवाहनः । उदधिर्घटः ।

**१६४८ एकहलादौ पूरयितव्येऽन्यतरस्याम् ६ । ३ । ५९ ॥**

उदकुम्भः । उदककुम्भः । एकेति किम्—उदकस्थाली । पूरयितव्येति किम्—उदकपर्वतः ।

**१६४९ मन्थौदन-सक्तु-बिन्दु-वज्र-भार-हार-वीवध-गाहेषु च ६ । ३ । ६० ॥**

उदमन्थः । उदकमन्थः । उदौदनः । उदकौदनः ।

**१६५० इको ह्रस्वोऽङ्यो गालवस्य ६ । ३ । ६१ ॥**

इगन्तस्याङ्यन्तस्य ह्रस्वो वा उत्तरपदे । ग्रामणिपुत्रः । ग्रामणीपुत्रः । इकः किम्—रमापतिः । अङ्यः किम्—गौरीपतिः ।

**१६५१ ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे ६ । १ । १३ ॥**

ष्यङन्तस्य पूर्वपदस्य सम्प्रसारणं स्यात् पुत्रपत्योः परतः ।

**१६५२ सम्प्रसारणस्य ६ । ३ । १३९ ॥**

दीर्घः स्यादुत्तरपदे । कौमुदगन्ध्यायाः पुत्रः—कौमुदगन्धीपुत्रः । कौमुद-

---

१—उदकशब्दस्य 'उद' इत्यादेशः स्यादुत्तरपदे सञ्ज्ञायामित्यर्थः । २—उत्तरपदस्य उदकशब्दस्य 'उद' इत्यादेशः स्यात् सञ्ज्ञायामित्यर्थः । ३—पेषमिति णमुलन्तमव्ययम् । तस्मिन् वासवाहनधिषु च परत उदकशब्दस्य उदः स्यादित्यर्थः । ४—उदकेन पिनष्टीत्यर्थः । **उदवासः**, उदकस्य वास इति विग्रहः । **उदवाहनः**, उदकस्य वाहक इत्यर्थः । करणे ल्युट् । ५—हलत्वस्य एकैकवर्णधर्मत्वादेव सिद्धे एकग्रहणादसंयुक्तत्वं लभ्यते । पूरयितव्यम्=पूरणार्हम् ( कुम्भादि ) । असंयुक्तहलादौ पूरयितव्यवाचके-उत्तरपदे परे-उदकस्य-'उद'-इत्यादेशः स्यादित्यर्थः । ६—उदकस्य-उदादेशो वेति शेषः । ७—उदकमिश्रो मन्थ इति विग्रहः । द्रवद्रव्यसम्पृक्ताः सक्तवः=मन्थः । भर्जितयवपिष्टानि सक्तवः । ८—'नी' धातोरीकारोऽयं नतु ङीप्प्रत्यय इति भावः ।

गान्धीपतिः ।

**१६५३ इष्टकेषीकामालानां चित-तूल-भारिषु ६ । ३ । ६५ ॥**

इष्टकादीनां तदन्तानां च चितादिषु ह्रस्वः स्यात् । इष्टकचितम् । पक्वेष्टकचितम् । इषीकतूलम् । मुञ्जेषीकतूलम् । मालभारि । उत्पलमालभारि ।

**१६५४ ज्योतिर्जनपद-रात्रि-नाभि-नाम-गोत्र-रूप-स्थान-वर्ण-वयो-वचन-बन्धुषु ६ । ३ । ८५ ॥**

समानस्य सः । सज्योतिः[1] ।

**१६५५ चरणे ब्रह्मचारिणि ६ । ३ । ८६ ॥**

ब्रह्मचारिण्युत्तरपदे समानस्य सश्चरणे समानत्वेन गम्यमाने । चरणः=शाखा । ब्रह्म=वेदः तदध्ययनार्थं व्रतमपि ब्रह्म, तच्चरतीति=ब्रह्मचारी । सब्रह्मचारी, इत्यादि ।

**१६५६ तीर्थे ये ६ । ३ । ८७ ॥**

यादौ प्रत्यये विवक्षिते समानस्य सः । सतीर्थ्यः=एकगुरुकः । समानतीर्थेवासीति यत्प्रत्ययः ।

**१६५७ विभाषोदरे[2] ६ । ३ । ८८ ॥**

सोदर्यः । समानोदर्यः ।

**१६५८ दृग्-दृश-वतुषु[3] ६ । ३ । ८९ ॥**

सदृक्[4] । सदृशः । ( दृक्षे[5] च ) सदृक्षः ।

**१६५९ इदंकिमोरीश्की[6] ६ । ३ । ९० ॥**

दृग्दृशवतुषु । ईदृक्[7] । ईदृशः । कीदृक् । कीदृशः ।

---

१—समानं ज्योतिर्यस्येति विग्रहः । एवं सजनपदः, सरात्रिः, सनाभिः, सनामा, सगोत्रः, सरूपः, सस्थानः, सवर्णः, सवयाः, सवचनः, सबन्धुः, इति । २—उदरशब्दे परे समानस्य सभावो वा स्याद् यादौ प्रत्यये विवक्षिते इत्येव इत्यर्थः । ३—समानस्य स इति शेषः । ४—समानो दृश्यते इत्यर्थे 'समानान्ययोश्चे'ति दृशेः क्विन् कञ् च । ५—समानस्य सत्वमिति शेषः । 'क्सोपि वाच्यः' इति दृशेः क्सः । ६—दृग्दृशवतुषु इदम ईश् किमः की स्यादित्यर्थः । ७—इदमिव दृश्यते इत्यर्थे त्यदादिषु दृशेः क्विन्-कञौ । ईशः शित्वं सर्वादेशार्थम् । वतूदाहरणन्तु 'इयान्' इति बोध्यम् ।

( दृक्षे चे ) ईदृक्षः । कीदृक्षः ।

**१६६० अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोति-कारक-रागच्छेषु ६ । ३ । ९९ ॥**

अन्यशब्दस्य दुगागमः स्यादाशीरादिषु परेषु । अन्यदाशीः । अन्यदाशा । अन्यदास्था । अन्यदास्थितः । अन्यदुत्सुकः । अन्यदूतिः । अन्यद्रागः । अषष्ठीत्यादि किम् । अन्यस्यान्येन वाशीः अन्याशीः ( कारके छे च नायं निषेधः ) । अन्यस्य कारकोऽन्यत्कारकः । अन्यस्यायमन्यदीयः ।

**१६६१ अर्थे विभाषा ६ । ३ । १०० ॥**

अन्यदर्थः । अन्यार्थः ।

**१६६२ कोः कत्तत्पुरुषेऽचि ६ । ३ । १०१ ॥**

अजादावुत्तरपदे । कुत्सितोऽश्वः कदश्वः । कदन्नम् । तत्पुरुषे किम् । कूष्ट्रो=राजा । ( त्रौ चे ) । कत्त्रयः ।

**१६६३ रथ-वदयोश्च ६ । ३ । १०२ ॥**

कद्रथः । कद्वदः ।

**१६६४ तृणे च जातौ ६ । ३ । १०३ ॥**

कत्तृणम् ।

**१६६५ का पथ्यक्षयोः ६ । ३ । १०४ ॥**

कापथम् । काक्षः ।

**१६६६ ईषदर्थे ६ । ३ । १०५ ॥**

---

१–इदं किमोरीश्की वक्तव्यौ–इति शेषः । २–भाष्योक्तमिदम् । ३–अन्यस्य दुगिति शेषः । ४–कुत्सित उष्ट्रो यस्येति बहुव्रीहित्वान्न कदादेशः । ५–त्रिशब्दे परे कदादेशो वक्तव्य इत्यर्थः । ६–कोः कत् तत्पुरुषे–इति शेषः । ७–तृणशब्दे कोः कत्स्याज्जातौ वाच्यायाम् । ८–पथिन्–अक्ष–अनयोः परतः कोः 'का' इत्यादेशः स्यादित्यर्थः । ९–कुत्सितः पन्था इति विग्रहः । 'कुगति' इति समासः । 'ऋक्पूः' इत्यप्रत्ययः । 'पथः सङ्ख्याव्ययादेः' इति नपुंसकत्वम् । १०–कुत्सितमक्षम्=इन्द्रियमिति विग्रहे 'कुगति' इति तत्पुरुषसमासः । कुत्सिते अक्षिणी यस्येति विग्रहे 'बहुव्रीहौ सक्थ्यक्ष्णोः' इति षच् । ११–ईषदर्थे विद्यमानस्य कोः 'का' इत्यादेशः स्यादित्यर्थः ।

ईषज्जलं-काजलम् ।

**१६६७ विभाषा पुरुषे ६ । ३ । १०६ ॥**

कुपुरुषः । कापुरुषः ।

**१६६८ कवं चोष्णे ६ । ३ । १०७ ॥**

उष्णशब्दे उत्तरपदे कवं का च वा स्यात् । कोष्णम् । कवोष्णम् । कदुष्णम् ।

**१६६९ पृषोदरादीनि यथोपदिष्टम् ६ । ३ । १०९ ॥**

पृषोदरप्रकाराणि शिष्टैर्यथोच्चारितानि तथैव साधूनि । पृषत उदरं पृषोदरम् , तलोपः । वारिवाहको बलाहकः , पूर्वपदस्य वः, उत्तरपदादेश्च लत्वम् ।

'भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात् ।
गूढोत्मा वर्णविकृते र्वर्णनाशात्पृषोदरम् ॥'

**१६७० मतौ बह्वचोऽनजिरादीनाम् ६ । ३ । ११९ ॥**

दीर्घः स्यात् । अमरावती । अनजिरादीनां किम् । अजिरवती । बह्वचः किम् । व्रीहिमती, संज्ञायामित्येव । नेह । वलयवती ।

**१६७१ शरादीनां च ६ । ३ । १२० ॥**

शरावती ।

**१६७२ उपसर्गस्य घञ्यमनुष्ये बहुलम् ६ । ३ ।१२२ ।**

---

१-कोः का-इत्यादेश इति शेषः । २-**भवेद् वर्णागमा**दिति, हन् धातोः पचाद्यचि सगागमे, नस्य 'नश्चापदान्तस्य'ति-अनुस्वारः, **हंसः**—इति रूपम् । वर्णविपर्ययात्-सिंहः, हिंसि हिंसायाम् , इत्यतः पचाद्यचि, इदित्वान्नुम् नश्चेत्यनुस्वारः, हकार-सकारयोर्विपर्यये **सिंहः** इति रूपमित्यर्थः । 'गूढ आत्मा' इति विग्रहे उत्तरपदादेरकारस्य उकारे पूर्वपरयोः 'आद्गुणः' इति गुणे-**गूढोत्मा** इति रूपम् , तदुक्तम्-**गूढोत्मा वर्णविकृते**रिति । पृषत उदरम् इत्यत्र तकारलोपे, आद्गुणे **पृषोदरम्** इति, तदुक्तं-**वर्णनाशात्पृषोदरम्** इति । ३-मतुप् प्रत्यये परे बह्वचो दीर्घः स्यात्सञ्ज्ञायां नतु-अजिरादीनामित्यर्थः । ४-मतौ दीर्घः सञ्ज्ञायामिति शेषः । ५-उपसर्गस्य बहुलं दीर्घः स्याद् घञन्ते परे नतु मनुष्ये ।

परीपाकः, परिपाकः। अमनुष्ये किम्—निषादः[1]।

**१६७३ नरे संज्ञायाम् ६। ३। १२९।**

विश्वानरः[2]।

**१६७४ मित्रे चर्षौ ६। ३। १३०।**

विश्वामित्रः[3]। (शुनो दन्त–दंष्ट्रा–कर्ण–कुन्द–वराह–पुच्छ–पदेषु दीर्घो वाच्यः)। श्वादन्तः।

**१६७५ प्रनिरन्तः–शरेक्षु–सक्षाम्र–कार्ष्य–खदिर–पीयूक्षा-भ्योऽसंज्ञायामपि ८। ४। ५।**

एभ्यः परस्य वनस्य नस्य णत्वम्। प्रवणम्[4]।

**१६७६ विभाषौषधि–वनस्पतिभ्यः[5] ८। ४। ६।**

दूर्वावणम्, दूर्वावनम्। शिरीषवणम्, शिरीषवनम्। (द्व्यक्षर-त्र्यक्षरेभ्य एव[6])। नेह, देवदारुवनम्। (इरिकादिभ्यो न[7]) इरिकावनम्। गिरिकावनम्।

**१६७७ वाहनमाहितात् ८। ४। ८।**

आरोप्य यदुह्यते तद्वाचिस्थान्निमित्ताद्वाहनस्य नस्य णत्वम्। इक्षुवाहणम्। आहितात्किम्—इन्द्रवाहनम्[8]।

**१६७८ पानं देशे ८। ४। ९।**

पूर्वपदस्थान्निमित्तात्परस्य पानस्य नस्य णः। क्षीरं पानं येषां ते क्षीर-पाणाः=उशीनराः। सुरापाणाः=प्राच्याः।

**१६७९ वा भावकरणयोः[9] ८। ४। १०।**

---

१–पुलिन्दो नाम मनुष्यजातिविशेषः, निषीदत्यस्मिन् पापमिति निषादः। 'हलश्च' इत्यधिकरणे घञ्। २–विश्वस्य दीर्घ इति शेषः। ३–मित्रशब्दे परे विश्वस्य दीर्घः स्याद् ऋषौ वाच्य–इत्यर्थः। ४–प्रकृष्टं वनमिति विग्रहः। प्रादिसमासः। ५–एभ्यो वनस्य णत्वं वा स्याद् इत्यर्थः। ६–परस्य वनस्य णत्वं वाच्यमिति शेषः। ७–वनस्य णत्वमिति शेषः। ८–ऐरावतादौ—इन्द्रस्य स्वयमेवारोहणान्नाहितत्वमिति भावः। ९–भावे करणे च यः पान-शब्दस्तस्योक्तविषये णो वा स्यादित्यर्थः। क्षीरस्य पानमिति विग्रहः। भावे करणे वा ल्युट्। पानक्रिया पानपात्रं वेत्यर्थः।

क्षीरपानम् , क्षीरपाणम् ।

**१६८० प्रातिपदिकान्तनुम्विभक्तिषु च ८ । ४ । ११ ।**

पूर्वपदस्थान्निमित्तात्परस्य एषु स्थितस्य नस्य णो वा । माषवापिणौ । व्रीहिवापाणि । माषवापेण । पक्षे माषवापिनावित्यादि ।

**१६८१ कुमति च ८ । ४ । १३ ।**

कवर्गवत्युत्तरपदे प्राग्वत् । हरिकामिणौ । हरिकामाणि । हरिकामेण ।

**१६८२ पदव्यवायेऽपि ८ । ४ । ३८ ।**

णत्वं न । माषकुम्भवापेन । ( अतद्धित इति वक्तव्यम् ) । आर्द्रगोमयेण । शुष्कगोमयेण ।

**१६८३ पारस्करप्रभृतीनि च संज्ञायाम् ६ । १ । १५७ ।**

एतानि ससुट्कानि निपात्यन्ते । पारस्करः । किष्किन्धा । ( तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च ) । तात्पूर्वं चर्त्वेन दकारोऽपि बोध्यः । तद्बृहतोर्दकारतकारौ लुप्येते करपत्योस्तु सुट् । चौरदेवतयोरिति समुदायोपाधिः । तस्करः । बृहस्पतिः । ( प्रायस्य चित्तिचित्तयोः ) प्रायश्चित्तिः । प्रायश्चित्तम् । वनस्पतिरित्यादि । आकृतिगणोऽयम् । इति समासाश्रयविधयः ।

---

१–प्रातिपदिकान्त–नुम्—विभक्तीनां क्रमेणोदाहरणानि । २–नस्य नित्यं णत्वं स्यादित्यर्थः । ३–पदेन व्यवधानेऽपि णत्वं न स्यादित्यर्थः । ४–अतद्धिते परे यत्पदं तेन व्यवधानेऽयं निषेधो न तु तद्धितपरकपदेनेत्यर्थः । ५–पारं करोतीति विग्रहः । ६–किं=किमपि वानरसैन्यं धत्ते–इति किष्किन्धा । "आतोऽनुपसर्गे कः" टाप् , निपातनाद् द्वित्वम्, मलोपः सुट्, षत्वञ्च । ७–तत्=चौर्य्यं करोतीति विग्रहः । "कृञो हेतुताच्छील्ये" इति टः । ८–बृहती=वाक् तस्याः पतिरिति विग्रहः । 'कुक्कुट्यादीनामण्डादिषु'ति पुंवत्वम्, तलोपः, सुट् । ९–प्रायस्य चित्तिश्चित्तं वेति विग्रहः ।

"प्रायः पापं विजानीयाच्चित्तं तस्य विशोधनम्" इति स्मृतिः ।

१०–तेन–शतात्पराणि परःशतानीति सिद्धम् । इति समासाश्रयविधयः ।

इति श्रीमध्यकौमुदीटीकायां प्रभाकरीविवृतौ समासप्रकरणं सम्पूर्णम् ।

# अथ तद्धितप्रकरणम्।

**१६८४ समर्थानां[1] प्रथमाद्वा ४।१।८२॥**

इदं पदत्रयमधिक्रियते प्राग्दिश इति यावत्।

**१६८५ प्राग्दीव्यतोऽण् ४।१।८३॥**

तेन दीव्यतीत्यतः प्रागणधिक्रियते।

**१६८६ अश्वपत्यादिभ्यश्च ४।१।८४॥**

एभ्योऽण् स्यात्प्राग्दीव्यतीयेष्वर्थेषु[2]। अश्वपतेरपत्यादाश्वपतम्[3]। गाणपतम्।

**१६८७ दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः[4] ४।१।८५॥**

प्राग्दीव्यतीयेष्वर्थेषु। अणोऽपवादः[5]। दितेरपत्यादि दैत्यः[6]। अदितेरादित्यस्य वा (अपत्यम्) आदित्यः। (यणो मयो द्वे वाच्ये)। मय इति पञ्चमी यण इति षष्ठीति पक्षे यस्य द्वित्वम्।

**१६८८ हलो यमां यमि लोपः ८।४।३४॥**

वा[7] स्यात्। इत्यसति लोपे द्वित्वे च सति त्रियं रूपम्। असति लोपे द्वित्वलोपयोर्वा द्वियम्। द्वित्वाभावे लोपे च सति–एकयम्। प्राजापत्यः[8]। (देवाद्यञञौ[9]) दैव्यम्[10]। दैवम्। (बहिषष्टिलोपो यञ्च)। बाह्यः[11]। (ईकक्[12] च)।

---

१–समर्थानां मध्ये यः प्रथमः तस्मात्;-अर्थात् सूत्रे प्रथमोच्चारितशब्दबोध्यात् प्रत्ययो वा स्यादिति सूत्रार्थः। २–अपत्यादिषु। ३–तद्धितेष्वचामादेः इत्यादिवृद्धिः 'यस्येति च' इकारलोपः। ४ दित्यादिभ्यः पत्युत्तरपदाच्च ण्यः स्यादित्यर्थः। ५–"प्राग्दीव्यतोऽण्" इति सामान्यप्राप्तस्याऽणः, "अश्वपत्यादिभ्यश्च" इति प्राप्तस्य चाऽणोऽपवाद इत्यर्थः। ६–षष्ठ्यन्तात्-दितिशब्दात् ण्यः प्रत्ययः, 'चुटू' इति णकार इत्, 'सुपो धातुप्रातिपदिकयोः' इति सुपः=ङसो लुक्, (एवं सर्वत्रैव तद्धितेषु–सुब्लुग् बोध्यः) आदिवृद्धिः, 'यस्येति चे'ति इकारलोपः। ७-हलः परस्य यमो लोपः स्याद् वा यमीत्यर्थः। ८–प्रजापतेरपत्यं पुमान् प्राजापत्यः। आदिवृद्धिः, 'यस्येति च'। ९–यञ्, च अञ् च वक्तव्यावित्यर्थः। १०–देवस्यापत्यादीति विग्रहः। आदिवृद्धिः, यस्येति चेति लोपः। ११–बहिर्भवो बाह्यः, बाहीकः, इति च। १२–बहिष ईकक् च् स्यात्प्रकृतेष्टिलोपश्चेति वक्तव्यमित्यर्थः।

**१६८९ किति च ७ । २ । ११८ ॥**

किति तद्धितेऽचामादेरचो वृद्धिः । बाह्लीकः । ( गोरजादिप्रसङ्गे यत् ) गोरपत्यादि—गव्यम् ।

**१६९० उत्सादिभ्योऽञ् ४ । १ । ८६ ॥**

औत्सः । ( इत्यपत्यादिविकारान्तार्थाः प्रत्ययाः । )

**१६९१ स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ४ । १ । ८७ ॥**

धान्यानां भवन इत्यतः प्रागर्थेष्वाभ्यामेतौ स्तः । स्त्रैणः पौंस्नः ।

**१६९२ तस्यापत्यम् ४ । १ । ९२ ॥**

षष्ठ्यन्तात्कृतसन्धेः समर्थादपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः ।

**१६९३ ओर्गुणः ६ । ४ । १४६ ॥**

उवर्णान्तस्य भस्य गुणस्तद्धिते । ओरोदिति वक्तव्ये गुणोक्तिः संज्ञापूर्वको विधिरनित्य इति ज्ञापयितुम् । तेन स्वायंभुवमित्यादि सिद्धम् । उपगोरपत्यमौपगवः । आश्वपतः । दैत्यः । औत्सः । स्त्रैणः । पौंस्नः ।

**१६९४ अपत्यं पौत्रप्रभृति गोत्रम् ४ । १ । १६२ ॥**

अपत्यत्वेन विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात् ।

**१६९५ एको गोत्रे ४ । १ । ९३ ॥**

---

१—'अच्' आदिर्यस्य सः—अजादिः प्रत्ययः;=अणादिः, तत्प्राप्तौ गोशब्दाद् यत् स्यादित्यर्थः । २—'वान्तो यि प्रत्यये' इत्यव् । ३—उत्स—महानस—पृथ्वी—इत्यादयः—उत्सादयः । ४—स्त्रिया अपत्यम् पुमान्, स्त्रीषु भवः, स्त्रीणां समूह इति वा विग्रहः, नञ्प्रत्ययो णत्वम्, आदिवृद्धिश्च स्त्रैणः । ५—विग्रहः स्त्रैणवत्, स्नञ्प्रत्यये स्वादिष्विति पदत्वात्, संयोगान्तस्येति सलोपः । आदिवृद्धिश्च 'पौंस्नः' । ६—'अत इञ्' इत्याद्या वैशेषिका इत्यर्थः । ७—ननु उकारस्थाने भवन् गुणः स्थानसाम्यादोकार एव भवतीति लाघवाद् "ओरोत्" इत्येव सिद्धे 'गुण' इति गुरुनिर्देशो व्यर्थ इत्यत आह—ओरोदिति । गुणशब्दोपादानेऽस्य विधेः संज्ञापूर्वकत्वेनाऽनित्यत्वं सिध्यतीत्यर्थः । तेन "स्वयंभुवोऽपत्यादि"—इति विग्रहेऽण् प्रत्यये स्वायम्भुवम्, इत्यत्र गुणाऽभावः उवङ् । ८—अण् प्रत्यये आदिवृद्धिः ।

गोत्रे एक एव अपत्यप्रत्ययः स्यात्। उपगोर्गोत्रापत्यम्—औपगवः।

**१६९६ गर्गादिभ्यो यञ् ४।१।१०५॥**

गोत्रापत्ये। गर्गस्य गोत्रापत्यं गार्ग्यः। वात्स्यः।

**१६९७ यञञोश्च २।४।६४॥**

गोत्रे यञन्तमञन्तं च तदवयवयोरेतयोर्लुक् तत्कृते बहुत्वे न तु स्त्रियाम्। गर्गाः। वत्साः।

**१६९८ गोत्रेऽलुगचि ४।१।८९॥**

अजादौ प्राग्दीव्यतीये विवक्षिते गोत्रप्रत्ययस्यालुक् स्यात्। गर्गाणां छात्राः। वक्ष्यमाणो वृद्धाच्छः,

**१६९९ आपत्यस्य च तद्धितेऽनाति ६।१।१५१॥**

हलः परस्यापत्ययकारस्य लोपस्तद्धिते नत्वाकारे। गार्गीयाः। अनाति किम्—गार्ग्यायणः। प्राग्दीव्यतीये किम्—गर्गेभ्यो हितं गर्गीयम्। अचि किम्। गर्गेभ्यः आगतं—गर्गरूप्यम्।

**१७०० जीवति तु वंश्ये युवा ४।१।१६५॥**

वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसंज्ञमेव स्यान्न तु गोत्रसंज्ञम्।

**१७०१ गोत्राद्यून्यस्त्रियाम् ४।१।९४॥**

---

१—अत्र उपगुशब्द एव प्रत्ययं लभते नतु पुनः 'औपगव' शब्दः, अर्थात् गोत्रापत्येऽण् एव भवति नतु तदन्तात्पुनः 'इञ्' । २—आदिवृद्धिः, यस्येति च, इत्यलोपः। एवं 'वात्स्य' इत्यत्रापि। ३—तेन वृद्ध्यभावः। ४—गार्ग्यशब्दाच्छप्रत्यये यञोऽलुकि न वृद्ध्यभावः, यकारस्य लोपे, छस्य—ईय्, गार्गीयाः। ५—यञन्ताद् युवापत्येऽर्थे यञिञोश्चेति फक्, फस्य 'आयन्' आकारपरत्वात् यकारस्य न लोपः, गार्ग्यायणः। ६—'गोत्रेऽलुगचि, इति सूत्रे इति शेषः। ७—अत्र तस्मै हितमिति गार्ग्यशब्दाच्छः, तस्य प्राग् दीव्यतीयत्वाऽभावेन तस्मिन् परे यञञोश्चेति लुग् भवत्येव। तथाचादिवृद्ध्यभावः। ८—अत्र "हेतुमनुष्येभ्यः" इति रूप्यप् प्रत्ययः। तस्याजादित्वाभावाद् यञो नाऽलुक्। ९—वंशः=उत्पादकपित्रादिपरम्परा, तत्र भवो वंश्यः, दिगादित्वाद् यत्।

यून्यपत्ये विवक्षिते गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात्स्त्रियां तु न युवसंज्ञा ।

**१७०२ यञिञोश्च ४ । १ । १०१ ॥**

गोत्रे यौ यञिञौ तदन्तात्फक् ।

**१७०३ आयनेयीनीयियः फ-ढ-ख-छ-घां प्रत्ययादीनाम् ७ । १ । २ ॥**

प्रत्ययादेः फस्य आयन्, ढस्य एय्, खस्य ईन्, छस्य ईय्, घस्य इय् स्युः । गर्गस्य युवापत्यं-गार्ग्यायणः । दाक्षायणः ।

**१७०४ अत इञ् ४ । १ । ९५ ॥**

अपत्येऽर्थे । दाक्षिः ।

**१७०५ बाह्वादिभ्यश्च ४ । १ । ९६ ॥**

बाहविः । औडुलोमिः । औडुलोमी । ( लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः ) । बाह्वादेरपवादः । उडुलोमाः । आकृतिगणोऽयम् ।

**१७०६ अनृष्यानन्तर्ये बिदादिभ्योऽञ् ४ । १ । १०४ ॥**

ये त्वत्रानृषयस्तेभ्योऽपत्येऽन्यत्र तु गोत्रे । बिदस्य गोत्रं बैदः । बैदौ । बिदाः । पुत्रस्यापत्यं पौत्रः, पौत्रौ । यञञोश्चेति सूत्रे प्रवराध्यायप्रसिद्धं गोत्रं तेनेह न । पौत्राः । एवं दौहित्रादयः ।

**१७०७ शिवादिभ्योऽण् ४ । १ । ११२ ॥**

अपत्ये । शैवः । गाङ्गः ।

**१७०८ ऋष्यन्धक-वृष्णि-कुरुभ्यश्च ४ । १ । ११४ ॥**

---

१-यञन्ताद् 'गर्ग' शब्दात् ( गार्ग्यात् ) युवापत्ये फकि रूपम् । २-इञन्ताद् 'दक्ष' शब्दात् ( दाक्षेः ) फक् । ३-'अदन्तं यत्प्रातिपदिकं तत्प्रकृतिकात्षष्ठ्यन्तादिञ् स्यादपत्येऽर्थे' इत्यर्थः । ४-इञ् स्यादित्यर्थः । ५-'ओर्गुणः' इति गुणोऽवादेशः, आदिवृद्धिश्च । ६-उडूनीव (=नक्षत्राणीव ) लोमानि यस्य स 'उडुलोमा' उडुलोम्नोऽपत्यं पुमान् औडुलोमिः । "नस्तद्धिते" इति टिलोपः । ७-बहुवचनेषु । ८-औडुलोमिः, औडुलोमी, उडुलोमाः । औडुलोमिम्, उडुलोमान्, इत्यादि । ९-बहुवचने 'यञञोश्च' इति 'अञ्प्रत्ययस्य लुक् । १०-नात्र गोत्रे प्रत्ययः, इति न-अञो लुक् । ११-अण् स्यादित्यर्थः ।

ऋषिभ्यः—वासिष्ठः, वैश्वामित्रः। अन्धकेभ्यः—श्वाफल्कः। वृष्णिभ्यः वासुदेवः। कुरुभ्यः—नाकुलः, साहदेवः।

**१७०९ मातुरुत्संख्या-सं-भद्रपूर्वायाः ४। १। ११५॥**

संख्यादिपूर्वस्य मातृशब्दस्य उदादेशः स्यादण् प्रत्ययश्च। द्वैमातुरः[1]। षाण्मातुरः। भाद्रमातुरः।

**१७१० स्त्रीभ्यो ढक् ४। १। १२०॥**

स्त्रीप्रत्ययान्तेभ्यो ढक्। वैनतेयः[2]।

**१७११ कन्यायाः कनीन च ४। १। ११६॥**

चादण्। कानीनो=व्यासः, कर्णश्च[3]।

**१७१२ राजश्वशुराद्यत् ४। १। १३७॥**

( राज्ञो जातावेव )।

**१७१३ ये चाभावकर्मणोः ६। ४। १६८॥**

यादौ तद्धिते अन् प्रकृत्या स्यान्न तु भावकर्मणोः। राजन्यः[4]। श्वशुर्यः[5] जातावेवेति किम्—

**१७१४ अन् ६। ४। १६७॥**

प्रकृत्याणि परे। राजनः[6]।

**१७१५ क्षत्राद्धः ४। १। १३८॥**

क्षत्रियः। जातावित्येव। क्षात्रिरन्यः[8]।

**१७१६ रेवत्यादिभ्यष्ठक् ४। १। १४६॥**

**१७१७ ठस्येकः ७। ३। ५०॥**

१—द्वयोर्मात्रोरपत्यं पुमान्—द्वैमातुरः, एवं षाण्मातुरः, इत्यादि। २—विनताया अपत्यम्, ढस्य—एय्, किति चेत्यादिवृद्धिः, **वैनतेयः**=गरुडः। ३—कन्याशब्दस्याऽपत्यार्थे 'कनीन' इत्यादेशो भवति 'अण्' प्रत्ययश्चेत्यर्थः। ४-राजन् शब्दात् यति प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपो न, **राजन्यः**=क्षत्रियः। ५—श्वशुरस्यापत्यं **श्वशुर्यः**=श्यालः। "यस्येति च" इति 'अ'लोपः। ६—जात्यतिरिक्तेऽर्थे, राज्ञोऽपत्यं पुमान्—**राजनः**। अण् प्रत्यये प्रकृतिभावः। ७—'आयने....' इति सूत्रेण घस्य 'इय्'। ८—अजातावित्युक्तेः न घः किन्तु इञ् प्रत्ययः। क्षात्रिः।

अङ्गात्परस्य ठस्येकादेशः । रैवतिकः[1] ।

**१७१८ गोत्रे कुञ्जादिभ्यश्च्फञ् ४ । १ । ९८ ॥**

**१७१९ व्रातच्फञोरस्त्रियाम् ५ । ३ । ११३ ॥**

व्रातवाचिभ्यश्च्फञन्तेभ्यश्च स्वार्थे ञ्यप्रत्ययः स्यात् । कौञ्जायन्यः[2] । कौञ्जायन्यौ । बहुत्वे लुग्वक्ष्यते[3] । ब्राध्नायन्यः[4] ।

**१७२० नडादिभ्यः फक् ४ । १ । ९९ ॥**

गोत्र इत्येव । नाडायनः[5] । चारायणः । अनन्तरो नाडिः[6] ।

**१७२१ अश्वादिभ्यः फञ् ४ । १ । ११० ।**

गोत्रे । आश्वायनः ।

**१७२२ इतश्चानिञः ४ । १ । १२२ ॥**

इकारान्ताद्द्व्यचोऽपत्ये ढक् न त्विञन्तात् । दौलेयः[7] । नैधेयः । आत्रेयः आत्रेयौ ।

**१७२३ अत्रि-भृगु-कुत्स-वसिष्ठ-गोतमाङ्गिरोभ्यश्च २ । ४ । ६५ ॥**

एभ्यो गोत्रप्रत्ययस्य लुक् स्यात् तत्कृतबहुत्वे न तु स्त्रियाम् । अत्रयः । भृगवः[8] । कुत्साः । वसिष्ठाः । गोतमाः । अङ्गिरसः ।

---

१—'किति च' इति आदिवृद्धिः । 'यस्येति च' इलोपः । रेवत्या अपत्यं पुमान् इत्यादि विग्रहः । २—कुञ्जशब्दात् च्फञ् प्रत्यये फस्य आयन्, आदिवृद्धिः, ततः कौञ्जायनशब्दात् ञ्यप्रत्यये **कौञ्जायन्यः** । ३—तद्राजत्वात् 'तद्राजस्य बहुषु' इत्यनेन । ४—ब्रध्नशब्दात् षष्ठ्यन्तात् च्फञ्, सुब्लुक्, फस्य आयन्, आदिवृद्धिः, ततो ञ्यप्रत्यये साधुः । ५—इञोऽपवादोऽयं फक् । नडस्य गोत्रापत्यं **नाडायनः** फस्य आयन्, आदिवृद्धिः, एवं चरस्य गोत्राऽपत्यं **चारायणः** । ६—अनन्तरापत्यस्य गोत्रत्वाऽभावात् फकोऽभावे 'अत इञि'ति इञेव । नडस्याऽनन्तरापत्यम् ( पुत्रः ) **नाडिः** । ७—दुलेरपत्यं पुमान् **दौलेयः**, ढक्, ढस्य एयादेशः किति चेत्यादिवृद्धिः । एवं निधेरपत्यं **नैधेयः**, अत्रेरपत्यम् **आत्रेयः** । बहुवचने ढको लुकि सति—**अत्रयः** । ८—एकवचने द्विवचने च, भार्गवः, भार्गवौ वासिष्ठः, वासिष्ठौ । कौत्सः, कौत्सौ । गौतमः, गौतमौ । आङ्गिरसः, आङ्गिरसौ ।

**१७२४ शुभ्रादिभ्यश्च ४ । १ । १२३ ॥**

शौभ्रेयः[1] ।

**१७२५ कल्याण्यादीनामिनङ् ४ । १ । १२६ ॥**

एषामिनङादेशः स्यात् ढक् च । काल्याणिनेयः[2] । बान्धकिनेयः ।

**१७२६ कुलटाया वा ४ । १ । १२७ ॥**

इनङ्मात्रं विकल्प्यते ढक् तु नित्यः पूर्वेणैव[3] । कौलटेयः । कौलटिनेयः । सती भिक्षुक्यत्र कुलटा ।

**१७२७ चटकाया ऐरक् ४ । १ । १२८ ॥**

( चटकादिति वाच्यम्[4] ) । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति सिध्यति । चटकस्य चटकाया वा अपत्यं चाटकैरः[5] । ( स्त्रियामपत्ये लुग् वक्तव्यः ) । तयोरेव स्त्र्यपत्यं–चटका ।

**१७२८ गोधाया ढ्रक् ४ । १ । १२९ ॥**

गौधेरः[6] । शुभ्रादित्वात्पक्षे ढक् । गौधेयः ।

**१७२९ क्षुद्राभ्यो वा ४ । १ । १३१ ॥**

अङ्गहीनाः शीलहीनाश्च क्षुद्रास्ताभ्यो ढ्रक् वा । पक्षे ढक् । काणेरः[7] । काणेयः । दासेरः । दासेयः ।

**१७३० पितृष्वसुश्छण् ४ । १ । १३२ ॥**

---

१–ढक् स्यादित्यर्थः । शुभ्रस्यापत्यं—**शौभ्रेयः**, ढक्, ढस्य एयादेशः, आदिवृद्धिश्च । २–कल्याण्या अपत्यं पुमान् इति विग्रहे ईकारस्य इनङादेशे कल्याणिन्–शब्दात् ढकि एयादेशे आदिवृद्धौ–**काल्याणिनेयः** एवं बन्धक्या अपत्यं—**बान्धकिनेयः** । ३–'स्त्रीभ्यो ढक्, इत्यनेनैवेत्यर्थः । कुलटाया अपत्यं–**कौलटेयः, कौलटिनेयः**, नित्यत्वादनङि तदभावे न ढक् । ४–तेन 'चटक' इत्यस्मादपि स्यादेव, स्त्रीलिङ्गात्तु प्रातिपदिकग्रहणपरिभाषया सिद्धयतीत्यर्थः । ५–चटकस्य चटकाया वेत्यर्थः । चटकाशब्दस्य जातित्वेऽपि अजादिगणपठितत्वात् टाप् । ६–गोधाया अपत्यं पुमान्–**गौधेरः** । ढ्रक् ढस्य एयादेशः, लोपो व्योरिति यलोपः, आदिवृद्धिश्चेति । ढक्–पक्षे **गौधेयः** । ७–काणाया अपत्यम्–**काणेरः, काणेयः** । दास्या अपत्यं **दासेरः, दासेयः** ।

अणोऽपवादः । पैतृष्वस्रीयः[1] ।

**१७३१ ढकि लोपः ४ । १ । १३३ ॥**

पितृष्वसुरन्त्यस्य लोपः स्यात्-ढकि । अत एव ज्ञापकात् ढगपि । पैतृष्वसेयः ।

**१७३२ मातृष्वसुश्च ४ । १ । १३४ ॥**

पितृष्वसुर्यदुक्तं तदस्यापि स्यात् । मातृष्वस्रीयः[2] । मातृष्वसेयः ।

**१७३३ कुलात्खः[3] ४ । १ । १३९ ॥**

कुलीनः । तदन्तादपि, उत्तरसूत्रे अपूर्वपदादिति लिङ्गात् । आढ्यकुलीनः ।

**१७३४ अपूर्वपदादन्यतरस्यां यड्ढकञौ ४ । १ । १४० ॥**

कुलादित्येव । पक्षे खः । कुल्यः । कौलेयकः । कुलीनः ।

**१७३५ महाकुलादञ्-खञौ ४ । ४ । १४१ ॥**

अन्यतरस्याम् इत्यनुवर्तते, पक्षे खः । माहाकुलः । माहाकुलीनः । महाकुलीनः ।

**१७३६ दुष्कुलाड्ढक् ४ । १ । १४२ ॥**

वा । पक्षे खः । दौष्कुलेयः । दुष्कुलीनः ।

**१७३७ स्वसुश्छः ४ । १ । १४३ ॥**

स्वस्रीयः[4] ।

**१७३८ भ्रातुर्व्यच्च[5] ४ । १ । १४४ ॥**

चाच्छः । भ्रातृव्यः । भ्रात्रीयः ।

१-पितृष्वसुरपत्यं **पैतृष्वस्रीयः**, छण्, छस्य ईयादेशः, णित्वादादिवृद्धिः । सकारात्परस्य ऋकारस्य यण् । २-मातृष्वसुरपत्यम् इति विग्रहे, छण् प्रत्यये **मातृष्वस्रीयः**, ढकि तु **मातृष्वसेयः** । ३-अपत्ये इति शेषः । कुलस्यापत्यं **कुलीनः**, खस्य ईनादेशः । ४-स्वसुरपत्यं पुमान् **स्वस्रीयः** । छस्य ईयादेशः, ऋकारस्य यण् । ५-भ्रातृशब्दादपत्येऽर्थे व्यत्प्रत्ययः स्यादित्यर्थः । भ्रातुरपत्यं **भ्रातृव्यः** । छप्रत्यये **भ्रात्रीयः** । छस्य ईयादेशः, ऋकारस्य यण्-रेफः ।

**१७३६ मनोर्जातावञ्यतौ षुक् च ४ । १ । १६१ ॥**

समुदायार्थो जातिः । मानुषः । मनुष्यः । ( तक्ष्णोऽणुपसंख्यानम् )

**१७४० षपूर्वहन्-धृत-राज्ञामणि ६ । ४ । १३५ ॥**

एषामणि तद्धितेऽनोकारलोपः । ताक्ष्णः ।

**१७४१ तिकादिभ्यः फिञ् ४ । १ । १५४ ॥**

तैकायनिः ।

**१७४२ वृद्धिर्यस्याचामादिस्तद्वृद्धम् १ । १ । ७३ ॥**

यस्य समुदायस्याचां मध्ये आदिर्वृद्धिस्तद्वृद्धसंज्ञं स्यात् ।

**१७४३ उदीचां वृद्धादगोत्रात् ४ । १ । १५७ ॥**

आम्रगुप्तायनिः । प्राचां तु—आम्रगुप्तिः ।

**१७४४ प्राचामवृद्धात्फिन्बहुलम् ४ । १ । १६० ॥**

ग्लुचुकायनिः ।

**१७४५ जनपदशब्दात्क्षत्रियादञ् ४ । १ । १६८ ॥**

जनपद-क्षत्रिययोर्वाचकादञ् अपत्ये । पाञ्चालः । 'क्षत्रियसमानशब्दा-

१-मनुशब्दात् 'अञ्' 'यत्' एतौ प्रत्ययौ स्तः, तयोश्च मनुशब्दस्य षुगागमः स्यात् प्रकृतिप्रत्ययसमुदायेन जातौ गम्यायामित्यर्थः । २-नात्रापत्यग्रहणं सम्बध्यते इति भावः । अन्यथा **मानुषा** इति बहुवचने 'यञञोश्चे'ति अञो लुक् स्यादिति बोध्यम् । जातिभिन्ने च औत्सर्गिकेऽणि **मानवः** इति । ३-तक्ष्णोऽपत्यं पुमान्—**ताक्ष्णः**, अण् प्रत्यये, तक्षन् इत्यस्याऽकारलोपे णत्वे रूपम् । आदिवृद्धिः । ४-वृद्धिः=आ-ऐ-औकाररूपा । यथा शाला, इत्यादि । ५-वृद्धसंज्ञकादगोत्रप्रत्ययान्तात् फिञ् स्यात्, उदीचां मते इत्यर्थः । ६-आम्रगुप्तस्यापत्यम् **आम्रगुप्तायनिः** । फिञ्, फस्य आयन् । प्राचां मते तु 'अत इञ्' **आम्रगुप्तिः** । ७-अवृद्धसंज्ञकादपत्ये बहुलं फिन् स्यादित्यर्थः । बहुलग्रहणेनैव विकल्पे सिद्धे प्राचां ग्रहणं पूजार्थम् । ग्लुचकस्यापत्यम्-**ग्लुचकायनिः** । ८-पञ्चालो देशः, राजा च, जनपदवाचित्वे सति क्षत्रियवाचकत्वात्, तस्मादञ् । पञ्चालस्य (राज्ञः) अपत्यं **पाञ्चालः** । ९-क्षत्रियवाचकशब्देन समानशब्दो यो जनपदवाचकः शब्दस्तस्मात् षष्ठ्यन्ताद् राजन्यर्थेऽपत्यवत्प्रत्यया भवन्तीत्यर्थः ।

जनपदात् तस्य राजन्यपत्यवत्' । पञ्चालानां राजा–पाञ्चालः । (पूरोरण्[1])
पौरवः ।

**१७४६ द्व्यञ्-मगध-कलिङ्ग-सूरमसादण् ४ । १ । १७० ॥**

द्व्यच् । आङ्गः[2] । वाङ्गः । मागधः । (पाण्डोर्ड्यण्[3]) पाण्ड्यः ।

**१७४७ वृद्धेत्कोशलाजादाञ् ञ्यङ् ४ । १ । १७१ ॥**

वृद्धात्—आम्बष्ठ्यः[5] । इत्—आवन्त्यः[6] । कौशल्यः । अजादस्यापत्यम्[7]
आजाद्यः ।

**१७४८ कुरुनादिभ्यो ण्यः[8] ४ । १ । १७२ ॥**

कौरव्यः । नैषध्यः ।

**१७४९ ते तद्राजाः ४ । १ । १७४ ॥**

अञादयस्तद्राजसंज्ञाः स्युः ।

**१७५० तद्राजस्य बहुषु तेनैवास्त्रियाम् २ । ४ । ६२ ॥**

बहुष्वर्थेषु तद्राजस्य लुक् तत्कृते बहुत्वे न तु स्त्रियाम् । पञ्चाला[10] इत्यादि ।

**१७५१ कम्बोजाल्लुक्[11] ४ । १ । १७५ ॥**

१–पूरुशब्दस्य जनपदवाचित्वाभावात् प्राग्दीव्यतीयेऽणि सिद्धे तद्राजार्थं वचनम् । पूरोर्गोत्रापत्यं **पौरवः**। २–अङ्गस्यापत्यमिति विग्रहः । अङ्गदेशस्य राजा वा । एवमग्रेऽपि । ३–पाण्डोरपत्यं पाण्डुदेशस्य राजा वा—**पाण्ड्यः** । ४–जनपदक्षत्रियोभयवाचकाद् वृद्धसंज्ञकाद् इदन्तात् कोसलाद् अजादाच्चापत्ये ञ्यङ् इत्यर्थः । ५–आम्बष्ठस्यापत्यम्, तदाख्यदेशस्य राजा वा–**आम्बष्ठ्यः** । ६–अवन्तेरपत्यम्, तदाख्यदेशस्य राजा वा **आवन्त्यः** । एवं **कौसल्यः** । ७–देशवाचकत्वे तु अजादानां राजेति विग्रहः । ८–कुरुशब्दान् नकारादिभ्यश्च जनपदक्षत्रियवाचकेभ्योऽपत्ये राजनि चार्थे ण्यप्रत्ययः स्यादित्यर्थः । कुरोरपत्यं कुरूणां राजा वा–**कौरव्यः** । निषधस्यापत्यं निषधानां राजा वा—**नैषध्यः** । "नैषधः" इत्यत्र तु शैषिकोऽण् प्रत्ययः । ९–तद्राजस्य=तद्राजसंज्ञकस्य प्रत्ययस्येत्यर्थः । १०–तद्राजप्रत्ययस्याञो बहुवचने लुकि, आदिवृद्ध्यभावः । एवमन्यत्रापि । ११–कम्बोजात्परस्य तद्राजप्रत्ययस्य लुक् स्यादित्यर्थः । अबहुवचनार्थं सूत्रम् ।

तद्राजस्य। कम्बोजः, कम्बोजौ। ( कम्बोजादिभ्य इति वक्तव्यम् )। चोलः। शकः। केरलः। यवनः।

**१७५२ अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ४।१।७८॥**

त्र्यादीनामन्त्यमुत्तमं तस्य समीपमुपोत्तमम्, गोत्रे यावणिञौ विहितौ अनार्षौ तदन्तयोर्गुरूपोत्तमयोः प्रातिपदिकयोः स्त्रियां ष्यङादेशः। 'यङश्चाप्' कुमुदगन्धेर्गोत्रापत्यं स्त्री कौमुदगन्ध्या। वाराह्या। अनार्षयोः किम्— वासिष्ठी। गुरूपोत्तमयोः किम्—औपगवी। गोत्रे किम्—अहिच्छत्रे जाता आहिच्छत्री। ॥ इत्यपत्याधिकारः ॥

# अथ रक्ताद्यर्थकाः।

**१७५३ तेन रक्तं रागात् ४।२।१॥**

कषायेण रक्तं वस्त्रं—काषायम्। माञ्जिष्ठम्। रागात्किम्—देवदत्तेन रक्तं

---

१–जनपदशब्दादिति विहितस्य अञो लुक्। कम्बोजस्यापत्यं कम्बोजानां राजा वा—**कम्बोजः**। एवं चोलस्यापत्यं चोलानां राजा वा **चोल** इत्यादि। २–कुमुदगन्ध इव गन्धो यस्येति विग्रहे 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्य उत्तरपदलोपश्चेति बहुव्रीहिः, पूर्वखण्डे उत्तरपदस्य गन्धशब्दस्य लोपश्च। 'उपमानाच्च' इति इत्वम्। कुमुदगन्धेरपत्यं स्त्रीति विग्रहेऽण् 'यस्येति च' इतीकारलोपे आदिवृद्धौ कौमुदगन्धशब्दः। तत्र धकारादणोऽकार उत्तमः, तत्समीपवर्ती गुरुः गकारादकारः, 'संयोगे गुरुः' इत्युक्तेः। एवं च गुरूपोत्तमं प्रातिपदिकं कौमुदगन्धेत्यणन्तम्, तदवयवस्याणः ष्यङादेशे स्त्रियां 'यङश्चाप्' इति चाप् प्रत्यये **कौमुदगन्ध्या**। ३–इञन्तोदाहरणमिदम्। वराहस्यापत्यं स्त्रीति विग्रहः 'अत इञ्', अकारलोपः, वाराहिशब्दः। तत्र इकारः उत्तमः, रेफादाकारः उत्तमसमीपवर्ती गुरुः। इञ इकारस्य ष्यङादेशः ततश्चाप् प्रत्ययः, **वाराह्या**। ४–अत्र ऋष्यण्। ५–अणन्तत्वेऽपि गुरूपोत्तमत्वाभावान्न ष्यङादेशः। ६–जातार्थेऽयमण् नतु गोत्रे इति न ष्यङ्। ॥ इत्यपत्याधिकारः ॥

७–तेन नाम तृतीयान्तात् रागवाचकात् शब्दात् रक्तमित्यस्मिन्नर्थे अण् स्यादित्यर्थः। एवं सर्वत्रैवंविधेषु स्थलेषु—अर्थाः कल्पनीयाः। ८–रागः=रक्त-पीत-कषायादिवर्णः इत्यर्थः।

वस्त्रम् ।

**१७५४ लाक्षा-रोचनाट्ठक्[1] ४ । २ । २ ॥**

लाक्षिकः । रौचनिकः । ( शकलकर्दमाभ्यामुपसंख्यानम्[2] ) । शाकलिकः । कार्दमिकः । ( नील्या[3] अन् ) । नील्या रक्तं वस्त्रं—नीलम् । (पीतात्कन्[4] ) । पीतकम् । (हरिद्रामहारजनाभ्यामञ्[5] ) । हारिद्रम् । माहारजनम् ।

**१७५५ नक्षत्रेण युक्तः कालः[6] ४ । २ । ३ ॥**

**१७५६ तिष्यपुष्ययोर्नक्षत्राणि[7] यलोपः ४ । २ । ३ ॥**

पुष्येण युक्तं पौषमहः[8] ।

**१७५७ लुबविशेषे ४ । २ । ४ ॥**

पूर्वेण विहितस्य लुप्, षष्टिदण्डात्मकस्य कालस्यावान्तरविशेषश्चेन्न गम्यते । अद्य[9] पुष्यः ।

**१७५८ दृष्टं साम[10] ४ । २ । ७ ॥**

तेनेत्येव । वसिष्ठेन दृष्टं—वासिष्ठं[11] साम ।

**१७५९ वामदेवाड्ड्यड्ड्यौ[12] ४ । २ । ९ ॥**

वामदेवेन दृष्टं—वामदेव्यम् ।

---

१—अणोऽपवादोऽयम् । लाक्षया रक्तः पट इति विग्रहः । एवं रोचनया रक्तः पटः, **रौचनिकः** । २—आभ्यां ढक् वाच्य इत्यर्थः । शकलं=रागद्रव्यविशेषः । शकलेन रक्तः पटः—**शाकलिकः** । एवं कर्दमेन रक्तः पटः—**कार्दमिकः** । ३—नील्या अन् प्रत्ययो वक्तव्य इत्यर्थः । नीली=औषधविशेषः, 'नील' इति प्रसिद्धः । ४—पीतेन=हरितालकादिद्रव्येण रक्तं वस्त्रम्—**पीतकम्** । अणोऽपवादः, कन् । ५—अणोऽपवादोऽयम् अञ्, स्वरे भेदः । हरिद्रा प्रसिद्धा । महारजनम्=कुसुम्भम् । ६—नक्षत्रेण युक्तः काल इत्यर्थे नक्षत्रवाचकात् शब्दात् प्राग्दीव्यतीयाः प्रत्यया यथायथं स्युरित्यर्थः । ७—नक्षत्राणि=नक्षत्रवाचकाद् विहितेऽणि प्रत्यये तिष्य-पुष्य शब्दयोर्यकारस्य लोप इत्यर्थः । ८—अहः=दिनम् । ९—अद्य ( अहोरात्रः ) पुष्यः=पुष्येण युक्तः इत्यर्थः । पूर्वेण विहितस्याणो लुक् । १०—तेन दृष्टं सामेत्यर्थेऽण् स्यादित्यर्थः । ११—अण् आदिवृद्धिः । १२—ड्यत्—ड्यौ प्रत्ययौ, अणोऽपवादौ । तकारः स्वरभेदार्थः ।

**१७६० परिवृतो रथः ४ । २ । १० ॥**

वस्त्रेण परिवृतो—वास्त्रो रथः ।

**१७६१ तत्रोद्धृतममत्रेभ्यः ४ । २ । १४ ।**

शरावे उद्धृतः—शाराव ओदनः ।

**१७६२ संस्कृतं भक्षाः ४ । २ । १६ ।**

सप्तम्यन्तादण् स्यात्संस्कृतेऽर्थे यत्संस्कृतं भक्षाश्चेत्ते स्युः । भ्राष्ट्रेषु संस्कृता–भ्राष्ट्रा भक्षाः ।

**१७६३ शूलोखाद्यत् ४ । २ । १७ ।**

अणोऽपवादः । शूले संस्कृतं–शूल्यं मांसम् । उख्यम् ।

**१७६४ दध्नष्ठक् ४ । २ । १८ ।**

दध्नि संस्कृतं–दाधिकम् ।

**१७६५ सास्मिन्पौर्णमासीति ४ । २ । २१ ।**

इतिशब्दात्संज्ञायामिति लभ्यते । पौषी पौर्णमासी अस्मिन्पौषो मासः ।

**१७६६ साऽस्य देवता ४ । २ । २४ ।**

इन्द्रो देवताऽस्यैन्द्रं हविः । पाशुपतम् । बार्हस्पतम् । त्यज्यमानद्रव्ये-उद्देश्यविशेषो देवता मन्त्रस्तुत्या च । ऐन्द्रो मन्त्रः ।

**१७६७ कस्येत् ४ । २ । २५ ॥**

कशब्दस्य इकारादेशः स्यात्प्रत्ययसंनियोगेन । यस्येति लोपात्परत्वादा-दिवृद्धिः । कः=ब्रह्मा देवताऽस्य—कायं हविः । श्रीर्देवताऽस्य—श्रायम् ।

---

१–अस्मिन्नर्थेऽण् स्यादित्यर्थः । २–पात्रवाचकशब्देभ्यः तत्रोद्धृतमि-त्यर्थेऽण् स्यादित्यर्थः । ३–भक्ष्यन्ते इति भक्षाः कर्मणि घञ् ( बाहुलकात् ), भक्ष्यभूता इत्यर्थः । ४–उखाः=पात्रविशेषः, तत्र संस्कृतम्—उख्यम् । ५–अस्मिन्नर्थेऽण् स्यादित्यर्थः । ६–पौषीशब्दादणि 'यस्येति च' इति ईकारलोपः । पौषो मासः । एवं माघी पौर्णमासी–अस्मिन्निति माघो मास इत्यादि । ७-प्रथमान्ताद् देवतावाचकात् शब्दात् अस्येत्यर्थेऽण् स्यादित्यर्थः । पशुपतिर्देवताऽस्य, बृहस्पतिर्देवताऽस्येति विग्रहौ, अणि, आदिवृद्धिः । ८–क+अ (ण्) इकारादेशे 'की+अ' आदिवृद्धौ, आयादेशे कायम् । ९–अण्, आदिवृद्धौ, आयादेशः, श्रायम् ।

**१७६८ शुक्राद्घन् ४ । २ । २६ ॥**

शुक्रियम्[1] ।

**१७६९ सोमाट्ट्यण् ४ । २[2] । ३० ॥**

सौम्यम्[3] ।

**१७७० वाय्वृतुपित्रुषसो यत्[4] ४ । २ । ३१ ॥**

वायव्यम् । ऋतव्यम् ।

**१७७१ रीङ् ऋतः ७ । ४ । २७ ॥**

अकृद्यकारेऽसार्वधातुक-यकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः । 'यस्येति च' । पित्र्यम्[5] । उषस्यम् ।

**१७७२ द्यावापृथिवी-शुनासीर-मरुत्वदग्नीषोम-वास्तोष्पति-गृहमेधाच्छ च ४ । २ । ३२ ॥**

चाद्यत् । द्यावापृथिवीयम्, द्यावापृथिव्यम्[6] । शुनासीरीयम्, शुनासीर्यम् ।

**१७७३ महाराज-प्रोष्ठपदाट्ठञ् ४ । २ । ३५ ॥**

माहाराजिकम्[7] । प्रौष्ठपदिकम् ।

**१७७४ देवताद्वन्द्वे च ७ । ३ । २१ ॥**

अत्र पूर्वोत्तरपदयोरादचो वृद्धिर्ञिति णिति किति च । आग्निमारुतम्[8] ।

**१७७५ नेन्द्रस्य परस्य ७ । ३ । २२ ॥**

सौमेन्द्रः । परस्य किम्—ऐन्द्राग्नम्[9] ।

**१७७६ दीर्घाच्च वरुणस्य ७ । ३ । २३ ॥**

१-शुक्रो देवताऽस्येति-शुक्रियम्=हविः, घस्य 'इय्' । नित्वं स्वरार्थम् =(स्वरितार्थम्) । २-सोमो देवताऽस्येति विग्रहः । ३-'साऽस्य देवता, इत्यर्थे' इति शेषः । ४-वायुर्देवताऽस्येति विग्रहः, ओर्गुणः, वान्तो यि,इत्यवादेशः । एवं ऋतुर्देवताऽस्येति-ऋतव्यम् । ५-पितरो देवता अस्येति विग्रहः, पित्र्यम् । उषा देवताऽस्येति 'उषस्यं' हविः । ६-द्यावापृथिव्यौ देवते अस्येति विग्रहः । एवं शुनासीरौ देवताऽस्येत्यादिविग्रहः । ७-महाराजो=वैश्रवणः स (वरुणः) देवताऽस्येति विग्रहः । एवं प्रोष्ठपदो देवताऽस्येति विग्रहः । ठक्, ठस्येकः । आदिवृद्धिः । ८-अग्नामरुतौ देवते अस्येति विग्रहः, अण्, उभयपदवृद्धिः । ९-तेन पूर्वस्य स्यादेवेति ।

न वृद्धिः । ऐन्द्रावरुणम् । दीर्घात्किम्–अग्निवारुणीमनड्वाहीमालभेत ।

**१७७७ पितृव्य-मातुल-मातामह-पितामहाः ४ । २ । ३६ ॥**

एते निपात्यन्ते । पितुर्भ्राता—पितृव्यः । मातुर्भ्राता–मातुलः । मातुः पिता—मातामहः । पितुः पिता—पितामहः ।

**१७७८ तस्य समूहः ४ । २ । ३७ ॥**

काकानां समूहः—काकम् । बकानां समूहः—बाकम् ।

**१७७९ भिक्षादिभ्योऽण् ४ । २ । ३८ ॥**

भैक्षम् । गर्भिणीनां समूहो–गार्भिणम् । इह भस्याढे इति पुंवद्भावे कृते–

**१७८० इनण्यनपत्ये ६ । ४ । १६४ ॥**

अनपत्यार्थेऽणि इन्प्रकृत्या । तेन नस्तद्धिते इति टिलोपो न । युवतीनां समूहो—यौवतम् ।

**१७८१ गोत्रोक्षोष्ट्रोरभ्र-राज-राजन्य-राजपुत्र-वत्स-मनुष्याजाद्वुञ् ४ । २ । ३९ ॥**

ग्लुचुकायनीनां समूहो—ग्लौचुकायनकम् । औक्षकमित्यादि । आपत्यस्य चेति यलोपे प्राप्ते । ( प्रकृत्या अके राजन्य–मनुष्य–युवानः ) । राज-

---

१–देवताद्वन्द्वे चेत्यानङ् दीर्घात्परत्वाद् वरुणस्य न वृद्धिः । २–'पितुर्भ्रातरि व्यत्' **पितृव्यः** । 'मातुः ( भ्रातरि ) डुलच्' **मातुलः** । 'मातृपितृभ्यां पितरि डामहच्', इति डामहच् , डिति टिलोपः, **मातामहः, पितामहः** । ३–षष्ठ्यन्तात् 'समूहः' इत्यर्थेऽण् । ४–वार्तिकमिदम्, भसंज्ञाप्रयोजके ढभिन्ने तद्धिते पुंवद्भाव इत्यर्थः । ५–'यूनस्ति' इति तिप्रत्ययान्तात् युवतिशब्दात् समूहेऽर्थेऽण्प्रत्यये पुंवद्भावे च 'अन्' इति सूत्रेण प्रकृतिभावे **'यौवनम्'** इति सिद्ध्यति । शत्रन्तादुगितश्चेति ङीप्प्रत्यये अनुदात्तादेर्युवतीति दीर्घान्तात् समूहेऽञि तु **"यौवतम्"** । ६–ग्लुचकशब्दादपत्ये प्राचामवृद्धादिति फिन्, तत "इतो मनुष्यजातेः" इति स्त्रियां ङीष् , ततः समूहे वुञ्, "युवोरनाकौ" इत्यकादेशः आदिवृद्धिः, यस्येति चेतीकारलोपः, **ग्लौचुकायनकम्** । ७–राजन्य–मनुष्य–युवन् शब्दा अके परतः प्रकृत्या=प्रकृतिभावेन भवन्तीत्यर्थः । तेन राजन्यमनुष्ययोर्यलोपो न, युवन् शब्दस्य टिलोपश्च नेति भावः ।

न्यकम्[1]। मानुष्यकम्। (वृद्धाच्चेति वक्तव्यम्)। वार्द्धकम्[2]।

**१७८२ केदाराद्यञ्च ४। २। ४०॥**

चाद्वुञ्। कैदार्यम्[3]। कैदारकम्। (गणिकाया यञ् वक्तव्यः)। गाणिक्यम्[4]।

**१७८३ ठञ् कवचिनश्च ४। २। ४१॥**

चात्केदारादपि। कवचिनां समूहः—कावचिकम्। कैदारिकम्[5]।

**१७८४ ग्राम-जन-बन्धुभ्यस्तल् ४। २। ४३॥**[6]

ग्रामता[7]। जनता। बन्धुता। तलन्तं स्त्रियाम्। (गजसहायाभ्यां चेति वक्तव्यम्) गजता[8]। सहायता। (अह्नः खः क्रतौ)[9]। अहीनः क्रतुः।

**१७८५ अचित्तहस्तिधेनोष्ठक् ४। २। ४७॥**[10]

**१७८६ इसुसुक्तान्तात्कः ७। २। ५१॥**

इस् उस् उक् त एतदन्तात्परस्य ठस्य कः[11]। साक्तुकम्[12]। हास्तिकम्[13]। धैनुकम्।

**१७८७ केशाश्वाभ्यां यञ्छावन्यतरस्याम् ४। २। ४८॥**

पक्षे ठगणौ। कैश्यम्, कैशिकम्। अश्वीयम्, आश्वम्।

१—राजन्यानां समूहः। मनुष्याणां समूह इत्यर्थः। २—वृद्धानां समूह इति विग्रहः, वुञ्, अकादेशः, आदिवृद्धिः। ३—केदाराणां समूह इति विग्रहः। ४-गणिकानां समूहः। ५—ठस्येकादेशः, कित्वादादिवृद्धिः। ६—समूहेऽर्थे इति शेषः। ७-ग्रामाणां समूह इत्यादिविग्रहाः। ८—गजानां समूहो गजता। सहायानां समूहः सहायता। ९—'अहन्' शब्दात् समूहेऽर्थे 'ख' प्रत्ययः स्याद् यज्ञे वाच्ये इत्यर्थः। खस्य 'ईन्'। नस्तद्धिते इति टिलोपः। अहीनः=अनेकदिनसाध्यः क्रतुविशेषः। १०—षष्ठ्यन्तात् अचित्तात् (चित्तरहितवाचकात्) तथा हस्तिशब्दात् धेनुशब्दाच्च समूहेऽर्थे ठक् स्यादिति सूत्रार्थः। ११—इकादेशापवादोऽयम्। १२—सक्तूनां समूहः साक्तुकम्। १३—हस्तिनां समूहो हास्तिकम् 'नलोपः प्रातिपदिकान्तस्य' इति नलोपः। हस्तिनीनां समूह इति विग्रहेऽपि (भस्याऽढे) इति पुंवद्भावे तदेव रूपम्। एवं धेनूनां समूहो धैनुकम्, ठक्, ठस्य कः, आदिवृद्धिः।

**१७८८ पाशादिभ्यो यः ४ । २ । ४९ ॥**

पाश्या । तृणया । धूम्या । वन्या । वात्या ।

**१७८९ खल-गो-रथात् ४ । २ । ५० ॥**

खल्या । गव्या । रथ्या ।

**१७९० इनित्रकट्यचश्च ४ । २ । ५१ ॥**

खलादिभ्यः क्रमात्स्युः । खलिनी । गोत्रा । रथकट्या । ( खलादिभ्य इनिर्वक्तव्यः ) । डाकिनी । कुटुम्बिनी । आकृतिगणोऽयम् ।

**१७९१ तदस्यां प्रहरणमिति क्रीडायां णः ४ । २ । ५७ ॥**

दण्डः प्रहरणमस्यां क्रीडायां—दाण्डा । मौष्टा ।

**१७९२ घञः सास्यां क्रियेति ञः ४ । २ । ५८ ॥**

घञन्तात् क्रियावाचिनः प्रथमान्तादस्यामित्यर्थे स्त्रीलिङ्गे ञप्रत्ययः ।

**१७९३ श्येनतिलस्य पाते ञे ६ । ३ । ७१ ॥**

अनयोर्मुम् स्यात् ञप्रत्यये परे पातशब्दे उत्तरपदे । श्यैनम्पाता मृगया । तैलम्पाता स्वधा । श्येनतिलस्य किम्—दण्डपातोऽस्यां दाण्डपाता तिथिः ।

**१७९४ तदधीते तद्वेद ४ । २ । ५९ ॥**

**१७९५ नय्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ७ । ३ । ३ ॥**

पदान्ताभ्यां यकारवकाराभ्यां परस्याचो न वृद्धिः, किन्तु ताभ्यां पूर्वौ

१—समूहे इत्येव । पाशानां समूह इत्यादिविग्रहाः । २—समूहे यप्रत्यय इति शेषः । ३—खलात् इनिः, गोशब्दात् त्रः, रथात् कट्यच् समूह एव । स्त्रीत्वं लोकात् । खलानां समूहः **खलिनी** । गवां समूहो **गोत्रा** । रथानां समूहो **रथकट्या** । ४—तदस्यां क्रीडायां प्रहरणमित्यर्थे प्रथमान्तात् प्रहरणवाचकाद् णप्रत्ययः स्यादित्यर्थः । ५—मुष्टिः प्रहरणमस्यां क्रीडायामिति विग्रहः । णे, आदिवृद्धिः । ६—श्येनपातोऽस्यां वर्तते इति **श्यैनम्पाता** । तैलपातोऽस्यां वर्तते इति **तैलम्पाता**, ञप्रत्यये, आदिवृद्धिः, पूर्वपदयोर्मुम् । ७—दण्डपातोऽस्यामिति विग्रहः, नात्र मुम् । ८—द्वितीयान्ताद्; एतस्मिन्नर्थेऽणादयः प्रत्ययाः स्युरित्यर्थः । ९—यकारात् पूर्वम् 'ऐ', वकारात्पूर्वम् 'औ' इत्यर्थः

क्रमादैचावागमौ स्तः। व्याकरणमधीते वेत्ति वा-वैयाकरणः।

**१७१६ क्रमादिभ्यो वुन् ४।२।६१॥**

क्रमकः। पदकः। शिक्षकः। मीमांसकः।

**१७१७ क्रतूक्थादि-सूत्रान्ताट्ठक् ४।२।६०॥**

क्रतुविशेषवाचिनामेव ग्रहणम्। तेभ्यो मुख्यार्थेभ्यो वेदितरि, तत्प्रतिपादकग्रन्थपरेभ्यस्त्वध्येतरि। आग्निष्टोमिकः। वाजपेयिकः। उक्थं सामविशेषः तल्लक्षणपरो ग्रन्थविशेषो लक्षणयोक्थम्। तदधीते वेद वा औक्थिकः। (मुख्यार्थात्तूक्थशब्दाट्ठगणौ नेष्येते) नैयायिकः। वार्तिकः। लौकायतिकः।

---

१-व्याकरणशब्दादण् प्रत्ययः, वृद्ध्यभावे, यकारात्पूर्वम्-ऐकारागमः, **वैयाकरणः**। २-तदधीते तद् वेदेत्यर्थे क्रमादिभ्यो वुन् प्रत्ययः स्यादित्यर्थः, 'वु' इत्यस्य अकादेशः। ३-क्रमम् अधीते वेद वा,=**क्रमकः**। एवं पदम् अधीते वेद वा=**पदकः**। शिक्षाम् अधीते वेद वा—**शिक्षकः**। मीमांसाम् अधीते वेद वा=**मीमांसकः**। ४-तदधीते तद्वेदेत्यर्थयोः क्रतु-उक्थादि-सूत्रान्तशब्देभ्यः ठक् स्यादित्यर्थः। ५-ननु क्रतुविशेषाणां कथमध्ययनम्, तेषाम् अक्षरात्मकत्वाभावादित्यत आह—**तेभ्य** इति अग्निष्टोमादिशब्दाः क्रतुविशेषेषु मुख्याः, तत्प्रतिपादकग्रन्थेषु तु गौणाः। तत्र क्रतुविशेषात्मकमुख्यार्थकेभ्यः-अग्निष्टोमादिशब्देभ्यो वेदितरि प्रत्ययाः अग्निष्टोमादिक्रतुप्रतिपादकग्रन्थेषु लक्षणया विद्यमानेभ्यस्तु तेभ्योऽध्येतरि प्रत्यया इत्यर्थः। ६-अग्निष्टोमं क्रतुं वेदेति विग्रहः, अग्निष्टोमं=तत्प्रतिपादकग्रन्थम् अधीते, इति वा विग्रहः। ठक्, ठस्येकः, आदिवृद्धिः, **आग्निष्टोमिकः**। ७-तत्=उक्थम्=सामविशेषलक्षणपरग्रन्थम् इत्यर्थः। **औक्थिकः**। ८-सामवाचिन उक्थशब्दात्तु न ठक्, तस्मिन्निषिद्धे 'तदधीते' इत्यण् च न भवतीत्यर्थः। ९-न्यायम् अधीते वेद वा=**नैयायिकः**। ठकि, ठस्येकादेशे, यकारात्पूर्वम् ऐकारादेशः। एवम्-वृत्तिम् अधीते वेद वा **वार्त्तिकः**, ठक्, ठस्येकादेशः, आदिवृद्धिः। रपरत्वम्। १०-लोके आयतं =विस्तीर्णमिव यत्प्रसिद्धम् प्रत्यक्षप्रमाणं तद् लोकायतं, तत्प्रतिपादकं चार्वाकशास्त्रमपि (लक्षणया) लोकायतम्, तदधीते वेद वा=**लौकायतिकः**। ठक्, ठस्येकः, आदिवृद्धिः।

(सूत्रान्तात्तु अकल्पादेरेवेष्यते)। सांग्रहसूत्रिकः। अकल्पादेः किम्—काल्पसूत्रः। (विद्यालक्षणकल्पान्ताच्चेति वक्तव्यम्) वायसविद्यिकः। गौलक्षणिकः। पाराशरकल्पिकः। (अङ्ग-क्षत्र-धर्मत्रिपूर्वाद्विद्यान्तान्नेति वक्तव्यम्)। आङ्गविद्यः। क्षात्रविद्यः। धार्मविद्यः। त्रिविधा विद्या त्रिविद्या तामधीते वेत्ति वा त्रैविद्यः। ॥ इति रक्षाद्यर्थका ॥

## अथ चातुरर्थिकाः।

**१७९८ तदस्मिन्नस्तीति देशे तन्नाम्नि ४। २। ६७ ॥**

उदुम्बराः सन्त्यस्मिन्देशे—औदुम्बरो देशः।

**१७९९ तेन निर्वृत्तम् ४। २। ६८ ॥**

कुशाम्बेन निर्वृत्ता—कौशाम्बी नगरी।

**१८०० तस्य निवासः ४। २। ६९ ॥**

शिबीनां[14] निवासो देशः—शैबः।

१—कल्पभिन्नादेरेवेत्यर्थः। २—सङ्ग्रहाख्यं सूत्रम् अधीते वेद वा=**साङ्ग्रहसूत्रिकः**। ३—कल्पसूत्रम् अधीते वेद वा=**काल्पसूत्रः**। 'तदधीते' तद् वेदेत्यण्। ४—विद्या—लक्षण—कल्पान्ताच्चापिशब्दात् ठक् स्यादिति वक्तव्यमित्यर्थः। ५—वायसविद्याम् अधीते वेद वेति विग्रहः। एवं गोलक्षणम् (गवां लक्षणप्रतिपादकं ग्रन्थम्) अधीते वेद वा **गौलक्षणिकः**। पराशरकल्पम् अधीते वेद वा—**पाराशरकल्पिकः**। ६—अङ्ग—क्षत्र—धर्म—त्रिशब्दपूर्वकाद् विद्यान्तात् समासात् ठक् नेत्यर्थः, ततश्चाणेवेति। ७—अङ्गविद्याम् अधीते वेद वा=**आङ्गविद्यः**, अण्, आदिवृद्धिः। एवम् क्षत्रविद्याम् अधीते वेद=**क्षात्रविद्यः** धर्मविद्याम् अधीते वेद=**धार्मविद्यः**। ८—शाकपार्थिवादित्वाद् विधाशब्दस्य लोपः। इति रक्षाद्यर्थकाः।

९—तदस्मिन्नस्तीत्यर्थे प्रथमान्तादणादयः प्रत्ययाः स्युः, प्रत्ययान्तेन तन्नामके देशे गम्ये इति सूत्रार्थः। १०—अण्, आदिवृद्धिः। ११—तृतीयान्ताद् निर्वृत्तमित्यर्थेऽणादयः स्युरित्यर्थः। १२—कुशाम्बो नाम कश्चिद्राजा तेन निर्वृत्ता=निर्मिता, **कौशाम्बी**, अण्, आदिवृद्धिः, स्त्रियां टिड्ढेति ङीप्। १३—तस्य निवास इत्यर्थे षष्ठ्यन्तादणादयः स्युः तन्नाम्नि देशे गम्ये इत्यर्थः। १४—शिबयः=क्षत्रियविशेषाः। **शैबः**। अण्, आदिवृद्धिः।

**१८०१ अदूरभवश्च ४ । २ । ७० ॥१**

*विदिशायाँ अदूरभवं-वैदिशम् ।*

**१८०२ वुञ्-छण्-क-ठजिल-सेनि-र-ढञ्-ण्य-य-फक्-फिञिञ्ञ्य-कक्-ठकोऽरीहण-कृशाश्वर्श्य-कुमुद-काश-तृण-प्रेक्षाश्म-सखि-संकाश-बल-पक्ष-कर्ण-सुतंगम-प्रगदिन्-वराह-कुमुदादिभ्यः ४ । २ । ८० ॥**

सप्तदशभ्यः सप्तदश क्रमात्स्युश्चातुरर्थ्याम् । अरीहणादिभ्यो वुञ्—अरीहणेन निर्वृत्तमारीहणकम् । कृशाश्वादिभ्यश्छण्-कार्शाश्वीयः । ऋश्यादिभ्यः कः—ऋश्यकम् । कुमुदादिभ्यष्ठच्—कुमुदिकम् । काशादिभ्य इलः—काशिलः । तृणादिभ्यः सः— तृणसम् । प्रेक्षादिभ्य इनिः—प्रेक्षी । अश्मादिभ्यो रः—अश्मरः । सख्यादिभ्यो ढञ्-साखेयम् । संकाशादिभ्यो ण्यः । सांकाश्यम् । बलादिभ्यो यः—बल्यम् । पक्षादिभ्यः फक्—पाक्षायणः । पथः पन्थ च । पान्थायनः । कर्णादिभ्यः फिञ्—कार्णायनिः । सुतंगमादिभ्यः इञ्—सौतंगमिः । प्रगदिनादिभ्यो ञ्यः—प्रागद्यः । वराहादिभ्यः कक् । वाराहकः । कुमुदादिभ्यष्ठक्—कौमुदिकः ।

**१८०३ जनपदे लुप् ४ । २ । ८१ ॥**

जनपदे वाच्ये चातुरर्थिकस्य लुप् ।

**१८०४ लुपि युक्तवद्व्यक्तिवचने १ । २ । ५१ ॥**

---

१–तस्येति तस्मिन्न्देशे इति चानुवर्तते । तस्य अदूरभव इत्यर्थे षष्ठ्यन्तादणादयः स्युस्तस्मिन्न्देशे इत्यर्थः । २–विदिशा नाम नगरी, **वैदिशम्**, अण्, आदिवृद्धिः । ३–चतुर्णाम् अर्थानां समाहारः–चतुरर्थी तस्यामित्यर्थः । 'तदस्मिन्नस्ति देशे, 'तेन निर्वृत्तम्' 'तस्य निवासः' 'अदूरभवश्च' इति चतुर्ष्वर्थेषु प्रथमोच्चारितात्तत्तद्विभक्त्यन्ताद् यथायोगं वुञादयः प्रत्ययाः स्युरिति समस्तसूत्रार्थः । ४–कृशाश्वेन निर्वृत्तः इति विग्रहः । ५–ऋश्यकेन निर्वृत्तम् इत्यर्थः । ६–कुमुदैर्निर्वृत्तम्=**कुमुदिकम्** । ठस्येकः । एवमग्रेऽपि यथायोगमर्था बोध्याः । ७–पथोऽदूरभव इत्यर्थः । पक्षादित्वात्फक्, फस्यायन्, पथः पन्थादेशश्च । ८–चतुरर्थ्यां भवश्चातुरर्थिकः, अध्यात्मादित्वात् ठञ्, तस्य लुबित्यर्थः, पूर्वोक्तेषु चतुर्ष्वर्थेषु विहितस्य प्रत्ययस्य लुबिति भावः ।

लुपि सति प्रकृतिवल्लिङ्गवचने[1] स्तः। पञ्चालानां निवासो जनपदः—पञ्चालाः[2]। कुरवः। अङ्गाः। कलिङ्गाः।

**१८०५ वरणादिभ्यश्च[3] ४। २। ८२॥**

अजनपदार्थ आरम्भः। वरणानामदूरभवं नगरं—वरणाः[4]।

**१८०६ शर्कराया वा ४। २। ८३॥**

अस्माच्चातुरर्थिकस्य लुप्स्याद् वा।

**१८०७ ठक्छौ च ४। २। ८४॥**

शर्कराया एतौ स्तः। कुमुदादौ वराहादौ च पाठसामर्थ्यात्पक्षे ठच्—कको। वाग्रहणसामर्थ्यात्पक्षे औत्सर्गिकोऽण्, तस्य लुब्विकल्पः। षड् रूपाणि। शर्करा[5]। शार्करिकम्। शार्करम्। शर्करीयम्। शर्करिकम्। शार्करकम्।

**१८०८ नद्यां[6] मतुप् ४। २। ८५॥**

१—लुपः प्रवृत्तेः प्राक् प्रत्यय—प्रकृतेर्यल्लिङ्गं यद्वचनं च, ते एव लुपि सत्यपि भवतः, न तु प्रत्ययार्थविशेष्यमनुसृत्येत्यर्थः। २—'तस्य निवासः, इति विहितस्याणो लुपि प्रकृतिवल्लिङ्गवचने (पञ्चालानां निवास इति विग्रहे वाक्येऽण्प्रकृतौ 'पञ्चालानाम्' इत्यत्र यथा पुंलिङ्गो बहुवचनं च तथाऽत्रापीति) एवमन्यत्र—कुरूणां निवासो जनपदः **कुरवः**। अङ्गानां निवासो जनपदः **अङ्गाः**। वङ्गानां निवासो जनपदो **वङ्गाः**। कलिङ्गानां निवासो जनपदः कलिङ्गाः। प्रत्ययलुपि देशवाचकेषु सर्वत्रापि बहुवचनं प्रयोक्तव्यमिति सिद्धयति। ३—वरणादिभ्यः परस्य चातुरर्थिकप्रत्ययस्य लुप् स्यादित्यर्थः। पूर्वेणैव सिद्धे किमर्थोऽयमारम्भ इत्यत आह—**अजनपदार्थ** इति। ४—वरणा नाम नदी काश्या उत्तरतः प्रसिद्धा, अवयवाभिप्रायं पूजार्थं वा बहुवचनं **वरणानाम्** इति, **वरणाः**, अत्र लुप्तप्रत्ययान्तस्य वरणाशब्दस्य नगरे वाच्ये प्रकृतिवत्स्त्रीलिङ्गं बहुवचनञ्च। ५—अणो लुपि युक्तवद्भावे रूपम्—**शर्करा**। अणि रूपम्—**शार्करम्**। ठकि रूपम्—**शार्करिकम्**। छे रूपम्—**शर्करीयम्**। ठचि रूपम्—**शर्करिकम्**। ककि रूपम्—**शार्करकम्**। सर्वत्र शर्कराः सन्त्यस्मिन्निति—शर्कराभिर्निर्वृत्तमिति वा विग्रहः। ६—नद्यां वाच्यायां चातुरर्थिको मतुप स्यादित्यर्थः।

चातुरर्थिकः । इक्षुमती ।

**१८०९ कुमुद-नड-वेतसेभ्यो ड्मतुप् ४ । २ । ८७ ॥**

**१८१० झयः ८ । २ । १० ॥**

मतोर्मस्य वः । कुमुद्वान् । नड्वान् ।

**१८११ मादुपधायाश्च मतोर्वोऽयवादिभ्यः ८ । २ । ९ ॥**

मवर्णावर्णान्तान्मवर्णावर्णोपधायाश्च यवादिवर्जितात्परस्य मतोर्मस्य वः । वेतस्वान् ।

**१८१२ नड-शादाद् ड्वलच् ४ । २ । ८८ ॥**

नड्वलः । शाद्वलः ।

**१८१३ शिखाया वलच् ४ । २ । ८९ ॥**

शिखावलः ।

**१८१४ उत्करादिभ्यश्छः ४ । २ । ९० ॥**

उत्करीयः ।

**१८१५ नडादीनां कुक् च ४ । २ । ९१ ॥**

नडकीयम् । ( कुञ्चा ह्रस्वत्वं च ) । कुञ्चकीयः ।

१–इक्षवः सन्त्यस्यामिति विग्रहः । उगितश्चेति ङीप् । २–एभ्यो 'ड्मतुप्' प्रत्ययः स्यादित्यर्थः, अयमपि चातुरर्थिकः । डित्वं टिलोपार्थम् । ३–झयन्तान्मतोर्मस्य वः स्यादित्यर्थः । ४–कुमुदाः सन्त्यस्मिन्निति—**कुमुद्वान्**, डित्वाट्टिलोपे मस्य वत्वम् । एवं नडाः सन्त्यस्मिन्निति–**नड्वान्** । ५–वेतसाः सन्त्यत्रेति—**वेतस्वान्** । ६–नडाः सन्त्यत्रेति–**नड्वलः**, डित्वाट्टिलोपः । एवं शादाः=घासाः सन्त्यस्मिन्निति स देशः **शाद्वलः** । ७–शिखाऽस्त्यस्मिन्निति–**शिखावलो**=मयूरः । ८–चातुरर्थिक इति शेषः । उत्कराः सन्त्यस्मिन् देशे इति विग्रहे, उत्करेण निर्वृत्तमिति विग्रहे वा, **उत्करीयः**=देशविशेषः । ९–नडादिभ्यः छः स्याच्चातुरर्थिकः, प्रकृतेः कुक् चेत्यर्थः । नडाः सन्त्यत्रेति–**नडकीयम्** । छस्य–ईय् । १०–नडादिगण-सूत्रमिदम्, कुञ्चाशब्दाच्छः प्रकृतेः कुक्, आकारस्य ह्रस्वश्चेत्यर्थः । कुञ्चाः सन्त्यस्मिन्निति–**कुञ्चकीयः** ।

( तक्षन्नलोपश्च ) तक्षकीयः । ॥ इति चातुरर्थिकाः ॥

## अथ शैषिकाः ।

### १८१६ शेषे ४ । २ । ९२ ॥

अपत्यादिचातुरर्थ्यन्तादन्योऽर्थः शेषस्तत्राणादयः स्युः । चक्षुषा गृह्यते–चाक्षुषं रूपम् । श्रावणः शब्दः । औपनिषदः पुरुषः । दृषदि पिष्टा-दार्षदाः सक्तवः । उलूखले क्षुण्ण–औलूखलो यावकः । अश्वैरुह्यते–आश्वो रथः । चतुर्भिरुह्यते–चातुरं शकटम् । चतुर्दश्यां दृश्यते—चातुर्दशं रक्षः । तस्य विकार इत्यतः प्राक् शेषाधिकारः ।

### १८१७ राष्ट्रावारपाराद्घ-खौ ४ । २ । ९३ ॥

आभ्यां घ-खौ स्तः । राष्ट्रे जाता दि–राष्ट्रियः । अवारपारीणः । (अवा-रपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम् ) अवारीणः । पारीणः । पारा-वारीणः । इह प्रकृतिविशेषाद् घादयष्ट्यच्खजन्ताः प्रत्यया उच्यन्ते । तेषां जातादयोऽर्थविशेषाः समर्थविभक्तयश्च वक्ष्यन्ते ।

### १८१८ ग्रामाद्य-खञौ ४ । २ । ९४ ॥

ग्राम्यः । ग्रामीणः ।

---

१–इदमपि गणसूत्रम् । तक्षन् शब्दाच्छः, कुक्, नकारस्य लोपश्चे-त्यर्थः । तक्षाणः सन्त्यस्मिन्निति तक्षकीयः । इति चातुरर्थिकाः । २–अण्, आदिवृद्धिः । एवं श्रवणेन=कर्णेन गृह्यते **श्रावणः=शब्दः** । ३–उपनिषद्भिः प्रतिपादितः—**औपनिषदः**, अण् आदिवृद्धिः । ४–दृषदि=शिलायामित्यर्थः । ५–कृष्णचतुर्दश्यां रात्रौ रक्षांसि दृश्यन्ते इत्यागमप्र-सिद्धम् । ६–राष्ट्राद् घप्रत्ययः, अवारपारात् खप्रत्यय इत्यर्थः । ७–राष्ट्रे जातो भवो वा,=**राष्ट्रियः**, घप्रत्यये, घस्य इय्, 'यस्येति च' इत्यकारलोपः । ८–अवारपारे जातोऽ**वारपारीणः**, खप्रत्ययः, खस्य ईनादेशः, णत्वम् । ९–**विगृहीतात्**=पृथग्भूतात्, अवारशब्दात्, पारशब्दाच्चापि पृथक् पृथक् प्रत्यय इत्यर्थः । **विपरीतात्**=पारावारशब्दादपीत्यर्थः । १०–अवारे जातः=**अवारीणः** । पारे जातः=**पारीणः** । पारावारे जातः=**पारावारीणः** । तत्र भव इति वा । ११–ग्रामे जातो भवो वा=**ग्राम्यः**, यप्रत्यये 'यस्येति च' इत्यकारलोपः । **ग्रामीणः**, खप्रत्यये ईनादेशः, णत्वम् ।

**१८१९ नद्यादिभ्यो ढक् ४ । २ । ९७ ॥**

नादेयम्[2] । माहेयम्[3] । वाराणसेयम् ।

**१८२० दक्षिणा-पश्चात्-पुरसस्त्यक् ४ । २ । ९८ ॥**

दाक्षिणात्यः[4] । पाश्चात्यः । पौरस्त्यः ।

**१८२१ द्यु-प्रागपागुदक्-प्रतीचो यत् ४ । २ । १०१ ॥**

दिव्यम्[6] । प्राच्यम् । अपाच्यम् । उदीच्यम् । प्रतीच्यम् ।

**१८२२ अव्ययात्त्यप् ४ । २ । १०४ ॥**

( अमेह-क-तसि-त्रेभ्य एव ) । अमात्यः । इहत्यः । क्वत्यः । ततस्त्यः । तत्रत्यः । ( त्यब् नेर्ध्रुव इति वाच्यम् ) । नित्यः । ( निसो गते ) ।

**१८२३ ह्रस्वात्तादौ तद्धिते ८ । ३ । १०१ ॥**

ह्रस्वादिणः सस्य षस्तादौ तद्धिते । निर्गतो वर्णाश्रमेभ्यो निष्ट्योऽश्वा-

१—नदी मही वाराणसी श्रावस्ती-इत्यादि ( नद्यादिगणः ) । २—नद्यां जातं भवमित्यादिरर्थः । ढस्य 'एय्', आदिवृद्धिश्च, **नादेयम्** । ३—मह्यां जातम्, भवं वा **माहेयम्** । 'वाराणस्यां जातं भवं वा । **वाराणसेयम्** । ढक् प्रत्यये ढस्य 'एय्' 'किति च' इत्यादिवृद्धिः । 'यस्येति च' इति-ईकार-लोपः । ४—दक्षिणा=दक्षिणस्यां भवो जात इति वा **दाक्षिणात्यः** । त्यक् प्रत्ययः 'किति च' इत्यादिवृद्धिः । एवं पश्चात्—जातो भवो वा—**पाश्चात्यः** । पुरः—भवो जातो वा **पौरस्त्यः** । ५—भवार्थेऽयं यत् । ६—दिवि भवम्—**दिव्यम्**, प्राचि भवं—**प्राच्यम्**, अवाचि भवम्—**अवाच्यम्**, उदीचि भवम्, प्रतीचि भवमित्यादिविग्रहाः । ७—अमा-इह-क-तसि-त्र इत्येभ्य एव अव्ययेभ्यः त्यप् प्रत्यय इति परिगणनवार्तिकमिदम् । ८—अमा=सह समीपे वा भवतीति—**अमात्यः**=( मन्त्री ) । इह जातो भवो वा=**इहत्यः** । क्व भवः=**क्वत्यः** । ततो भवो जातो वा=**ततस्त्यः** । तत्र जातो भवो वा=**तत्रत्यः** । ९—'नि' इत्यस्मात् ध्रुवेऽर्थे 'त्यप्' प्रत्ययः स्यादित्यर्थः । १०—नियतं भवो=**नित्यः** । ११—निस्—इत्यव्ययात् 'त्यप्' वक्तव्यो गते गम्ये, इत्यर्थः । निस्+त्य इति स्थिते सकारस्य पदान्तत्वादादेशप्रत्ययावयवत्वाऽभावाच्च षत्वेऽप्राप्ते आह—**ह्रस्वात्तादा**विति । १२—**निष्ट्यः**, त्यप्, सस्य षत्वम्, तकारस्य ष्टुत्वेन टः ।

गडालादिः । (अरण्याण्णः) । आरण्याः[1] सुमनसः । (दूरादेत्यः) । दूरेत्यः[2] । (उत्तरादाहञ्) औत्तराहः[3] ।

**१८२४ ऐषमो-ह्यः-श्वसोऽन्यतरस्याम् ४ । २ । १०५ ॥**

एभ्यस्त्यब्वा[4] । पक्षे वक्ष्यमाणौ ट्यु-ट्युलौ । ऐषमस्त्यम्[5] । ऐषमस्तनम् ह्यस्त्यम् । ह्यस्तनम् । श्वस्त्यम् । श्वस्तनम् , पक्षे[6] शौवस्तिकं वक्ष्यते ।

**१८२५ वृद्धाच्छः[7] ४ । २ । १२४ ॥**

शालीयः[8] ।

**१८२६ त्यदादीनि च १ । १ । ७४ ॥**

वृद्धसंज्ञानि स्युः । तदीयः[9] । वा नामधेयस्य वृद्धसंज्ञा । देवदत्तीयः[10], दैवदत्तः ।

**१८२७ भवतष्ठक्छसौ ४ । २ । ११५ ॥**

वृद्धाद् भवत एतौ स्तः । भावत्कः[11] । (सिति च) । सिति तद्धिते पूर्वं पदं

१–अरण्ये भवाः=**आरण्याः** णप्रत्ययः, आदिवृद्धिः, सुमनसः= पुष्पाणि । २–दूरादागतो दूरे भवो वा **दूरेत्यः**, 'दूरात्' शब्दादव्ययात् एत्यप्रत्ययः 'अव्ययानां भमात्रे टिलोपः, इति टिलोपः ('आत्' इत्यस्य लोपः) । ३–उत्तरस्मादागतः, उत्तरस्मिन् भवो वा=**औत्तराहः**, आहञ् प्रत्ययः, आदिवृद्धिः । ४–ऐषमस्-ह्यस्-श्वस् इत्येतेभ्य इत्यर्थः । ५–ऐषमस् इत्यव्ययम्, वर्तमाने संवत्सरेऽर्थे वर्तते तत्र भवं जातं वा-**ऐषमस्त्यम्** । त्यप्-प्रत्ययाभावे ट्युप्रत्ययः, ट्युल् प्रत्ययो वा उभयत्र टकार इत्, लित्वं लित्स्वरितमिति स्वरभेदार्थम् । 'यु' इत्यस्य "युवोरनाकौ" इत्यनादेशः तस्य तुडागमश्चेति—**ऐषमस्तनम्** । एवम्—ह्यो जातं भवं वा **ह्यस्त्यं ह्यस्तनम्** । श्वो भवं जातं वा **श्वस्त्यम्, श्वस्तनम्** । ६–पक्षे 'श्वसस्तुट् च' इति ठञि तस्य इकादेशे तुडागमे 'द्वारादीनां च' इत्यैजागमे च सति **शौवस्तिकम्** इति रूपम् । ७–वृद्धसंज्ञकात् छप्रत्ययः स्यादित्यर्थः । ८–शालायां भवो जातो वा–**शालीयः**, छप्रत्ययः, छस्य ईय् । एवं मालीयः । ९–तस्यायं **तदीयः**, तद् शब्दात् छः, छस्य ईयादेशः । १०–देवदत्तशब्दस्य नामधेयत्वाद् वृद्धसंज्ञा, ततश्छप्रत्ययः, छस्य ईयादेशः, देवदत्तस्याऽयं **देवदत्तीयः** । वृद्धसंज्ञाऽभावपक्षेऽण्, आदिवृद्धिः, **दैवदत्तः** । ११–भातेर्डवतुप्रत्यये निष्पन्नस्य "भवत्"—शब्दस्य त्यदादित्वात्, वृद्धसंज्ञायां

स्यात् । जश्त्वम् । भवदीयः[1] । वृद्धादित्यनुवृत्तेः[2] शत्रन्तादणेव—भावतः ।

**१८२८ काश्यादिभ्यष्ठञ्-ञिठौ[3] ४ । २ । ११६ ॥**

इकार उच्चारणार्थः । काशिकी, काशिका[4] । वैदिकी, वैदिका[5] । (आपदादिपूर्वपदात्कालान्तात्[6]) । आपदादिराकृतिगणः । आपत्कालिकी, आपत्कालिका[7] ।

**१८२९ धन्व-योपधाद्वुञ् ४ । २ । १२१ ॥**

धन्वविशेषवाचिनो यकारोपधाच्च देशवाचिनो वृद्धाद्वुञ् स्यात् । ऐरावतं[8] धन्व—ऐरावतकः । साङ्काश्य-काम्पिल्यशब्दौ वुञ्छणादिसूत्रेण ण्यान्तौ । साङ्काश्यकः । काम्पिल्यकः[9] ।

**१८३० नगरात्कुत्सन-प्रावीण्ययोः ४ । २ । १२८ ॥**

कुत्सिते प्रावीण्ये च नगरशब्दाद्वुञ् स्यात् । नागरकश्चौरः[10] शिल्पी वा ।

छप्रत्यये प्राप्ते ठक् छसौ तदपवादौ विधीयेते । तत्र भवतोऽयम् **भावत्कः**, ठक् प्रत्ययः ठस्य 'इसुसुक्तान्तात्कः' इति कादेशः, कित्वादादिवृद्धिः ।

१—छस् प्रत्यये, 'सिति चे'ति पदत्वात् जश्त्वम्=तकारस्य दकारः, छस्य ईय् , **भवदीयः** । २—भूधातोः शतृप्रत्यये निष्पन्नस्य 'भवत्'-शब्दस्य त्यदादित्वाभावाद् न वृद्धसंज्ञा, 'भवतष्ठक्छसावि'ति सूत्रे च वृद्धादित्यनुवृत्तेर्न ठक् छसौ किन्तु अण् एव इति **भावतः** । ३—ठञ् ञिठ् च प्रत्ययः स्यादित्यर्थः । ञिठ इत्यत्र इकार उच्चारणार्थः । ४—काश्यां जाता भवा वा= **काशिकी**, ठञन्तात् ङीप् । ञिठ्प्रत्यये ठस्य इकादेशे टाप् **काशिका** । ५—वेदिः=देशविशेषः, वेद्यां भवा जाता वा=**वैदिकी, वैदिका** । आदिवृद्धिः । पूर्ववत् ङीप् टापौ । ६—ठञ्-ञिठौ स्याताम् इति शेषः । ७—आपत्काले भवा जाता वेति विग्रहः । ८—ऐरावताख्यं धन्वेत्यर्थः, धन्व=मरुप्रदेशः, आष्टकं नाम धन्वेति भाष्यान्नपुंसकत्वमपि 'धन्वन्, शब्दस्येति बोध्यम् । ऐरावताख्ये मरुप्रदेशे भवम्—**ऐरावतकम्**, वुञ् प्रत्ययः, 'वु' इत्यस्य अकादेशः,ञित्वादादिवृद्धिः । ९—साङ्काश्ये भवः=**साङ्काश्यकः**, काम्पिल्ये भवः= **काम्पिल्यकः** ण्यप्रत्ययान्ताभ्यां योपधत्वाद् वुञ् प्रत्ययः, 'वु' इत्यस्य अकादेशः । १०—नगरे कुत्सितः प्रवीणो वा=**नागरकः**, वुञ्, अकादेश आदिवृद्धिः ।

एतयोः किम्—नागरा[1] ब्राह्मणाः ।

**१८३१ अरण्यान्मनुष्ये ४ । २ । १२३ ॥**

वुञ् स्यात् । औपसंख्यानिक-णस्यापवादः[2] । ( पथ्यध्याय-न्याय-विहार-मनुष्य हस्तिष्विति वाच्यम् ) । आरण्यकः[3] पन्थाः, अध्यायो, न्यायो, विहारो, मनुष्यो, हस्ती वा ।

**१८३२ गर्तोत्तरपदाच्छः ४ । २ । १३७ ॥**

देश इत्येव । वृकगर्तीयम्[4] ।

**१८३३ गहादिभ्यश्च[5] ४ । २ । १३८ ॥**

गहीयः ।

**१८३४ युष्मदस्मदोरन्यतरस्यां खञ्[6] च ४ । ३ । १ ॥**

चाच्छः । पक्षेऽण् । युवयोर्युष्माकं वायं युष्मदीयः[7] । अस्मदीयः ।

**१८३५ तस्मिन्नणि[8] च युष्माकास्माकौ ४ । ३ । २ ॥**

युष्मदस्मदोरेतावादेशौ स्तः खञि अणि च । यौष्माकीणः[9] । आस्मा-

---

१—नगरे भवा जाता वा इत्यर्थः । अण् प्रत्ययः, आदिवृद्धिः । २—'अरण्याण्णः, इति विहितस्य णस्येत्यर्थः । ३—अरण्ये भवो जातो वा= **आरण्यकः**, वुञ्, अकादेशः, आदिवृद्धिः । ४—वृकगर्त्तो नाम देशः, वृकगर्त्ते भवं जातं वा=**वृकगर्त्तीयम्** छः, छस्य ईय् । ५—छः स्यादिति शेषः । गहो देशविशेषः, गहे भवो—**गहीयः** । ६—युष्मच्छब्दादस्मच्छब्दाच्च जाताद्यर्थेषु खञ् स्यादित्यर्थः । चात्छप्रत्ययोऽपि, **पक्षेऽण्**, अन्यतरस्यां ग्रहणसामर्थ्यादिति भावः । ७—**युष्मदीयः**, **अस्मदीयः**, द्विवचनान्ताद् बहुवचनान्ताच्च छः, ईयादेशः, 'सुपो धातु' इति सुब्लुकि युवावादेशयोर्निवृत्तिः, तयोर्विभक्तौ परतो विधानात् । एकवचनान्ताभ्यां छादिप्रत्यये तु प्रत्ययोत्तरपदयोश्चेति त्वमादेशौ वक्ष्येते, तत्र त्वदीयः, मदीयः इति स्यात् । ८—अथ खञ्प्रत्ययेऽण् प्रत्यये च विशेषमाह—**तस्मिन्नि**त्यादि, इह तच्छब्देन पूर्वसूत्रनिर्दिष्टः खञ् परामृश्यते, तदाह वृत्तौ-खञि अणि चेति । ९—युवयोर्युष्माकं वाऽयम्=**यौष्माकीणः**, आवयोरस्माकं वाऽयम्=**आस्माकीनः**, खञ्, ईनादेशः खस्य, युष्माकास्माकादेशौ, आदिवृद्धिः पूर्वत्र णत्वं, अण् प्रत्यये च युष्माकास्माकादेशयोः सतोरादिवृद्धौ **यौष्माकः**, **आस्माकः** ।

कीनः । यौष्माकः । आस्माकः ।

**१८३६ तवक-ममकावेकवचने ४ । ३ । ३ ॥**

एकार्थवाचिनोर्युष्मदस्मदोस्तवक-ममकौ स्तः खञि अणि च । तावकीनः, तावकः । मामकीनः, मामकः । छे तु—

**१८३७ प्रत्ययोत्तरपदयोश्च ७ । २ । ६८ ॥**

मपर्यन्तयोरेकार्थवाचिनोस्त्व-मौ स्तः प्रत्यये, उत्तरपदे च । त्वदीयः । मदीयः । त्वत्पुत्रः । मत्पुत्रः ।

**१८३८ मध्यान्मः ४ । ३ । ८ ॥**

मध्यमः ।

**१८३९ अ सांप्रतिके ४ । ३ । ९ ॥**

मध्यशब्दादप्रत्ययः सांप्रतिकेऽर्थे । उत्कर्षापकर्षहीनो मध्यो वैयाकरणः । मध्यं दारु, नातिह्रस्वं नातिदीर्घमित्यर्थः ।

---

१–सूत्रे 'एकवचने, इति युष्मदस्मदोः प्रकृत्योर्विशेषणम्, एकस्य वचनम्=उक्तिः,=एकवचनम्, एकवचने=एकस्योक्तौ व्याप्रियमाणयोर्युष्मदस्मदोरित्यर्थः । तदेवोक्तं वृत्तौ—**एकार्थवाचिनो**रिति । २–तवायं=**तावकीनः**, ममायं=मामकीनः, खञि, खस्य—ईनादशे, प्रकृत्योः तवक-ममकादेशयोः सतोरादिवृद्धिः, 'यस्येति च' इत्यकारलोपः । अणि प्रत्यये च **तावकः, मामकः** । ३–छप्रत्यये तु, इत्यर्थः । ४–उत्तरपदशब्दः समासस्य चरमावयवे रूढः, तस्मिंश्च परे–इत्यर्थः । ५–तवायं=**त्वदीयः**, ममायं=**मदीयः** छप्रत्ययः, छस्य ईयादेशः, सुब्-लुकि प्रकृत्योर्युष्मदस्मदोर्मपर्यन्तयोस्त्वमादेशौ । ६–उदाहरणद्वयमिदम्–उत्तरपदे परतस्त्वमादेशयोः, तव पुत्रः=**त्वत्पुत्रः**, मम पुत्रः=**मत्पुत्रः** । ७–मध्ये भवो जातो वा **मध्यमः** । ८–'अ' इति लुप्तप्रथमाकम् । मध्यादित्यनुवर्तते । सम्प्रतिशब्दोऽव्ययम् उत्कर्षापकर्षहीनत्वात्मकसाम्येऽर्थे वर्तते । स्वार्थे ठञि 'साम्प्रतिकम्, इति, तस्मिन् **साम्प्रतिके**,=साम्ये गम्यमाने मध्यशब्दाद् 'अ' प्रत्ययः स्याद् इत्यर्थः । ९–मध्ये भवः ( समः )=**मध्यः**, नोत्कृष्टोनाप्यपकृष्ट इत्यर्थः 'अ' प्रत्यये 'यस्येति च' इत्यकारलोपः । एवं नपुंसके **मध्यं** दारु । स्त्रियाम् **मध्या** कौमुदी, नातिमहती, नातिलघ्वी ।

**१८४० द्वीपादनुसमुद्रं यञ् ४ । ३ । १० ॥**

समुद्रसमीपे यो द्वीपस्तद्विषयाद् द्वीपशब्दाद्यञ् स्यात् । द्वैप्यम्[1], द्वैप्या ।

**१८४१ कालाट्ठञ् ४ । ३ । ११ ॥**

कालिकम्[2] । मासिकम् । सांवत्सरिकम्[3] । (अव्ययानां भमात्रे टिलोपः) सायंप्रातिकः[4] । पौनःपुनिकः । कथं तर्हि 'शार्वरस्य तमसो निषिद्धये'[5] इति कालिदासः । 'अनुदितौषसरागः'[6] इति भारविः । समानकालीनं[7] प्राक्कालीन-मित्यादि च । अपभ्रंशा[8] एव इति प्रामाणिकाः । तत्र जात इति यावत्काला-धिकारः ।

**१८४२ श्राद्धे शरदः ४ । ३ । १२ ॥**

ठञ् स्यात् । ऋत्वणोऽपवादः । शरदि भवं—शारदिकं श्राद्धम्[12] । [10]

---

१—द्वीपे भवं जातं वा=**द्वैप्यम्**, यञि, आदिवृद्धिः, यस्येति चेत्यलोपः । स्त्रियां टापि **द्वैप्या** । २—न केवलं कालशब्दस्य ग्रहणम्, किन्तु कालश-ब्दस्य कालविशेषवाचकानां च ग्रहणम् इति भाष्ये स्पष्टम् । तथा च कालवा-चिभ्यष्ठञ् स्यादित्यर्थः । ३—काले भवं जातं वा=**कालिकम्**, संवत्सरे भवं=**सांवत्सरिकम्** इत्यादि । ४—सायम्प्रातर्भवः=**सायम्प्रातिकः**, पुनः पुनर्भवः=**पौनःपुनिकः**, ठञि, ठस्य इकादेशे, टिलोपः । ५—शर्वरीशब्द-स्यापि कालवाचकत्वात् ठञि शार्वरिकस्येति भाव्यमिति भावः, कथमण्प्र-त्यये शार्वरस्येति प्रश्नः । ६—'उषस्, शब्दस्यापि कालवाचित्वेन ठञि प्रत्यये औषसिकेति भाव्यमिति प्रश्नाशयः । ७—सामानकालिकम्, प्राक्कालिकम् इति भाव्यम् इति भावः । ८—अपशब्दा इत्यर्थः । तादृशसिद्धौ प्रमाणाभा-वादिति तदाशयः । **केचित्तु**—"अमुकः पुरतः परेद्युरित्यादिवद् एतेऽपि शब्दा अव्युत्पन्नाः, पृषोदरादयो वा साधव" इत्याहुः, इति बालमनोरमा । ९—व्याख्यानादिति भावः । १०—शरदि भवं श्राद्धम् इत्यर्थे 'शरद्' शब्दात् 'कालाट्ठञ्' इत्यस्य बाधकः 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्'ति—अण् प्राप्नोति तद्बाधनाय ठञ्विधिरयम् । तदेवाह—**ऋत्वणोऽपवाद** इति । ११—ठञ्, ठस्येकः । १२—श्रद्धया क्रियमाणं पित्र्यं कर्म=**श्राद्धम्** 'प्रज्ञाश्रद्धाऽर्चादिभ्यो णः इति मत्वर्थीये णप्रत्यये सिद्धपतीदम् । श्रद्धत्वान् पुरुषस्तु न गृह्यतेऽ-नभिधानात् ।

**१८४३ विभाषा रोगातपयोः ४ । ३ । १३ ॥**

शारदिकः शारदो वा, रोग आतपो वा ।

**१८४४ निशा-प्रदोषाभ्यां च ४ । ३ । १४ ॥**

ठञ् वा । नैशिकम्, नैशम् । प्रादोषिकम्, प्रादोषम् ।

**१८४५ श्वसस्तुट् च ४ । ३ । १५ ॥**

श्वसष्ठञ् वा तुट् च ।

**१८४६ द्वारादीनां च ७ । ३ । ४ ॥**

एषां न वृद्धिरैजागमश्च । शौवस्तिकम् ।

**१८४७ सन्धिवेलाद्यृतु-नक्षत्रेभ्योऽण् ४ । ३ । १६ ॥**

सन्धिवेलायां भवं—सान्धिवेलम् । ग्रैष्मम् । सन्धिवेला । सन्ध्या । अमावास्या । त्रयोदशी । चतुर्दशी । पौर्णमासी । प्रतिपद् ।

**१८४८ प्रावृष एण्यः ४ । ३ । १७ ॥**

१–रोगे आतपे च वाच्ये 'शरद्' शब्दाद् वा ठञ् स्यादित्यर्थः । पक्षे ऋत्वण् । २–शरदि भवः=**शारदिकः**, ठञि, ठस्य इकादेशे आदिवृद्धिः, अणि—**शारदः** । ३–कालाट्ठञिति नित्यं प्राप्ते विकल्पोऽयम् । पक्षेऽण् । ४–निशायां भवम्=**नैशिकम्**, **नैशम्** तमः । प्रदोषे भवं=**प्रादोषिकम्**, **प्रादोषम्** । ५–अत्र "न य्वाभ्या,, मिति सूत्रं पदान्ताभ्यामिति वर्जमनुवर्तते मृजेर्वृद्धिरित्यतो वृद्धिरिति च, **द्वार** स्वर व्यल्कश स्वस्ति स्प्यकृत् स्वादु मृदु, श्वस्, श्वन्, स्व इति द्वारादयः । ६–वृद्धिर्न स्यात्, यकारवकाराभ्यां पूर्वक्रमेण ऐकारागमः, औकारागमश्च स्यादिति भावः । अत्र यकारवकारयोरपदान्तत्वाद् 'न य्वाभ्यामित्यप्राप्ते' 'द्वारादीनां चे'ति सूत्रारम्भः' । ७–श्वो भवं=**शौवस्तिकम्** । श्वस्—शब्दात् ठञ्, ठस्येकादेशः, तुडागमः, वकारात्पूर्वम् औकारागमः, आदिवृद्ध्यभावः । ८–'कालाट्ठञ्, इत्यस्यापवादोऽयमण् । ९–ग्रीष्मे भवमित्यर्थः, अण्, आदिवृद्धिः, 'यस्येति च' इत्यलोपः । १०–सन्धिवेलादिगणनिर्देशोऽयम्, तथा च सन्ध्यायां भवं सान्ध्यम्, आमावास्यम्, त्रायोदशम्, पौर्णमासम्, प्रातिपदम् इत्यादि । ११–ऋत्वणोऽपवादोऽयम् ।

प्रावृषेण्यः

**१८४९ वर्षाभ्यष्ठक् ४। ३। १८॥**

वर्षासु साधु—वार्षिकं वासः।

**१८५० सर्वत्राण् च तलोपश्च ४। ३। २२॥**

हेमन्तादण् तलोपश्च वेदलोकयोः। चकारात्पक्षे ऋत्वण्। हेमन्ते भवं—हैमनम्, हैमन्तं वा वसनम्।

**१८५१ सायं-चिरं-प्राह्णे-प्रगे-ऽव्ययेभ्यष्ट्युट्युलौ तुट् च ४। ३। २३॥**

सायमित्यादिभ्यश्चतुर्भ्यः अव्ययेभ्यश्च कालवाचिभ्यष्ट्युट्युलौ स्तस्तयोस्तुट् च। सायं भवं—सायन्तनम्। चिरन्तनम्। प्राह्णप्रगयोरेदन्तत्वं निपात्यते। प्राह्णेतनम्। प्रगेतनम्। दोषातनम्। दिवातनम्। (चिर-परुत्-परारिभ्यस्त्नो वक्तव्यः)। चिरत्नम्। परुत्नम्। परारित्नम्। (अग्रादिपश्चाड्डिमच्)। अग्रिमम्। आदिमम्। पश्चिमम्। (अन्ताच्च)। अन्तिमम्।

**१८५२ विभाषा पूर्वाह्णापराह्णाभ्याम् ४। ३। २४॥**

आभ्यां ट्युट्युलौ वा स्तस्तयोस्तुट् च। पक्षे ठञ्। पूर्वाह्णेतनम्, पौर्वा-

---

१–प्रवर्षतीति प्रावृट्=वर्षर्तुः, 'नहिवृतीत्यादिना' दीर्घः तत्र भवः=**प्रावृषेण्यः**। २–ठक्, ठस्येकः, कित्वादादिवृद्धिः। वासः=वस्त्रम्। ३–सर्वत्रेति लोके वेदे च, हेमन्तादित्यनुवर्तते, तदाह—वृत्तौ—**हेमन्ता**दित्यादि। ४–अण्, तलोपः, 'अन्, इति सूत्रेण प्रकृतिभावान्न टिलोपः, **हैमनम्**, आदिवृद्धिः। ऋत्वणि तु न तलोपः सन्नियोगशिष्टत्वात्—**हैमन्तम्**। ५–सायम्-शब्दात् ट्युप्रत्यये ट्युल्प्रत्यये वा, (लित्वं स्वरभेदमात्रार्थम्) 'यु, इत्यस्य अनादेशे तुडागमे—**सायन्तनम्**। एवमग्रेऽपि। ६–चिरं भवम्=**चिरत्नम्**। परुत्, परारि, इति चाव्ययं पूर्वस्मिन् पूर्वतरे च वत्सरे क्रमाद् वर्तेते (तथा च भाषायामुच्यते 'परुं, परार, इति)। ७–अग्र–आदि—पश्चात्–शब्देभ्यो डिमच्प्रत्ययः स्यादित्यर्थः। ८–अग्रे भवम्=**अग्रिमम्**, डित्वाट्टिलोपे सिद्धम्। एवम् आदौ भवम्=**आदिमम्**, पश्चाद् भवम्=**पश्चिमम्**। ९–अन्ते भवम्=**अन्तिमम्**, डिमच्प्रत्ययः ङचावितौ, टिलोपः। १०–पूर्वाह्णे भवं—**पूर्वाह्णेतनम्**, 'घ–काल–तनेषु' इति सप्तम्या अलुक्। पक्षे ठञ्

ह्णिकम् । अपराह्णेतनम् , आपराह्णिकम् ।

**१८५३ तत्र जातः ४ । ३ । २५ ॥**

सप्तमीसं[1]मर्थाज्जात इत्यर्थेऽणादयो घादयश्च स्युः । स्रुघ्ने जातः–स्रौघ्नः[2] । औत्सः । राष्ट्रियः[3] । अवारपारीणः, इत्यादि ।

**१८५४ प्रावृषष्ठप्[4] ४ । ३ । २६ ॥**

एण्यस्यापवादः । प्रा[5]वृषिकः ।

**१८५५ प्रायभ[6]वः ४ । ३ । ३९ ॥**

तत्रेत्येव । स्रुघ्ने प्रायेण बाहुल्येन भवति—स्रौघ्नः[7] ।

**१८५६ सं[8]भूते ४ । ३ । ४१ ॥**

स्रुघ्ने संभवति—स्रौघ्नः[9] ।

**१८५७ कोशाड्ढञ् ४ । ३ । ४२ ॥**

कौशेयं[10] वस्त्रम् ।

**१८५८ तत्र भ[11]वः ४ । ३ । ५३ ॥**

स्रुघ्ने भवः [12]स्रौघ्नः । औत्सः । राष्ट्रियः[13] ।

**१८५९ दिगादिभ्यो यत् ४ । ३ । ५४ ।**

दिश्यम्[14] । वर्ग्यम् ।

---

ठस्येकः, आदिवृद्धिः **पौर्वाह्णिकम्** । एवमग्रेऽपि ।

१–सप्तम्यन्तात्समर्थादित्यर्थः । २–अण् आदिवृद्धिः । एवम् **औत्सः**, उत्सो देशविशेषः तत्र जात इत्यर्थः । ३–राष्ट्रे जातः=**राष्ट्रियः**, घप्रत्ययः, घस्य–इयादेशः । अवारपारे जातः=**अवारपारीणः** खप्रत्ययः खस्य ईनादेशः, णत्वम् । ४–तत्र जात इत्यर्थे एण्यापवादः ठप् स्यादिति भावः । ५–प्रावृषि जातः=**प्रावृषिकः** ठप् ठस्येकः । ६–प्रायभव इत्यर्थे सप्तम्यन्तादणादयो घादयश्च स्युरित्यर्थः । ७–अण् प्रत्ययः । ८–सप्तम्यन्तात्सम्भूतेऽर्थेऽणादयो घादयश्च यथायथं स्युरित्यर्थः, सम्भवः=सम्भावना । ९–अत्राप्यणेव । १०–कृमि–कोशस्य विकारः=**कौशेयम्**, वस्त्रम् । "विकारे कोशाड्ढञ्" इति । ढञ् प्रत्ययः, ढस्य एयादेशः, ञित्वादादिवृद्धिः । ११–सप्तम्यन्ताद्भव इत्यर्थेऽणादयो घादयश्च यथायथं स्युरित्यर्थः । १२–अण्प्रत्ययः । एवम् **औत्सः** इत्यत्राप्यण् । १३–राष्ट्रे भवः=**राष्ट्रियः**, घप्रत्ययः, घस्य इया-देशः । १४–दिशि भवम्=**दिश्यम्**, वर्गे भवम्=**वर्ग्यम्** ।

**१८६० शरीरावयवाच्च ४ । ३ । ५५ ॥**

दन्त्यम्[१] । कण्ठ्यम् ।

**१८६१ दृति-कुक्षि-कलशि-बस्त्यस्त्यहेर्ढञ् ४ । ३ । ५६ ॥**

दार्तेयम्[४] । कलशिर्घटः, तत्र भवं—कालशेयम् ।

**१८६२ ग्रीवाभ्योऽण् च[५] ४ । ३ । ५७ ॥**

चाड्ढञ् । ग्रैवेयम् , ग्रैवम्[६] ।

**१८६३ गम्भीराञ्ञ्यः ४ । ३ । ५८ ॥**

गम्भीरे भवं—गाम्भीर्यम्[७] ।

**१८६४ अव्ययीभावाच्च[८] ४ । ३ । ५६ ॥**

परिमुखे भवं—पारिमुख्यम्[९] । (परिमुखादिभ्य एवेष्यते) । नेह—औपकूलः[१०] ।

**१८६५ अन्तःपूर्वपदाट्ठञ् ४ । ३ । ६० ॥**

अव्ययीभावादित्येव । वेश्मनि इति—अन्तर्वेश्मम्[११] , तत्र भवम् आन्तर्वे-

---

१–यत्स्यादिति शेषः । २–दन्तेषु भवम्=दन्त्यम् , कण्ठे भवम्= **कण्ठ्यम्** । ३–दृति-कुक्षि-कलशि-बस्ति-अस्ति-अहि, इत्येतेभ्यः सप्तम्यन्तेभ्यो भव इत्यर्थे ढञ् स्यादित्यर्थः । ४–दृतौ=चर्मभस्त्रिकायां भवं=**दार्तेयम्** ढञ् सुब्लुक् ढस्य एयादेशः, आदिवृद्धिः—रपरा । एवं **कौक्षेयम्**-कालशेयम्, बास्तेयम्, ( बस्तिः=नाभेरधःस्थानम् ) आहेयम् । ५–शरीरावयवाच्चेति यतोऽपवादोऽयम् । ग्रीवाशब्दोऽयं धमनीसङ्घे वर्तते, उद्भूतावयवभेदसङ्घविवक्षायां बहुवचनान्तात्प्रत्यय इति सूचयितुं बहुवचनम् । तिरोहितावयवभेदविवक्षायां तु एकवचनान्तादपि अण्—ढञौ स्यातामेव । ६–ग्रीवासु ग्रीवायां वा भवम्=**ग्रैवेयम्** , ढञ्, ढस्य एयादेशः, आदिवृद्धिः, पक्षेऽणि, आदिवृद्धौ, **ग्रैवम्** । ७–ञ्यप्रत्यये, ञित्वादादिवृद्धिः, यस्येति चेत्यकारलोपः, **गाम्भीर्यम्** । ८–ञ्य इति शेषः । ९–ञ्यप्रत्यये, आदिवृद्धिः, अकारलोपः, **पारिमुख्यम्** । १०–उपकूलं भवः=**औपकूलः** । अव्ययीभावत्वेऽपि परिमुखादिगणानन्तर्भावात् न ञ्यः, किन्तु—अण्, आदिवृद्धिः । ११–अत्र अव्ययीभावसमासे जाते 'नपुंसकादन्यतरस्याम्, इति समासान्तटच्, टिलोपे 'अन्तर्वेश्मम्' इति ततो भवार्थे ठञि ठस्येकादेशे, आदिवृद्धिः, **आन्तर्वेश्मिकम्** । एवम्—अन्तर्गणे भवम्—**आन्तर्गणिकम्** ।

शिमकम् । आन्तर्गेणिकम् । ( अध्यात्मादेष्ठञिष्यते ) । अध्यात्मं भवम् आध्यात्मिकम् ।

१८६६ अनुशतिकादीनां च ७ । ३ । २० ॥

एषामुभयपदवृद्धिर्ञिति णिति किति च । आधिदैविकम् । आधिभौतिकम् । ऐहलौकिकम् । आकृतिगणोऽयम् ।

१८६७ जिह्वामूलाङ्गुलेश्छः ४ । ३ । ६२ ॥

जिह्वामूलीयम् । अङ्गुलीयम् ।

१८६८ वर्गान्ताच्च ४ । ३ । ६३ ॥

कवर्गीयम् ।

१८६९ तत आगतः ४ । ३ । ७४ ॥

स्रुघ्नादागतः–स्रौघ्नः ।

१८७० ठगायस्थानेभ्यः ४ । ३ । ७५ ॥

शौल्कशालिकः ।

१८७१ विद्या–योनि–संबन्धेभ्यो वुञ् ४ । ३ । ७७ ॥

औपाध्यायकः । पैतामहकः ।

१–आत्मनि इत्यध्यात्मम्, तत्र भवम्=**आध्यात्मिकम्**, ठञ्, इकः, आदिवृद्धिः । २–देवेषु इत्यधिदेवम्, तत्र भवम्=**आधिदैविकम्** । अध्यात्मादित्वात् ठञि, इकादेशे, अनुशतिकादित्वाद् उभयपदवृद्धिः । एवम्–भूतेषु इत्यधिभूतम्, तत्र भवम्=**आधिभौतिकम्** इह लोके भवम् =**ऐहलौकिकम्** । ३–अध्यात्मादिगण आकृतिगण इत्यर्थः । तेन पारलौकिकम् इत्यादावपि ठञ् । ४–शरीरावयवाच्चेति यतोऽपवादोऽयम् । ५–जिह्वामूले भवम्=**जिह्वामूलीयम्**, छः, छस्य ईयादेशः । अङ्गुल्यां भवम्= **अङ्गुलीयम्** । ६–छ इति शेषः । ७–कादिः वर्गः=कवर्गस्तत्र भवम्= **कवर्गीयम्**, एवम्–चवर्गीयम्, टवर्गीयम् इत्यादि । ८–तत आगत इत्यर्थे पञ्चम्यन्ताद् यथायथं प्रत्ययाः स्युरित्यर्थः । ९–अण्, आदिवृद्धिः । १०– शुल्कशालाया आगतः=**शौल्कशालिकः**, ठकि, कित्वादादिवृद्धिः । ११– तत आगत इत्यर्थे एव, उपाध्यायादागतः=**औपाध्यायकः**, पितामहादागतः=**पैतामहकः** । वुञ्, 'वु' इत्यस्य अकादेशः, आदिवृद्धिः ।

**१८७२ ऋतष्ठञ्[1] ४। ३। ७८॥**

वुञोऽपवादः। हौतृकम्[2]। मातृकम्। भ्रातृकम्।

**१८७३ पितुर्यच्च ४। ३। ७९॥**

चाट्ठञ्। रीङृतः। यस्येति लोपः। पित्र्यम्[3]। पैतृकम्।

**१८७४ गोत्रादङ्कवत्[4] ४। ३। ८०॥**

बिदेभ्य आगतं—बैदम्[5]। गार्गम्[6]। दाक्षकम्। औपगवकम्[7]।

**१८७५ हेतु-मनुष्येभ्योऽन्यतरस्यां[8] रूप्यः ४। ३। ८१॥**

समादागतं समरूप्यम्। पक्षे गहादित्वाच्छः, समीयम्[9]। देवदत्तीयम्। देवदत्तरूप्यम्।

**१८७६ मयट्[10] च ४। ३। ८२॥**

सममयम्।

**१८७७ प्रभवति[11] ४। ३। ८३॥**

---

१—ऋदन्ताद् विद्यायोनिसम्बन्धवाचिनष्ठञ् स्यादित्यर्थः। २—होतुरागतम् =**हौतृकम्**, आदिवृद्धिः। उकः परत्वात् "इसुसुक्तादि"ति सूत्रेण ठस्य, कादेशः एवं मातुरागतम्=**मातृकम्**, भ्रातुरागतम्=**भ्रातृकम्**। ३—पितुरागतम्=**पित्र्यम्**, यत्प्रत्ययः ऋकारस्य रीङादेशः, पित्री=य (म्), इत्यत्र 'यस्येति च' इतीकारलोपः। पक्षे ठञि **पैतृकम्**, उकः परत्वात् ठस्य कादेशः। ४—अङ्के ये प्रत्ययास्ते तत आगत इत्यर्थेऽपि भवन्तीत्यर्थः। ५—अत्र यञञोश्चेति बहुत्वेऽञो लुकि **बिदेभ्य** इति निर्देशः, (सङ्घाङ्क-इत्यादि विहितोऽणिहापि) बैदशब्दादञन्तादणि, **बैदम्**। ६—यञन्तादण्, गर्गेभ्य आगतम्=**गार्गम्**। एवं **दाक्षम्**, इञन्तादण्। ७—उपगोरपत्यम्=औपगवः, तस्मादागतम्=**औपगवकम्**, 'गोत्रचरणाद् वुञ्'। (अङ्के दृष्ट इतीहाप्यणन्ताद् वुञ्) अकादेशः, आदिवृद्धिः। ८—मनुष्यग्रहणं महेत्वर्थम्। तत आगत इत्यर्थे एव। हेतुभ्य उदाहरति—**सामरूप्यम्**। ९—छस्य ईयादेशः। मनुष्येभ्य उदाहरति—देवदत्तादागतम्—**देवदत्तरूप्यम्, देवदत्तीयम्**। १०—तत आगत इत्येव। ११—ततः प्रभवतीत्यर्थे पञ्चम्यन्ताद् यथा विहितं प्रत्ययाः स्युरित्यर्थः।

हिमवतः प्रभवति हैमवती गङ्गा[1] ।

**१८७८ विदूराञ्ञ्यः ४ । ३ । ८४ ॥**

विदूरात्प्रभवति वैदूर्यो[2] मणिः ।

**१८७९ तद्गच्छति पथिदूतयोः ४ । ३ । ८५ ॥**

स्रुघ्नं गच्छति—स्रौघ्नः[3] पन्था दूतो वा ॥

**१८८० अभिनिष्क्रामति द्वारम् ४ । ३ । ८६ ॥**

स्रुघ्नमभिगच्छति—स्रौघ्नं[6] कान्यकुब्जद्वारम् ॥

**१८८१ अधिकृत्य कृते ग्रन्थे ४ । ३ । ८७ ॥**

शारीरकमधिकृत्य[8] कृतो ग्रन्थः—शारीरकीयः । शारीरकं भाष्यमिति त्वभेदोपचारात्[9] ॥

**१८८२ सोऽस्य निवासः[10] ४ । ३ । ८९ ॥**

स्रुघ्नो निवासोऽस्य स्रौघ्नः[11] ॥

**१८८३ तेन प्रोक्तम्[12] ४ । ३ । १०१ ॥**

पाणिनिना प्रोक्तं[13]—पाणिनीयम् ॥

**१८८४ पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः ४ । ३ । ११० ॥**

---

१–अण् प्रत्ययः, स्त्रियाम्, 'टिड्ढेति' ङीप्, आदिवृद्धिः । २–विदूरशब्दो देशविशेषवाचकः । ततो ञ्यप्रत्यये आदिवृद्धौ 'यस्येति चे' त्यलोपे, **वैदूर्यः** । ३–द्वितीयान्ताद् गच्छतीत्यर्थे यथायथं प्रत्ययाः, स चेद् गन्ता पन्था दूतो वा स्यादित्यर्थः । ४–अण् । ५–अस्मिन्नर्थेऽणादयः स्युरित्यर्थः । ६–अण् प्रत्ययः । ७–अधिकृत्य कृतो ग्रन्थ इत्यर्थेऽणादयः प्रत्ययाः स्युरित्यर्थः । ८–शरीरस्याऽयं शारीरः=जीवात्मा, स एव शारीरकः, तस्येदमित्यणन्तात्स्वार्थे कः, शारीरकम्–जीवात्मानम् अधिकृत्य कृतो ग्रन्थः **शारीरकीयः**, 'वृद्धाच्छः' इति छप्रत्ययः, छस्य ईयादेशः । ९–प्रतिपादके भाष्ये शारीरकस्य जीवात्मनः प्रतिपाद्यस्य अभेदोपचार इत्यर्थः । प्रतिपाद्यबोधकशब्देनैव प्रतिपादकप्रतिपादनमुपचारादिति भावः । १०–प्रथमान्तादस्य निवास इत्यर्थेऽणादयः प्रत्ययाः स्युरित्यर्थः । ११–अण् प्रत्ययः । १२–तृतीयान्तात् प्रोक्तेऽर्थेऽणादयो घादयश्च स्युरित्यर्थः । १३–प्रोक्तम्=प्रथमं प्रकाशितम्, **पाणिनीयम्**=व्याकरणम्, छप्रत्ययो वृद्धत्वात्, छस्य ईयादेशः ।

णिनिः स्यात् । पाराशर्येण प्रोक्तं भिक्षुसूत्रमधीयते—पाराशरिणो भिक्षवः । शैलालिनो नटाः ॥

**१८८५ कर्मन्द-कृशाश्वादिनिः ४ । ३ । १११ ॥**

कर्मन्देन प्रोक्तं भिक्षुसूत्रमधीयते—कर्मन्दिनो भिक्षवः । कृशाश्विनो नटाः ।

**१८८६ उपज्ञाते ४ । ३ । ११५ ॥**

पाणिनिना उपज्ञातं—पाणिनीयम् ।

**१८८७ तस्येदम् ४ । ३ । १२० ॥**

उपगोरिदमौपगवम् । (समिधामाधाने षेण्यण्) । सामिधेन्यो मन्त्रः ।

**१८८८ रथाद्यत् ४ । ३ । १२१ ॥**

रथ्यं चक्रम् ।

**१८८९ पत्रपूर्वादञ् ४ । ३ । १२२ ॥**

अश्वरथस्येदम्—आश्वरथम् ।

**१८९० हल-सीराट्ठक् ४ । ३ । १२४ ॥**

हालिकम् । सैरिकम् ।

१—पाराशरशब्दाद् गर्गादित्वाद् गोत्रे यञ्, पाराशर्यः, तेन प्रोक्ते भिक्षुसूत्रेऽर्थे णिनिः, ततोऽध्येतृप्रत्ययस्याणो लुक्, **पाराशरिणः**, (बहुवचनान्तम्) । २—शिलालिन्शब्दात् नटसूत्रे प्रोक्ते णिनि-प्रत्यये टिलोपे शैलालिन्शब्दात्-अध्येतृप्रत्ययस्याणो लुकि, '**शैलालिनः**, इति जसि रूपम् । ३—कर्मन्दशब्दादिनिः, ततोऽध्येत्रणो लुक् **कर्मन्दिनः**, जसि रूपम् । एवम् कृशाश्वेन प्रोक्तमधीयते—**कृशाश्विनः** । ४—तेनोपज्ञातमित्यर्थे तृतीयान्ताद् यथाविहितं प्रत्ययाः स्युरित्यर्थः । ५—उपज्ञातम्=प्रथमज्ञातम् । "उपज्ञा ज्ञानमाद्यं स्यादि"त्यमरः । उपदेशं विना ज्ञातम्=उपज्ञातम्, इति मनोरमा । ६—छः, छस्य ईयादेशः । ७—षष्ठ्यन्तादिदमित्यर्थेऽणादयो घादयश्च स्युरिति सूत्रार्थः । ८—अण्प्रत्ययः । ९—आधीयतेऽनेनेत्याधानो मन्त्रः, आधानो मन्त्रः—इत्यर्थे समिध्-शब्दात् षेन्यण्प्रत्ययो वाच्य इत्यर्थः । १०—समिधाम् आधानो मन्त्रः=**सामधेन्यः**, प्रत्ययस्य ष इत्, णित्वादादिवृद्धिः । ११—तस्येदमित्येव रथस्येदं=**रथ्यम्** । १२—पत्रं वाहन-पक्षयोः । १३—तस्येदमित्येव, हलस्येदं—**हालिकम्**, ठस्येकादेशः, आदिवृद्धिः । एवं—सीरस्येदं=**सैरिकम्** ।

**१८९१ गोत्रचरणाद्वुञ् ४ । ३ । १२६ ॥**

औपगवकम्[1] । ( चरणाद्धर्माम्नाययोरिति वक्तव्यम्[2] ) काठकम्[3] ।

**१८९२ संघाङ्कलक्षणेष्वञ्यञिञामण् ४ । ३ । १२७ ॥**[4]

( घोषग्रहणमपि कर्तव्यम्[5] ) । अञ्—बैदः=संघोऽङ्को घोषो वा । बैदं[6][7] लक्षणम् । यञ्—गार्गः, गार्गम्[8] । इञ्—दाक्षः, दाक्षम्[9] । परम्परासंबन्धोऽङ्कः, साक्षात्तु लक्षणम्[10] ।  ॥ इति शैषिकाः ॥

## अथ प्राग्दीव्यतीयाः ।

**१८९३ तस्य[11] विकारः ४ । ३ । १३४ ॥**

( अश्मनो विकारे टिलोपो वक्तव्यः ) अश्मनो विकारः—आश्मः[12] ।

१–तस्येदमित्येव, उपगोरिदम्=**औपगवकम्**, वुञ्, 'वु' इत्यस्याकादेशः, आदिवृद्धिः, 'ओर्गुणः' अवादेशः । २–चरणाद् यो वुञ् विहितः स धर्मे आम्नाये च वाच्ये भवति नान्यत्रेति वार्तिकार्थः । ३–कठेन प्रोक्तमधीयते इति—कठाः, तेषां धर्म आम्नायो वा=**काठकः** । आम्नायो=वेदाभ्यासः । ४–अञन्तात्–यञन्तात्–इञन्ताच्च सङ्घे–अङ्के–लक्षणे च इदन्त्वेन विवक्षितेऽण् स्यादित्यर्थः । ५–घोषेऽपि इदन्त्वेन विवक्षितेऽणित्यर्थः । तथा च नात्र यथासङ्ख्यम् समसङ्ख्यत्वाभावात् । ६–अञन्तादणमुदाहरति-बिदस्याऽङ्कः सङ्घो घोषो वा=**बैदः**, बिदादिभ्योऽञित्यञन्तादण् । ७–बिदस्य लक्षणं=**बैदम्** । विशेष्यस्य क्लीबत्वेन बैदशब्दस्यापि क्लीबत्वम् । ८–'गर्गादिभ्यो यञि'ति यञन्तादण्, गार्ग्यस्य सङ्घः–अङ्कः–घोषो वा=**गार्गः**, 'आपत्यस्य'—इति यलोपः । लक्षणं चेद् विशेष्यं तदा **गार्गम्** । ९–'अत इञिति' इञन्तादण्, दाक्षेः सङ्घोऽङ्को घोषो वा=**दाक्षः**, लक्षणं चेद् **दाक्षम्**, 'यस्येति च' इति ईकारलोपः । 'घोष आभीरपल्ली स्यात्' । सङ्घः=समुदायः । १०–ननु अङ्कलक्षणशब्दयोः पर्यायत्वात् पृथग्ग्रहणं व्यर्थमित्यत आह—**परम्परेति**, यथा गवादिनिष्ठस्तप्तमुद्राविशेषोऽङ्कः, तस्य हि गोद्वारा ( परम्परया) स्वामिसम्बन्धः । विद्यादिविशेषस्तु देवदत्तादौ साक्षाद् विद्यमानत्वाद् लक्षणम् । ॥ इति शैषिकाः ॥

११–षष्ठ्यन्ताद् विकार इत्यर्थे प्रत्ययाः स्युरित्यर्थः । १२–अण्प्रत्ययः, टिलोपः । आदिवृद्धिः ।

भास्मनः । मार्तिकः ॥

१८९४ अवयवे च प्राण्योषधिवृक्षेभ्यः ४ । ३ । १३५ ॥

चाद्विकारे । मयूरस्य विकारोऽवयवो वा=मायूरः । मौर्वम्=काण्डं भस्म वा । पैप्पलम् ।

१८९५ त्रपु-जतुनोः षुक् ४ । ३ । १३८ ॥

आभ्यामण् एतयोः षुक् च । त्रापुषम् । जातुषम् ।

१८९६ ओरञ् ४ । ३ । १३९ ॥

दैवदारवम् ।

१८९७ अनुदात्तादेश्च ४ । ३ । १४० ॥

अञ् । कापित्थम् ।

१८९८ पलाशादिभ्यो वा ४ । ३ । १४१ ॥

अञ् । पालाशम् । खादिरम् ।

१८९९ शम्याः ष्लञ् ४ । ३ । १४२ ॥

शामीलम् ।

१-भस्मनो विकारः=**भास्मनः**, अण्प्रत्ययः, 'अन्' इति प्रकृतिभावाद् 'नस्तद्धिते' इति टिलोपो न । मृत्तिकाया विकारः=**मार्त्तिकः**, अण् , आदिवृद्धिः, रपरत्वम् । २-**मायूरः**, प्राण्युदाहरणमिदम् ,अण् । ३-मूर्वाया अवयवो विकारो वा=**मौर्वम्**, मूर्वा=ओषधिविशेषः, ओषध्युदाहरणमिदम् । अण्प्रत्ययः, आदिवृद्धिः । ४-वृक्षस्योदाहरति-पिप्पलस्य=अश्वत्थस्यावयवो विकारो वा-**पैप्पलम्** । ५-त्रपुणः ( रङ्गस्य ) विकारः=**त्रापुषम्**, अण्, षुक्, आदिवृद्धिः । एवं जतुनः ( लाक्षायाः )=**जातुषम्** । ६-उवर्णान्ताद् विकारेऽञ् स्यादित्यर्थः । प्राण्योषधिवृक्षेभ्योऽवयवे विकारे च, इतरेभ्यस्तु विकारे । ७-देवदारोरवयवो विकारो वा=**दैवदारवम्**, अञ् आदिवृद्धिः, 'ओर्गुणः' अवादेशः । देवदारुर्वृक्षविशेषः । ८-कपित्थस्याऽवयवो विकारो वेत्यर्थः । ९-पलाशस्यावयवो विकारो वा=**पालाशम्** , एवम्—खदिरस्यावयवो विकारो वा=**खादिरम्**, अञ्, आदिवृद्धिः । १०-अवयवे विकारे चेति शेषः । ११-शम्या विकारोऽवयवो वा=**शामीलम्**, ष्लञ्, ष इत् ञित्वादादिवृद्धिः ।

**११०० मयड् वैतयोर्भाषायामभक्ष्याच्छादनयोः ४।३।१४३॥**

प्रकृतिमात्रान्मयड् वा स्याद्विकारावयवयोः। अश्ममयम्, आश्मनम्। अभक्ष्येत्यादि किम्—मौद्गः सूपः। कार्पासमाच्छादनम्।

**११०१ नित्यं वृद्धशरादिभ्यः ४।३।१४४॥**

आम्रमयम्। शरमयम्। एकाचो नित्यम्—वाङ्मयम्।

**११०२ गोश्च पुरीषे ४।३।१४५॥**

गोमयम्।

**११०३ एण्या ढञ् ४।३।१५९॥**

ऐणेयम्। एणस्य तु—ऐणम्।

**११०४ गोपयसोर्यत् ४।३।१६०॥**

गव्यम्। पयस्यम्।

**११०५ फले लुक् ४।३।१६३॥**

विकारावयवप्रत्ययस्य।

१–एतयोः=विकारावयवयोरर्थयोरित्यर्थः। २–सर्वस्याः प्रकृतेरित्यर्थः। ३–अश्मनो विकारोऽवयवो वा=**अश्ममयम्**, मयटि–अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वात्, 'न लोपः प्रतिपादिके' ति नलोपः। अश्मनोऽवयवः=**आश्मनम्**, अणि, 'अन्' इति प्रकृतिभावान्न टिलोपः। ४–'मयट्' इति शेषः। उक्तविकल्पापवादोऽयम्। ५–आम्रस्यावयवो विकारो वा=**आम्रमयम्**, वृद्धोदाहरणमिदम्, 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्'। एवम्–शरस्य विकारोऽवयवो वा=**शरमयम्**। ६–नित्यमिति योगविभागाल्लब्धमिदम्, वाचो विकारो=**वाङ्मयम्**=शास्त्रम्। ७–गोशब्दात् पुरीषेऽर्थे नित्यं मयट् इत्यर्थः। गोः पुरीषम्=**गोमयम्**। ८–एणीशब्दात् ढञ् स्यादवयवे विकारे चार्थे। एण्या अवयवो विकारो वा=**ऐणेयम्**, ढस्य एयादेशः, ञित्वादादिवृद्धिः 'यस्येति च, इति ईकारलोपः। सूत्रे स्त्रीलिङ्गनिर्देशात्पुंलिङ्गे न ढञित्याह—**एणस्य तु**, ऐणमित्यत्र, अण्प्रत्ययः। ९–गोशब्दात्पयःशब्दाच्च यत् स्यादवयवे विकारे चार्थे। गोर्विकारोऽवयवो वा=**गव्यम्**, यति, 'वान्तो यी'ति अवादेशः, एवं पयसो विकारः=**पयस्यम्**। १०–वृक्षस्य विकारः फलं, तस्मिन्=फलरूपे विकारेऽवयवे वा वाच्ये प्रत्ययस्य लुगित्यर्थः।

**११०६ लुक् तद्धितलुकि १ । ४ । ७ ॥**

उपसर्जनस्त्रीप्रत्ययस्य । आमलक्याः फलम्=आमलकम् ।

**११०७ प्लक्षादिभ्योऽण् ४ । ३ । १६४ ॥**

विधानसामर्थ्यान्न लुक् । प्लाक्षम् ।

**११०८ न्यग्रोधस्य च केवलस्य ७ । ३ । ५ ॥**

अस्य न वृद्धिरैजागमश्च । नैयग्रोधम् ।

**११०९ जम्ब्वा वा ४ । ३ । १६५ ॥**

अण् फले । जाम्बवम् । पक्षे ओरञ्, तस्य लुक्—जम्बु ।

**१११० लुप् च ४ । ३ । १६६ ॥**

जम्ब्वाः फलप्रत्ययस्य लुब्वा स्यात् । लुपि युक्तवत्—जम्बूः । (फलपाकशुषामुपसंख्यानम्) व्रीहयः । मुद्गाः । (पुष्पमूलेषु बहुलम्) । मल्लि-

१-तद्धितलुकि-उपसर्जनस्त्रीप्रत्ययस्य लुक् स्यादित्यर्थः । २-विकारार्थस्य मयटो लुकि, उपसर्जनस्त्रीप्रत्ययस्य ङीषो लुक् । ३-अन्यथा अण्विधानं व्यर्थं स्यात् । ४-प्लक्षस्य फलम्=**प्लाक्षम्** । ५-न्यग्रोधस्य फलम्=**नैयग्रोधम्** । प्लक्षादित्वादण्, वृद्ध्यभावे, यकारात् पूर्वम् ऐकारागमः । ६=जम्ब्वाः फलम्=**जाम्बवम्**, अण्, ओर्गुणः, अवादेशः । ७-फले लुगिति सूत्रेणेत्यर्थः । अञो लुकि विशेष्यानुसारेण नपुंसकत्वाद् ह्रस्वे—**जम्बु** । ८-लुकैव सिद्धे लुब्विधेः फलं दर्शयति—**लुपि युक्तवदिति**, फलप्रत्ययस्य लुपि युक्तवत्त्वेन विशेष्यलिङ्गवचने बाधित्वात् स्त्रीत्वमेकवचनं चेत्यर्थः, **जम्बूः**, जम्ब्वाः फलानीति विग्रहेऽपि जम्बूरेव । ९-फलपाकेन शुष्यन्ति—इति फलपाकशुष ओषधयः, तद्वाचिभ्यः परस्य फलप्रत्ययस्य लुप उपसङ्ख्यानमित्यर्थः । फले लुकोऽपवादोऽयम् । १०-व्रीहीणां फलानि=**व्रीहयः**, मुद्गानां फलानि=**मुद्गाः** । बिल्वाद्यणो लुप्, 'लुपि युक्तवदि'ति युक्तवद्भावात् पुंस्त्वं बहुवचनं च । ११-विकारावयवप्रत्ययस्य लुप् स्यादिति शेषः । मल्लिकायाः पुष्पं=**मल्लिका**, अनुदात्तादेश्चेत्यञो लुप् । 'लुपि युक्तवदि'ति स्त्रीत्वम् । एवं जात्याः पुष्पं=**जातिः** । अत्राप्यञो लुप्, पूर्ववद् युक्तवद्भावेन स्त्रीत्वम् ।

कायाः पुष्पं-मल्लिका । जात्याः पुष्पं-जातिः । विदार्या मूलं-विदारी । बहुलग्रहणान्नेह—पाटलानि पुष्पाणि । साल्वानि मूलानि । बाहुलकात्क्वचिल्लुक् । अशोकम् । करवीरम् ।

**१६११ हरीतक्यादिभ्यश्च ४ । ३ । १६७ ॥**

फलप्रत्ययस्य लुप् । (हरीतक्यादीनां लिङ्गमेव प्रकृतिवत्) । हरीतक्याः फलानि-हरीतक्यः । ॥ इति प्राग्दीव्यतीयाः ॥

## अथ ठगधिकारः ।

**१६१२ प्राग्वहतेष्ठक् ४ । ४ । १ ॥**

तद्वहतीत्यतः प्राक् ठगधिक्रियते । (तदाहेति माशब्दादिभ्य उपसंख्यानम्) । माशब्दं कार्षीरिति य आह स-माशब्दिकः । (आहौ प्रभूतादिभ्यः) । प्रभूतमाह-प्राभूतिकः । पार्याप्तिकः । (पृच्छतौ सुस्नातादिभ्यः) सुस्नातं पृच्छति-सौस्नातिकः । सौखशायनिकः । अनुशतिकादिः । (गच्छतौ

१-जातिङीषन्तमिदम्, प्रत्ययस्वरेणान्तोदात्तम्, अनुदात्तादित्वादञ्, तस्यानेन लुप्, युक्तवत्त्वात् स्त्रीत्वम् । २-पाटलायाः पुष्पाणि=**पाटलानि**, बिल्वाद्यण्, तस्य न लुप्, एवम्-साल्वस्य मूलानि=**साल्वानि** । ३-अशोकस्य पुष्पम्=**अशोकम्** । करवीरस्य पुष्पम्=**करवीरम्** । इत्यत्रापि 'पुष्पमूलेषु बहुलमि'ति लुपि युक्तवत्त्वात् पुंस्त्वे, अशोकः पुष्पम्, करवीरः पुष्पम्, इति स्यादित्यत उक्तम्-**बहुलग्रहणात्क्वचिल्लुक्**, इति तथा च युक्तवत्त्वस्याप्रवृत्तेः विशेष्यनिघ्नत्वमेव, (नपुंसकत्वमेव) । ४-लुपि युक्तवदिति वचनेन लिङ्गवचनयोरुभयोः प्रकृतिवत्वे प्राप्ते, वचनातिदेशनिषेधार्थमिदं वार्त्तिकम् । ५-अनुदात्तादेश्चेति-अञ्, तस्य लुप्, युक्तवत्त्वात्स्त्रीत्वम्, बहुवचन विशेष्यानुरोधात् । ६-ठकः-इति शेषः । ७-ठक्, ठस्येकादेशः । ८-आहेत्यर्थे द्वितीयान्तेभ्यः प्रभूतादिभ्यष्ठग् वाच्य इत्यर्थः । ९-पर्याप्तमाह=**पार्याप्तिकः**, ठक्, सुब्लुक्, ठस्येकः, आदिवृद्धिः । १०-पृच्छतीत्यर्थे द्वितीयान्तेभ्यः ठग् वाच्य इत्यर्थः । ११-सुखशयनं पृच्छति=**सौखशायनिकः**, ठक्, इकादेशः, अनुशतिकादित्वादुभयपदयोरादिवृद्धिरिति स्मारयति-**अनुशतिकादिरिति** । १२-गच्छतीत्यर्थे द्वितीयान्तेभ्यः परदारादिभ्यो ठगित्यर्थः ।

परदारादिभ्यः ) । पारदारिकः । गौरुतल्पिकः ।

१९१३ तेन दीव्यति खनति जयति जितम्[2] ४ । ४ । २ ॥

अक्षैर्दीव्यति खनति जयति जितं वा—आक्षिकः ।

१९१४ संस्कृतम्[3] ४ । ४ । ३ ॥

दध्ना संस्कृतं—दाधिकम् । मारीचिकम्[4] ।

१९१५ तरति[5] ४ । ४ । ५ ॥

उडुपेन तरति—औडुपिकः ।

१९१६ गोपुच्छाट्ठञ् ४ । ४ । ६ ॥

गौपुच्छिकः[6] ।

१९१७ नौद्व्यचष्ठन्[7] ४ । ४ । ७ ॥

नाविकः[8] । घटिकः ।

१९१८ चरति[9] ४ । ४ । ८ ॥

हस्तिना चरति-हास्तिकः । शकटेन चरति[10]-शाकटिकः । दध्ना चरति[11] दाधिकः।

१९१९ पर्पादिभ्यः[12] ष्ठन् ४ । ४ । १० ॥

पर्पेण चरति पर्पिकः । येन पीठेन पङ्गवश्चरन्ति स पर्पः । अश्विकः[13] ।

१-परदारान् गच्छति-**पारदारिकः**, गुरुतल्पं गच्छति=**गौरुतल्पिकः**, गुरुतल्पो=गुरुपत्नी । २-दीव्यतीत्याद्यर्थेषु ( सूत्रोक्तेषु ) तृतीयान्तात् ठगित्यर्थः । ३-संस्कृतमित्यर्थे तृतीयान्तात् ठक् स्यादित्यर्थः । ४-मरीचिभिः संस्कृतं=**मारीचिकम्** , ठकः कित्वादादिवृद्धिः । ५-तरतीत्यर्थे तृतीयान्तात् ठगित्यर्थः । ६-गोपुच्छेन तरति=**गौपुच्छिकः** । ञित्वात् स्वरे भेदः । ७-नौशब्दात् द्व्यचश्च तृतीयान्तात् ठनित्यर्थः । ८-नावा तरति=**नाविकः**, घटेन तरति=**घटिकः** । ९-चरतीत्यर्थे तृतीयान्तात् ठगित्यर्थः, । १०-गच्छतीत्यर्थः । **हास्तिकः**, ठनि, इकादेशे, 'नस्तद्धिते' इति टिलोपः, आदिवृद्धिः । ११-भक्षयतीत्यर्थः । चर गतिभक्षणयोरिति प्रमाणाद्-उभयार्थता । १२-चरतीत्यर्थे तृतीयान्तेभ्य इति शेषः । ष्ठन् प्रत्ययः, षित्, तत्फलं 'षिद्गौरादिभ्य' इति स्त्रियां ङीष् **पर्पिकी** । १३-अश्वेन चरति=**आश्विकः** । रथेन चरति=**रथिकः** ठन् ठस्येकः । 'यस्येति च' इत्यकारलोपः ।

रथिकः ।

**१६२० श्वगणाट्ठञ् च ४ । ४ । ११ ॥**

चात्ष्ठन् ।

**१६२१ श्वादेरिञि ७ । ३ । ८ ॥**

ऐज् न । श्वाभस्त्रिः । ( ईकारादाविति वाच्यम् ) । श्वगणेन चरति-श्वागणिकः, श्वगणिकः ।

**१६२२ वेतनादिभ्यो जीवति ४ । ४ । १२ ॥**

वेतनेन जीवति—वैतनिकः । धानुष्कः ।

**१६२३ हरत्युत्सङ्गादिभ्यः ४ । ४ । १५ ॥**

उत्सङ्गेन हरति—औत्सङ्गिकः ।

**१६२४ भस्त्रादिभ्यः ष्ठन् ४ । ४ । १६ ॥**

भस्त्रया हरति—भस्त्रिकः । षित्वाद् भस्त्रिकी ।

**१६२५ विभाषा विवधात् ४ । ४ । १७ ॥**

ष्ठन् । विवधेन हरति—विवधिकः । पक्षे ठक् वैवधिकः । एकदेशविकृतत्वाद्वीवधादपि—वीवधिकः, वैवधिकः । विवध—वीवधशब्दौ उभयतोबद्ध-

---

१—श्वगणशब्दात्तृतीयान्ताच्चरतीत्यर्थे ठञ्, ष्ठन् च स्यादित्यर्थः । २—श्वन् शब्दस्य द्वारादित्वात्, ऐजागमे प्राप्ते—आह—**श्वादेरिञि**, श्वभस्त्रस्यापत्यम्=**श्वाभस्त्रिः**, अत इञ्, ऐजागमाभावे, आदिवृद्धिः । ३—इञि, इति परित्यज्य 'इकारादौ' इति वाच्यमित्यर्थः, तेन '**श्वागणिकः**' इत्यत्रापि न ऐजागमः, किन्तु—आदिवृद्धिः । ठञ् प्रत्ययः, ठस्येकादेशः । ष्ठनि **श्वगणिकः** । ४—तृतीयान्तेभ्यो वेतनादिभ्यो जीवतीत्यर्थे ठञित्यर्थः । ५—धनुषा जीवति=**धानुष्कः**, ठञ्, ठस्य—"इसुसुक्तान्तादिति कादेशः" आदिवृद्धिः । ६—हरतीत्यर्थे तृतीयान्तेभ्य उत्सङ्गादिभ्यः ठक् स्यादित्यर्थः । ७—कित्वादादिवृद्धिः । ८—हरतीत्यर्थे तृतीयान्तेभ्यो भस्त्रादिभ्यः ष्ठन् स्यादित्यर्थः । ९—'षिद् गौरादिभ्य, इति स्त्रियां ङीष्, **भस्त्रिकी** । १०—तेन हरतीत्यर्थे तृतीयान्ताद् विवधशब्दात् ष्ठन् इत्यर्थः, **विवधिकः**, ठस्येकः, षित्वात् स्त्रियां ङीष् विवधिकी । ११—ठकि कित्वादादिवृद्धिः=**वैवधिकः** ।

शिक्ये स्कन्धवाह्ये[1] काष्ठे वर्तते ।

**१६२६ निर्वृत्तेऽक्षद्यूतादिभ्यः[2] ४ । ४ । १६ ॥**

अक्षद्यूतेन निर्वृत्तम्[3]—आक्षद्यूतिकं वैरम् ।

**१६२७ संसृष्टे[4] ४ । ४ । २२ ॥**

दध्ना संसृष्टं—दाधिकम् ।

**१६२८ लवणाल्लुक्[5] ४ । ४ । २४ ॥**

लवणेन संसृष्टो-लवणः सूपः ।

**१६२६ मुद्गादण्[6] ४ । ४ २५ ॥**

मौद्ग ओदनः ।

**१६३० उञ्छति[7] ४ । ४ । ३२ ॥**

बदराण्युञ्छति—बादरिकः ।

**१६३१ रक्षति[8] ४ । ४ । ३३ ॥**

समाजं रक्षति-सामाजिकः ।

**१६३२ शब्ददर्दुरं करोति[9] ४ । ४ । ३४ ॥**

शब्दं करोति—शाब्दिकः । दार्दुरिकः ।

**१६३३ पक्षिमत्स्यमृगान् हन्ति[10] ४ । ४ । ३५ ॥**

१–'वँहगी, इति पञ्चनदभाषाप्रसिद्धे इत्यर्थः, । २–निर्वृत्तमित्यर्थे तृतीयान्तेभ्योऽक्षद्यूतादिभ्यः ठक् स्यादित्यर्थः । ३–**निर्वृत्तम्**=जातं सम्पन्नं वा । ठकि–कित्वादादिवृद्धिः, ठस्येकादेशः, **आक्षद्यूतिकम्** । ४–संसृष्टमित्यर्थे तृतीयान्तात् ठगित्यर्थः, **दाधिकम्** । ५–पूर्वसूत्रविहितस्य ठक इत्यर्थः । ६–तेन संसृष्टमित्यर्थे तृतीयान्ताद् मुद्गशब्दादण् स्यादिति । मुद्गैः संसृष्टः=**मौद्गः**, अणि–आदिवृद्धिः । ७–उञ्छतीत्यर्थे द्वितीयान्तात् ठक् इत्यर्थः । भूम्यां निपतितस्य व्रीह्यादेः कणश आदानम्=**उञ्छः** । बदराणि =बदरीफलानि उञ्छति—**बादरिकः**, ठक् , ठस्येकः, आदिवृद्धिः । ८–रक्षतीत्यर्थे द्वितीयान्तात् ठक् स्यादित्यर्थः । **सामाजिकः**, सिद्धिः पूर्ववत् । ६–शब्दं करोतीति विग्रहे द्वितीयान्तात् ठक्=**शाब्दिकः** । दर्दुरं करोति=**दार्दुरिकः** । सिद्धिः पूर्ववत् । १०–हन्तीत्यर्थे द्वितीयान्तेभ्यः पक्षि–मत्स्य–मृगेभ्यः ठक् स्यादिति । **स्वरूपस्येति**—पक्षि–मत्स्य–मृग

स्वरूपस्य पर्यायाणां विशेषाणां च ग्रहणम् । मत्स्यपर्यायेषु मीनस्यैव । पक्षिणो हन्ति–पाक्षिकः । शाकुनिकः । मायूरिकः । मात्स्यिकः । मैनिकः । शाकुलिकः । मार्गिकः । हारिणिकः । सारङ्गिकः ।

**१६३४ धर्मं चरति ४ । ४ । ४१ ॥**

धार्मिकः । ( अधर्माच्चेति वक्तव्यम् ) । आधर्मिकः ।

**१६३५ तदस्य पण्यम् ४ । ४ । ५१ ॥**

अपूपाः पण्यमस्य–आपूपिकः ।

**१६३६ लवणाट्ठञ् ४ । ४ । ५२ ॥**

लावणिकः ।

**१६३७ शिल्पम् ४ । ४ । ५५ ॥**

---

शब्दैः तत्तत्स्वरूपाणां तत्तत्पर्यायाणां तत्तद्विशेषवाचिनां च ग्रहणमित्यर्थः, 'स्वं रूपम्' इतिसूत्रभाष्ये तथैवोक्तेः । **मीनस्यैवेति**—मत्स्यपर्यायेषु मीनशब्दस्यैव ग्रहणं नत्वन्येषामिति । इदमपि तत्रत्यभाष्य उक्तम् ।

१–स्वरूपोदाहरणम्–**पाक्षिकः**, ठक्, आदिवृद्धिः, इकादेशः । पक्षिपर्यायोदाहरणम्–शकुनीन्–हन्तीति=**शाकुनिकः**, 'यस्येति च' इति इकारलोपः । सिद्धिः सरला । पक्षिविशेषोदाहरणम्—मयूरान् हन्ति=**मायूरिकः** । एवम्–मत्स्यान् हन्ति=**मात्स्यिकः**, मत्स्यस्य ङ्यामित्युक्तेर्न यलोपः । मीनान् हन्ति=**मैनिकः** । शाकुलान्=मत्स्यविशेषान् हन्ति=**शाकुलिकः** । मृगान् हन्ति=**मार्गिकः**, आदिवृद्धौ रपरत्वम् । हरिणान् हन्ति=**हारिणिकः** । सारङ्गान्=मृगविशेषान् हन्ति=**सारङ्गिकः** । २–द्वितीयान्ताद् धर्मशब्दात् चरतीत्यर्थे ठक् स्यादिति, **धार्मिकः** । ३–'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति, इति तदन्ताऽग्रहणादप्राप्ते वचनम्–**अधर्माच्चेति**, ठगिति शेषः । अधर्मं चरति=**आधर्मिकः** । ४–अस्य पण्यमित्यर्थे प्रथमान्तात् ठक् स्यादित्यर्थः । **आपूपिकः**, ठक्, ठस्येकः, आदिवृद्धिः । ५–अस्य पण्यमित्यर्थे प्रथमान्ताद् लवणशब्दात् ठञ् स्यादिति । लवणं पण्यम् अस्य=**लावणिकः**, स्त्रियां 'टिड्ढे'ति ङीपि लावणिकी । ६–अस्य शिल्पम् इत्यर्थे प्रथमान्तात् ठक् स्यादित्यर्थः ।

मृदङ्गवादनं शिल्पमस्य—मार्दङ्गिकः।

**१६३८ प्रहरणम्[२] ४।४।५७॥**

असिः प्रहरणमस्य—आसिकः।धानुष्कः।

**१६३६ शक्तियष्ट्योरीकक्[३] ४।४।५६॥**

शाक्तीकः। याष्टीकः।

**१६४० अस्ति नास्ति दिष्टं मतिः[४] ४।४।६०॥**

अस्ति—परलोक इत्येवं मतिर्यस्य स—आस्तिकः। नास्तीति मतिर्यस्य स—नास्तिकः। दिष्टमिति मतिर्यस्य स—दैष्टिकः।

**१६४१ शीलम्[५] ४।४।६१॥**

अपूपभक्षणं शीलं यस्य स—आपूपिकः।

**१६४२ छत्रादिभ्यो णः[७] ४।४।६२॥**

गुरोर्दोषाणामावरणं छत्रं, तच्छीलमस्येति—छात्रः।

**१६४३ तत्र नियुक्तः[६] ४।४।६६॥**

---

१—मृदङ्गशब्दो लक्षणया मृदङ्गवादनार्थकः, तथा च मृदङ्गम्=मृदङ्गवादनं शिल्पम् अस्येति=**मार्दङ्गिकः**। २—अस्य प्रहरणम् इत्यर्थे प्रथमान्तात् ठक्—इत्यर्थः। **आसिकः**=खङ्गायुधः। धनुः प्रहरणम् अस्य=धानुष्कः, ठक्, ठस्य 'इसुसुक्तान्तात्, इति कादेशः, आदिवृद्धिः। ३—प्रथमान्ताभ्यां शक्ति—यष्टिशब्दाभ्याम् अस्य प्रहरणमित्यर्थे ईकक् प्रत्ययः स्यात्, ठकोऽपवादोऽयम्, शक्तिः प्रहरणम् अस्य=**शाक्तीकः**, यष्टिः प्रहरणम् अस्य=**याष्टीकः**, ईककः कित्वादादिवृद्धिः, 'यस्येति च, इति—इकारलोपः। ४—इति मतिरस्यास्तीत्यर्थे—अस्ति—नास्ति—दिष्टशब्देभ्यः प्रथमान्तेभ्यः ठक् स्यादित्यर्थः। अस्ति-नास्तिशब्दौ निपातौ। दिष्टम्=दैवम्। **आस्तिकः**। **नास्तिकः**=ईश्वरपरलोकाद्यस्वीकर्ता, **दैष्टिकः**=दैववादी। ५—प्रथमान्तादस्य शीलमित्यर्थे ठक् स्यादित्यर्थः। ६—अपूपशब्दोऽपूपभक्षणे लाक्षणिक इति भावः। **आपूपिकः**। ७—अस्य शीलमित्यर्थे प्रथमान्तेभ्यः छत्रादिभ्यो णप्रत्ययः स्यादिति। ठकोऽपवादोऽयम्। ८—छत्रशब्दो गुरोर्दोषावरणे लाक्षणिक इति भावः। **छात्रः**, णप्रत्ययः, आदिवृद्धिः। ६—सप्तम्यन्ताद् नियुक्त इत्यर्थे ठक् स्यादित्यर्थः। **आकरिकः**।

आकरे नियुक्तः-आकरिकः ।

**१६४४ निकटे वसति ४ । ४ । ७३ ॥**

नैकटिको भिक्षुः । इति ठगधिकारः ।

## अथ यदधिकारः

**१६४५ प्राग्घिताद्यत् ४ । ४ । ७५ ॥**

तस्मै हितमित्यतः प्राग् यदधिक्रियते ।

**१६४६ तद्वहति रथ-युग-प्रासङ्गम् ४ । ४ । ७६ ॥**

रथं वहति-रथ्यः । युग्यः । प्रासङ्ग्यः ।

**१६४७ धुरो यड्ढकौ ४ । ४ । ७७ ॥**

धुर्यः, धौरेयः ।

**१६४८ हलसीराट्ठक् ४ । ४ । ८१ ॥**

हलं वहति-हालिकः । सैरिकः ।

**१६४९ विध्यत्यधनुषा ४ । ४ । ८३ ॥**

द्वितीयान्ताद्विध्यतीत्यर्थे यत्, न चेत्तत्र धनुष्करणम् । पादौ विध्यन्ति-पद्याः शर्कराः ।

१-सप्तम्यन्ताद् निकटशब्दाद् वसतीत्यर्थे ठक् स्यादिति । **नैकटिकः** ।

इति ठगधिकारः ।

२-द्वितीयान्तेभ्यो रथ-युग-प्रासङ्ग शब्देभ्यो वहतीत्यर्थे यत्स्यादित्यर्थः । ३-रथादिवहनकाले वृषादिस्कन्धेषु तिर्यग् यदीषत्प्रोतं काष्ठमासज्यते तद् युगम्, युगं वहति=**युग्यः**=वृषभोऽश्वो वा । प्रासङ्गं वहति=**प्रासङ्ग्यः**, अश्वादीनां रथादिवहने शिक्षितीकरणार्थं युगे यद् युगान्तरमासज्यते तत् प्रासङ्गम् । ४-द्वितीयान्ताद् धुर्शब्दात्-वहतीत्यर्थे यत्-ढक् च स्यादित्यर्थः । यति-धुरं वहति=**धुर्यः**, हलि चेति दीर्घः प्राप्नोति, न भकुर्छुरामिति न भवति । ढकि-**धौरेयः**, ढस्य एयादेशः, आदिवृद्धिः । ५-वहतीत्यर्थे द्वितीयान्ताभ्यां हल-सीरशब्दाभ्यां ठक् इत्यर्थः । **हालिकः** । सीरं वहति=**सैरिकः** । ६-तत्र=वेधने धनुःकरणं न चेदित्यर्थः । ७-**पद्याः**, पादशब्दात् यत्प्रत्यये 'पद्यत्यतदर्थे' इति पदादेशः । अधनुषेति किम् ? धनुषा चोरं विध्यति, नात्र चोरशब्दाद् यत् ।

**१६५० नौ-वयो-धर्म-विष-मूल-मूल-सीता-तुलाभ्यस्तार्य-तुल्य-प्राप्य-वध्यानाम्य-सम-समित-संमितेषु ४।४।६१॥**

नावा तार्यं[2]—नाव्यं=जलम्। वयसा तुल्यो—वयस्यः[3]। धर्मेण प्राप्यं—धर्म्यम्। विषेण वध्यो—विष्यः। मूलेन आनाम्यं—मूल्यम्। मूलेन[4]—समो मूल्यः। सीतया[5] समितं—सीत्यं=क्षेत्रम्। तुलया[6] संमितं—तुल्यम्।

**१६५१ तत्र साधुः[7] ४।४।६८॥**

अग्रे साधुः—अग्र्यः। सामसु साधुः सामन्यः। कर्मण्यः। शरण्यः।

**१६५२ सभाया यः[8] ४।४।१०५॥**

सभ्यः। ॥ इति यतोऽवधिः॥

## अथ छयतोरधिकारः

**१६५३ प्राक् क्रीताच्छः ५।१।१॥**

तेन क्रीतमित्यतः प्राक् छोऽधिक्रियते।

**१६५४ उ-गवादिभ्यो यत् ५।१।२॥**

प्राक् क्रीतादित्येव। उवर्णान्ताद्गवादिभ्यश्च यत् स्यात्। छस्यापवादः।[9]नाभि

---

१—नावादिभ्यस्तृतीयान्तेभ्यः क्रमेण तार्यादिष्वर्थेषु यत्प्रत्ययः स्यादित्यर्थः। २—तरीतुं शक्यम्=तार्यम्। **नाव्यम्** यति वान्तो यीति-अवादेशः। ३—**वयस्यो**=मित्रम्। ४—पटादेरुत्पत्त्यर्थं वणिग्भिर्विनियुक्तं द्रव्यं—मूलम्। तेन सह यदधिकं द्रव्यम् आनाम्यते=क्रेतुः संमतीकरणेन लभ्यते तत्—**मूल्यम्**, लोकास्तु क्रेतुर्लब्धं सर्वमपि द्रव्यं मूल्यमिति व्यवहरन्ति। तत्र लक्षणया प्रयोगो ज्ञेयः। ५—सीता=लाङ्गलपद्धतिः, तया समितं=सङ्गतमित्यर्थः, कृष्टमिति यावत्। ६—तुला=घटा, तया उन्मितमित्यर्थः। **तुल्यम्**। ७—सप्तम्यन्तात्साधुरित्यर्थे यत्स्यादित्यर्थः। अग्रे साधुः=**अग्र्यः**, साधुः=प्रवीणः। **सामन्यः** 'ये चाभावकर्मणोः' इति प्रकृतिभावान्न टिलोपः। एवं कर्मणि साधुः=**कर्मण्यः**। शरणे=रक्षणे साधुः=**शरण्यः**। ८—साधुरित्यर्थे सभाशब्दात् सप्तम्यन्ताद् यप्रत्ययः स्यान्न तु यत्, ययतोः स्वरे भेदः। सभायां साधुः=**सभ्यः**। "यस्येति च" इति आलोपः। ९—नाभिशब्दो नभादेशं, यत्प्रत्ययं च प्राप्नोतीत्यर्थः। गवादिगणसूत्रमिदम्।

नभं च ) नभ्योऽक्षः । नभ्यमञ्जनम् । रथनाभावेवेदम् । ( शुनः संप्रसारणं वा च दीर्घत्वम् ) । शून्यम्, शुन्यम् । ( ऊधसोऽनङ् च ) । ऊधन्यः ।

**११५५ कम्बलाच्च संज्ञायाम् ५ । १ । ३ ॥**

यत् । कम्बल्यमूर्णापलशतम् । संज्ञायां किम् । कम्बलीया ऊर्णा ।

**११५६ विभाषा हविरपूपादिभ्यः ५ । १ । ४ ॥**

आमिक्ष्यं दधि, आमिक्षीयम् । पुरोडाश्यास्तण्डुलाः, पुरोडाशीयाः । अपूप्यम्, अपूपीयम् ।

**११५७ तस्मै हितम् ५ । १ । ५ ॥**

वत्सेभ्यो हितो—वत्सीयो गोधुक् ।

---

१—यत्र अक्षदण्डः प्रवेश्यते तच्चक्रमध्यगतं छिद्रं नाभिरुच्यते, तस्मै हितोऽक्षदण्डो **नभ्यः** । स हि—अनुगुणत्वाद् नाभये हितः । **नभ्यमञ्जनम्**, अञ्जनं=तैलसेकः, नाभेरञ्जने कृते तत्र प्रोतं चक्रं सुपरिवर्त्तं भवति—इति परिवर्तनात्मककार्यक्षमताऽऽधायकत्वादञ्जनं नाभये हितम् । २—शरीरावयवविशेषवाचि—नाभिशब्दात्तु "शरीरावयवाद्यत्" इति यत् केवलो भवति न तु नभादेशः । ३—गवादिगणसूत्रमिदम्, श्वन्शब्दात् यत्स्यात्, प्रकृतेः सम्प्रसारणम्, तस्य=सम्प्रसारणस्य वा दीर्घ इत्यर्थः । शुने हितम्=**शून्यम्**, **शुन्यम्** । ४—ऊधस्-शब्दात् यत् स्यात्, प्रकृतेरनङादेशश्चेत्यर्थः । गवादिगणसूत्रमिदमपि । ऊधसे हितः=**ऊधन्यः**, ङित्वादन्तादेशोऽनङ्, ङकार इत्, नकारेऽकार उच्चारणार्थः, । ५—कम्बलशब्दात् यत् प्राक् क्रीतीयेष्वर्थेषु । कम्बलाय हितम्=**कम्बल्यम्**, ऊर्णापलशतम् । ६—संज्ञातोऽन्यत्र, कम्बलाय हिता=**कम्बलीया**, छप्रत्ययः, छस्य ईयादेशः । ७—हविर्विशेषवाचिभ्योऽपूपादिभ्यश्च प्राक्क्रीतीयेष्वर्थेषु यत्प्रत्ययो वा स्यादित्यर्थः । पक्षे छः । आमिक्षायै हितम्=**आमिक्ष्यम्**, **आमिक्षीयम्** । तप्ते पयसि दध्नि निक्षिप्ते सति यद् घनीभूतं निष्पद्यते सा 'आमिक्षा' इत्युच्यते । ८—पुरोडाशाय हिताः=**पुरोडाश्याः**, **पुरोडाशीयाः** । अपूपेभ्यो हितम्=**अपूप्यम्**, **अपूपीयम्** । ९—चतुर्थ्यन्ताद् हितम् इत्यर्थे यथाविहितं प्रत्ययाः स्युरित्यर्थः । **वत्सीयः**, छप्रत्ययः, छस्य ईय्, गोधुक्=वत्सेभ्यः पयः परिशेष्य गवां दोग्धा ।

शङ्कव्यं दारु । गव्यम् । हविष्यम् ।

**१६५८ शरीरावयवाद्यत् ५ । १ । ६ ॥**

दन्त्यम् । कण्ठ्यम् । नस्यम् ।

**१६५९ अजाविभ्यां थ्यन् ५ । १ । ८ ॥**

अजथ्या यूथिः । अविथ्या ।

**१६६० आत्मन्विश्वजन-भोगोत्तरपदात्खः ५ । १ । ९ ॥**

**१५६१ आत्माध्वानौ खे ६ । ४ । १६९ ॥**

प्रकृत्या स्तः । आत्मने हितम्–आत्मनीनम् । विश्वजनीनम् । कर्मधारयादेवेष्यते । अन्यत्र–विश्वजनीयम् । (पञ्चजनादुपसंख्यानम्) । पञ्चजनीनम् ।

१–शङ्कवे हितम्=**शङ्कव्यम्**, उवर्णान्तत्वात्, उगवादिभ्यः, इति यत्, 'ओर्गुणः' इति गुणे 'वान्तो यी' ति–अवादेशः । गोभ्यो हितम्=**गव्यम्**=तृणादिकम्, गवादित्वाद् यत्, वान्तो यीति–अव् । हविषे हितम्=**हविष्यम्**, 'हविष्, शब्दो गवादिरतो यत् । 'विभाषा हवि' रित्यत्र तु हविर्विशेषवाचिन एव ग्रहणं व्याख्यानात् । २–चतुर्थ्यन्तात् शरीरावयववाचकाद् हितमित्यर्थे यत्स्यादित्यर्थः । दन्तेभ्यो हितम्=**दन्त्यम्**=मञ्जनम्, कण्ठाय हितम्=**कण्ठ्यम्**, नासिकायै हितम्=**नस्यम्**, 'पद्दन्नोमास्हृन्निशि'ति सूत्रे प्रभृतिग्रहणस्य प्रकारार्थत्वात्–यत्प्रत्ययेऽपि नासिकाया नसादेशः । ३–हितम् इत्यर्थेऽजशब्दाद् अविशब्दाच्च थ्यन् । अजेभ्यो हिता=**अजथ्या**, अविभ्यो हिता=**अविथ्या**, लिङ्गविशिष्टपरिभाषया अजाशब्दादपि स्यात्, तसिलादिषु थ्यनः परिगणनात्पुंवद्भावे रूपं तुल्यम् । यूथिः=औषधभेदः । ४–चतुर्थ्यन्तेभ्यः आत्मन्–विश्वजन–भोगोत्तर–(मातृभोगादि)-शब्देभ्यो हितमित्यर्थे खप्रत्ययः स्यादित्यर्थः । ५–तेन "नस्तद्धिते" इति टिलोपो न । ६–खस्य ईनादेशे, **आत्मजनीनम्**, विश्वस्मै जनाय हितम्=**विश्वजनीनम्** । ७–कर्मधारयाद् विश्वजनशब्दादेवेत्यर्थः, व्याख्यानमेवात्र प्रमाणम् । अन्यत्र तु **विश्वजनीयम्**, विश्वस्य जनो विश्वजनः साधारणो वैद्यादिः, तस्मै हितम् इति विग्रहः । छप्रत्ययः । छस्य ईयादेशे रूपम् । ८–खस्येति शेषः । ९–ब्राह्मण–क्षत्रिय–वैश्य–शूद्राश्चत्वारो वर्णा रथकारजातिश्चेति पञ्चजनाः, तेभ्यो हितम्=**पञ्चजनीनम्** ।

'कुमति च' इति णः । मातृभोगीणः[1] । (आचार्यादणत्वं च)[2] । आचार्य-भोगीनः । ॥ इति छयतोः पूर्णोऽवधिः ॥

## अथ ठञधिकारः ।

**१६६२ प्राग्वतेष्ठञ् ५ । १ । १८ ॥**

तेन तुल्यमित्यतः प्राक् ठञधिक्रियते ।

**१६६३ आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् ५ । १ । १६ ॥**

तदर्हतीत्येतदभिव्याप्य ठञधिकारमध्ये ठञोऽपवादष्ठगधिक्रियते गोपु-च्छादीन्वर्जयित्वा ।

**१६६४ असमासे निष्कादिभ्यः ५ । १ । २० ॥**

आर्हादित्येतत्तेन क्रीतमिति यावदनुवर्तते । निष्कादिभ्योऽसमासे ठगा-र्हीयेष्वर्थेषु । निष्केण क्रीतमिति–नैष्किकम्[3] । समासे तु ठञ् ।

**१६६५ परिमाणान्तस्यासंज्ञाशाणयोः ७ । २ । १७ ॥**

उत्तरपदवृद्धिर्ञिदादौ । परमनैष्किकम्[4] ।

**१६६६ शताच्च ठन्–यतावशते[5] ५ । १ । २१ ॥**

शतिकम् , शत्यम् । अशते किम्—

**१६६७ संख्याया अतिशदन्तायाः[6] कन् ५ । १ । २२ ॥**

आर्हीयेऽर्थे । शतं परिमाणमस्य–शतकः सङ्घः । बहुकः[7] ।

---

१–मातृभोगाय हितः=**मातृभोगीणः**, खः, खस्य ईनादेशः, कुमति चेति नस्य णत्वम् । २–आचार्यशब्दात्परस्मात् भोगशब्दात् खप्रत्ययः, नस्य णत्वाभावश्च वाच्य इत्यर्थः । आचार्यभोगाय हितः=**आचार्यभोगीनः** ।

इति छयतोः पूर्णोऽवधिः ।

३–ठक्, कित्वादादिवृद्धिः, ठस्येकादेशः । ४–परमनिष्केण क्रीतम्=**परमनैष्किकम्** , समासत्वात् ठञ्, उत्तरपदादेर्वृद्धिः । ठक्–ठञोः स्वरे भेदः । ५–आर्हीयेष्वर्थेषु शतशब्दात् ठन्–यतौ स्तः, न तु शतेऽर्थे इत्यर्थः । शतेन क्रीतम्=**शतिकम्, शत्यम्** पूर्वत्र ठन्, उत्तरत्र यत् । ६–तिश-दन्तभिन्नायाः सङ्ख्यायाः कन्प्रत्ययः स्यात्, इत्यर्थः । ७–बहुपरिमाणम्-अस्य बहुभिः क्रीतो वा=**बहुकः** ।

त्यन्तायास्तु साप्ततिकः। शदन्तायाः—चात्वारिंशत्कः।

**१६६८ वतोरिड्वा ५।१।२३॥**

वत्वन्तात्कन इड् वा। तावतिकः, तावत्कः।

**१६६९ कंसाट्टिठन् ५।१।२५॥**

कंसिकः। (अर्धाच्च)। अर्धिकः।

**१६७० अध्यर्धपूर्वाद्द्विगोर्लुगसंज्ञायाम् ५।१।२८॥**

अध्यर्धपूर्वाद्द्विगोश्च परस्यार्हीयस्य लुक्। अध्यर्धकंसम्। संज्ञायां तु—पाञ्चकलापिकम्।

**१६७१ तेन क्रीतम् ५।१।३७॥**

ठञ्। गोपुच्छेन क्रीतं—गौपुच्छिकम्। साप्ततिकम्। ठक्—नैष्किकम्।

**१६७२ तस्येश्वरः ५।१।४२॥**

सर्वभूमिपृथिवीभ्यामणञौ स्तः। अनुशतिकादीनां चेति वृद्धिः। सर्व-

---

१—ति—अन्ते यस्यास्तथाभूतायाः—इत्यर्थः। सप्ततिः परिमाणम् अस्य, सप्तत्या क्रीतो वा=**साप्ततिकः**, ठञ्, ठस्येकः,। शत्—अन्ते यस्यास्तस्याः **शदन्तायाः**—चत्वारिंशता क्रीतः=**चात्वारिंशत्कः**, ठञ्, ठस्य 'इसुसुक्तान्तात्' इति कादेशः। २—तावता क्रीतः=**तावतिकः, तावत्कः**, कन्, इट्। पूर्वत्र भत्वात्पदत्वाऽभावेन जश्त्वं न। ३-टिठन्, टकारः टित्वात् स्त्रियां ङीबर्थः। इकार उच्चारणार्थः, 'ठन्' इत्येव शिष्यते। कंसेन क्रीतः=**कंसिकः**, अर्धेन क्रीतः=**अर्धिकः**। ४—अध्यारूढम् अर्धं यस्मिन् तदध्यार्धम् 'प्रादिभ्यो धातुजस्ये'ति बहुव्रीहौ पूर्वखण्डे उत्तरपदस्य लोपः। सार्धमित्यर्थः। अध्यर्धेन कंसेन क्रीतमिति विग्रहः, तद्धितार्थे द्विगुः। 'सङ्ख्याया अतिशदन्तायाः, इति कन्, तस्यानेन लुक्,—**अध्यर्धकंसम्**। ५—पञ्चकलापाः परिमाणम् अस्येति विग्रहे 'तद्धितार्थे' इति द्विगुः, 'तदस्ये'ति ठञ् ठस्येकादेशः' आदिवृद्धिः, **पाञ्चकलापिकम्**। ६—तृतीयान्तात् क्रीतेऽर्थे ठञादयः स्युरिति। ७—सप्तत्या क्रीतम्=**साप्ततिकम्**। प्रस्थेन क्रीतम्=**प्रास्थिकम्**, ठञ्, ठस्येकः, आदिवृद्धिः। ८—निष्केण क्रीतमित्यर्थः। ९—षष्ठ्यन्ताभ्याम् ईश्वर इत्यर्थे इति शेषः। १०—उभयपदादेर्वृद्धिरित्यर्थः।

भूमेरीश्वरः-सार्वभौमः[1]। पार्थिवः[2]।

**१६७३ तदस्य परिमाणम्[3] ५ । १ । ५७ ॥**

प्रस्थः परिमाणमस्य—प्रास्थिको[4] राशिः। (स्तोमे डविधिः)। पञ्चदश मन्त्राः परिमाणमस्य पञ्चदशः[5]। सप्तदशः। सोमयागेषु छन्दोगैः क्रियमाणा पृष्ठ्यादिसंज्ञिका स्तुतिः=स्तोमः।

**१६७४ पङ्क्ति-विंशति-त्रिंशच्चत्वारिंशत्-पञ्चाशत्-षष्टि-सप्तत्यशीति-नवति-शतम् ५ । १ । ५९ ॥**

एते रूढिशब्दा निपात्यन्ते[6]।

**१६७५ तदर्हति[7] ५ । १ । ६३ ॥**

---

१–अण्प्रत्ययः। २–पृथिव्या ईश्वरः=**पार्थिवः**, अञ् प्रत्ययः। ३–अस्य परिमाणमित्यर्थे प्रथमान्ताद् यथाविहितं प्रत्ययाः स्युः। ४–**प्रास्थिकः** ठञ्, इकादेशः, आदिवृद्धिः। ५–**पञ्चदशः**=स्तोमः, डप्रत्यये टिलोपः (अन् इत्यस्य टेर्लोप इत्यर्थः)। एवं सप्तदश मन्त्राः परिमाणमस्येति—**सप्तदशः**। ६–तदस्य परिमाणम् इत्यर्थे इति शेषः। पञ्च पादाः परिमाणमस्येत्यर्थे पञ्चन्शब्दात् तिप्रत्ययः, प्रकृतेष्टिलोपः चकारस्य कुत्वम्, अनुस्वारपरसवर्णौ **पङ्क्तिः**=दशाक्षरपादविशिष्टश्छन्दोविशेषः। दशानां वर्गो दशत्, 'पञ्चदशतौ वर्गे' इत्युक्तेः, द्वौ दशतौ परिमाणमस्य सङ्ख्येति=**विंशतिः**, शतिच् प्रत्ययः प्रकृतेर्विन्भावः, नस्यानुस्वारः। त्रयो दशतः परिमाणमस्य सङ्ख्येति=**त्रिंशत्**, शत् प्रत्ययः प्रकृतेः त्रिन्भावः। चत्वारो दशतः परिमाणमस्य सङ्ख्येति=**चत्वारिंशत्**, शत् प्रत्ययः, प्रकृतेः चत्वारिन्भावः। पञ्च दशतः परिमाणमस्य सङ्ख्येति=**पञ्चाशत्**, शत् प्रत्ययः, प्रकृतेः पञ्चादेशः। षड् दशतः परिमाणमस्य सङ्ख्येति,=**षष्टिः**, तिप्रत्ययः, प्रकृतेः षष्, जश्त्वाऽभावश्च। सप्त दशतः परिमाणमस्य सङ्ख्येति=**सप्ततिः**, तिप्रत्ययः, प्रकृतेः सप्तादेशः। अष्टौ दशतः परिमाणमस्येति=**अशीतिः**, तिप्रत्ययः प्रकृतेः 'अशी' इत्यादेशः। नव दशतः परिमाणमस्य सङ्ख्येति=**नवतिः**, तिप्रत्ययः, प्रकृतेर्नवादेशः। दश दशतः परिमाणमस्य सङ्ख्येति=**शतम्** तप्रत्ययः प्रकृतेः शादेशश्च। ७–अर्हतीत्यर्थे प्रथमान्तात् ठञादयः स्युरित्यर्थः। **श्वैतच्छत्रिकः**, ठञ्प्रत्ययः।

श्वेतच्छत्रमर्हति–श्वैतच्छत्रिकः।

**१६७६ दण्डादिभ्यो यत् ५।१।६६॥**

एभ्यो यत्। दण्डमर्हति–दण्ड्यः। अर्घ्यः। वध्यः।

**१६७७ तेन निर्वृत्तम् ५।१।७९॥**

अह्ना निर्वृत्तमाह्निकम्। ॥ इति ठञ्ठकोरवधिः॥

## अथ भावकर्मार्थाः।

**१६७८ तेन तुल्यं क्रिया चेद्वतिः ५।१।११५॥**

ब्राह्मणेन तुल्यं–ब्राह्मणवत् अधीते। क्रिया चेत् किम्—गुणतुल्ये मा भूत्–पुत्रेण तुल्यः स्थूलः।

**१६७९ तत्र तस्येव ५।१।११६॥**

मथुरायामिव=मथुरावत् स्रुघ्ने प्राकारः। चैत्रस्येव=चैत्रवत् मैत्रस्य गावः।

**१६८० तस्य भावस्त्वतलौ ५।१।११९॥**

प्रकृतिजन्यबोधे प्रकारो भावः। गोर्भावः=गोत्वम्, गोता। त्वान्तं क्लीबम्। तलन्तं स्त्रियाम्।

**१६८१ आ च त्वात् ५।१।१२०॥**

१–अर्हतीत्यर्थे इति शेषः। २–अर्घम् अर्हति=**अर्घ्यः**, वधम् अर्हति=**वध्यः**। ३–तृतीयान्तान्निर्वृत्तमित्यर्थे ठञ् स्यादित्यर्थः। **आह्निकम्**, अह्न-ष्टखोरेवेति नियमान्न टिलोपः। ॥ इति ठञ्ठकोरवधिः॥

४–तृतीयान्तात्तुल्यमित्यर्थे वति–प्रत्ययः स्यात्, यत्तुल्यं सा चेत्क्रिये-त्यर्थः। तुल्या क्रियेत्यर्थे वतिः स्यादिति यावत्। ५–**ब्राह्मणवत्**, इत्युदा-हरणम्। ब्राह्मणकर्तृकाध्ययनतुल्यं क्षत्रियकर्तृकाध्ययनमिति बोधः। ६–सप्तम्यन्तात् षष्ठ्यन्ताच्च–इवार्थे वतिप्रत्ययः स्यादित्यर्थः। ७–षष्ठ्यन्ताद् भाव इत्यर्थे त्व–प्रत्ययः, तल्–प्रत्ययश्च स्यादित्यर्थः। ८–त्व–तल्–प्रकृति-भूत–गवादिशब्देभ्यो जायमाने गोव्यक्त्यादिबोधे प्रकारो=विशेषणं=जात्या-दिकं भावः=भावशब्देन विवक्षित इत्यर्थः, यथा गोशब्दाद् व्यक्तिबोधे जाय-माने गोत्वं (जातिः) विशेषणत्वेन भासमानं भावः। ९–लिङ्गानुशासनसूत्र-सिद्धमिदं द्वयम्।

'ब्रह्मणस्त्व' इत्यतः प्राक् त्व-तलावधिक्रियेते । अपवादैः सह समावेशार्थः । स्त्रिया भावः=स्त्रैणम्, स्त्रीत्वम्, स्त्रीता । पौंस्नम्, पुंस्त्वम्, पुंस्ता ।

**११८२ पृथ्वादिभ्य इमनिज्वा ५ । १ । १२२ ॥**

वा—वचनमणादिसमावेशार्थम् ।

**११८३ र ऋतो हलादेर्लघोः ६ । ४ । १६१ ॥**

इष्ठेमेयस्सु ।

**११८४ टेः ६ । ४ । १४३ ॥**

भस्य टेर्लोप इष्ठेमेयस्सु । पृथु-मृदु-भृश-कृश-दृढ-परिवृढानामेव रत्वम् । पृथोर्भावः=प्रथिमा, पार्थवम् । म्रदिमा, मार्दवम् ।

**११८५ वर्ण-दृढादिभ्यः ष्यञ् च ५ । १ । १२३ ॥**

चादिमनिच् । शौक्ल्यम्, शुक्लिमा । दार्ढ्यम्, द्रढिमा ।

---

१—अनुवृत्त्यैव सिद्धे 'पृथ्वादिभ्य इमनिज्' इत्यादिविहितैः इमनिजादिभिरपवादैरनयोर्बाधो मा भूदित्येवमर्थोऽधिकारः । तेन तैः सहास्य समुच्चयः सिद्ध्यति । प्रथिमा, पृथुत्वमिति । २—षष्ठ्यन्तेभ्यः पृथ्वादिभ्यो भावेऽर्थे—इमनिच् प्रत्ययो वा स्यादित्यर्थः । ३—पृथु-मृदुप्रभृतिषु 'इगन्ताच्च लघुपूर्वात्' इत्यणः, चण्ड-रवादिषु गुणवचनलक्षणस्य ष्यञः, बाल-वत्सादिषु वयोवचनलक्षणस्य-अञश्च औत्सर्गिकस्य समावेशार्थमित्यर्थः । अन्यथा 'विभाषावशादपवादेन मुक्ते पुनरुत्सर्गो न प्रवर्तते, इति 'पारे मध्ये षष्ठ्या वा' इति सूत्रभाष्ये सिद्धान्तितत्वादिमनिच्-त्व-तलाभावेऽणादीनां प्रवृत्तिर्न स्यादिति भावः । ४—हलादेर्लघोर्ऋकारस्य रः स्यात्, इष्ठन्प्रत्यये इमनिच्प्रत्यये च परे इत्यर्थः । ५—इष्ठ-इम-ईयस् (सु) इतिच्छेदः । ६—पृथुशब्दात्-इमनिच्प्रत्यये ऋकारस्य रेफादेशे टिलोपे प्रथिमन्—शब्दसिद्धौ पुंसि सौ उपधाया दीर्घे, नलोपे, **प्रथिमा**, इमनिजन्ताः सर्वे पुंलिङ्गा इति बोध्यम् । पक्षे 'इगन्ताच्च लघुपूर्वात्' इत्यणि, 'ओर्गुणः'-आदिवृद्धिः **पार्थिवम्** । एवं मृदोर्भावः=**म्रदिमा, मार्दवम्**, पृथुत्वं, पृथुता, मृदुत्वं, मृदुता-इत्यपि । ७—षष्ठ्यन्तेभ्यो वर्णवाचिभ्यो दृढादिभ्यश्च भावे ष्यञ् च स्यादित्यर्थः ८—शुक्लस्य भावः=**शौक्ल्यम्**, ञित्वादादिवृद्धिः, इमनिचि—**शुक्लिमा** । एवं **दार्ढ्यम्, द्रढिमा**, इमनिच्, रादेशः ।

**११८६ गुणवचन-ब्राह्मणादिभ्यः कर्मणि च ५ । १ । १२४ ॥**

चाद्भावे । जडस्य भावः कर्म वा=जाड्यम् । ब्राह्मण्यम्[1] । आकृतिगणोऽयम् । ( चतुर्वर्णादीनां स्वार्थे उपसंख्यानम्[2] ) । चातुर्वर्ण्यम्[3] । चातुराश्रम्यम् त्रैवर्ग्यम् । षाड्गुण्यम् । सैन्यम् । सान्निध्यम् । औपम्यम् । त्रैलोक्यमित्यादि ।

**११८७ स्तेनाद्यन्नलोपश्च[4] ५ । १ । १२५ ॥**

नेति संघातग्रहणम्[5] । स्तेनस्य भावः कर्म वा=स्तेयम् ।

**११८८ सख्युर्यः[6] ५ । १ । १२६ ॥**

सख्यम् ।

**११८९ कपि-ज्ञात्योर्ढक्[7] ५ । १ । १२७ ॥**

कापेयम् । ज्ञातेयम् ।

**११९० पत्यन्तपुरोहितादिभ्यो यक् ५ । १ । १२८ ॥**

---

१-षष्ठ्यन्तेभ्यो गुणवाचकेभ्यो ब्राह्मणादिभ्यश्च कर्मणि भावे चार्थे ष्यञ् स्यादित्यर्थः । २-ब्राह्मणस्य कर्म भावो वा=**ब्राह्मण्यम्** । ३-चतुर्वर्णादिगणपठितानां शब्दानां स्वार्थे ष्यञ् वक्तव्य इत्यर्थः । ४-चत्वारो वर्णाः=**चातुर्वर्ण्यम्**, ष्यञ् आदिवृद्धिः, 'यस्येति च' इत्यलोपः । एवम्—चत्वार आश्रमाः=**चातुराश्रम्यम्** । त्रयो वर्गाः=**त्रैवर्ग्यम्** । षड् गुणाः=**षाड्गुण्यम्** । सेना-एव=**सैन्यम्** । सन्निधिरेव=**सान्निध्यम्** । उपमैव=**औपम्यम्** । त्रयो लोकाः=**त्रैलोक्यम्** । ५-स्तेनशब्दात् षष्ठ्यन्तात्कर्मणि भावे चार्थे यत्स्याद् नकारलोपश्चेत्यर्थः । ६-नकाराऽकारसमुदायग्रहणमित्यर्थः । तेनाकारसहितो नकारो लुप्यते-इति भावः । ७-षष्ठ्यन्तात् सखिशब्दात् भावे कर्मणि चार्थे य-प्रत्ययः स्यादिति । सख्युर्भावः कर्म वा=**सख्यम्** । ८-षष्ठ्यन्ताभ्यां कपि—ज्ञातिशब्दाभ्यां भावे कर्मणि चार्थे ढक् स्यादित्यर्थः । कपेर्भावः कर्म वा=**कापेयम्**, ढस्य—एय्, कित्वादादिवृद्धिः, एवम्-ज्ञातेर्भावः कर्म वा=**ज्ञातेयम्** । ९-षष्ठ्यन्तेभ्यः पत्यन्तशब्देभ्यः पुरोहितादिभ्यश्च यक् प्रत्ययः स्याद् भावे कर्मणि चार्थे इत्यर्थः । सेनापतेर्भावः कर्म वा=**सैनापत्यम्**, यकः कित्वादादिवृद्धिः । एवं पुरोहितस्य भावः कर्म वा=**पौरोहित्यम्** ।

सैनापत्यम् । पौरोहित्यम् । ( राजाऽसे[1] ) । राजन्शब्दोऽसमासे यकं लभत इत्यर्थः । राज्ञो भावः कर्म वा—राज्यम् । समासे तु ब्राह्मणादित्वात् ष्यञ् । आधिराज्यम्[2] ।

**१६६१ प्राणभृज्जाति-वयोवचनोद्गात्रादिभ्योऽञ् ५ । १ । १२६॥**[3]

प्राणभृज्जातिः—आश्वम्[4] । वयोवचनम्—कौमारम् । औद्गात्रम् । औन्नेत्रम् । सौष्ठवम् ।

**१६६२ हायनान्तयुवादिभ्योऽण् ५ । १ । १३० ॥**[5]

द्वैहायनम् । त्रैहायनम् । यौवनम् । स्थाविरम् । ( श्रोत्रियस्य यलोपश्च[6] ) श्रौत्रम् । कुशल–निपुण–चपल–पिशुन–कुतूहल–क्षेत्रज्ञाः–युवादिषु ब्राह्मणादिषु च पठ्यन्ते[7] । कौशलम्, कौशल्यमित्यादि ।

---

१–'स' इति समासस्य प्राचां संज्ञा, न सः=असः, तस्मिन्नसे, तदाह **राजन्शब्दोऽसमासे—राज्यम्**, यकि, टिलोपः । २–अधिको राजा= अधिराजः, ( प्रादिसमासे टचि रूपम् ) अधिराजस्य भावः कर्म वा=**आधिराज्यम्** । ३–प्राणिजातिवाचिभ्यो वयोविशेषवाचिभ्य उद्गात्रादिभ्यश्च षष्ठ्यन्तेभ्यो भावे कर्मणि चार्थेऽञ्प्रत्ययः स्यादित्यर्थः । ४–अश्वस्य भावः कर्म वा=**आश्वम्** । एवं कुमारस्य भावः कर्म वा=**कौमारम्** । उद्गात्रस्य भावः कर्म वा=**औद्गात्रम्** । उन्नेतुर्भावः कर्म वा=**औन्नेत्रम्**, ऋकारस्य यण् रेफः । सुष्ठु—भावः कर्म वा=**सौष्ठवम्** । ५–हायनान्तेभ्यो युवादिभ्यश्च षष्ठ्यन्तेभ्यो भावे कर्मणि चार्थेऽण् स्यादित्यर्थः । द्विहायनस्य भावः कर्म वा=**द्वैहायनम्**, त्रिहायनस्य भावः कर्म वा=**त्रैहायनम्**, यूनो भावः कर्म वा=**यौवनम्**, 'अन्' इति प्रकृतिभावान्न टिलोपः । स्थविरस्य भावः कर्म वा=**स्थाविरम्** । ६–श्रोत्रियशब्दात् षष्ठ्यन्ताद् भावे कर्मणि चार्थेऽण्, प्रकृतेर्यलोपश्चेत्यर्थः । येति सङ्घातग्रहणम्, तेन अकारसहितस्य यकारस्य लोपः । श्रोत्रियस्य भावः कर्म वा=**श्रौत्रम्**, अण्प्रत्ययः, आदिवृद्धिः, यकारलोपः, 'यस्येति च' इति इकारस्य लोपः । ७–तेन युवादित्वादण्, ब्राह्मणादित्वात् ष्यञ् च भवति । कुशलस्य भावः कर्म वा=**कौशलम्**, **कौशल्यम्**, एवं नैपुणम्, नैपुण्यम्, इत्यादि ।

**१६६३ इगन्ताच्च लघुपूर्वात् ५ । १ । १३१ ॥**
शुचेर्भावः कर्म वा=शौचम् । मौनम् ।

**१६६४ योपधाद्गुरूपोत्तमाद्वुञ् ५ । १ । १३२ ॥**
रामणीयकम् । आभिधानीयकम् । (सहायाद्वा) । साहायकम्, साहाय्यम् ।

**१६६५ द्वन्द्व-मनोज्ञादिभ्यश्च ५ । १ । १३३ ॥**
शैष्योपाध्यायिका । मानोज्ञकम् । ॥ इति नञ्स्नञोरवधिः ॥

## अथ पाञ्चमिकेषु भवनाद्यर्थकाः ।

**१६६६ धान्यानां भवने क्षेत्रे खञ् ५ । २ । १ ॥**
मुद्गानां भवनं क्षेत्रं=मौद्गीनम् ।

**१६६७ व्रीहिशाल्योर्ढक् ५ । २ । २ ॥**
व्रैहेयम् । शालेयम् ।

---

१–लघुपूर्वो य इक् तदन्तात्प्रातिपदिकात् षष्ठ्यन्ताद् भावे कर्मणि चार्थेऽण् स्यादित्यर्थः । २–मुनेर्भावः कर्म वा=**मौनम्** । ३–योपधात् गुरूपोत्तमात्प्रातिपदिकात्षष्ठ्यन्ताद् भावे कर्मणि चार्थे वुञ् स्यादित्यर्थः । रमणीयस्य भावः कर्म वा=**रामणीयकम्**, वुञ् 'वु' इत्यस्य अकादेशः, आदिवृद्धिः । एवम्—अभिधानीयस्य भावः कर्म वा=**आभिधानीयकम्** । ४–वुञ् इति शेषः, पक्षे ब्राह्मणादित्वात् ष्यञ्, सहायस्य भावः कर्म वा=**साहायकम्**, वुञ् । **साहाय्यम्**, ष्यञ्–प्रत्ययः । ५–द्वन्द्वात्–मनोज्ञादिभ्यश्च षष्ठ्यन्तेभ्यो वुञ् स्यादित्यर्थः । शिष्यश्चोपाध्यायश्चेति शिष्योपाध्यायौ, तयोर्भावः कर्म वा=**शैष्योपाध्यायिका**, वुञ्, अकादेशे आदिवृद्धौ, स्त्रियां टापि प्रत्ययस्थादिति इत्वम् (स्त्रीत्वं लोकात्) । मनोज्ञस्य भावः कर्म वा=**मानोज्ञकम्** । इति भावकर्मार्थाः (इति नञ्स्नञोरवधिः) ।

६–भवन्त्यस्मिन्निति भवनम्=उत्पत्तिस्थानम् । षष्ठ्यन्ताद् धान्यवाचकात् शब्दाद्भवनं क्षेत्रमित्यर्थे खञ् स्यादिति सूत्रार्थः । ७–**मौद्गीनम्**, खञ् खस्य ईनादेशः, आदिवृद्धिः । ८–खञोऽपवादोऽयम् । व्रीहि–शालीभ्यां षष्ठ्यन्ताभ्यां भवनं क्षेत्रमित्यर्थे ढक् स्यात् । व्रीहीनां भवनं क्षेत्रम्=**व्रैहेयम्**, शालीनां भवनं क्षेत्रम्=**शालेयम्**, ढक् ढस्य एय्, आदिवृद्धिः, 'यस्येति च' इति–इलोपः ।

**१९९८ यव-यवक-षष्टिकाद्यत् ५ । २ । ३ ॥**

यव्यम् । यवक्यम् । षष्टिक्यम् ।

**१९९९ विभाषा तिल-माषोमा-भङ्गाणुभ्यः ५ । २ । ४ ॥**

यत् । पक्षे खञ् । तिल्यम् , तैलीनम् । माष्यम् , माषीणम् । उम्यम् , औमीनम् । भङ्ग्यम् , भाङ्गीनम् । अणव्यम् , आणवीनम् ।

**२००० तत्सर्वादेः पथ्यङ्ग-कर्म-पत्र-पात्रं व्याप्नोति ५।२।७॥**

सर्वादेः पथ्याद्यन्तात् द्वितीयान्तात्खः । सर्वपथान् व्याप्नोति=सर्वपथीनः । सर्वाङ्गीणः । सर्वकर्मीणः । सर्वपत्रीणः । सर्वपात्रीणः ।

**२००१ हैयङ्गवीनं संज्ञायाम् ५ । २ । २३ ॥**

ह्योगोदोहशब्दस्य हियङ्गुरादेशो विकारेऽर्थे खञ् प्रत्ययश्च निपात्यते संज्ञायामित्यर्थः । दुह्यते-इति दोहः=क्षीरम् , ह्योगोदोहस्य विकारः-हैयङ्गवीनम्=नवनीतम् ।

**२००२ तस्य पाकमूले पील्वादि-कर्णादिभ्यः कुणब्-**

---

१-एभ्यः षष्ठ्यन्तेभ्यो यत्स्याद्भवनं क्षेत्रमित्यर्थे । यवानां भवनं क्षेत्रम् =**यव्यम्** , यति, यस्येति चेति -- अलोपः । एवम्-यवकानां भवनं क्षेत्रम्= **यवक्यम्** । षष्टिकानां भवनं क्षेत्रं=**षष्टिक्यम्** । २-तिल-माष-उमा-भङ्ग-अणु-इत्येभ्यो धान्यविशेषवाचिभ्यः षष्ठ्यन्तेभ्यो यत्प्रत्ययो वा स्यादित्यर्थः । उमा=अतसी ( अलसी ) भङ्गः, अणुश्च धान्यविशेषौ । तिलानां भवनं क्षेत्रम्=**तिल्यम् , तैलीनम्** , पक्षे खञि, खस्य ईनादेशः, आदिवृद्धिः । एवम्=**माष्यम् , माषीणमि**त्यादि । अणूनां भवनं क्षेत्रम्=**अणव्यम्** , **आणवीनम्** , "ओर्गुणः" इति गुणेऽवादेशः । ३- तद् व्याप्नोतीत्यर्थे इति शेषः । ४-**सर्वपथीनः** , खप्रत्यये, खस्य ईनादेशः, 'नस्तद्धिते' इति टिलोपः । एवम्—सर्वाङ्गानि व्याप्नोति=**सर्वाङ्गीणः**-इत्यादि । ५-'ह्यस् , इत्यव्ययम् , पूर्वेद्युरित्यर्थः । तत्रोत्पन्नो गोदोहः=गोपयः,-ह्योगोदोहः । स्पष्टमन्यत् , खञि ईनादेशे हियङ्गुशब्दस्य-'ओर्गुणः' इति गुणेऽवादेशे, आदिवृद्धौ-**हैयङ्गवीनम्** । 'तत्तु हैयङ्गवीनं स्याद् ह्योगोदोहोद्भवं घृतम्' इत्यमरः । ६-षष्ठ्यन्तेभ्यः पील्वादिभ्यः पाकेऽर्थे 'कुणप्' प्रत्ययः, कर्णादिभ्यस्तु मूलेऽर्थे 'जाहच्' प्रत्ययः स्यादित्यर्थः ।

**जाहचौ ५। २। २४॥**

पीलूनां पाकः-पीलुकुणः। कर्णस्य मूलं-कर्णजाहम्।

**२००३ पक्षात्तिः ५। २। २५॥**

मूले इत्यनुवर्तते। पक्षस्य मूलं-पक्षतिः।

**२००४ तेन वित्तश्चुञ्चुप्-चणपौ ५। २। २६॥**

यकारः प्रत्यययोरादौ लुप्तनिर्दिष्टः तेन चस्य नेत्वम्। विद्यया वित्तो=विद्याचुञ्चुः, विद्याचणः।

**२००५ वेः शालच्छङ्कटचौ ५। २। २८॥**

क्रियाविशिष्टसाधनवाचकात्स्वार्थे। (विस्तृतम्)-विशालम्, विशङ्कटम्।

**२००६ संप्रोदश्च कटच् ५। २। २९॥**

सङ्कटम्। प्रकटम्। उत्कटम्। चाद् विकटम्। (अलाबूतिलोमाभङ्गाभ्यो रजस्युपसंख्यानम्)। अलाबूनां रजोऽलाबूकटम्। तिलकटम्। (गोष्ठजादयः स्थानादिषु पशुनामभ्यः) गवां स्थानं=गोष्ठम्। (सङ्घाते कटच्)। अवीनां सङ्घातोऽविकटः। (विस्तारे पटच्)। अविपटः।

---

१-षष्ठ्यन्तात्पक्षशब्दाद् मूलेऽर्थे 'ति, प्रत्ययः स्यादित्यर्थः। २-तृतीयान्तात्समर्थात् वित्त इत्यर्थे चुञ्चुप्-चणपौ भवतः, इत्यर्थः। **वित्तः**=प्रसिद्धः। ३-ननु 'चुञ्चुप्'—प्रत्ययस्य, 'चणप्'—प्रत्ययस्य चादिश्चकारः 'चुटू' इति सूत्रेण इत्संज्ञः स्यादिति चेदत्रोच्यते-**यकारः प्रत्यययोरादौ**, इति, अयमर्थः-उभयत्रादौ यकारोऽस्तीति, 'य्चुञ्चु' 'य्चणप्' प्रत्ययौ स्तः, यकारस्य च तस्य 'लोपो व्योर्वली'ति लोपो जातः। तेन चकारस्य प्रत्ययादित्वाभावान्नेत्वं लोपश्चेति। ४-क्रियाविशिष्टकारकवाचकाद् विशिष्टात् शालच्-शङ्कटच्-प्रत्ययौ स्तः स्वार्थे। विस्तृतं क्रियासाधनम्=**विशालम्-विशङ्कटम्**। ५-सम्-प्र-उद् इत्येतेभ्यः क्रियाविशिष्टसाधनवाचकेभ्यः स्वार्थे कटच् स्यादित्यर्थः। संहतं क्रियासाधनं=**सङ्कटम्**। प्रज्ञातं क्रियासाधनं=**प्रकटम्**। उन्नतं साधनम्=**उत्कटम्**। ६-अलाबू-तिल-उमा-भङ्गा—इत्येतेभ्यः षष्ठ्यन्तेभ्यो रजसि वाच्ये कटच्—वक्तव्यमित्यर्थः। ७-पशुवाचकेभ्यः स्थानादिष्वर्थेषु गोष्ठजादयः प्रत्यया वक्तव्या इत्यर्थः। ८-अवीनां=मेषीणां विस्तारः=**अविपटः**।

(द्वित्वे गोयुगच्[1]) । द्वावुष्ट्रौ=उष्ट्रगोयुगम् । (षट्त्वे षड्गवच्[2]) । अश्वषड्गवम् । (स्नेहे तैलच्[3]) तिलतैलम् । सर्षपतैलम् ।

**२००७ अवात्कुटारच्च[4] ५ । २ । ३० ॥**

चात्कटच् । अवकुटारः, अवकटः ।

**२००८ नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः[5] ५ । २ । ३१**

अवादित्येव । नतं=नमनम् । नासिकाया नतम्-अवटीटम्, अवनाटम्, अवभ्रटम् । तद्योगान्नासिकावटीटा[6] । पुरुषोऽवटीटः ।

**२००९ उपाधिभ्यां त्यकन्नासन्नारूढयोः[7] ५ । २ । ३४ ॥**

पर्वतस्यासन्नं स्थलम्=उपत्यका । आरूढं स्थलमधित्यका ।

**२०१० कर्मणि घटोऽठच्[8] ५ । २ । ३५ ॥**

कर्मणि घटते[9]=कर्मठः ।

**२०११ तदस्य सञ्जातं तारकादिभ्य इतच्[10] ५ । २ । ३६ ॥**

तारकाः सञ्जाता अस्य=तारकितं नभः । पण्डितः[11] । आकृतिगणोऽयम् ।

---

१–प्रकृत्यर्थगते द्वित्वे वाच्ये 'गोयुगच्' प्रत्ययः स्यादित्यर्थः । २–प्रकृत्यर्थगते षट्त्वे वाच्ये 'षड्गवच्' प्रत्ययः स्यादित्यर्थः । षड् अश्वाः=**अश्वषड्गवम्** । ३–स्नेहे वाच्ये 'तैलच्' प्रत्ययः स्यादित्यर्थः । तिलानां स्नेहः=**तिलतैलम्**, सर्षपाणां स्नेहः=**सर्षपतैलम्** । ४–क्रियाविशिष्टसाधनवाचकाद् अवशब्दात् कुटारच् प्रत्ययः स्यात् स्वार्थे, चकारात् कटच्प्रत्ययोऽपि । अवाचीन इति=**अवकुटारः, अवकटः** । ५–अवशब्दाद् नासिकाया अवनते गम्ये टीटच्—नाटच्–भ्रटच्, इत्येते प्रत्ययाः स्युरित्यर्थः । ६–नतत्वयोगाद् गौण्या वृत्त्या नासिकापि तथोच्यते–**अवटीटा**, नतीभूतनासिकायोगात्परम्परया पुरुषोऽप्युच्यते–**अवटीटः** । ७–उप–अधिशब्दाभ्यां यथाक्रमम् आसन्ने आरूढे चार्थे वर्तमानाभ्यां स्वार्थे त्यकन्–प्रत्ययः स्यादित्यर्थः । आसन्नम्=समीपम्, आरूढम्=उच्चम् । ८–सप्तम्यन्तात् कर्मन्—शब्दाद् घटे=घटमानेऽर्थे अठच्–प्रत्ययः स्यादित्यर्थः । ९–घटते=चेष्टते=व्याप्रियते । १०–प्रथमान्तेभ्यस्तारकादिभ्यः तदस्य सञ्जातमित्यर्थे इतच्–प्रत्ययः स्यादित्यर्थः । ११–सदसद्विवेकिनी बुद्धिः पण्डा, सा सञ्जाता अस्येति=**पण्डितः** ।

**२०१२ प्रमाणे द्वयसज्-दघ्नञ्-मात्रचः ५ । २ । ३७ ॥**

ऊरू प्रमाणमस्य=ऊरुद्वयसम्, ऊरुदघ्नम्, ऊरुमात्रम् ।

' प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम ।
ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः ।
आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः ॥

**२०१३ पुरुषहस्तिभ्यामण् च ५ । २ । ३८ ॥**

पुरुषः प्रमाणमस्य=पौरुषम्, पुरुषद्वयसम् । हास्तिनम्, हस्तिद्वयसम् ।

**२०१४ यत्तदेतेभ्यः परिमाणे वतुप् ५ । २ । ३९ ॥**

यत्परिमाणमस्य-यावान् । तावान् । एतावान् ।

**२०१५ किमिदंभ्यां वो घः ५ । २ । ४० ॥**

आभ्यां वतुब्वस्य च घः ।

**२०१६ इदंकिमोरीश्की ६ । ३ । ९० ॥**

---

१-प्रथमान्तादस्य प्रमाणमित्यर्थे द्वयसच्-दघ्नञ्-मात्रच् इति त्रयः प्रत्ययाः स्युरित्यर्थः । २-ऊर्ध्वमानरूपं परिमाणमित्यर्थः । ३-विशेषं दर्शयितुमाह—**प्रथमश्चेति**, प्रथमः=द्वयसच्-प्रत्ययः, द्वितीयश्च=दघ्नञ्-प्रत्ययश्चेति द्वौ प्रत्ययौ ऊर्ध्वमाने मतौ । तत्र किम् ऊर्ध्वमानमित्याह—ऊर्ध्वमानं किल उन्मानम्=ऊर्ध्वप्रमाणमित्यर्थः । सर्वतः प्रमाणं तु परिमाणम् उच्यते । आयामः=दैर्घ्यं तु प्रमाणम् उच्यते । सङ्ख्या तु सर्वपरिमाणेभ्यो बाह्या बोध्या, इत्यर्थः । सूत्रे प्रमाणशब्दस्तु परिच्छेदकमात्रपर इति ध्येयम् । ४-पुरुष-हस्तिशब्दाभ्यां प्रथमान्ताभ्यां तदस्य प्रमाणमित्यर्थे-अण् स्यात् चात्-द्वयसजादयोऽपि । अणि **पौरुषम्, हास्तिनम्**, हस्ती प्रमाणमस्येति विग्रहः, 'इनण्यनपत्ये' इति प्रकृतिभावान्न टिलोपः । ५-अस्य परिमाणमित्यर्थे परिमाणवाचिभ्यः प्रथमान्तेभ्यः यद्-तद्-एतद्—इत्येतेभ्यः वतुप् स्यादित्यर्थः । **यावान्**, वतुप्, उपावितौ 'आ सर्वनाम्नः' इत्यात्वम्, सौ-अत्वसन्तस्येति-उपधादीर्घे उगिदचामिति नुमि, संयोगान्तत्वेन तकारस्य लोपः । एवं-'तावान्' 'एतावान्' । ६-प्रथमान्ताभ्यां किमिदम्-शब्दाभ्यामस्य परिमाणमित्यर्थे, वतुप्, वतुपो वस्य च घादेशः स्यादित्यर्थः । ७-दृग्दृशवतुषु—इदम ईश्, किमः की स्यादित्यर्थः ।

दृग्दृश्वतुषु । कियान् । इयान् ।

**२०१७ किमः संख्यापरिमाणे डति च ५ । २ । ४१ ॥**

चाद्वतुप् तस्य च घः । का संख्या येषां ते–कति, कियन्तः ।

**२०१८ संख्याया अवयवे तयप् ५ । २ । ४२ ॥**

पञ्च अवयवा अस्य–पञ्चतयम् ।

**२०१९ द्वित्रिभ्यां तयस्यायज्वा ५ । २ । ४३ ॥**

द्वयम्, द्वितयम् । त्रयम्, त्रितयम् ।

**२०२० उभादुदात्तो नित्यम् ५ । २ । ४४ ॥**

उभशब्दात्तयपोऽयच् स्यात् स चाद्युदात्तः । उभयम् ।

इति भवनाद्यर्थकाः ।

## अथ मत्वर्थीयाः ।

**२०२१ तदस्मिन्नधिकमिति दशान्ताड्डः ५ । २ । ४५ ॥**

---

१–**कियान्**, किम्परिमाणमस्येति विग्रहः । वतुप्प्रत्यये वस्य घकारे घस्य 'इय्' आदेशे, किम्+इयत् इति स्थिते किमः की—भावे "यस्येति च" इतीकारलोपे—सौ विभक्तौ 'अत्वसन्तस्ये' ति दीर्घे 'उगिदचा' मिति नुमि रूपम् । इदम्परिमाणमस्य–'**इयान्**' । अत्र सर्वस्य इदम ईशादेशे ईकारलोपे च "इयत्" इति प्रत्ययमात्रमेवावशिष्यते सौ नुमादि पूर्ववत् । २–का सङ्ख्यैषामित्येवं सङ्ख्यापरिच्छेदविषयकप्रश्ने विद्यमानात् किम्–शब्दात्प्रथमान्तात् डतिप्रत्ययश्चाद् वतुप् च स्यात् । ३–"षड्भ्यो लुक्" इति जश्शसोर्लुक् । न द्व्येकयोः प्रश्नोऽस्तीति भाष्याद् नित्यबहुवचनान्तोऽयं=**कतिशब्दः** । ४–द्वित्र्यादिसङ्ख्याकावयवा अस्यावयविन इति विग्रहे, अवयवीभूतसङ्ख्यावाचिनः प्रथमान्ताद् अस्याऽवयविन इत्यर्थे तयप् स्यादित्यर्थः । **पञ्चतयम्**= पञ्चावयवकः समुदाय इत्यर्थः । ५–द्वित्रिभ्यां परस्य तयपोऽयच्–वा स्यादित्यर्थः । द्वौ अवयवौ अस्येति=**द्वयम्** । तयपोऽयचि यस्येति चेतीकारलोपः । पक्षे=**द्वितयम्** । एवम्–त्रयोऽवयवा यस्य=**त्रयम्**, **त्रितयम्** । ६–उभौ अवयवौ अस्य,=**उभयम्**, तयपोऽयचि अकारलोपः ॥इति भवनाद्यर्थकाः॥

७–तदधिकमस्मिन्निति विग्रहे प्रथमान्ताद् दशन्शब्दात् समासान्तादस्मिन्नित्यर्थे डः स्यादित्यर्थः । **एकादशम्**, डित्वाट्टिलोपः, एकादशाधिकं शतं सहस्रं वा ।

एकादश अधिका अस्मिन्नेकादशम् । (शते[1]सहस्रयोरेवेष्यते) । नेह एकादशाऽधिका अस्यां विंशत्याम् । 'प्रकृतिप्रत्ययार्थयोः समानजातीयत्व एवेष्यते' । नेह एकादश माषा अधिका अस्मिन् सुवर्णशते ।

**२०२२ शदन्तविंशतेश्च ५ । २ । ४६ ॥**

डः स्यादुक्तेऽर्थे । त्रिंशदधिका अस्मिन्—त्रिंशम्[3] । विंशम् ।

**२०२३ तस्य[4] पूरणे डट् ५ । २ । ४८ ॥**

संख्याया इत्येव । एकादशानां पूरणः=एकादशः ।

**२०२४ नान्तादसंख्यादेर्मट् ५ । २ । ४९ ॥**

डटो मडागमः । पञ्चानां पूरणः—पञ्चमः[5] । नान्तात्किम्—विंशः । असंख्यादेः किम्—एकादशः ।

**२०२५ षट्-कति-कतिपय-चतुरां[6] थुक् ५ । २ । ५१ ॥**

डटि । षण्णां पूरणः=षष्ठः[7] । कतिथः । कतिपयशब्दस्यासंख्यात्वेऽपि अत एव ज्ञापकात् डट् । कतिपयथः । चतुर्थः । (चतुरश्छयतावाद्यक्षरलोपश्च[8]) । तुरीयः, तुर्यः ।

**२०२६ बहुपूगगणसङ्घस्य[9] तिथुक् ५ । २ । ५२ ॥**

डटि । बहुतिथः ।

**२०२७ वतोरिथुक्[10] ५ । २ । ५३ ॥**

---

१—शते सहस्रे एव विशेष्येऽयं डः प्रत्यय इष्यत इत्यर्थः । तेन विंशत्यां विशेष्यायां न । २—डप्रत्यय इति शेषः । ३—**त्रिंशम्** त्रिंशदधिकं शतमित्यर्थः, विंशतिरधिकाऽस्मिन्निति=**विंशम्**, विंशत्यधिकं शतमित्यर्थः । ४—सङ्ख्येयार्थकसङ्ख्यावाचिनः षष्ठ्यन्तात् प्रवृत्तिनिमित्तसङ्ख्यायाः पूरणे वाच्ये डट् प्रत्ययः स्यादित्यर्थः । डटः टित्वात्स्त्रियाम् एकादशी । ५—**पञ्चमः**, पञ्चन् शब्दात् डटि तस्य मडागमे नलोपे रूपम् । ६—डटि परतः—एषां थुगागमः स्यादित्यर्थः । ७—षष्शब्दात् डटि थुगागमे 'ष्टुना ष्टु' रिति थस्य ठकारः षष्ठः । ८—चतुर्शब्दात् षष्ठ्यन्तात्पूरणे छयतौ स्तः, आद्यक्षरलोपश्चेत्यर्थः: **तुरीयः**, छस्य इयादेशे चलोपः । यत्प्रत्यये **तुर्य्यः** । ९—बहु—पूग—गण—सङ्घ—एषां डटि तिथुगागमः स्यादित्यर्थः । बहूनां पूरणो=**बहुतिथः** । १०—वतुबन्तस्य इथुगागमः स्याड्डटि इत्यर्थः । यावतां पूरणो=**यावतिथः** ।

डटि । यावतिथः ।

**२०२८ द्वेस्तीयः ५ । २ । ५४ ॥**

डटोऽपवादः । द्वयोः पूरणो=द्वितीयः ।

**२०२९ त्रेः संप्रसारणं च ५ । २ । ५५ ॥**

तृतीयः । इह 'हलः' इति दीर्घो न । तृतीयेति निर्देशात् ।

**२०३० विंशत्यादिभ्यस्तमडन्यतरस्याम् ५ । २ । ५६ ॥**

डटः, विंशतितमः, विंशः । एकविंशतितमः, एकविंशः ।

**२०३१ नित्यं शतादिमासार्धमास-संवत्सराच्च ५।२।५७॥**

शतस्य पूरणः=शततमः । मासादेरत एव ज्ञापकात् डट् । मासतमः ।

**२०३२ षष्ट्यादेश्चासंख्यादेः ५ । २ । ५८ ॥**

षष्टितमः । संख्यादेस्तु विंशत्यादिभ्य इति विकल्प एव । एकषष्टः, एकषष्टितमः ।

**२०३३ मतौ छः सूक्तसाम्नोः ५ । २ । ५९ ॥**

मत्वर्थे । अच्छावाक-शब्दोऽस्त्यस्मिन्नच्छावाकीयं=सूक्तम् । वारवन्तीयं =साम ।

१-षष्ठ्यन्ताद् द्विशब्दात्पूरणे तीयप्रत्ययः स्यादित्यर्थः । २-त्रिशब्दात् तीय-प्रत्ययः स्यात्प्रकृतेः सम्प्रसारणञ्चेत्यर्थः त्रयाणां पूरणः=**तृतीयः** । तीय-प्रत्यये रेफस्य सम्प्रसारणम् ऋकारः । ३-'हलः' इति सूत्रेण 'तृतीय' इत्यत्र सम्प्रसारणस्य दीर्घो नेत्यर्थः । दीर्घाभावे प्रमाणं "विभाषा तृतीयादिष्वचि" इति सूत्रे तृतीयेति-ग्रहणम् । ४-विंशत्यादिभ्यो डटस्तमडागमो वा स्यादित्यर्थः । ५-शतादिभ्यो मासादर्धमासात्संवत्सराच्च नित्यं तमडादेशः स्यादित्यर्थः । ६-अन्यथा=डटोऽभावे कथं तमडादेशविधानं स्यात् । मासस्य पूरणो =**मासतमः** । अर्धमासस्य पूरणोऽ**र्धमासतमः** । ७-असङ्ख्यापूर्वपदात् षष्ट्यादेः परस्य डटो नित्यं तमडागमः स्यादित्यर्थः । ८-मतुशब्दो मत्वर्थे लाक्षणिकः तथैवाह-**मत्वर्थे छः सूक्ते साम्नि च वाच्ये** । अच्छावाक-शब्दात् छप्रत्यये रूपम् **अच्छावाकीयम्** । वारवन्तशब्दो विद्यतेऽस्मिन्निति=**वारवन्तीयं**=साम ।

**२०३४ श्रोत्रियंश्छन्दोऽधीते ५ । २ । ८४ ॥**

श्रोत्रियः । वेत्यनुवृत्तेः छान्दसः ।

**२०३५ श्राद्धमनेन भुक्तमिनिठनौ ५ । २ । ८५ ॥**

श्राद्धी, श्राद्धिकः ।

**२०३६ पूर्वादिनिः ५ । २ । ८६ ॥**

पूर्वं कृतमनेन=पूर्वी ।

**२०३७ सपूर्वाच्च ५ । २ । ८७ ॥**

कृतपूर्वी ।

**२०३८ इष्टादिभ्यश्च ५ । २ । ८८ ॥**

इष्टमनेन । इष्टी । अधीती ।

**२०३९ अनुपद्यन्वेष्टा ५ । २ । ९० ॥**

अनुपदमन्वेष्टा=अनुपदी गवाम् ।

**२०४० साक्षाद्द्रष्टरि संज्ञायाम् ५ । २ । ९१ ॥**

साक्षाद्द्रष्टा=साक्षी ।

**२०४१ तदस्यास्त्यस्मिन्निति मतुप् ५ । २ । ९४ ॥**

---

१–छन्दोऽधीते इति वाक्यार्थे—श्रोत्रियन् इति पदं निपात्यते इति भाष्यम् । द्वितीयान्ताच्छन्दश्शब्दादधीते इत्यर्थे घन् प्रकृतेः श्रोत्रादेशश्चेति सूत्रार्थः । घस्य 'इय्' । अध्येत्रणोऽपवादोऽयं घन् । अत्र 'वा' इत्यनुवर्त्तते तेन पक्षे छन्दोऽधीते–छान्दसः, इत्यणपि । २–श्राद्धं भुक्तमनेनेति प्रथमान्ताद् श्राद्धशब्दादिनि–ठनौ स्तः । श्राद्धशब्दः श्राद्धसाधनद्रव्ये लाक्षणिकः । ३–द्वितीयान्तात्पूर्वशब्दात् कृतमनेनेत्यर्थे इनि—प्रत्ययः स्यादित्यर्थः । ४–विद्यमानपूर्वात् पूर्वशब्दात्कृतमनेनेत्यर्थे इनिः स्यादित्यर्थः, कृतं पूर्वमनेनेति= **कृतपूर्वी** । ५–प्रथमान्तेभ्य इष्टादिभ्योऽनेनेत्यर्थे इनिप्रत्ययः । इष्टमनेनेति= **इष्टी**, अधीतमनेनेति=**अधीती** । ६–अन्वेष्टर्यर्थे इनिप्रत्ययान्तोऽ**नुपदी** इति निपात्यते । ७–'साक्षात्' इत्यव्ययात् द्रष्टर्य्यर्थे इनिः स्यात् सञ्ज्ञायाम् । क्रियमाणं कर्म यः पश्यति स साक्षी इत्युच्यते । 'अव्ययानां भमात्रे' इति टिलोपः । ८–तदस्यास्तीति तदस्मिन्नस्तीति च विग्रहेऽस्तिसमानाधिकरणात् प्रथमान्तादस्याऽस्मिन्निति चार्थे मतुप् स्यादित्यर्थः । उपावितौ । इतिशब्दो

गावोऽस्यास्मिन्वा सन्ति—गोमान् ।

**२०४२ तसौ मत्वर्थे १ । ४ । १६ ॥**

तान्तसान्तौ भसंज्ञौ स्तो मत्वर्थे प्रत्यये परे। संप्रसारणम् । विदुष्मान्।[1] (गुणवचनेभ्यो[2] मतुपो लुगिष्टः)। शुक्लो गुणोऽस्यास्ति=शुक्लः[3] पटः । कृष्णः ।

**२०४३ प्राणिस्थादातो लजन्यतरस्याम् ५ । २ । ९६ ॥**

चूडालः[4], चूडावान् । प्राणिस्थात्किम्—शिखावान्दीपः । (प्राण्यङ्गादेव)। नेह—मेधावान्[5] ।

**२०४४ सिध्मादिभ्यश्च ५ । २ । ९७ ॥**

लज्वा[6] । सिध्मलः, सिध्मवान् । (वात[7]–दन्त–बल–ललाटानामूङ् च) वातूलः । दन्तूलः । बलूलः । ललाटूलः ।

**२०४५ वत्सांसाभ्यां कामबले ५ । २ । ९८ ॥**

लज्वा यथासंख्यं कामवति बलवति चार्थे । वत्सलः[8] । अंसलः ।

**२०४६ फेनादिलच्च ५ । २ । ९९ ॥**

---

विषयविशेषलाभार्थस्तदुक्तं श्लोकवार्तिके—

भूम–निन्दा–प्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्ति–विवक्षायां भवन्ति मतुबादयः ॥

भूमा=बहुत्वम्–यथा—गोमान्, यवमान् । निन्दायाम्—ककुदावर्तिनी कन्या । प्रशंसायाम्—रूपवान् । नित्ययोगे—क्षीरिणो वृक्षाः । अतिशायने—उदरिणी कन्या । संसर्गे–दण्डी, छत्री । १–विद्वांसः सन्त्यस्मिन्निति=**विदुष्मान्** देशः । विद्वच्छब्दान्मतुपि भसञ्ज्ञायां "वसोः सम्प्रसारण" मिति सम्प्रसारणम् । २–गुणवाचकेभ्यो मतुप्प्रत्ययस्य लुग् भवतीत्यर्थः । ३–शुक्लः पटः, शुक्लगुणवानित्यर्थः । एवं कृष्णः कृष्णगुणवानित्यर्थः । ४–अदन्तात्प्राणिस्थवाचिनः शब्दात्मत्वर्थे 'लच्' वा स्यादित्यर्थः । चूडाऽस्यास्तीति=**चूडालः**, पक्षे मतुपि=**चूडावान्** । 'मादुपधायाः' इति मस्य वः । ५–मेधा नहि प्राण्यङ्गम् । तस्मान्न लच् । ६–मत्वर्थे इति शेषः । ७–एभ्यो लच्प्रत्ययेऽन्तस्य ऊङादेशश्च । वातोऽस्यास्तीति=**वातूलः** । एवं दन्ता अस्य सन्तीति=**दन्तूल** इत्यादि । ८–वत्सोऽस्याऽस्तीति **वत्सलः**=वत्सकामः। अंसौ अस्य स्त इति **अंसलः**=बलवान् ।

चाल्लच् । अन्यतरस्यांग्रहणं मतुप्समुच्चयार्थमनुवर्तते । फेनिलः[1], फेनलः, फेनवान् ।

**२०४७ लोमादि-पामादि-पिच्छादिभ्यः शनेलचः ५।२।१००।**

लोमादिभ्यः शः । लोमशः[2], लोमवान् । रोमशः, रोमवान् । पामादिभ्यो नः । पामनः[3]। (अङ्गात्कल्याणे) अङ्गना[4] । (लक्ष्म्या अच्च[5]) लक्ष्मणः। ( पिच्छादिभ्य इलच् ) पिच्छिलः[6], पिच्छवान् । उरसिलः, उरस्वान् ।

**२०४८ प्रज्ञा-श्रद्धार्चाभ्यो णः[7] ५ । २ । १०१ ॥**

प्राज्ञो—व्याकरणे । प्राज्ञः । श्राद्धः । आर्चः । ( वृत्तेश्च[8] ) । वार्त्तः ।

**२०४९ तपः-सहस्राभ्यां विनीनी[9] ५। २ । १०२ ॥**

विनीन्योरिकारो नकारपरित्राणार्थः[10] । तपस्वी । सहस्री ।

**२०५० अण् च[11] ५ । २ । १०३ ॥**

तापसः । साहस्रः । (ज्योत्स्नादिभ्य[12] उपसंख्यानम् ) ज्यौत्स्नः। तामिस्रः

**२०५१ सिकता-शर्कराभ्यां च[13] ५ । २ । १०४ ॥**

---

१—फेनोऽस्याऽस्तीति=**फेनिलः** । पक्षे लचि=**फेनलः** । २—लोमान्यस्य सन्तीति=लोमशः । ३—पामाऽस्यास्तीति=**पामनः**, पदत्वान्नलोपः। ४—अङ्गान्यस्याः सन्तीति=**अङ्गना**=कल्याणाङ्गी । ५—लक्ष्मीशब्दान्मत्वर्थे नप्रत्ययोऽकारोऽन्तादेशश्च । लक्ष्मीरस्यास्तीति=**लक्ष्मणः**, नप्रत्यये प्रकृतेरकाराऽन्तादेशे णत्वम् । ६—पिच्छान्यस्य सन्तीति=**पिच्छिलः**। ७—प्रज्ञा-श्रद्धाऽर्चाशब्देभ्यो णः स्याद् मतुबर्थे । प्रज्ञाऽस्यास्तीति=**प्राज्ञः**। श्राद्धः=श्रद्धावान् । आर्चः=अर्चावान्। ८—वृत्तिशब्दान्मत्वर्थे णप्रत्ययः। वृत्तिरस्यास्तीति=**वार्त्तः**, आदिवृद्धिः । ९—तपःसहस्रशब्दाभ्यां क्रमशो मत्वर्थे विनिप्रत्यय इनिप्रत्ययश्च भवति इत्यर्थः । १०—अन्यथा 'हलन्त्य' मिति नकारस्येत्सञ्ज्ञालोपौ स्याताम् । तपोऽस्यास्तीति=**तपस्वी**, विनिप्रत्ययः। सहस्रमस्यास्तीति=**सहस्री**, इनिप्रत्ययः । ११—तपःसहस्राभ्यां मत्वर्थे इति शेषः । १२—अण् इति शेषः । ज्योत्स्नाऽस्यास्तीति=**ज्यौत्स्नः**=शुक्लपक्षः। तमिस्रमस्यास्तीति=**तामिस्रः**=कृष्णपक्षः। तमःसमूहस्तमिस्रम् । ज्योत्स्नातमिस्रेति निपातनाद् रः । १३—मत्वर्थे अण् इति शेषः । सिकता अस्मिन् सन्ति इति=**सैकतः**, एवम्—**शार्करः** ।

सैकतो घटः । शार्करः ।

**२०५२ देशे लुबिलचौ च ५ । २ । १०५ ॥**

चादण् मतुप् च । सिकताः सन्त्यस्मिन्देशे—सिकता, सिकतिलः, सैकतः, सिकतावान् । एवं शर्करेत्यादि ।

**२०५३ दन्त उन्नत उरच् ५ । २ । १०६ ॥**

उन्नता दन्ता अस्य–दन्तुरः ।

**२०५४ ऊष-सुषि-मुष्क-मधो रः ५ । २ । १०७ ॥**

ऊषरः । सुषिरः । मुष्कोऽण्डः । मुष्करः । मधुरः । ( रप्रकरणे ख-मुख-कुञ्जेभ्य उपसंख्यानम् ) खरः । मुखरः । कुञ्जो हस्तिहनुः । कुञ्जरः । ( नग-पांसु-पाण्डुभ्यश्च ) नगरम् । पांसुरः । पाण्डुरः । ( कच्छ्वा ह्रस्वत्वं च ) कच्छुरः ।

**२०५५ द्यु-द्रुभ्यां मः ५ । २ । १०८ ॥**

द्युमः । द्रुमः ।

**२०५६ केशाद्वोऽन्यतरस्याम् ५ । २ । १०९ ॥**

---

१–पूर्वसूत्रविहितस्याणो लुप् इलच् च स्यादित्यर्थः । लुपि=सिकता इति रूपम् । २–दन्तशब्दान्मत्वर्थे उरच् स्याद् दन्तानामौन्नत्ये । ३–एभ्यो मत्वर्थे रप्रत्ययः स्यादित्यर्थः । ऊषः=क्षारमृत्तिकाविशेषोऽस्यास्तीति=**ऊषरः** । सुषिरस्यास्तीति=सुषिरः । सुषिः=बिलम् । मुष्को=अण्डकोशोऽस्यास्तीति=**मुष्करः** । मधु=माधुर्य्यमस्यास्तीति=**मधुरः** । ४–खं=मुखबिलमस्यास्तीति खरः=गर्दभः । मुखरः=शब्दवान् । कुञ्जरः=हस्ती । ५–रप्रत्यय इति शेषः । नगाः=प्रासादा अत्र सन्ति इति=**नगरम्** । पांसुः=दोषः सोऽस्यास्तीति=**पांसुलः** । पाण्डुः=शुक्लवर्णः सोऽस्यास्तीति=**पाण्डुरः** । ६–कच्छूशब्दाद् रप्रत्ययः प्रकृतेर्ह्रस्वश्चान्तादेश इत्यर्थः । कच्छुरः=शुनां रोगविशेषः । ७–दिव्शब्दाद् द्रुशब्दाच्च मत्वर्थे मप्रत्ययः । द्युमः, द्रुमः, रूढशब्दावेतौ । ८–केशशब्दान्मत्वर्थे वप्रत्ययो वा स्यादित्यर्थः । केशाः सन्त्यस्मिन्निति=**केशवः**, इनिप्रत्यये—केशी, ठनि—केशिकः, मतुपि—केशवान् ।

प्रकृतेनान्यतरस्यांग्रहणेन मतुपि सिद्धे पुनर्ग्रहणं इनि-ठनोः समावेशार्थम्। केशवः, केशी, केशिकः, केशवान्। ('अन्येभ्योऽपि' दृश्यते')। मणिवो=नागविशेषः। हिरण्यवो=निधिविशेषः। (अर्णसो लोपश्च) अर्णवः।

२०५७ गाण्ड्यजगात्संज्ञायाम् ५।२।११०॥

ह्रस्वदीर्घयोर्यणा तन्त्रेण निर्देशः। गाण्डीवम्, गाण्डिवम्=अर्जुनस्य धनुः। अजगवं=पिनाकः।

२०५८ काण्डाण्डादीरन्नीरचौ ५।२।१११॥

काण्डीरः। आण्डीरः।

२०५९ रजः-कृष्यासुति-परिषदो वलच् ५।२।११२॥

रजस्वला=स्त्री। कृषीवलः। 'वले' इति दीर्घः। आसुतीवलः=शौण्डिकः। परिषद्वलः। पर्षदिति पाठान्तरम्। पर्षद्वलः। (अन्येभ्योऽपि दृश्यते)। भ्रातृवलः। पुत्रवलः। शत्रुवलः।

२०६० दन्त-शिखात्संज्ञायाम् ५।२।११३॥

दन्तावलो=हस्ती। शिखावलः=केकी।

१-वप्रत्यय इति शेषः। मणयः सन्त्यस्येति=**मणिवः**। हिरण्यमस्यास्तीति=**हिरण्यवः**। २-अर्णस् इत्यस्माद् वप्रत्ययोऽन्तलोपश्चेत्यर्थः। अर्णांसि=जलानि सन्त्यत्रेति=**अर्णवः**। ३-गाण्डिशब्दाद् गाण्डीशब्दाद् अजगशब्दाच्च मत्वर्थे वप्रत्ययः स्यात् सञ्ज्ञायाम्। ४-गाण्डिशब्दस्य गाण्डीशब्दस्य च कृतयणोर्गाण्ड्य इति युगपन्निर्देशः। ५-शिवधनुरित्यर्थः। ६-काण्ड-आण्डशब्दाभ्याम् ईरन् ईरच् प्रत्ययौ स्तो मत्वर्थे। ७-एभ्यो वलच् स्यान्मत्वर्थे-इत्यर्थः। रजोऽस्या अस्तीति=**रजस्वला**, कृषिरस्यास्तीति=**कृषीवलः**। ८-वलच् इति शेषः। भ्राताऽस्यास्तीति-**भ्रातृवलः** 'ढ्रलोपे...' इत्यतोऽण इत्यनुवृत्तेः 'वले' इति न दीर्घः। पुत्रोऽस्यास्तीति=**पुत्रवलः**। शत्रुरस्यास्तीति=**शत्रुवलः**। 'वले' इत्यत्र सञ्ज्ञायामित्यनुवृत्तेर्नेह दीर्घः। ९-दन्तशब्दाद् शिखाशब्दाच्च वलच् प्रत्ययः स्यात् सञ्ज्ञायां मत्वर्थे। दन्ता अस्य सन्तीति=**दन्तावलः**=हस्ती। शिखाऽस्यास्तीति-**शिखावलः**=मयूरः। 'वले' इति दीर्घः।

**२०६१ अत इनि-ठनौ ५ । २ । ११५ ॥**

दण्डी, दण्डिकः ।

**२०६२ व्रीह्यादिभ्यश्च ५ । २ । ११६ ॥**

व्रीही, व्रीहिकः ।

**२०६३ तुन्दादिभ्य इलच्च ५ । २ । ११७ ॥**

चादिनिठनौ मतुप् च । तुन्दिलः, तुन्दी, तुन्दिकः, तुन्दवान् । उदर, पिचण्ड, यव, व्रीहि इति तुन्दादिः ।

**२०६४ रूपादाहतप्रशंसयोर्यप् ५ । २ । १२० ॥**

आहतं रूपमस्यास्तीति रूप्यः=कार्षापणः । प्रशस्तं रूपमस्यास्तीति रूप्यो=गौः । ( अन्येभ्योऽपि दृश्यते ) । हिम्याः—पर्वताः । गुण्याः-ब्राह्मणाः ।

**२०६५ अस्मायामेधा-स्रजो विनिः ५ । २ । १२१ ॥**

यशस्वी, यशस्वान् । मायावी, मायावान् । व्रीह्यादिपाठान्मायी, मायिकः । स्रग्वी । ( शृङ्ग-वृन्दाभ्यामारकन् ) । शृङ्गारकः । वृन्दारकः । ( फल-बर्हाभ्यामिनच् ) फलिनः । बर्हिणः । ( हृदयाच्चालुरन्यतरस्याम् ) हृदयालुः,

---

१-अदन्तान्मत्वर्थे इनि-ठनौ स्तः । दण्डोऽस्यास्तीति=दण्डी, इनि-प्रत्ययः । ठन्प्रत्यये ठस्येकः, दण्डिकः । २-इनि-ठनौ मत्वर्थे-इति शेषः । ३-मतुबर्थे-इति शेषः । तुन्दम्=वृद्धा नाभिरस्यास्तीति=तुन्दिलः । ४-आहते प्रशंसायाञ्च गम्ये मतुबर्थे रूपशब्दाद् यप् । ५-आहतं हिमम् एषु इति=हिम्याः=पर्वताः । गुणाः सन्त्येषु इति=गुण्याः । ६-अस्= असन्तात् माया-मेधा-स्रज्-शब्देभ्यश्च विनिः स्यान्मतुबर्थे । अन्यतरस्यां-ग्रहणमिह सम्बद्धयते 'यशस्वान्' इति भाष्योदाहरणात् । यशोऽस्यास्तीति "यशस्वी", यशस्वान् इति मतुप् "तसौ मत्वर्थे" इति भत्वात्पदत्वाभावेन रुत्वन्न । ७-इनि-ठनाविति शेषः । ८-स्रजोऽस्य सन्तीति-स्रग्वी । क्विन-न्तत्वात् कुत्वम् । ९-मतुबर्थे इति शेषः । १०-आभ्यां मतुबर्थे इनच् स्यात् । फलान्यस्य सन्तीति=फलिनो=वृक्षः । बर्हा अस्य सन्ति=बर्हिणः=मयूरः । ११-हृदयशब्दान्मतुबर्थे आलुप्रत्ययो वा स्यातपक्षे मतुप्, चकारादिनि-ठनौ । हृदयमस्यास्तीति=हृदयालुः ।

हृदयी, हृदयिकः, हृदयवान् (शीतोष्ण-तृप्रेभ्यस्तदसहने) शीतं न सहते=शीतालुः। उष्णालुः। तृप्रः पुरोडाशस्तन्न सहते=तृप्रालुः। (तप्पर्व-मरुद्भ्याम्) पर्वतः। मरुत्तः।

२०६६ ऊर्णाया युस् ५।२।१२३॥

ऊर्णायुः।

२०६७ वाचो ग्मिनिः[4] ५।२।१२४॥ 

वाग्मी।

२०६८ आलजाटचौ बहुभाषिणि ५।२।१२५॥

(कुत्सित इति वक्तव्यम्)। कुत्सितं बहु भाषते=वाचालः, वाचाटः। यस्तु सम्यग्बहु वदति तत्र वाग्मीत्येव।

२०६९ स्वामिन्नैश्वर्ये ५।२।१२६॥

ऐश्वर्यवाचकात् स्वशब्दान्मत्वर्थे आमिनच्। स्वामी।

२०७० अर्शआदिभ्योऽच् ५।२।१२७॥

अर्शांसि अस्य विद्यन्ते=अर्शसः। आकृतिगणोऽयम्।

२०७१ वातातीसाराभ्यां कुक् च ५।२।१२९॥

चादिनिः। वातकी। अतिसारकी। (पिशाचाच्च)। पिशाचकी।

२०७२ हस्ताज्जातौ ५।२।१३३॥

हस्ती।

---

१-शीत-उष्ण-तृप्रशब्देभ्यो न सहते इत्यर्थे आलुप्रत्ययः स्यात्। २-पर्व-मरुत् शब्दाभ्यां तप् प्रत्ययः स्यान्मत्वर्थे। पर्वाणि सन्त्यस्येति=**पर्वतः**। मरुतः सन्त्यस्य (आराध्याः) इति=**मरुत्तो**=नाम राजा। ३-मत्वर्थे इति शेषः। ऊर्णा अस्त्यस्येति=**ऊर्णायुः**। ४-मत्वर्थे इति शेषः। वाचः सन्त्यस्येति=**वाग्मी**। ५-वाक्शब्दाद् आलच्, आटच्, च बहुभाषित्वे गम्ये। ६-मतुबर्थे इति शेषः। अर्शः="बवासीर" इति प्रसिद्धो रोगः। ७-वातातिसारशब्दाभ्याम् इनिप्रत्ययः कुगागमश्च। वातः=वातव्याधिरस्यास्तीति=**वातकी**। अतिसारोऽस्यास्तीति-**अतिसारकी**। ८-पिशाचशब्दाच्च इनिप्रत्ययः कुक् च स्यात्। पिशाचोऽस्यास्ति=**पिशाचकी**। ९-हस्ताद् मत्वर्थे इनिरेव समुदायेन जातौ गम्यायाम्। **हस्ती**=गजः।

**२०७३ वर्णाद्ब्रह्मचारिणि ५ । २ । १३४ ॥**

वर्णी ।

**२०७४ कं-शंभ्यां ब-भ-युस्ति-तु-त-यसः ५।२।१३८ ॥**

कमित्युदकसुखयोः, शमिति सुखे । आभ्यां सप्त प्रत्ययाः स्युः । युस्-यसोः सकारः पदत्वार्थः । कम्बः, कम्भः, कंयुः कन्तिः, कन्तुः, कन्तः, कंयः । एवं शम्ब इत्यादि ।

**२०७५ तुन्दि-वलि-वटेर्भः ५ । २ । १३९ ॥**

तुन्दिभः । वलिभः । वटिभः ।

**२०७६ अहं-शुभमोर्युस् ५ । २ । १४० ॥**

अहंयुः=अहङ्कारवान् । शुभंयुः=शुभान्वितः । ॥ इति मत्वर्थीयाः ।

## अथ प्राग्दिशीयाः ।

**२०७७ प्राग् दिशो विभक्तिः ५ । ३ । १ ॥**

दिक्शब्देभ्यः, इत्यतः प्राग्वक्ष्यमाणाः प्रत्यया विभक्तिसंज्ञाः स्युः । अथ स्वार्थिकाः ।

**२०७८ किं-सर्वनाम-बहुभ्योऽद्व्यर्थादिभ्यः ५ । ३ । २ ॥**

किमः सर्वनाम्नो बहुशब्दाच्चेति प्राग्दिशोऽधिक्रियते ।

---

१-वर्णशब्दान्मत्वर्थे इनिरेव ब्रह्मचारिणि गम्ये । **वर्णी**=ब्रह्मचारी । २-कंशब्दात् शंशब्दाच्च ब-भ-युस्-ति-तु-त-यस्-एते सप्त प्रत्ययाः स्युर्मत्वर्थे । **कम्बः, शम्बः,** इत्याद्युदाहरणानि । अनुस्वारस्य वैकल्पिकः परसवर्णः पदत्वात् । 'स्वादिष्वसर्वनामस्थाने' । ३-तुन्दि-वलि-वटि-एभ्यो भप्रत्ययः स्यान्मत्वर्थे । वृद्धा नाभिः=तुन्दिः, साऽस्यास्ति-**तुन्दिभः** । वलिरस्यास्तीति=**वलिभः** । वट—(वेष्टने) वटनं=वटिः सास्यास्तीति=**वटिभः** । ४-अहमिति मान्तमव्ययमहङ्कारे, शुभमिति शुभे ताभ्यां मत्वर्थे युस् प्रत्ययः स्यादित्यर्थः । अहम्=अहङ्कारः सोऽस्यास्तीति=**अहंयुः** । शुभमस्यास्तीति=**शुभंयुः** । ॥ इति मत्वर्थीयाः ॥

५-विभक्तिसंज्ञाफलं तु 'न विभक्तौ तुस्माः, इति निषेधः । त्यदाद्यत्वं चेत्यादि । ६-सर्वनामत्वेऽपि द्व्यादिनिषेधात् किमः पृथग् ग्रहणम् ।

**२०७९ पञ्चम्यास्तसिल् ५। ३। ७॥**

पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल् वा [1]।

**२०८० कु तिहोः ७। २। १०४॥**

किमः कुस्तादौ हादौ च विभक्तौ। कुतः। कस्मात्।

**२०८१ इदम इश् ५। ३। ३॥**

प्राग्दिशीये। इतः।

**२०८२ एतदोऽन् ५। ३। ५॥**

एतदः प्राग्दिशीये। अनेकाल्त्वात्सर्वादेशः। अतः[3]। अमुतः[4]। यतः। ततः। बहुतः। द्व्यादेस्तु द्वाभ्याम्।

**२०८३ पर्यभिभ्यां च ५। ३। ९॥**

तसिल् ( सर्वोभयार्थाभ्यामेव ) परितः=सर्वत इत्यर्थः। अभितः=उभयत इत्यर्थः।

**२०८४ सप्तम्यास्त्रल् ५। ३। १०॥**

कुत्र[6]। यत्र। तत्र। बहुत्र।

**२०८५ इदमो हः ५। ३। ११॥**

त्रलोऽपवादः[7]। इह।

---

१-पञ्चम्यन्तात्किम्-शब्दात् वा तसिल्प्रत्यये 'सुपो धातुप्राति...' इति सुपो लुकि किमः 'कु' इत्यादेशे, **कुतः**। 'तसिलादयः प्राक् पाशपः' इत्युक्तेरव्ययत्वम्, पक्षे **कस्मात्**। २-शित्वात्सर्वादेशः। पञ्चम्यन्ताद् इदमः-तसिल्प्रत्यये सुब्लुकि, सर्वादेशे इशि, **इतः**। ३-एतद्-शब्दात्पञ्चम्यन्तात् तसिलि, सुब्लुक्, एतदोऽन् सर्वादेशः, 'न लोपः प्रातिपदिकान्तस्ये'ति नलोपः=**अतः**। पक्षे=**एतस्मात्**। ४-अदसस्तसिल्विभक्तित्वादुत्वमत्वे **अमुतः**। पक्षे अमुष्मात्। एवम्,—यद्-शब्दात्तसिल् त्यदाद्यत्वं **यतः**, तद्-शब्दात् तसिलि **ततः**, बहुशब्दात् **बहुतः**। ५-किमादिभ्यः सप्तम्यन्तेभ्योऽद्व्यादिभ्यः त्रल्-प्रत्ययः स्यादित्यर्थः। ६-किमः त्रलि, 'कुति होः' इति 'कु' इत्यादेशे **कुत्र**। **यत्र, तत्र**-यत्तच्छब्दयोः रूपे, त्रलो विभक्तिसंज्ञात्वेन त्यदाद्यत्वम्। बहुशब्दात्त्रलि=**बहुत्र**। ७-सप्तम्यन्ताद् इदम्-शब्दाद् ह-प्रत्ययः स्यादित्यर्थः। 'इदम इश्' इति इश् सर्वादेशः=**इह**।

**२०८६ किमोऽत्[1] ५ । ३ । १२ ॥**

वा स्यात् ।

**२०८७ क्वाति[2] ७ । २ । १०५ ॥**

किमः । क्व, कुत्र ।

**२०८८ इतराभ्योऽपि दृश्यन्ते ५ । ३ । १४ ॥**

पञ्चमीसप्तमीतरविभक्त्यन्तादपि[3] तसिलादयो दृश्यन्ते । ( दृशिग्रहणाद्भवदादियोग एव ) । स भवान्, ततो भवान्[4], तत्र भवान् । तं भवन्तम्, ततो भवन्तम्, तत्र भवन्तम् । एवं—दीर्घायुः[5] । देवानांप्रियः । आयुष्मान् ।

**२०८९ सर्वैकान्य-किं-यत्तदः काले दा ५ । ३ । १५ ॥**

सप्तम्यन्तेभ्य एभ्यः कालार्थेभ्यः स्वार्थे दा स्यात् ।

**२०९० सर्वस्य सोऽन्यतरस्यां दि ५ । ३ । ६ ॥**

दादौ प्राग्दिशीये सर्वस्य सो वा । सर्वस्मिन् काले—सदा । सर्वदा । एकदा[6] । अन्यदा । कदा । यदा । तदा । काले किम्—सर्वत्र देशे ।

**२०९१ इदमोर्हिल् ५ । ३ । १६ ॥**

सप्तम्यन्तात् ।

**२०९२ एतेतौ र-थोः ५ । ३ । ४ ॥**

इदम 'एत-इत्' एतौ स्तो रेफादौ थकारादौ च प्राग्दिशीये परे[7] । अस्मिन् काले—एतर्हि । काले किम्—इह देशे ।

१—वाग्रहणमपकृष्यते, सप्तम्यन्तात् किमोऽत्प्रत्ययो वा स्यादित्यर्थः । पक्षे त्रल् । २—किमः 'क्व' आदेशः स्याद् अत्—प्रत्यये इत्यर्थः । क्व, कुत्र । ३—किमादिप्रातिपदिकादिति शेषः । ४—स भवान् इत्यर्थे=**ततो भवान्, तत्र भवान्** इतीत्यर्थः । एवं 'तं भवन्तम्' इत्यर्थे=ततो भवन्तम्, तत्र भवन्तम् इति । ५—इत्यादियोगेऽपि तथेत्यर्थः । ततो दीर्घायुः, तत्र दीर्घायुः । ततो देवानां प्रियः, तत्र देवानां प्रियः ( स दीर्घायुः ) स देवानां प्रिय इत्यर्थः । ६—एकस्मिन् काले—**एकदा** । अन्यस्मिन् काले—**अन्यदा** । कस्मिन् काले—**कदा** । यस्मिन् काले—**यदा** । तस्मिन् काले=**तदा** । ७—रेफादौ एतः थादौ इत् इति विवेकः ।

**२०६३ अधुना ५। ३। १७॥**

इदमो निपातोऽयम्[1]।

**२०६४ दानीं च ५। ३। १८॥**

इदमो दानीं प्रत्ययः काले। इदानीम्[2]।

**२०६५ तदो दा च ५। ३। १९॥**[3]

तदा, तदानीम्।

**२०६६ अनद्यतने र्हिलन्यतरस्याम्[4] ५। ३। २१॥**

कर्हि, कदा। यर्हि, यदा। तर्हि, तदा।

**२०६७ एतदः ५। ३। ५॥**

एतद्—शब्दस्य। एतस्मिन्काले-एतर्हि।

**२०६८ सद्यः-परुत्-परार्यैषमः परेद्यव्यद्य-पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः ५। ३। २२॥**

---

१—इदम्शब्दात्सप्तम्यन्तात्कालवाचकात् स्वार्थे 'अधुना' प्रत्ययः स्यात्। इदम इश्, यस्येति चेतीकारलोपः। प्रत्ययमात्रमवशिष्यते अस्मिन् (काले)= **अधुना**। २—अस्मिन् काले=**इदानीम्**। इदमो दानीम्प्रत्यये इशादेशः। ३—तच्छब्दाद् दानीम्प्रत्ययो दाप्रत्ययश्च स्यादित्यर्थः। तस्मिन् काले= **तदा, तदानीम्**। त्यदाद्यत्वम्। ४—अद्यतनकालवृत्तिभ्यः किमादिभ्यः सप्तम्यन्तेभ्यो र्हिल्प्रत्ययो वा स्यात् पक्षे दाप्रत्ययश्च। कस्मिन् काले- **कर्हि, कदा**। विभक्तित्वात् किमः कादेशः। यस्मिन् काले-**यर्हि, यदा**। तस्मिन् काले **तर्हि, तदा**। ५—**सद्यः**। समानस्य सभावो द्यस्प्रत्ययश्च। 'समानो द्यश्चाहनि' इति वार्तिकम्। पूर्वस्मिन् वत्सरे=**परुत्**, पूर्वतरे वत्सरे= **परारि** 'पूर्वपूर्वतरयोः परादेश उदारिच्प्रत्ययौ संवत्सरे'। 'इदम इश् समसण्' इति वार्तिकेन **ऐषमः**,=अस्मिन् संवत्सरे इत्यर्थः। 'परस्मादेद्यव्यहनि' इति वार्तिकेन=**परेद्यवि**। 'इदमोऽश्भावो द्यश्च' इति वार्तिकेन=**अद्य**, अस्मिन्नहनि इत्यर्थः। 'पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युस् च' इति वार्तिकेन एभ्य एद्युस्प्रत्यये एतेऽग्रिमाः सिद्ध्यन्ति। पूर्वस्मिन्नहनि=**पूर्वेद्युः**। अन्यस्मिन्नहनि=**अन्येद्युः**। अन्यतरस्मिन्नहनि=**अन्यतरेद्युः**। इतरस्मिन्नहनि=**इतरेद्युः**। अपरस्मिन्नहनि=**अपरेद्युः**। अधरस्मिन्नहनि=**अध-**

एते निपात्यन्ते । ( द्युश्चोभयाद्वक्तव्यः ) उभयद्युः ।

**२०९९ प्रकारवचने थाल् ५ । ३ । २३ ॥**

प्रकारवृत्तिभ्यः[1] किमादिभ्यस्थाल् । तेन प्रकारेण—तथा । यथा ।

**२१०० इदमस्थमुः ५ । ३ । २४ ॥**

थालोऽपवादः । (एतदोऽपि वाच्यः) अनेन एतेन वा प्रकारेण—इत्थम् ।

**२१०१ किमश्च[3] ५ । ३ । २५ ॥**

केन प्रकारेण—कथम् । ॥ इति प्राग्दिशीयाः ॥

## अथ प्रागिवीयाः ।

**२१०२ दिक्शब्देभ्यः सप्तमी-पञ्चमी-प्रथमाभ्यो दिग्देश-कालेष्वस्तातिः ५ । ३ । २७ ॥**

सप्तम्याद्यन्तेभ्यो दिशिरूढेभ्यो दिग्देशकालवृत्तिभ्यः स्वार्थेऽस्तातिः ।

**२१०३ पूर्वाधरावराणामसिपुरधवश्चैषाम् ५ । ३ । ३९ ॥**

एभ्योऽस्तात्यर्थेऽसिस्तद्योगे चैषां पुर् अध् अव् इत्यादेशाः स्युः ।

**२१०४ अस्ताति च ५ । ३ । ४० ॥**

पूर्वादीनां पुरादयः स्युः । पूर्वस्याम् पूर्वस्याः पूर्वा वा दिक्—पुरः, पुरस्तात् । अधः, अधस्तात् । अवः ।

**२१०५ विभाषाऽवरस्य ५ । ३ । ४१ ॥**

अस्तातौ अव्वा स्यात् । अवस्तात् , अवरस्तात् । एवं देशे काले च । दिशिरूढेभ्यः किम्—ऐन्द्रीं[4] वसति । सप्तम्याद्यन्तेभ्यः किम्—पूर्वं ग्रामं

रेद्युः । उभयोरह्नोः=**उभयद्युः** । उत्तरस्मिन्नहनि=**उत्तरेद्युः** ।

१—सामान्यस्य भेदको विशेषः=प्रकारस्तद्वृत्तिभ्य इत्यर्थः । तच्छब्दात् थाल्प्रत्यये त्यदाद्यत्वे=**तथा** । एवम्—यच्छब्दात् **यथा**=येन प्रकारेणेत्यर्थः । २—इदम्शब्दात्प्रकारवृत्तेः स्थमुप्रत्ययः स्यादित्यर्थः । उकार इत् । इदम्शब्दाद् एतच्छब्दाच्च थमुप्रत्यये=**इत्थम्** इति रूपम् । "एतेतोरथोः" इतीदम इदादेशः । एतद इति योगविभागाद् एतच्छब्दस्यापीदादेशे तदेव रूपम् । ३—प्रकारवृत्तेः स्थमुरिति शेषः । **कथं** थमुप्रत्यये, किमः कादेशः ।

॥ इति प्राग्दिशीयाः ॥

४—ऐन्द्रीशब्दो न केवलं दिशि रूढः किन्तु इन्द्रदेवताके पदार्थे ।

गतः। दिगादिवृत्तिभ्यः किम्—पूर्वस्मिन् गुरौ वसति। अस्ताति चेति ज्ञापकादसिरस्तातिं न बाधते।

**२१०६ दक्षिणोत्तराभ्यामतसुच् ५। ३। २८॥**

अस्तातेरपवादः। दक्षिणतः[2]। उत्तरतः।

**२१०७ विभाषा परावराभ्याम्[3] ५। ३। २९॥**

परतः, परस्तात्। अवरतः, अवरस्तात्।

**२१०८ अञ्चेर्लुक् ५। ३। ३०॥**

अञ्चत्यन्ताद्दिक्शब्दादस्तातेर्लुक् स्यात्। प्राक्[4]। उदक्।

**२१०९ उपर्युपरिष्टात्[5] ५। ३। ३१॥**

निपातावेतौ।

**२११० पश्चात्[6] ५। ३। ३२॥**

तथा।

**२१११ उत्तराधरदक्षिणादातिः[7] ५। ३। ३४॥**

उत्तरात्। अधरात्। दक्षिणात्।

**२११२ एनबन्यतरस्यामदूरेऽपञ्चम्याः ५। ३। ३५॥**

उत्तरादिभ्य एनब्वा स्यादवध्यवधिमतोः सामीप्ये। पञ्चम्यन्तात्तु न। उत्तरेण। अधरेण। दक्षिणेन। पक्षे—यथास्वं प्रत्ययाः। इह केचिद्दिक्शब्दमात्रादेनपमाहुः। पूर्वेण ग्रामम्।

**२११३ दक्षिणादाच् ५। ३। ३६॥**

---

१—ननु दिक्शब्देभ्य इति सामान्यविहितस्य परादिशब्देषु सावकाशस्य अस्तातेः पूर्वाधरावरशब्देषु असिना विशेषविहितेन बाधः स्यादित्यत आह= **अस्ताति चेति**, अर्थात् अस्तातेर्बाधे तस्मिन् परे अस्ताति चेति पुराद्यादेशविधानं व्यर्थं स्यात् तज्ज्ञापयति असिरस्तातिं न बाधते। २—**दक्षिणतः**= दक्षिणस्याम्। **उत्तरतः**=उत्तरस्यामित्यर्थः। ३—अतसुजिति शेषः। पक्षेऽस्तातिः। ४—**प्राक्**=प्राच्यां, प्राच्याः प्राची वेत्यर्थः। **उदक्**=उदीच्याम्, उदीच्याः, उदीची वा। ५—अस्तातेर्विषये ऊर्ध्वशब्दस्य उपादेशः स्यात्, रिल्, रिष्टातिल् च प्रत्ययौ स्याताम्। **उपरि, उपरिष्टात्**। ६—अवरस्य पश्चभाव आतिश्च प्रत्ययोऽस्तातेर्विषये। ७—आतिप्रत्ययोऽयम् अस्तातेरपवादः।

अस्तातेर्विषये । दक्षिणा वसति । अपञ्चम्या इत्येव । दक्षिणादागतः ।

**२११४ आहि च दूरे ५ । ३ । ३७ ॥**

चादात् । दक्षिणाहि, दक्षिणा ।

**२११५ उत्तराच्च ५ । ३ । ३८ ॥**

उत्तराहि, उत्तरा ।

**२११६ संख्याया विधार्थे धा ५ । ३ । ४२ ॥**

क्रियाप्रकारे वर्तमानात् संख्याशब्दात्स्वार्थे धा स्यात् । चतुर्धा ।

**२११७ एकाद्धो ध्यमुञन्यतरस्याम् ५ । ३ । ४४ ॥**

ऐकध्यम्, एकधा ।

**२११८ द्वित्र्योश्च धमुञ् ५ । ३ । ४५ ॥**

आभ्यां धा इत्यस्य धमुञ् वा । द्वैधम्, द्विधा । त्रैधम्, त्रिधा ।

**२११९ एधाच्च ५ । ३ । ४६ ॥**

द्वेधा । त्रेधा ।

**२१२० याप्ये पाशप् ५ । २ । ४७ ॥**

कुत्सितो भिषग्—भिषक्पाशः । (तीयादीकक् स्वार्थे वा वाच्यः) । द्वैतीयीकः, द्वितीयः । तार्तीयीकः, तृतीयः । (न विद्यायाः) द्वितीया विद्येत्येव ।

---

१—पञ्चम्यन्तान्नेत्यर्थः । २—दक्षिणाद् दूरेऽर्थे आहिप्रत्ययः स्याच्चादात् । **दक्षिणाहि, दक्षिणा**=दक्षिणस्यां दिशि दूरे इत्यर्थः । ३—**उत्तराहि, उत्तरा**=उत्तरस्यां दिशि दूरे इत्यर्थः । ४—विधा=विधार्थः प्रकारः स चात्राभिधानस्वभावात् क्रियाविषयक एव गृह्यते । तदाह वृत्तौ=**क्रियाप्रकारे** इत्यादि । ५—गच्छतीति क्रियापदमध्याहार्य्यम् । चतुष्प्रकारा गमनादिक्रिया इत्यादि बोधः । ६—एकशब्दात्परस्य धाप्रत्ययस्य ध्यमुञादेशः स्याद्विकल्पेनेत्यर्थः । ञित्वादादिवृद्धिः=**ऐकध्यम्** । पक्षे- **एकधा** । ७—द्वित्रिभ्यां परस्य धाप्रत्ययस्य "एधाच्" इत्यादेशः स्यादित्यर्थः । ८—याप्यः=कुत्सितः । कुत्सिते विद्यमानात्स्वार्थे पाशप् स्यादित्यर्थः । ९—तीयप्रत्ययान्तात्स्वार्थे ईकक् वा स्यात् । पक्षे 'पूरणाद् भागे तीयादन्' इति अन्प्रत्ययः । द्वितीय एव=**द्वैतीयिकः**, कित्वादादिवृद्धिः । एवं=**तार्तीयिकः** । १०—विद्यावृत्तेस्तीयप्रत्ययान्तादीकक् नेत्यर्थः ।

**२१२१ एकादाकिनिच्चासहाये ५ । ३ । ५२॥**

चात्कन्लुकौ । एकः, एकाकी, एककः ।

**२१२२ भूतपूर्वे चरट् । ५ । ३ । ५३ ॥**

आढ्यो भूतपूर्वः—आढ्यचरः ।

**२१२३ षष्ठ्या रूप्य च । ५ । ३ । ५४ ॥**

षष्ठ्यन्ताद् भूतपूर्वे रूप्यः स्याच्चरट् च । कृष्णस्य भूतपूर्वो गौः=कृष्ण-रूप्यः, कृष्णचरः ।

**२१२४ अतिशायने तमबिष्ठनौ । ५ । ३ । ५५ ॥**

अतिशयविशिष्टार्थे एतौ स्तः । अयमेषामतिशयेनाढ्यः=आढ्यतमः । लघुतमो, लघिष्ठः ।

**२१२५ तिङश्च । ५ । ३ । ५६ ॥**

तिङन्तादतिशये द्योत्ये तमप् स्यात् ।

**२१२६ तरप्तमपौ घः । १ । १ । २२ ॥**

**२१२७ किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे । ५ । ४ । ११ ॥**

किम् एदन्तात्तिङोऽव्ययाच्च यो घस्तदन्तादामुः स्यान्न तु द्रव्यप्रकर्षे । किन्तमाम् । प्राह्णेतमाम् । प्रगेतमाम् । पचतितमाम् । उच्चैस्तमाम् । द्रव्य-प्रकर्षे तु उच्चैस्तमस्तरुः ।

**२१२८ द्विवचन-विभज्योपपदे तरबीयसुनौ ५ । ३ । ५७ ॥**

द्वयोरेकस्याऽतिशये विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः । पूर्वयोर-पवादः । अयमनयोरतिशयेन लघुतरो, लघीयान् । उदीच्याः प्राच्येभ्यः

---

१—असहायवाचकादेकशब्दात्स्वार्थे आकिनिच् प्रत्ययः स्यादित्यर्थः, चकारात्पक्षे—कन् प्रत्ययः, कनो लुक् च । २—भूतपूर्वे वर्तमानात्प्रातिप-दिकात्स्वार्थे चरट् प्रत्ययः स्यात् । ३—अतिशयेन लघुर्लघिष्ठः, इष्ठन्प्रत्यये ओर्गुणे प्राप्ते इष्ठेमेयस्सु—इत्यनुवृत्तौ टेरिति टिलोपः । ४—एतौ घसञ्ज्ञौ स्त इत्यर्थः । ५—एतौ=तरप्—ईयसुन्प्रत्ययावित्यर्थः । ६—पूर्वयोः=तरप्—तमपो-रित्यर्थः । ७—अतिशयेन लघुरिति=लघीयान् । ईयसुन्प्रत्यय उगित्वान्नुम्, सान्तेति दीर्घो हल्ङ्यादिसंयोगान्तलोपौ । ८—विभज्योपपदे उदाहरति—

**उदीच्याः प्राच्येभ्य इत्यादि ।**

पटवः-पटुतराः, पटीयांसः ।

**२१२९ अजादी गुणवचनादेव ५ । ३ । ५८ ॥**

इष्ठनीयसुनौ । नेह । पाचकतरः, पाचकतमः ।

**२१३० प्रशस्यस्य श्रः । ५ । ३ । ६० ॥**

इष्ठेयसोः परतः ।

**२१३१ प्रकृत्यैकाच् ६ । ४ । ६३ ॥**

इष्ठादिष्वेकाच् प्रकृत्या स्यात् । श्रेष्ठः, श्रेयान् ।

**२१३२ ज्य च ५ । ३ । ६१ ॥**

प्रशस्यस्य ज्यादेश इष्ठेयसोः । ज्येष्ठः ।

**२१३३ ज्यादादीयसः ६ । ४ । १६० ॥**

'आदेः परस्य' । ज्यायान् ।

**२१३४ वृद्धस्य च ५ । ३ । ६२ ॥**

ज्यादेश अजाद्योः । ज्येष्ठः, ज्यायान् ।

**२१३५ अन्तिक-बाढयोर्नेद-साधौ ५ । ३ । ६३ ॥**

अजाद्योरिष्ठेयसोः । नेदिष्ठः, नेदीयान् । साधिष्ठः, साधीयान् ।

**२१३६ स्थूल-दूर-युव-ह्रस्व-क्षिप्र-क्षुद्राणां यणादिपरं पूर्वस्य च गुणः । ६ । ४ । १५६ ॥**

---

१-तरप्-तमपौ-इष्ठनीयसुनाविति चत्वारः प्रत्यया अनुक्रान्ताः तेषां मध्ये यौ अजादी इष्ठनीयसुनौ तौ गुणवाचकादेव स्त इत्यर्थः । २-प्रशस्य-शब्दस्य श्रादेशः । इष्ठे-ईयसुनि च परतः । अतिशयेन प्रशस्यः=**श्रेष्ठः, श्रेयान्** । टेरिति टिलोपे प्राप्ते 'प्रकृत्यैकाच्' इति प्रकृतिभावः । ३-अति-शयेन प्रशस्यो=ज्येष्ठः । ४-ज्यात् आत् इतिच्छेदः । ज्यात्परस्य ईयस आकारादेशः स्यादित्यर्थः । अन्तादेशत्वे प्राप्ते-आह-**आदेः परस्येति** । अतिशयेन प्रशस्यो=**ज्यायान्**, ईयस ईकारस्याऽऽकारादेशः । ५-इष्ठेयसो-रिति भावः । अतिशयेन वृद्धो=**ज्येष्ठः, ज्यायान्** । सिद्धिः पूर्ववत् । ६-अन्तिकबाढशब्दयोः क्रमेण नेद—साध एतावादेशौ स्त इष्ठेयसोः परतः । अतिशयेन अन्तिको=**नेदिष्ठः, नेदीयान्** । अतिशयेन बाढः=भृशः=**साधिष्ठः, साधीयान्** ।

एषां यणादिपरं लुप्यते पूर्वस्य च गुण इष्ठादिषु। स्थविष्ठः। दविष्ठः। यविष्ठः। ह्रसिष्ठः। क्षेपिष्ठः। क्षोदिष्ठः। एवमीयसुन्। ह्रस्वक्षिप्रक्षुद्राणां पृथ्वादित्वाद्-ह्रसिमा। क्षेपिमा। क्षोदिमा।

**२१३७ प्रियस्थिर-स्फिरोरु-बहुल-गुरु-वृद्ध-तृप्र-दीर्घ-वृन्दारकाणां प्र-स्थ-स्फ-वर्बंहि-गर्वर्षि-त्रप्-द्राघि-वृन्दाः ६। ४। १५७॥**

प्रियादीनां प्रादयः स्युरिष्ठादिषु। प्रेष्ठः। स्थेष्ठः। स्फेष्ठः। वरिष्ठः। बंहिष्ठः। गरिष्ठः। वर्षिष्ठः। त्रपिष्ठः। द्राघिष्ठः। वृन्दिष्ठः। एवमीयसुन्। प्रियोरुबहुलगुरुदीर्घाणां पृथ्वादित्वात्प्रेमेत्यादि।

**२१३८ बहोर्लोपो भू च बहोः ६। ४। १५८॥**

बहोः परयोरिष्ठेयसोर्लोपः स्याद्बहोश्च भूरादेशः। भूमा, भूयान्।

**२१३९ इष्ठस्य यिट् च ६। ४। १५९॥**

बहोः परस्य इष्ठस्य लोपो यिडागमश्च। भूयिष्ठः।

---

१—यण् आदिर्यस्येति विग्रहः। परमिति यणादीत्यस्य विशेषणम्, परभूतं यणादि इत्यर्थः। **पूर्वस्येति**, पूर्वत्वं यणपेक्षया बोद्धव्यम्। अतिशयेन स्थूलः=**स्थविष्ठः**। इष्ठनि ल इत्यस्य लोपे ऊकारस्य गुणावादेशौ। एवमग्रेऽपि। अतिशयेन दूरः=**दविष्ठः**। अतिशयितो युवा=**यविष्ठः**। अतिह्रस्वः=**ह्रसिष्ठः**। अतिक्षिप्रः=**क्षेपिष्ठः**, अतिक्षुद्रः=**क्षोदिष्ठः**। एवम्-ईयसुनि=**स्थवीयान्** इत्यादि। २—'पृथ्वादिभ्य इमनिच्'—इति इमनिच्प्रत्यये रूपाणि—**ह्रसिमा**। **क्षेपिमा**। **क्षोदिमा**। इमनिजित्यस्यापि 'स्थूलदूरेति' सूत्रेऽनुवृत्तेर्यणादिलोपो गुणश्च तत्रापि। ३—प्रियस्य प्रः। स्थिरस्य स्थः। स्फिरस्य स्फः। उरोर्वर्। बहुलस्य बंहिः। गुरोर्गर्। वृद्धस्य वर्षिरादेश इकार उच्चारणार्थः। तृप्रस्य त्रप्। दीर्घस्य द्राघिः, इकार उच्चारणार्थः। वृन्दारकस्य वृन्दः, इति विवेकः। ४—इमनिच्प्रत्यये प्रादेशे **प्रेमा** इत्यादिरूपाणि। ५—आदेः परस्येति प्रथमप्रत्यययोरादिलोपः। **भूमा** पृथ्वादित्वादिमनिच् प्रकृतेर्भूभावः प्रत्ययादेरिकारस्य लोपः। बहुत्वमित्यर्थः। ईयसुनि=**भूयान्**। ६—बहुशब्दादिष्ठनि इलोपे यिडागमे भूरादेशे च **भूयिष्ठः**।

**२१४० विन्मतोर्लुक् ५ । ३ । ६५ ॥**

इष्ठेयसोः परतः । अतिशयेन स्रग्वी-स्रजिष्ठः । अतिशयेन त्वग्वान्-त्वचिष्ठः, त्वचीयान् ।

**२१४१ प्रशंसायां रूपप् ५ । ३ । ६६ ॥**

सुबन्तात्तिङन्ताच्च । प्रशस्तः पटुः-पटुरूपः । पचतिरूपम् ।

**२१४२ ईषदसमाप्तौ कल्पब्-देश्य-देशीयरः ५ । ३ । ६७ ॥**

ईषदूनो विद्वान्-विद्वत्कल्पः, विद्वद्देश्यः, विद्वद्देशीयः । पचतिकल्पम् ।

**२१४३ विभाषा सुपो बहुच् पुरस्तात्तु ५ । ३ । ६८ ॥**

ईषदूनः पटुर्बहुपटुः, पटुकल्पः । सुपः किम्—यजतिकल्पम् ।

**२१४४ प्रागिवात्कः ५ । ३ । ७० ॥**

इवे प्रतिकृताविव्यतः प्राक्काधिकारः ।

**२१४५ अव्ययसर्वनाम्नामकच् प्राक् टेः ५ । ३ । ७१ ॥**

कापवादः । तिङश्चेत्यनुवर्तते ।

**२१४६ कस्य च दः ५ । ३ । ७२ ॥**

कान्ताव्ययस्य दादेशोऽकच्च ।

**२१४७ अज्ञाते ५ । ३ । ७३ ॥**

---

१-विनो मतुपश्च लुक् स्यादिष्ठेयसोः परतः । २-**स्रजिष्ठ** इत्यत्र विनो लोपः । **त्वचिष्ठ** इत्यत्र मतुपो लुक् । ३-प्रशस्ता पाकक्रियेत्यर्थः । ४-ईषदसमाप्तिविशिष्टेऽर्थे विद्यमानात्सुबन्तात्तिङन्ताच्च स्वार्थे कल्पप्-देश्य-देशीयर् इत्येते प्रत्ययाः स्युः । **पचतिकल्पम्**=असम्पूर्णा पाकक्रियेत्यर्थः । ५-ईषदसमाप्तिविशिष्टेऽर्थे सुबन्ताद् बहुच्प्रत्ययो वा स्यात् स च प्रागेव न तु परत इत्यर्थः । **बहुपटुः**, पटुशब्दात्सुबन्तात्प्राग् बहुचि कृते प्रातिपदिकावयवत्वात्सुपो लुकि समुदायात्पुनः सुबुत्पत्तिः । ६-अव्ययसर्वनाम्नां तिङन्तानाञ्च टेः प्रागकच्प्रत्ययः स्यादित्यर्थः । ७-अज्ञातेऽर्थे विद्यमानात्सुबन्तात्स्वार्थे कप्रत्ययः स्याद् अव्ययसर्वनाम्नां तिङन्तानाञ्च टेः प्रागकच् । **अश्वकः**, इत्यत्र कप्रत्ययः । अव्ययेभ्योऽकचमुदाहरति=**उच्चकैः**, **नीचकैः**, **सर्वके**=सर्वे । तिङन्तादकचमुदाहरति=**पचतकि**=पचति । अव्ययादकचमुदाहरति=**धकित्**=धिक् ।

कस्यायमश्वोऽश्वकः । उच्चकैः । नीचकैः । सर्वके । पचतकि । धकित् ।

**२१४८ कुत्सिते ५ । ३ । ७४ ॥**

कुत्सितोऽश्वोऽश्वकः ।

**२१४९ अल्पे ५ । ३ ८५ ।**

अल्पं तैलं–तैलकम् । ह्रस्वो वृक्षो–वृक्षकः ( अस्मिन् प्रकरणे इलादौ प्रत्यये द्वितीयादचः परस्य लोपो वा वाच्यः ) । देवदत्तकः, देवकः, ( लोपः पूर्वपदस्य च ) दत्तकः । (विनाऽपि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वा वाच्यः) । सत्यभामा, भामा, सत्या ।

**२१५० कुटी-शमी-शुण्डाभ्यो रः ५ । ३ । ८८ ॥**

ह्रस्वा कुटी–कुटीरः । शमीरः । शुण्डारः ।

**२१५१ कुत्वा डुपच् ५ । ३ । ८९ ॥**[2]

ह्रस्वा कुतूः=कुतुपः । 'कुतूः कृत्तेः स्नेहपात्रं ह्रस्वा सा कुतुपः पुमान्' ।

**२१५२ कासू-गोणीभ्यां ष्टरच् ५ । ३ । ९० ॥**[3]

आयुधविशेषः कासूः । ह्रस्वा सा कासूतरी । गोणीतरी ।

**२१५३ वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे ५ । ३ । ९१ ॥**[4]

वत्सतरः । उक्षतरः । अश्वतरः । ऋषभतरः ।

**२१५४ किं-यत्तदोर्निर्धारणे द्वयोरेकस्य डतरच् ५।३।९२॥**[5]

अनयोः कतरो वैष्णवः । यतरः । ततरः ।

**२१५५ वा बहूनां जातिपरिप्रश्ने डतमच् ५ । ३ । ९३ ॥**[6]

१–एभ्यो रप्रत्ययः स्याद् ह्रस्वार्थे । २–ह्रस्वार्थे इति शेषः । ३–ह्रस्वार्थे इति शेषः । **कासूतरी,** ष्टरचः षित्वात् 'षिद्गौरादिभ्यश्च' इति ङीष् । ४–ष्टरजिति शेषः । तनुर्वत्सो=**वत्सतरः** । तनुरुक्षा–उक्षतरः । एवम्—अश्वतरः । ऋषभतरः । ५–द्वयोरेकस्य निर्धारणे गम्ये निर्धार्यमाणवाचिभ्यः किमादिभ्यो डतरच् स्यादित्यर्थः । **कतरः,** डित्वाट्टिलोपः । एवम्–यत्–शब्दाद्=**यतरः** । तद्शब्दात् **ततरः** । ६–जातिश्च परिप्रश्नश्चेति समाहारद्वन्द्वः । जातौ परिप्रश्ने च गम्ये बहूनामेकस्य निर्धारणे निर्धार्यमाणवाचिभ्यो वा डतमजित्यर्थः ।

जातिपरिप्रश्न इति प्रत्याख्यातमाकरे। कतमो भवतां कठः। यतमः। ततमः। वाग्रहणमकजर्थम्।

**२१५६ एकाच्च प्राचाम् ५। ३। ९४॥**

डतरच् डतमच्च स्यात्। अनयोरेकतरो मैत्रः। एषामेकतमः।[1]

॥ इति प्राग्गिवीयाः॥

## अथ स्वार्थिकाः।

**२१५७ इवे प्रतिकृतौ ५। ३। ९६॥**

कन्स्यात्।[2] अश्व इव प्रतिकृतिरश्वकः।

**२१५८ शाखादिभ्यो यः ५। ३। १०३॥**

शाखेव शाख्यः।[3] मुख्यः। जघन्यः। अग्र्यः। शरण्यः।

**२१५९ कुशाग्राच्छः ५। ३। १०५॥**

कुशाग्रीयः।[4]

**२१६० तत्प्रकृतवचने मयट् ५। ४। २१॥**

प्राचुर्येण प्रस्तुतं=प्रकृतं तस्य वचनं=प्रतिपादनम्। भावे अधिकरणे वा ल्युट्। आद्ये[5] प्रकृतमन्नम्=अन्नमयम्। अपूपमयम्।[6] द्वितीये[7]–अन्नमयो यज्ञः। अपूपमयं–पर्व।

**२१६१ संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् ५। ४। १७॥**

अभ्यावृत्तिर्जन्म[8] क्रियाजन्मगणनवृत्तेः संख्यायाः स्वार्थे कृत्वसुच्। पञ्चकृत्वो भुङ्क्ते। संख्यायाः किम्—भूरिवारान्भुङ्क्ते।

---

१–चेपार्थस्य तु अनभिधानान्न ग्रहणमिति तदाशयः॥ इति प्राग्गिवीयाः॥

२–इवार्थे (सादृश्ये) वर्त्तमानात्प्रातिपदिकात् कन् स्यात्प्रतिकृतौ। मृदादिनिर्मिता प्रतिमा=प्रतिकृतिः। ३–इवार्थे इति शेषः। मुखमिव=मुख्यः जघनमिव=जघन्यः। अग्रमिव=अग्र्यः। शरणमिव=शरण्यः। सर्वत्र यस्येति चेत्यकारलोपः। ४–कुशाग्रमिव=कुशाग्रीयः, छप्रत्यये छस्येय्। ५–भावार्थे ल्युटि। ६–प्रकृतम् अपूपम्=अपूपमयम्। ७–अधिकरणार्थे ल्युटि। ८–अभ्यावृत्तिशब्देन यदि द्वितीयादिप्रवृत्तिर्गृह्यते तदा चतुर्वारं पाकप्रवृत्तौ त्रिःपचतीति स्यात्। इत्यत आह—अभ्यावृत्तिः=जन्म=उत्पत्तिरिति यावत्। वृतुधातुरत्रोत्पत्त्यर्थक इति भावः।

**२१६२ द्वित्रिचतुर्भ्यः सुच् ५ । ४ । १८ ॥**

कृत्वसुचोऽपवादः । द्विर्भुङ्क्ते । त्रिर्भुङ्क्ते । 'रात्सस्य' । चतुर्भुङ्क्ते ।

**२१६३ एकस्य सकृच्च ५ । ४ । १९ ॥**

सकृदादेशः चात्सुच् । सकृद्भुङ्क्ते ।

**२१६४ देवतान्ताात्तादर्थ्ये यत् ५ । ४ । २४ ॥**

तदर्थ एव तादर्थ्यम् । स्वार्थे ष्यञ् । अग्निदेवतायै इदमग्निदेवत्यम् । पितृदेवत्यम् ।

**२१६५ पादार्घाभ्यां च ५ । ४ । २५ ॥**

पादार्थमुदकं पाद्यम् । अर्घ्यम् ।

**२१६६ अतिथेर्ञ्यः ५ । ४ । २६ ॥**

अतिथये इदमातिथ्यम् । ( नवस्य नू आदेशस्त्नप्तनप्खाश्च वक्तव्याः ) स्वार्थे । नूत्नम् , नूतनम् , नवीनम् । ( भाग-रूप-नामभ्यो धेयः ) । भागधेयम् । रूपधेयम् । नामधेयम् ( आग्नीध्र-साधारणादञ् ) । आग्नीध्रम् । साधारणम् ।

**२१६७ देवात्तल् ५ । ४ । २७ ॥**

देव एव—देवता ।

**२१६८ अवेः कः ५ । ४ । २८ ॥**

अविरेव—अविकः ।

---

१–क्रियाऽभ्यावृत्तिगणने इत्येव । चतुर्शब्दात्सुच्प्रत्यये रात्सस्येति सलोपः, तदाह मूले=रात्सस्येति । २–देवतान्तात्प्रातिपदिकात् तादर्थ्ये यत्प्रत्ययः स्यादित्यर्थः । ३–तादर्थ्यशब्दे स्वार्थे ष्यञ् । ४–तादर्थ्ये एव यत्स्यादिति शेषः । ५–अतिथिशब्दात्तादर्थ्ये ञ्यः प्रत्ययः स्यादित्यर्थः । ६–नवशब्दात्स्वार्थे, त्नप् , तनप् , खश्चेत्येते प्रत्ययाः स्वार्थे स्युः । नवस्य 'नू' आदेशश्च । नवमेव नूत्नः, नूतनः, नवीनः । ७–स्वार्थे इत्येव । भाग एव=**भागधेयम्** । रूपमेव=**रूपधेयम्** । नामैव=**नामधेयम्** । ८–स्वार्थे इति शेषः । अग्नीध्रमेव–आग्नीध्रम् । ञित्वादादिवृद्धिः । साधारणमेव–साधारणम् । अञि स्वरे भेदः । अजन्तत्वात्स्त्रियां ङीप् आग्नीध्री, साधारणी । ९–स्वार्थे । तलन्तं स्त्रियां–**देवता** ।

**२१६९ यावादिभ्यः कन् ५ । ४ । २९ ॥**

याव एव—यावकः । मणिकः । ( सर्वप्रातिपदिकेभ्यः स्वार्थे कन् ) । बहुतरकम्[1] ।

**२१७० मृदस्तिकन् ५ । ४ । ३९ ॥**

मृदेव—मृत्तिका[2] ।

**२१७१ स-स्नौ प्रशंसायाम्[3] ५ । ४ । ४० ॥**

रूपपोऽपवादः । प्रशस्ता मृन्मृत्सा, मृत्स्ना ।

**२१७२ प्रज्ञादिभ्यश्च ५ । ४ । ३८ ॥**

अण्[4] स्यात् । प्रज्ञ एव—प्राज्ञः । दैवतः । बान्धवः ।

**२१७३ पूगाञ्ञ्योऽग्रामणीपूर्वात्[5] ५ । ३ । ११२ ॥**

स्वार्थे । नानाजातीया अनियतवृत्तयोऽर्थकामप्रधानाः सङ्घाः=पूगाः । लोहितध्वज्यः ।

**२१७४ ञ्यादयस्तद्राजाः[6] ५ । ३ । ११९ ॥**

'तद्राजस्ये'ति लुक् । लोहितध्वजाः । "व्राते"[7] कापोतपाक्यः । कपोतपाकाः । च्फञ्[8] । कौञ्जायना इत्यादि ।

---

१-बहुतरमेव-बहुतरकम् । २-मृद्शब्दात्स्वार्थे तिकन्प्रत्यये खरि चेति चर्त्वे स्त्रियां टापि=**मृत्तिका** । ३-मृदः प्रशंसायां सप्रत्ययः स्नप्रत्ययश्च स्यादित्यर्थः । ४-स्वार्थे एव । देवतैव-दैवतः । बन्धुरेव-बान्धवः । ओर्गुणः, अवादेश आदिवृद्धिः । ५-पूगवाचकात्स्वार्थे ञ्यः प्रत्ययः स्यात् । ग्रामणीवाचकपूर्वावयवकात्तु न पूगेति नस्वरूपग्रहणं व्याख्यानात्=**लोहितध्वज्यः** । लोहिता ध्वजाः यस्य पूगस्य स लोहितध्वजः, स एव लोहितध्वज्यः । ६-एते तद्राजसञ्ज्ञाः स्युरित्यर्थः । तेन बहुवचने ञ्यप्रत्ययस्य लुकि=**लोहितध्वजः** । ७-उदाहरणसूचनमिदम् । **व्राते** इति । **कपोतपाक्यः**—कपोतान् भक्षणाय पचति, इति कपोतपाकः, पचेः कर्तरि घञ् 'चजो'रिति कुत्वम् । व्रातवाचित्वेन स्वार्थे 'व्रातच्फञोरस्त्रियाम्' इति ञ्यप्रत्यये कापोतपाक्यः, तद्राजत्वाद् बहुत्वे लुकि=**कपोतपाकाः** । ८-च्फञ्-इति, उदाहरणसूचनम् । कुञ्जशब्दात् "गोत्रे कुञ्जादिभ्यः" च्फञ्, फस्य-आयन्, ततः स्वार्थे ञ्यप्रत्यये कौञ्जायन्यः, बहुत्वे तद्राजत्वाल्लुकि=**कुञ्जायनाः** ।

**२१७५ बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ५।४।४२॥**

बहूनि ददाति–बहुशः। अल्पशः। (बह्वल्पार्थान्मङ्गलामङ्गलवचनम्) नेह। बहु ददात्यनिष्टेषु। अल्पं ददात्याभ्युदयिकेषु।

**२१७६ संख्यैकवचनाच्च वीप्सायाम् ५।४।४३॥**

द्वौ द्वौ ददाति–द्विशः। माषं माषं ददाति–माषशः। परिमाणशब्दा वृत्तावेकार्था एव। संख्यैकवचनात्किम्—घटं घटं ददाति। वीप्सायां किम्–द्वौ ददाति। कारकादित्येव। द्वयोर्द्वयोः स्वामी।

**२१७७ प्रतियोगे पञ्चम्यास्तसिः ५।४।४४॥**

प्रतिना कर्मप्रवचनीयेन योगे या पञ्चमी विहिता तदन्तात्तसिः। प्रद्युम्नः कृष्णतः प्रति। (आद्यादिभ्यस्तसेरुपसंख्यानम्)। आदौ—आदितः। मध्यतः। पृष्ठतः। पार्श्वतः। आकृतिगणोऽयम्। स्वरेण–स्वरतः। वर्णतः।

१–बह्वर्थात्–अल्पार्थाच्च कारकाभिधायिनः शब्दात्स्वार्थे शस्प्रत्ययो वा स्यादित्यर्थः। **बहुशः**, अव्ययमिदम्, 'शस्-प्रभृतयः प्राक् समानान्तेभ्यः' इत्युक्तेः। अल्पं ददाति=**अल्पशः**–ददाति। २–बह्वर्थात्–मङ्गले गम्ये एव, अल्पार्थाच्चापि—मङ्गले गम्ये एव शस् इति वार्तिकार्थः। इह—अमङ्गलग्रहणं व्यर्थमिति। ३–अनिष्टेषु बहुदानं न मङ्गलमिति न शस्। एवम्–आभ्युदयिकेषु–अल्पदानं न मङ्गलमिति न शस्। सूत्रेऽर्थग्रहणात्पर्यायेभ्योऽपि भूरिशः, स्तोकशः, इत्यादावपि शस्। ४–सङ्ख्यावाचकाद् अन्यस्माच्चैकत्वविशिष्टवाचकात् कारकाभिधायिनः प्रातिपदिकाद् वीप्सायां शस् स्यादित्यर्थः। **द्वौ द्वौ ददाति**, 'नित्यवीप्सयो'रिति द्विर्वचनम्। **द्विशः** इत्यत्र तु न द्वित्वम्, शस्-प्रत्ययेनैव वीप्साया उक्तत्वात्। ५–एकार्थोदाहरणम्=**माषशः**, माषशब्दो परिमाणविशेषवाची, एकार्थत्वं कथमित्यत्राह–**परिमाणशब्दाः** इत्यादि। वृत्तौ=समासतद्धितादौ। ६–नात्र कारकाभिधायिनी सङ्ख्या किन्तु सम्बन्धाभिधायिनी। अतो न शस्। ७–'प्रतिः प्रतिनिधिप्रतिदाने च' इति कर्मप्रवचनीयसंज्ञायां "प्रतिनिधिप्रतिदाने च यस्मात्" इति सूत्रेण विहिता पञ्चमीति भावः। **कृष्णतः प्रति**, कृष्णादित्यर्थः, कृष्णः प्रतिनिधिरिति भावः। ८–अयं सार्वविभक्तिकः तसिः।

**२१७८ कृभ्वस्तियोगे संपद्यकर्तरि च्विः ५ । ४ । ५० ॥**

(अभूततद्भाव इति वक्तव्यम्) । विकारात्मतां प्राप्नुवत्यां प्रकृतौ वर्तमानाद्विकारशब्दात्स्वार्थे च्विर्वा स्यात्करोत्यादिभिर्योगे ।

**२१७९ अस्य च्वौ ७ । ४ । ३२ ॥**

ईत् । अकृष्णः कृष्णः सम्पद्यते तं करोति-कृष्णीकरोति । ब्रह्मीभवति । गङ्गीस्यात् । (अव्ययस्य च्वावीत्वं नेति वाच्यम्) । दोषाभूतमहः । दिवाभूता=रात्रिः ।

**२१८० क्यच्व्योश्च ६ । ४ । १५२ ॥**

हलः परस्यापत्ययकारस्य लोपः क्ये च्वौ च परतः । गार्गीभवति ।

**२१८१ च्वौ च ७ । ४ । २६ ॥**

दीर्घः । शुचीभवति । पटूस्यात् ।

**२१८२ अरुर्मनश्चक्षुश्चेतो-रहो-रजसां लोपश्च ५ । ४ । ५१ ॥**

---

१-**सम्पद्यकर्तरि,**—सम्पदनं=सम्पद्यः, निपातनात् पदधातोः शप्रत्यये रूपम् (मध्ये श्यन्) । सम्पद्यस्य कर्ता इति षष्ठीसमासः, सम्पद्यमाने वर्तमानादिति भावः । केन रूपेण कस्य सम्पद्यमानतेति चेत्, अभूत-तद्भावेति वार्तिकात् प्रकृतेर्विकाररूपेण सम्पद्यमानतां गृहाण, तथा च योऽर्थः फलति स वृत्तौ स्पष्टः । २-**अभूतेति,** येन रूपेण प्रागभूतं यद्वस्तु, तस्य तद्रूपप्राप्तिः=अभूततद्भावः, तस्मिन् गम्ये च्विः स्यादित्यर्थः । ३-विकारवाचकशब्दस्य प्रकृतौ विद्यमानत्वं गौण्या वृत्त्या बोध्यम् । ४-डुकृञ् करणे, भू सत्तायाम्, अस भुवि-इति धातुभिर्योगे इत्यर्थः । ५-अवर्णस्य ईत्स्यात् च्वौ-इत्यर्थः । ६-**ब्रह्मीभवति**=अब्रह्म ब्रह्म सम्पद्यमानं भवतीत्यर्थः । **गङ्गीस्यात्**=अगङ्गा गङ्गात्वेन सम्पद्यमाना स्यादित्यर्थः । ७-अदोषा दोषा सम्पद्यमानमभूत्=**दोषाभूतम्**, दोषा-रात्र्यर्थेऽव्ययम् । एवम्—अदिवा दिवा सम्पद्यमानाऽभूत्=**दिवाभूता**, दिवा-दिनार्थेऽव्ययम् । ८-गार्ग्यो गार्ग्यः सम्पद्यमानो भवति=**गार्गीभवति** 'गर्गादिभ्यो यञि'ति यञन्तात् च्वौ,यकारलोपः । ९-च्वौ परे पूर्वस्य दीर्घ इत्यर्थः । अशुचिः शुचिः सम्पद्यमानो भवति=**शुचीभवति,** अपटुः पटुः सम्पद्यमानः स्यात्=**पटूस्यात्** । १०-**अरुस्**, मनस्, चक्षुष्, चेतस्, रहस्, रजस् इत्येतेषाम् अन्त्यस्य लोपः

चात् च्विः। अरूकरोति। उन्मनीकरोति। उच्चक्षूकरोति। विचेतीकरोति। विरहीकरोति। विरजीकरोति।

**२१८३ विभाषा साति कार्त्स्न्ये ५। ४। ५२॥**

च्वेर्विषये सातिर्वा स्यात्साकल्ये। 'सात्पदाद्योः'[1]। कृत्स्नं शस्त्रमग्निः सम्पद्यते—अग्निसाद्भवति, अग्नीभवति[2]। कार्त्स्न्ये किम्–एकदेशेन शुक्लीभवति पटः।

**२१८४ अभिविधौ संपदा च ५। ४। ५३॥**

सम्पदा[3] कृभ्वस्तिभिश्च योगे सातिर्वा व्याप्तौ। पक्षे–कृभ्वस्तियोगे च्विः सम्पदा तु वाक्यमेव। अग्निसात्सम्पद्यते अग्निसाद्भवति शस्त्रम्। अग्नीभवति। जलसात्सम्पद्यते—जलीभवति[4] लवणम्।

**२१८५ तदधीनवचने ५। ४। ५४॥**

सातिः, कृभ्वस्तिभिः सम्पदा च योगे। राजसात्करोति। राजधीनमित्यर्थः।

**२१८६ देये त्रा च ५। ४। ५५॥**

तदधीने देये त्रा स्यात्सातिश्च क्रादियोगे[5]। विप्राधीनं देयं करोति—विप्रत्राकरोति। विप्रत्रासम्पद्यते। पक्षे—विप्रसात्करोति। देये किम्—राजसाद्भवति राष्ट्रम्[6]।

**२१८७ देव-मनुष्य-पुरुष-पुरु-मर्त्येभ्यो द्वितीया-सप्तम्योर्बहुलम् ५। ४। ५६॥**

---

च्विप्रत्ययश्चेत्यर्थः। पूर्वेण सिद्धस्यैव च्वेः चकारेणानुवादः। अनरुः–अरुः सम्पद्यते तत्करोति=**अरूकरोति**, अन्त्यलोपे उकारस्य 'च्वौ' इति दीर्घः। एवमग्रेऽपि, अनुन्मनाः–उन्मना सम्पद्यते तं करोति—**उन्मनीकरोति**, च्वौ अन्त्यलोपे अत ईत्वम्। एवं सर्वत्र विग्रहादिकं बोध्यम्।

१–सूत्रेणानेन षत्वनिषेधः। २–पक्षे च्विः, अग्नीभवति 'च्वौ' इति दीर्घः। ३–सम्पदा=सम्पूर्वकपदधातुनेत्यर्थः। ४–सकलं जलमभिव्याप्नोतीति=जलीभवति। ५–क्रादियोगे=कृभ्वस्तियोगे। ६–नात्र देयमधीनं क्रियते –इति न त्रप्, किन्तु सातिरेव।

एभ्यो द्वितीयान्तेभ्यः सप्तम्यन्तेभ्यश्च त्रा स्यात् । देवत्रा[1] वन्दे रमे वा । बहुलोक्तेरन्यत्रापि[2] । बहुत्रा[3] जीवतो मनः ।

**२१८८ अव्यक्तानुकरणाद्द्व्यजवरार्धादनितौ डाच् ५।४।५७॥**

द्व्यच्-अवरं न्यूनं, न तु ततो न्यूनम्, अनेकाजिति यावत् । तादृशमर्धं यस्य तस्माद्[4] डाच् कृभ्वस्तिभिर्योगे । ( डाचि बहुलं द्वे भवतः ) । डाचि विवक्षिते द्वित्वम् । ( नित्यमाम्रेडिते डाचीति वक्तव्यम् ) । डाच्परं यदाम्रेडितं तस्मिन्परे पूर्वपरयोर्वर्णयोः पररूपं स्यात् । इति त-पयोः[5] पः । पटपटाकरोति[6] । अव्यक्तानुकरणात्किम्—ईषत्करोति । द्व्यजवरार्धात्किम्—श्रत्करोति । अवरेति किम्—खरटखरटाकरोति । अनितौ किम्—पटिति करोति ।

**२१८९ कृञो द्वितीय-तृतीय-शंब-बीजात्कृषौ ५।४।५८॥**

द्वितीयादिभ्यो डाच् कृञो योग एव कर्षणेऽर्थे । बहुलोक्तेरव्यक्तानुकरणादन्यस्य डाचि न द्वित्वम् । द्वितीयं तृतीयं कर्षणं करोति द्वितीयाकरोति, तृतीयाकरोति । शम्बाकरोति[7] । बीजाकरोति ।

**२१९० संख्यायाश्च गुणान्तायाः ५।४।५९॥**

द्विगुणाकरोति क्षेत्रम्[8] ।

**२१९१ समयाच्च यापनायाम् ५।४।६०॥**

---

१-देवान् वन्दे, देवेषु रमे इति वार्थः । एवं—मनुष्यान् गच्छति मनुष्यत्रा । पुरुषत्रा । पुरुबहुलपर्य्यायः । पुरुत्रा । मर्त्यत्रा । २-अन्यत्रापि देवादिभ्योऽन्यत्रापीत्यर्थः । ३-बहुत्रा=जीवतो मनः=जीवतो जन्तोर्मनो बहुषु विषयेषु गच्छति । बहून् विषयान् वा व्याप्नोतीत्यर्थः । ४-तस्माद्=अव्यक्तानुकरणादिति शेषः । ५-तकारपकारयोः पकार इत्यर्थः । ६-पटपटाकरोति पटदित्यनुकरणाद् डाचि द्वित्वे पूर्वतकारस्य पररूपे डित्वात् टिलोपे रूपम् । ७-शम्बशब्दः प्रतिलोमे । अनुलोमं कृष्टं क्षेत्रं प्रतिलोमं कर्षति=शम्बाकरोति । बीजेन सह कर्षति=बीजाकरोति । ८-कृञो योगे कृषौ गुणान्तात्सङ्ख्यावाचकात् डाच् स्यादित्यर्थः । द्विगुणाकरोति क्षेत्रम्=क्षेत्रकर्मकं द्विगुणं कर्षणं करोतीत्यर्थः । ९-समयशब्दाद् यापनायां गम्यमानायां डाच् स्यात्कृञो योगे ।

कृषाविति निवृत्तम् । समयाकरोति=कालं यापयतीत्यर्थः ।

**२१६२ सपत्र-निष्पत्रादतिव्यथने ५ । ४ । ६१ ॥**

सपत्राकरोति मृगम्=सपुङ्खशरप्रवेशनेन सपत्रं करोतीत्यर्थः । निष्पत्राकरोति=सपुङ्खस्य शरस्याऽपरपार्श्वे निर्गमनान्निष्पत्रं करोतीत्यर्थः । अतिव्यथने किम्—सपत्रं निष्पत्रं वा करोति भूतलम् ।

**२१६३ निष्कुलान्निष्कोषणे ५ । ४ । ६२ ॥**

निष्कुलाकरोति दाडिमम् । निर्गतं कुलम्=अन्तरवयवानां समूहो यस्मादिति बहुव्रीहेर्डाच् ।

**२१६४ सुख-प्रियादानुलोम्ये ५ । ४ । ६३ ॥**

सुखाकरोति, प्रियाकरोति गुरुम्=अनुकूलाचरणेनानन्दयतीत्यर्थः ।

**२१६५ दुःखात्प्रातिलोम्ये ५ । ४ । ६४ ॥**

दुःखाकरोति स्वामिनम्=पीडयतीत्यर्थः ।

**२१६६ शूलात्पाके ५ । ४ । ६५ ॥**

शूलाकरोति=शूलेन पचतीत्यर्थः ।

**२१६७ सत्यादशपथे ५ । ४ । ६६ ॥**

सत्याकरोति भाण्डं वणिक्=क्रेतव्यमिति तथ्यं करोतीत्यर्थः । शपथे तु सत्यं करोति विप्रः ।

**२१६८ मद्रात्परिवापणे ५ । ४ । ६७ ॥**

मद्रशब्दो मङ्गलार्थः । परिवापणं=मुण्डनम् । मद्राकरोति कुमारम्=माङ्गल्यमुण्डनेन संस्करोतीत्यर्थः । ( भद्राच्चेति वक्तव्यम् ) । भद्राकरोति । अर्थः प्राग्वत् ।

---

१—सपत्र–निष्पत्रशब्दाभ्यामतिव्यथने कृञो योगे डाच् स्यादित्यर्थः । २—डाजिति शेषः । निष्कोषणम्=अन्तर्गताऽवयवानां बहिष्करणम् । ३—सुखशब्दात् प्रियशब्दाच्च डाच् स्यादानुलोम्ये कृञो योगे इत्यर्थः । ४—डाजिति शेषः । आराध्यप्रतिकूलाऽऽचरणम्=प्रातिलोम्यम् । ५—अत्र करोतिः पाकेऽर्थे वर्तते । ६—अत्र सत्यशब्दस्तथ्ये वर्तते । ७—एतावतैव मूल्येन क्रेतव्यमिति नातोऽधिकमूल्येनेत्येवं यथाभूतार्थं वदतीत्यर्थः । ८—शपथं करोतीत्यर्थः । ९—डाच् स्यादिति शेषः । १०—भद्रशब्दाच्च डाजित्यर्थः । ११—माङ्गल्यमुण्डनेन (चौलेन) संस्करोतीत्यर्थः । भद्र–मद्रशब्दौ मङ्गलार्थौ पर्यायौ ।

परिवापणे किम्—भद्रं करोति, भद्रं करोति । ॥ इति तद्धितप्रक्रिया ॥

## अथ द्विरुक्तप्रक्रिया ।

**२१९९ सर्वस्य द्वे ८ । १ । १ ॥**

इत्यधिकृत्य ।

**२२०० परेर्वर्जने ८ । १ । ५ ॥**

परेर्वर्जनेऽर्थे द्वे स्तः । परि परि वङ्गेभ्यो वृष्टो देवः ॥

**२२०१ उपर्यध्यधसः सामीप्ये ८ । १ । ७ ॥**

उपर्युपरि ग्रामम्, ग्रामस्योपरिष्टात् समीपदेशे इत्यर्थः । अध्यधि-सुखम्, सुखस्योपरिष्टात्समीपकाले दुःखमित्यर्थः । अधोऽधो-लोकम्, लोकस्याधस्तात् समीपदेशे इत्यर्थः ।

**२२०२ वाक्यादेरामन्त्रितस्यासूया-सम्मति-कोप-कुत्सन-भर्त्सनेषु ८ । १ । ८ ॥**

सुन्दर ! सुन्दर !! वृथा ते सौन्दर्यम् । देव ! देव !! वन्योऽसि । दुर्विनीत ! दुर्विनीत !! इदानीं ज्ञास्यसि । धानुष्क ! धानुष्क !! वृथा ते धनुः । चोर ! चोर !! घातयिष्यामि त्वाम् ।

**२२०३ एकं बहुव्रीहिवत् ८ । १ । ९ ॥**

द्विरुक्त एकशब्दो बहुव्रीहिवत् । तेन सुब्लोपपुंवद्भावौ । एकैकमक्षरम् ।

---

१—क्षेमं करोतीत्यर्थः । परिवापणस्य—( मुण्डनस्य )—अप्रतीतेर्न डाच् । ॥ इति तद्धितप्रक्रिया ॥

२—"अपपरी वर्जने" इति परीत्यस्य कर्मप्रवचनीयता, 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी । वङ्गान् परित्यज्य=(अन्यत्र) वृष्ट इत्यर्थः । ३—उपरि-अधि-अधः, इत्येतेषां सामीप्ये ( देशकृते कालकृते वा ) गम्ये द्वे स्तः, इत्यर्थः । ४—धिगुपर्यादिष्विति द्वितीया । एवमग्रेऽपि । ५—सम्बोधनप्रथमान्तस्य 'साऽऽमन्त्रितम्' इत्यनेन—आमन्त्रितसञ्ज्ञा । वाक्यादौ प्रयुज्यमानस्य आमन्त्रितस्य असूया—सम्मति—कोप—कुत्सन-भर्त्सनेषु गम्येषु द्वे स्तः, इत्यर्थः । ६—असूयोदाहरणम् । ७—सम्पत्तौ—देव देवेति । कोपे=दुर्विनीतेत्यादि । कुत्सने—धानुष्केति । भर्त्सने—चोर चोरेति । ८—एकम्—इत्यस्य द्वित्वे-एकम्-एकम् इति स्थिते 'सुपो धातुप्रातिपदिकयो'रिति सुपो लुकि पुनः प्राति-

इह द्वयोरपि सुपोर्लुकि सति बहुव्रीहिवद्भावादेव[1] प्रातिपदिकत्वात्समुदायात्सुप् एकैकया[2]ऽऽहुत्या ।

**२२०४ आबाधे च ८ । १ । १० ॥**

पीडायां द्वे स्तो बहुव्रीहिवच्च । गतगतः । गतगता[3] ।

**२२०५ प्रकारे गुणवचनस्य ८ । १ । १२ ॥**

सादृश्ये द्योत्ये गुणवचनस्य द्वे स्तस्तच्च कर्मधारयवत्[4] । पटुपट्वी । पटुपटुः[5]=पटुसदृशः, ईषत्पटुरिति यावत् । ( आनुपूर्व्ये द्वे वाच्ये ) । मूले मूले[6] स्थूलः । (संभ्रमेण[7] प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्धः[8]) । सर्प २ बुध्यस्व २ । सर्प ३ बुध्यस्व ३ । ( कर्मव्यतिहारे[9] सर्वनाम्नो द्वे वाच्ये । समासवच्च बहुलम् ) । बहुलग्रहणादन्यपरयो[10]र्न समासवत् । इतरशब्दस्य तु नित्य[11]म् । ( असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्यः ) । अन्योन्यं[12]

---

पदिकत्वेन समुदायात् सुप् । **एकैकम्** ।

१–कृत्तद्धितसमासाश्चेत्यनेन प्रातिपदिकत्वम् । सुब्लुक उदाहरणमेतत् । २–पुंवद्भावोदाहरणमिदम्–'एकया' इत्यस्य द्वित्वे सति–'एकया एकया' इति स्थिते बहुव्रीहिवद्भावेन समुदायस्य प्रातिपदिकत्वात् द्वयोरपि सुपोर्लुकि पुंवद्भावे समुदायात् पुनस्तृतीयोत्पत्तौ रूपम्, **एकैकया** । ३–बहुव्रीहिवत्त्वेन सुपो लुक्=**गतगतः**, पुंवद्भावे–**गतगता** । ४–तेन कर्मधारयवद्भावेन ('पट्वी पट्वी इति' द्वित्वे) **पटुपट्वी**, इत्यत्र पूर्वभागस्य 'पुंवत्कर्मधारय' इत्यनेन पुंवद्भावः । ५–पुंसि, ङीषभावे द्विवचने रूपं=**पटुपटुः**, कर्मधारयत्वफलं सुपो लुक् । ६–पूर्वपूर्वो भाग उत्तरोत्तरमूलभागापेक्षया स्थूल इत्यर्थः । ७–सम्भ्रमेण=( भयादिकृतया त्वरया ) प्रवृत्तौ गम्यमानायां, यथेष्टम्=इच्छानुसारेण, अनेकधा=बहुवारं शब्दः प्रयोक्तव्यः, इति वक्तव्यमित्यर्थः । ८–**न्यायसिद्ध** इति, यावद्वारं प्रयोगे सति बोद्धा अर्थं प्रत्येति तावद्वारं प्रयोगः कर्तव्य इत्यर्थः । न तु यथेष्टमित्युक्तेरसकृत्त्वेऽपि–एकस्य प्रयोगो विधेय इति भावः । ९–कर्मव्यतिहारः=क्रियाविनिमयः, तस्मिन् गम्ये सर्वनाम्नो द्वे स्तः, ते द्विरुक्ते पदे बहुलं समासवत् । १०–अन्यशब्द–परशब्दयोर्बहुलग्रहणात्समासवद्भावो नेत्यर्थः । ११–समासवद्भाव इति शेषः । १२–द्वितीयान्तस्य "अन्य" शब्दस्य द्वित्वे, 'अन्यम्–अन्यम्' इति बाहुल-

विप्रा नमन्ति । अन्योन्यौ । अन्योन्येन कृतम् । अन्योन्यस्मै दत्तमित्यादि । (स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वाच्यः) । अन्योन्याम् । अन्योन्यम् । परस्पराम्, परस्परम् । इतरेतराम्, इतरेतरम्—वा इमे ब्राह्मण्यौ कुले वा भोजयतः ।

दलद्वये टाबभावः क्लीबे चादुड्विरहः स्वमोः ।
समासे सोरलुक् चेति सिद्धं बाहुलकात्त्रयम् ॥

अन्योन्यमित्यादौ दलद्वये टाप् । अद्ड्तरेत्यद्ड् च प्राप्तः । 'अन्योन्यसंसक्तमहस्त्रियामम्' । अन्योन्याश्रयः । परस्पराक्षिसादृश्यम् । अदृष्टपरस्परैरित्यादौ सोर्लुक् च प्राप्तः । सर्वं बाहुलकात्समाधेयम् ।

॥ इति द्विरुक्तप्रक्रिया ॥

## अथ स्त्रीप्रत्ययाः ।

**२२०६ स्त्रियाम् ४ । १ । ३ ॥**

अधिकारोऽयम् । समर्थानामिति यावत् ।

---

कत्वेन समासवत्त्वाऽभावे, 'असमासवद्...इति वार्तिकेन' पूर्वखण्डे द्वितीयैकवचनस्य 'अम्' इत्यस्य सुरादेशः, रुत्वम्, 'अतो रो' रिति उत्वे पूर्वरूपे, **अन्योऽन्यम्**, एवमग्रेऽपि ।

१-दलद्वये-इति । अयमर्थः—इमे ब्राह्मण्यौ कुले वा अन्योऽन्यम्, परस्परं वा भोजयतः, इत्यत्र स्त्रियाम् अन्योऽन्यम् इत्यादौ 'टाप्' दलद्वये=खण्डद्वयेऽपि प्राप्तो बाहुलकान्न भवति । ततश्च द्वितीयैकवचने प्रथमखण्डस्थस्य-'अमः' स्वादेशे, उत्तरखण्डे च आम्-भावे **अन्योऽन्याम्**, आमभावपक्षे—अन्योऽन्यमिति । अथ क्लीबे-अद्ड्डतरादिभ्यश्चेति स्वमोरद्डादेशः प्राप्नोति, स चापि बाहुलकान्न भवति । ततश्च पूर्ववत् अन्योऽन्यम् अन्योऽन्याम् इति रूपद्वयम् । तथा च—'अन्योऽन्यसंसक्त' इत्यादौ 'परस्पराक्षिसादृश्य' मित्यादौ च समासे 'सुपो धातुप्रातिपदिकयो, रिति सुलुक् प्राप्तो बाहुलकान्न भवति । तदुक्तम्-**सिद्धं बाहुलकात्त्रयम्** इति । **परस्परमित्यत्र** कस्कादित्वाद्विसर्गस्य सत्वं बोध्यम्, आम्भावे **परस्पराम्** ।

इति श्रीप्रभाकरीविवृतौ म० कौ० टीकायां तद्धितप्रकरणं सम्पूर्णम् ।

**२२०७ अजाद्यतष्टाप् ४ । १ । ४ ॥**

अजादीनामकारान्तस्य च वाच्यं यत्स्त्रीत्वं तत्र द्योत्ये टाप् स्यात् । अजादिभिः स्त्रीत्वस्य विशेषणान्नेह—पञ्चाजी । अत्र हि समासार्थसमाहारनिष्ठं स्त्रीत्वम् । अतः—खट्वा । अजा । एडका । अश्वा । चटका । मूषिका । बाला । वत्सा । होडा । मन्दा । विलाता । ( सं-भस्त्राजिन-शण-पिण्डेभ्यः फलात् ) । संफला । भस्त्रफला, इत्यादि । ( सदच्-काण्ड-प्रान्त-शतैकेभ्यः पुष्पात् ) । सत्पुष्पा । प्राक्पुष्पा । प्रत्यक्पुष्पा । ( शूद्रा चामहत्पूर्वा जातिः ) । पुंयोगे तु शूद्री । अमहत्पूर्वा किम्—महाशूद्री । कुञ्चा ।

---

१—'अज' आदिर्यस्य सोऽजादिर्गणः, अजादिश्च अच्चेति तयोः समाहारः=अजाद्यत्, तस्य **अजाद्यतः**,-वाच्यं यत् स्त्रीत्वं तस्मिन्=स्त्रीत्वे द्योत्ये अजादिगणपठितात्; अकारान्ताच्च प्रातिपदिकात् टाप् स्यादित्यर्थः । अजादिगणपठितानां अजादिशब्दानाम्, अदन्तत्वात्सिद्धेऽपि टापि—अजाद्युक्तिः बाला, वत्सा, इत्यादौ "वयसि प्रथमे" इति ङीषः, अजा, एडका इत्यादौ 'जातेरस्त्रीविषयात्' इति ङीषश्च बाधनायेति । २—'अजाद्यतः' इति षष्ठ्याश्रयणाद् अजादीनाम् अदन्तस्य च वाच्ये स्त्रीत्वे टाबित्येवम् अजादिभिः स्त्रीत्वस्य विशेषणाद् इत्यर्थः । **पञ्चाजीति**—पञ्चानामजानां समाहारः इति विग्रहे 'तद्धितार्थ' इति द्विगुः । 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः, इति स्त्रीत्वे 'द्विगो' रिति ङीप् 'यस्येति चे'ति अकारलोपे, पञ्चाजी । नात्र अजशब्दवाच्यं स्त्रीत्वम् , किन्तु पञ्चाजशब्दे समासार्थभूतो यः समाहारः, तन्निष्ठं स्त्रीत्वम् , अतो न टाप् , तदेवाह—**अत्र समासार्थेति** । ३—अतः=अकारान्तात् टाप्-उदाह्रियते, इत्यर्थः, **खट्वेति** । ४—अजादिगणाट्टाबुदाह्रियते, **अजा**, इत्यादि । ५—सम्भस्त्रादिपूर्वात् फलशब्दात् टाप् स्यान्न तु पाक-कर्णेति ङीष् इत्यर्थः । समृद्धानि फलानि यस्याः सा=**सम्फला** । भस्त्रेव फलानि यस्याः सा=**भस्त्रफला**, ङ्यापोरिति ह्रस्वः । ६—सदादिशब्दात् पुष्पशब्दात् टाप् स्यान्न तु पाक-कर्णेति ङीष्, इत्यर्थः । **सत्पुष्पा**, प्राञ्चि पुष्पाणि यस्याः=**प्राक्पुष्पा**, इत्यादि । ७—शूद्रा जातिर्वाच्या चेत् अमहत्पूर्वः शूद्रशब्दः स्त्रियां टापं लभते-इत्यर्थः, जातिलक्षणङीषोऽपवादः । **शूद्रा**= शूद्रजातीया स्त्रीत्यर्थः । पुंयोगे शूद्री । ८—कुञ्चादीनाम् अजादित्वेन टाप् ।

उष्णिहा । देवविशा । ज्येष्ठा । कनिष्ठा । मध्यमेति पुंयोगेऽपि । कोकिला जातावपि । ( मूलान्नञः ) । अमूला ।

**२२०८ उगितश्च ४ । १ । ६ ॥**

ङीप् । भवन्ती । पचन्ती ।

**२२०९ वनो र च ४ । १ । ७ ॥**

वन्नन्तात्तदन्ताच्च ङीप् स्याद्रश्चान्तादेशः । सुत्वानमतिक्रान्ता अतिसुत्वरी । अतिधीवरी । ( वनो न हश इति वक्तव्यम् ) । अवावा ब्राह्मणी । राजयुध्वा । ( बहुव्रीहौ वा ) । बहुधीवा । बहुधीवरी ।

---

१–ज्येष्ठादिभ्यः 'पुंयोगादाख्यायाम्' इति प्राप्तो ङीषप्यनेन (अजाद्यत इत्यनेन ) बाध्यते इत्यर्थः । २–कोकिलशब्दस्य जातावपि जातिलक्षणङीषं बाधित्वा' टाबर्थम् इह पाठ इत्यर्थः । ३–न विद्यमानं मूलं यस्या इति विग्रहः । ४–उगिदन्तात्प्रातिपदिकात् स्त्रियां ङीप् स्यादित्यर्थः । भवन्ती पचन्ती-दीव्यन्ती, इति शतृप्रत्ययान्तेभ्यो ङीप् । "शप्श्यनोर्नित्यम्" इति नुम्, ( भा–धातोर्डवतुप्रत्यये भवत्शब्दाद् उगित्वेन ङीपि तु 'भवती' इति रूपम् ) । ५–'सुयजोर्ङ्वनिप्' इति सुधातोः ङ्वनिप्, तुक्, 'अत्यादयः क्रान्ताद्यर्थे' इति समासः, 'अतिसुत्वन्' शब्दात् ङीप्, नकारस्य रेफादेशे =**अतिसुत्वरी**, एवम्—धाधातोः 'अन्येभ्योऽपि दृश्यते' इति क्वनिपि 'घुमास्थे'ति ईत्वे, समासे, अतिधीवन् इत्यतो ङीपि रेफादेशे—**अतिधीवरी** । शृधातोः–अन्येभ्योऽपीति वनिपि, गुणे शर्वन् शब्दात् ङीप्, रेफादेशे=**शर्वरी** । ६–हशन्ताद् धातोः विहितो यो 'वन्' तदन्तात्तदन्तान्ताच्च प्रातिपदिकात् ङीप् रश्च नेत्यर्थः । ७–ओणृ अपनयने इत्यस्मात्, अन्येभ्योऽपीति वनिप्, ( ओण्+वन् ) 'विड्वनोरनुनासिकस्ये'ति णकारस्याऽऽत्वे, ओकारस्य अवादेशे, अवावन्–शब्दात् 'वनो र चे'ति ङीपि प्राप्ते 'वनो न हश' इति निषेधे नान्तोपधादीर्घादौ, **अवावा** । एवं–**राजयुध्वा** 'राजनि युधि कृञ' इति क्वनिप्, ङीब्निषेधे उपधादीर्घादि, **राजयुध्वा** । ८–ङीप् रश्चेति शेषः । ९–बहवो धीवानो यस्यां नगर्याम्, इति विग्रहः । सिद्धिः पूर्ववत् ।

**२२१० पादोऽन्यतरस्याम् ४ । १ । ८ ॥**

द्विपदी । द्विपात् ।

**२२११ टाबृचि ४ । १ । ९ ॥**

द्विपदा ऋक् । एकपदा ।

**२२१२ मनः ४ । १ । ११ ॥**

मन्नन्तान्न ङीप् । सीमानौ ।

**२२१३ अनो बहुव्रीहेः ४ । १ । १२ ॥**

अन्नन्ताद्बहुव्रीहेर्न ङीप् । बहुयज्वा, बहुयज्वानौ ।

**२२१४ डाबुभाभ्यामन्यतरस्याम् ४ । १ । १३ ॥**

सूत्रद्वयोपात्ताभ्यां डाब् वा । सीमा । सीमे, सीमानौ । दामे, दामानौ

**२२१५ अन उपधालोपिनोऽन्यतरस्याम् ४ । १ । २८ ॥**

अन्नन्ताद्बहुव्रीहेरुपधालोपिनो वा ङीप् । पक्षे डाब्-निषेधौ । बहुराज्ञी ।

---

१—पाद्-शब्दः कृतसमासान्तः—तदन्तात्प्रातिपदिकात् ङीब् वा स्यादित्यर्थः । २—द्वौ पादौ यस्या इति बहुव्रीहौ 'सङ्ख्यासुपूर्वस्य' इति पादशब्दस्यान्तलोपः, ङीपि भत्वात् 'पादः पत्' इतिपदादेशे **द्विपदी**, पक्षे—**द्विपात्** । ३—ऋचि वाच्यायां पादान्ताट्टाप् स्यादित्यर्थः—**द्विपदा** । ४—'न षट्' इत्यतो नेत्यनुवर्तते, ऋन्नेभ्य इत्यतो ङीबिति चानुवर्तते । 'ऋन्नेभ्य' इति प्राप्तो ङीप् निषिध्यते, **सीमा** इति षिञ् बन्धने—इत्यस्माद् औणादिको मनिन् प्रत्ययः प्रकृतेर्दीर्घश्च, सीमन्शब्दात् ङीपि निषिद्धे राजशब्दवद्रूपाणि । ५—बहवो यज्वानो यस्यां नगर्यामिति विग्रहः । 'वनो र चे'ति प्राप्तो ङीप् निषिद्ध्यते । ६—'मनः' 'अनो बहुव्रीहेः' इति सूत्रद्वयोक्ताभ्यामित्यर्थः । ७—डाप्प्रत्यये डित्वाट्टिलोपे **सीमा, सीमे, सीमाः**, इत्यादि रमावत् । अन्यत्र पक्षे **सीमानौ** राजवत् । एवं **दामा दामे, दामानौ** । ८—बहवो राजानो यस्याम् इति बहुव्रीहौ बहुराजन्शब्दात् 'अनो बहुव्रीहेः' इति ङीब्निषेधे 'डाबुभ्याम्' इति डापि च प्राप्ते—'अन उपधालोपिन' इति वैकल्पिको ङीप्, ततश्च—अल्लोपे श्चुत्वे सोर्हल्ङ्याबिति लोपे **बहुराज्ञी**, नदीवत्, पक्षे डापि रमावत्—**बहुराजा, बहुराजे**, ङीब्निषेधे च राजवत् —**बहुराजा बहुराजानौ** इत्यादि ।

बहुराज्यौ । बहुराजा । बहुराजानौ ।

**२२१६ प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः ७।३।४४॥**

प्रत्ययस्थात् ककारात्पूर्वस्याऽकारस्येकारः स्यादापि परे स आप् सुपः परो न चेत् । सर्विका[1] । कारिका । अतः किम्–नौका[2] । प्रत्ययस्थात्किम्–शक्नोतीति शका[3] । असुपः किम्–बहुपरिव्राजका[4] नगरी । ( मामकनरकयोरुपसंख्यानाम्[5] ) । मामिका[6] । नरिका । ( त्यक्–त्यपोश्च[7] ) ।

---

१–सर्वशब्दात् स्त्रियां टापि सवर्णदीर्घे, 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इति टेः प्रागकच्, अकचः 'अक्' इत्यवशिष्यते, ( सर्व्+अक्+आ ) सर्वका–शब्दे ककारात्पूर्वस्य अकारस्य इत्वे '**सर्विका**' इति रूपम् । एवं–**कारिका**, कृञो ण्वुल्, अकादेशः, ऋकारस्य–'अचो ञ्णिति' वृद्धिः, रपरत्वं, कारक–शब्दात् स्त्रियां टापि सवर्णदीर्घे, कात्पूर्वस्य–अकारस्य इत्वम् । २–नौशब्दात्स्वार्थे कः, ततः स्त्रियां टाप्, कात्पूर्वम् औकारो नत्वकार इति न इत्वम्, **नौका** । ३-शक्लृधातोः पचाद्यच्, ततः स्त्रियां टाप्, नात्र ककारः प्रत्ययस्थः, किन्तु प्रकृतिस्थः, अतो न इत्वम्, **शका** । ४–परिपूर्वात् व्रजधातोः ण्वुलि–'परिव्राजक' इति । बहवः परिव्राजका यस्याम् इति बहुव्रीहौ 'सुपो धातु' इति सुपो लुकि, बहुपरिव्राजक–शब्दात् टापि= **बहुपरिव्राजका,** अत्राऽकारस्य कात्पूर्वस्य इत्वं न, समासे लुप्तस्य सुपः प्रत्ययलक्षणेनाश्रयणात्–आपः सुबपेक्षया परत्वात् । ५–अनयोः ककारात्पूर्वस्याऽकारस्य–इत्वं वक्तव्यम् इत्यर्थः । ककारस्य प्रत्ययस्थत्वाऽभावादप्राप्ते वचनम् । ६–ममेयम् इति विग्रहे, अस्मद्–शब्दात् 'युष्मदस्मदोरन्यतरस्याम्' इति अण्प्रत्यये, "तवकममकावेकवचने" इति ममकादेशः, आदिवृद्धिः, टाप्, इत्वे **मामिका** । ( अणन्तत्वात् 'टिड्ढे'ति ङीप् तु न केवलमामकेत्यत्र संज्ञाच्छन्दसोरेवेति नियमात् ) । नरान् कायतीति–**नरिका** 'कै शब्दे' इत्यस्मात्, ( आदेच उपदेशे ) इत्यात्वे 'आतोऽनुपसर्गे' इति क–प्रत्ययः 'आतो लोप' इत्यालोपः, उपपदसमासः, सुपो लुक् टाप् । ७–त्यगन्ते त्यबन्ते च प्रत्ययस्थात् कात् पूर्वस्याऽकारस्य इत्वं वक्तव्यम् इत्यर्थः । 'उदीचामातः स्थाने' इति विकल्पापवादोऽयम् ।

दाक्षिणात्यिका[1]। इहत्यिका।

**२२१७ न यासयोः[2] ७। ३। ४५॥**

यत्तदोरस्येन्न। यका[3]। सका। यकाम्[4]। तकाम्। (त्यकनश्च निषेधः[5]) उपत्यका[6]। अधित्यका। (आशिषि वुनश्च न[7])। जीवका। भवका। (उत्तरपदलोपे न[8])। देवका[9]। देवदत्तिका। (क्षिपकादीनां च[10])। क्षिपका। ध्रुवका।

---

१-'दक्षिणस्यां दिशि अदूरे'-इति विग्रहे 'दक्षिणादाच्' इत्याच्प्रत्यये, दक्षिणाशब्दः, तस्य तद्धितश्चासर्वविभक्तिरित्यव्ययत्वम्। ततो भवार्थे-दक्षिणा भवा इति विग्रहे 'दक्षिणा-पश्चात् पुरसस्त्यक्' इति त्यक्। 'किति चे'ति-आदिवृद्धिः' टाप्,—दाक्षिणात्या-शब्दात् स्वार्थे कः, "केऽणः" इति ह्रस्वः, पुनः—दाक्षिणात्यक-शब्दात् टाप्, इत्वम्-**दाक्षिणात्यिका** इति सिद्ध्यति। एवम् "इह" इत्यव्ययात् 'अव्ययात्त्यप्' इति त्यपि, टापि, स्वार्थिके के, अणो ह्रस्वे, पुनष्टापि' इत्वे-**इहत्यिका**। २-प्रत्ययस्थादिति प्राप्ते निषेधोऽयम्। यासेति यत्तदोरुपलक्षणम्, न तु प्रथमान्तानुकरणम्, तथात्वे-यकाम्, तकाम् इत्यत्र निषेधो न स्यात्। ३-यत्-तत्-शब्दयोः 'अव्ययसर्वनाम्नामकच्' इति टेः प्रागकचि सौ त्यदाद्यत्वं, पररूपम्, टाप्, हल्ङ्याबिति सुलोपः, तच्छब्दे 'तदोः सः' इति तकारस्य सत्वम्, प्रत्ययस्थादिति प्राप्तस्य इत्वस्य निषेधः, **यका, सका**। ४-सूत्रे यासेति प्रथमान्तानुकरणत्वाऽभावेन द्वितीयादावपीत्वनिषेधः-इति ध्वनयन् द्वितीयान्तमुदाहरति, **यकाम्, तकाम्**। ५-त्यकन् प्रत्ययान्तस्यापि प्रत्ययस्थादितीत्वप्रतिषेधो वक्तव्य इत्यर्थः। ६-उप-अधि-शब्दाभ्याम्-'उपाधिभ्यां त्यकन्नासन्नारूढयोः' इति त्यकन्,टाप्, सुलोपे, इत्वनिषेधे-**उपत्यका, अधित्यका**। 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः। ७-आशिषि यो वुन् तस्य योऽयमकादेशः तदकारस्य 'प्रत्ययस्थादि'ति-इत्वं नेति वक्तव्यमित्यर्थः। जीवतादिति-**जीवका**, भवतादिति-**भवका**। जीवधातोः, भूधातोश्च, 'आशिषि च' इति वुन् 'युवोरनाकौ' इत्यकादेशः। भूधातोः सार्वधातुकेति गुणः, अवादेशः, टाप्। ८-उत्तरपदलोपेऽपि इत्वं नेति वक्तव्यमित्यर्थः। ९-देवदत्तशब्दात् स्वार्थे कः, उत्तरपदलोपः, इत्वनिषेधे-**देवका**, 'देवदत्तिका' इति तु दत्तपदस्य लोपाभिव्यक्तये-उपन्यस्तम्। १०-इत्वं नेत्यर्थः।

चटका। कन्यका। (तारका ज्योतिषि)। (वर्णका तान्तवे)। (वर्तका शकुनौ प्राचाम्)। (अष्टका पितृदैवत्ये)। (सूतका-पुत्रिका-वृन्दारकाणां वेति वक्तव्यम्)। एषां वा अकारो भवतीत्यर्थः। सूतिका, सूतकेत्यादि।

**२२१८ उदीचामातः स्थाने यकपूर्वायाः ७।३।४६॥**

यकपूर्वस्य स्त्रीप्रत्ययस्यातः स्थाने योऽत् तस्य कात्पूर्वस्येद्वाऽऽपि परे। केऽण इति ह्रस्वः। आर्यका, आर्यिका। चटकका, चटकिका। आतः किम्-साङ्काश्ये भवा=साङ्काश्यिका। यकेति किम्—

---

उदीचाम् इति प्राप्ते निषेधः। क्षिप् प्रेरणे-इत्यस्मात् 'इगुपधेति' कः, कित्त्वान्न गुणः, टाप्, क्षिपा-शब्दात् स्वार्थे कः, पुनष्टाप्, केऽणः इति ह्रस्वः, **क्षिपका**, इत्यादि।

१-ज्योतिषि वाच्ये **तारका** इत्यत्र इत्वं न भवतीति यावत्। अन्यत्र **तारिका** इति। २-तान्तवे=तन्तुविकारे गम्ये-**वर्णका** इत्यत्र इत्वं न भवतीत्यर्थः। वर्णका=प्रावारविशेषः। अन्यत्र **वर्णिका**=ग्रन्थविशेषस्य व्याख्यायाः सञ्ज्ञेयम्। ३-शकुनौ वाच्ये-**वर्तका** इत्यत्र इत्वं न भवतीति यावत्। प्राचामित्युक्तेः, उदीचां **वर्तिका** इति नित्यमेवेत्वम्। ४-पितृदेवत्ये कर्मणि वाच्ये, अश्नन्ति पित्रर्थे ब्राह्मणा यस्याम्, इति विग्रहे अश-धातोः 'इण्यशिभ्यां तकन्', इति तकन्प्रत्ययः, व्रश्चेति शस्य षत्वम्, तकारस्य ष्टुत्वेन टः, अष्टकशब्दाट्टापि, इत्वनिषेधे-**अष्टका**। अन्यत्र अष्टौ-अध्यायाः परिमाणम् अस्या इति-**अष्टिका**=अष्टाध्यायी। ५-**सूतका** शब्दे अकारस्याऽकारविधानम् इत्वबाधनार्थम्, पक्षे **सूतिका**। एवम्-**वृन्दारका**। पुत्रीशब्दे कप्रत्यये 'केऽणः' इति ह्रस्वे, इकारस्याऽकारादेशो वा-**पुत्रका, पुत्रिका**। ६-आर्या-शब्दात् कप्रत्यये, 'केऽणः' इति ह्रस्वः, पुनः आर्यक-शब्दात् टापि, वैकल्पिके इत्वे-**आर्यिका, आर्यका**। एवम्—चटका-शब्दात् कप्रत्यये ह्रस्वे पुनष्टापि इत्वविकल्पः, **चटकिका, चटकका**। ७-सङ्काशेन निर्वृत्तं नगरं साङ्काश्यम्, 'वुञ्छण' ति ण्यप्रत्यये, आदिवृद्धिः, 'यस्येति च' इत्यलोपे, साङ्काश्यम् इति, तत्र भव इत्यर्थे तस्माद् 'धन्वयोपधे'ति वुञ्, अकादेशः, 'यस्येति च' इत्यकारलोपे टाप्, प्रत्ययस्थेति नित्यमित्वे **साङ्काश्यिका**। इह यकारात् परस्याऽकारस्याऽऽकारस्थानिकत्वाऽभावाद् इत्व-

अश्विका। स्त्रीप्रत्ययस्य किम्—शुभंयिका।

**२२१६ अभाषितपुंस्काच्च ७।३।४८॥**

एतस्माद्विहितस्यातः स्थानेऽत इद्वा। गङ्गका। गङ्गिका।

**२२२० आदाचार्याणाम् ७।३।४९॥**

पूर्वविषये। गङ्गाका।

**२२२१ अनुपसर्जनात् ४।१।१४॥**

अधिकारोऽयं यूनस्तिरित्यभिव्याप्य।

**२२२२ टिड्ढाणञ्-द्वयसज्-दघ्नञ्-मात्रच्-तयप्-ठक्-ठञ्-कञ्-क्वरपः ४।१।१५॥**

अनुपसर्जनं यट्टिदादि तदन्तं यददन्तं ततो ङीप्। कुरुचरी। उपसर्ज-

---

विकल्पो न भवतीति भावः।

१–अश्वैव–**अश्विका**। अश्वा–शब्दात् कप्रत्यये 'केऽणः' इति ह्रस्वे पुनष्टापि रूपमिदम्, प्रत्ययस्थेति नित्यम् इत्वमिति। अत्राऽकारस्याऽऽकारस्था-निकत्वेऽपि यक-पूर्वकत्वाऽभावादित्वविकल्पो नेत्यर्थः। २–शुभम्–इति मान्तेऽव्यये पूर्वपदे याधातोः 'अन्येभ्योऽपि दृश्यते, इति विच्प्रत्यये, शुभंया-शब्दात् अज्ञातार्थे कः, 'केऽणः' इति ह्रस्वः, टाप्, प्रत्ययस्थेति नित्यम् इत्वे **शुभंयिका**। अत्र यकारात्परस्याकारस्य धात्ववयवस्य स्त्रीवाचकत्वाऽ-भावादित्वविकल्पो नेत्यर्थः। ३–न भाषितः पुमान् येन सोऽभाषितपुंस्कः, उपलक्षणमेतत् नपुंसकलिङ्गाऽभावस्यापीति, तेन नित्यस्त्रीलिङ्गस्येति लभ्यते। अ-यक-पूर्वार्थं वचनम्। ४–गङ्गाशब्दात् कप्रत्यये ह्रस्वे पुनष्टापि, इत्ववि-कल्पः। ५–पूर्वसूत्रविषये 'आद्' वा स्यादित्यर्थः। **गङ्गाका**। ६–न-उपसर्जनम् अनुपसर्जनम्, उपसर्जनत्वं च समासादौ गुणीभूतत्वम्। ७–**टिड्ढादि**=टित्-ढ-अण्-अञ्-द्वयसज्-दघ्नजादि, तदन्ताद् अकारान्तात् स्त्रियां ङीप् स्यादित्यर्थः। ८–कुरुषु चरतीति—**कुरुचरी**, 'चरेष्टः' इति टप्रत्ययः, तस्य टित्त्वात्तदन्तात् "कुरुचर" इत्यदन्तात् स्त्रियां ङीप् 'यस्येति च' इत्यकारलोपः।

नत्वान्नेह। बहुकुरुचरा। नदट्—नदी। देवट्—देवी। सौपर्णेयी। ऐन्द्री औत्सी। ऊरुद्वयसी। ऊरुदघ्नी। ऊरुमात्री। पञ्चतयी। आक्षिकी। लावणिकी। यादृशी। इत्वरी। (नञ्—स्नञीकक्—ख्युंस्तरुण—तलुनानामुपसंख्यानम्)। स्त्रैणी। पौंस्नी। शाक्तीकी। आढ्यंकरणी। तरुणी। तलुनी।

---

१—'बहवः कुरुचरा यस्यां नगर्यां सा **बहुकुरुचरा**। बहुव्रीहिसमासोऽयम्, अन्यपदार्थप्रधानत्वात् टिदन्तस्य 'कुरुचर' इत्यस्य गुणीभूतत्वेनोपसर्जनत्वात् न ङीप्, इत्यर्थः। २—पचादिषु टित एव पठिता इमे शब्दा अतः स्वत एव टित एते। ३—सुपर्ण्या अपत्यं स्त्रीति **सौपर्णेयी**, 'स्त्रीभ्यो ढक्' इति ढक् प्रत्ययः, ढस्य—एय्, 'किति चे'ति—आदिवृद्धिः, स्त्रियां सौपर्णेयशब्दात् ढान्तत्वेन ङीपि, 'यस्येति च' इत्यकारलोपः। इन्द्रस्येयम् इति—**ऐन्द्री**, 'तस्येदमि'ति अणि, आदिवृद्धिः, अणन्ताद् ऐन्द्र-शब्दात् ङीपि, अकारलोपे रूपम्। उत्सस्येयमिति **औत्सी**, 'उत्सादिभ्योऽञ्, इत्यञ्, आदिवृद्धिः, अञन्ताद् औत्स—शब्दात् ङीपि, अकारलोपः। उत्सस्याऽपत्यं स्त्रीति विग्रहे तु जातेरित्यनुवृत्तौ "शार्ङ्गरवाद्यञः" ङीन् भवति, स्वरे भेदः। ऊरू प्रमाणम् अस्याः, इति विग्रहे 'प्रमाणे द्वयसज्—दघ्नञ्—मात्रचः, इति प्रत्ययत्रये ङीपि अकारलोपे **ऊरुद्वयसी, ऊरुदघ्नी, ऊरुमात्री**=सरसी नदी वा। पञ्च अवयवा अस्या इति **पञ्चतयी**, 'सङ्ख्याया अवयवे तयप्, ङीप्। अक्षैर्दीव्यतीति विग्रहः, 'तेन दीव्यती'त्यादिसूत्रेण ठक्, ठस्येकः, आदिवृद्धिः, ततो ङीप् **आक्षिकी**। लवणं पण्यम् अस्या इति विग्रहे 'लवणाट्ठञ्' इति ठञ्, आदिवृद्धिः, ठस्येकः, यस्येत्यकारलोपे, लावणिक—शब्दात् ङीपि, अकारलोपे **लावणिकी**। 'यद्'—शब्दे उपपदे 'त्यदादिषु दृशो' इति कञ् "आ सर्वनाम्नः" इति दकारस्याऽऽत्वे ङीप्—अकारलोपः, **यादृशी**। एति तच्छीला इत्वरी, 'इण् गतौ' इत्यस्मात् 'इण्—नश्—जि—सर्तिभ्यः, इति क्वरप् प्रत्ययः, ह्रस्वस्येति तुक् 'इत्वर' शब्दात् ङीपि अकारलोपे **इत्वरी**। ४—नञ्स्नञ्-ईकक्—ख्युन् इत्येतत्प्रत्ययान्तानां तरुण—तलुनशब्दयोश्च ङीपो विधिवचनं कर्तव्यमित्यर्थः। ५—स्त्रिय इयं **स्त्रैणी** 'स्त्रीपुंसाभ्यां नञ्—स्नञौ' इति नञ्प्रत्यये, आदिवृद्धौ, णत्वे, 'स्त्रैण' इत्यस्मात् ङीपि—अकारलोपे रूपमिदम्। एवं पुंस्—शब्दात् स्नञि, आदिवृद्धिः, ङीप् अकारलोपः, **पौंस्नी**।

**२२२३ यञश्च ४। १। १६॥**

यञन्तात्प्रातिपदिकाद् ङीप्। अकारलोपे[1] कृते।

**२२२४ हलस्तद्धितस्य ६। ४। १५०॥**

हल उत्तरस्योपधाभूतस्य तद्धितयकारस्य लोप इति। गार्गी।

**२२२५ प्राचां ष्फ तद्धितः ४। १। १७॥**

यञन्तात्ष्फो वा।

**२२२६ षः प्रत्ययस्य १। ३। ६॥**

प्रत्ययादिः ष इत्स्यात्। आयनेयीनीत्यायनादेशः। षित्त्वसामर्थ्यात्षिद्गौरेति ङीष्। गार्ग्यायणी[2]।

**२२२७ वयसि प्रथमे ४। १। २०॥**

प्रथम-वयोवाचिनोऽदन्तात् ङीप् स्यात्। कुमारी। (वयस्य[3]चरम इति वाच्यम्)। वधूटी। चिरण्टी।

**२२२८ द्विगोः ४। १। २१॥**

---

शक्तिः प्रहरणम् अस्या इति विग्रहे, "शक्तियष्ट्योरीकक्" इति ईकक्प्रत्यये, किति चेति वृद्धिः, ततो ङीप्, इ-लोपः, **शाक्तीकी**। अनाढ्यः आढ्यः क्रियतेऽनया इति विग्रहे 'आढ्यसुभगे'ति-ख्युन्प्रत्ययः, खनावितौ, अनादेशः, 'अरुर्द्विषदिति'मुम्, आढ्यपूर्वस्य कृञो गुणः, रपरत्वम्, णत्वम्, ततो ङीप्, अकारलोपः, **आढ्यङ्करणी**। **तरुणी, तलुनी**=युवतिरित्यर्थः। गौरादिपाठात् ङीषि प्राप्ते ङीबर्थमिह वचनम्। ङीष्-ङीपोः स्वरे विशेषः।

१-गर्गादिभ्यो यञिति यञ् प्रत्ययान्ताद् गार्ग्य-शब्दात् ङीपि, 'यस्येति च' इति सूत्रेणाऽकारलोपे कृते यलोपे **गार्गी** गर्गस्य गोत्राऽपत्यं स्त्रीति विग्रहः। २-गार्ग्य-शब्दात्, ष्फप्रत्यये, फस्याऽऽयन्, णत्वम्, षित्त्वाद् ङीष्, अकारलोपः, **गार्ग्यायणी**। ३-चरमम्=अन्तिमम्, तद्भिन्नम् अचरमम्, चरमवयोभिन्नवयोवाचिनीत्यर्थः। 'प्रथम' इत्यपनीय, अचरम इति वक्तव्यमित्यर्थः। तेन यौवनवाचिन्यपि स्यादेव यथा-**वधूटी, चिरण्टी**। वधूट-चिरण्टशब्दौ यौवनवाचिनौ।

अदन्तात् द्विगोर्ङीप्। त्रिलोकी। अजादित्वात्-त्रिफला, त्र्यनीका=सेना।

**२२२९ अपरिमाण-बिस्ताचित-कम्बल्येभ्यो न तद्धित-लुकि ४। १। २२॥**

अपरिमाणान्ताद्बिस्ताद्यन्ताच्च द्विगोर्न ङीप् तद्धितलुकि। पञ्चभिरश्वैः क्रीता पञ्चाश्वा, (आर्हीयष्ठक्), अध्यर्धेति लुक्। द्वौ बिस्तौ पचति द्विबिस्ता। द्व्याचिता। द्विकम्बल्या। परिमाणात्तु द्व्याढकी। तद्धितलुकि किम्—समाहारे-पञ्चाश्वी।

**२२३० काण्डान्तात्क्षेत्रे ४। १। २३॥**

क्षेत्रे यः काण्डान्तो द्विगुस्ततो न ङीप् तद्धितलुकि। द्वे काण्डे प्रमाणमस्या द्विकाण्डा=क्षेत्रभक्तिः। मात्रचः-प्रमाणे लो द्विगोर्नित्यमिति लुक्। क्षेत्रे किम्—द्विकाण्डी=रज्जुः।

**२२३१ पुरुषात्प्रमाणेऽन्यतरस्याम् ४। १। २४॥**

---

१-त्रयाणां लोकानां समाहारः, इति विग्रहे 'तद्धितार्थोत्तरपदसमाहारे च, इति द्विगुसमासः। 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इति स्त्रीत्वम्, टापोऽपवादो ङीप्, **त्रिलोकी**। २-ननु त्रिलोकीवत् त्रिफला, त्र्यनीका, इत्यत्रापि ङीप् स्यादित्यत आह—**अजादित्वादिति**, अजादिगणपाठादनयोः 'अजाद्यतष्टाप्, इति टाप्, तस्य ङीपोऽपवादत्वात्। ३-'तद्धितार्थे'ति द्विगुः, आर्हादगोपुच्छेत्यधिकारे 'तेन क्रीत' मिति ठक् इत्यर्थः। अध्यर्धपूर्वाद् द्विगोर्लुगसंज्ञायाम्' इति ठको लुक्, अत्र-अपरिमाणान्तद्विगुत्वाद् द्विगोरिति प्राप्तस्य ङीपो निषेधः, टाप्, **पञ्चाश्वा**। ४-तद्धितार्थेति द्विगुः 'सम्भवत्यवहरति पचती'त्यादिना ठक् तस्य अध्यर्धेति लुक्, **द्विबिस्ता**। एवम् अग्रेऽपि। ५-द्वौ आढकौ पचतीति विग्रहः, प्राग् वतीयष्ठञ्, तस्य 'अध्यर्धे'ति लुक्, द्विगोरिति ङीप्, **द्व्याढकी**। ६-पञ्चानाम् अश्वानां समाहारः **पञ्चाश्वी**, नात्र तद्धितलुक्, इति न ङीब्निषेधः। ७-षोडशहस्तप्रमाणो दण्डः=काण्डम्। ८-द्वे काण्डे प्रमाणम् अस्या इति विग्रहे 'तद्धितार्थेति द्विगुसमासे, 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' विहितस्य मात्रच्प्रत्ययस्य 'प्रमाणे लो द्विगोर्नित्यमि'ति लुक्, द्विगोरिति प्राप्तस्य ङीपो निषेधः, **द्विकाण्डा** क्षेत्रभक्तिः=क्षेत्रभागः।

प्रमाणे यः पुरुषस्तदन्ताद् द्विगोर्ङीब्वा स्यात्तद्धितलुकि । द्वौ पुरुषौ प्रमाणमस्याः द्विपुरुषी, द्विपुरुषा वा परिखा ।

**२२३२ ऊधसोऽनङ् ५ । ४ । १३१ ॥**

ऊधोऽन्तस्य बहुव्रीहेरनङ् स्त्रियाम् ।

**२२३३ बहुव्रीहेरूधसो ङीष् ४ । १ । २५ ॥**

ऊधोऽन्ताद्बहुव्रीहेः । कुण्डोध्नी । स्त्रियाम् किम्–कुण्डोधो धैनुकम् ।

**२२३४ दामहायनान्ताच्च ४ । १ । २७ ॥**

संख्यादेर्बहुव्रीहेर्दामान्ताद्धायनान्ताच्च ङीप् । द्विदाम्नी । द्विहायनी बाला । ( त्रिचतुर्भ्यां हायनस्य णत्वं वाच्यम् ) । वयो–वाचकहायनस्य ङीप् णत्वं चेष्यते । त्रिहायणी । चतुर्हायणी । वयसोऽन्यत्र—त्रिहायना । चतुर्हायना शाला ।

**२२३५ अन्तर्वत्पतिवतोर्नुक् ४ । १ । ३२ ॥**

---

१–प्रमाणवाची 'पुरुष' शब्दः इत्यर्थः । २–द्वौ पुरुषौ प्रमाणम् अस्या इति विग्रहे 'तद्धितार्थ' इति द्विगुसमासः, प्रमाणे द्वयसजिति विहितस्य मात्र-च्प्रत्ययस्य प्रमाणे लो द्विगोरिति लुक्, ङीप् वा, **द्विपुरुषी, द्विपुरुषा** । ३–कुण्डमिव ऊधो यस्या इति बहुव्रीहौ कुण्डोधस् शब्दस्याऽनङ्, कुण्डो-धन्, इत्यस्मात् पूर्वसूत्रैर्डाब्–ङ ब्–निषेधेषु प्राप्तेषु, 'बहुव्रीहेरूधसो ङीष्' इति ङीष् । 'अल्लोपोऽनः' इत्यकारलोपे, **कुण्डोध्नी**–धेनुः । ४–धनूनां समूहो= **धैनुकम्** । कुण्डमिवोधो यस्य तत्, **कुण्डोधः**, स्त्रीलिङ्गाभावात् न–अनङ् इत्यर्थः । ५–द्वे दामनी यस्या इति विग्रहे द्विदामन्–शब्दात् ङीपि, अल्लोपोऽनः इत्यल्लोपः, **द्विदाम्नी** एवं **द्विहायनी** । दामान्ते डाप्प्रति-षेधयोः, हायनान्ते टापि च प्राप्ते वचनम्–**दामहायनेति** । ६–त्रिहाय-णीत्यादौ भिन्नपदत्वाण्णत्वाऽप्राप्तौ वचनम् । त्रयो हायना ( वयो ) यस्येति विग्रहः, एवम् अग्रेऽपि । ७–( प्राणभृतो ) जीवनकालो वयस्तेन त्रिहायना शाला इत्यादौ न ङीप् णत्वं चेति । ८–गर्भिण्याम्, जीवद्भर्तृकायां च— 'अन्तर्वत्' 'पतिवत्' इति प्रकृतिभागौ निपात्येते, तयोश्च नुक् स्यादित्यर्थः । तत्रान्तरस्त्यस्यां गर्भ इति विग्रहेऽस्तिसामानाधिकरण्याऽभावेऽपि मतुप् निपात्यते वत्वे अन्तर्वत् इति । पतिरस्या अस्तीति पतिशब्दात् 'तदस्यास्त्य-

नान्तत्वान्ङीप् । अन्तर्वत्नी । पतिवत्नी । गर्भभर्तृसंयोगे एवेष्यते । अन्यत्र तु अन्तरस्त्यस्यां शालायां घटः । पतिमती पृथिवी ।

**२२३६ पत्युर्नो यज्ञसंयोगे ४ । १ । ३३ ॥**

वसिष्ठस्य पत्नी ।

**२२३७ विभाषा सपूर्वस्य ४ । १ । ३४ ॥**

पतिशब्दान्तस्य नो वा । गृहपत्नी, गृहपतिः । दृढपत्नी, दृढपतिः ।

**२२३८ नित्यं सपत्न्यादिषु ४ । १ । ३५ ॥**

सपत्नी । एकपत्नी । वीरपत्नी ।

**२२३९ पूतक्रतोरै च ४ । १ । ३६ ॥**

पूतक्रतोः स्त्री पूतक्रतायी ।

**२२४० वृषाकप्यग्नि-कुसित-कुसिदानामुदात्तः ४ । १ । ३७ ॥**

एषामुदात्त ऐ-आदेशो ङीप् च । वृषाकपेः स्त्री वृषाकपायी । अग्नायी कुसितायी । कुसिदायी ।

---

स्मिन्नि'ति मतुपि वत्वनिपातने, पतिवद् इति । नुकि सति-अन्तर्वत्न्-पतिवत्न् इति शब्दाभ्यां 'ऋन्नेभ्यो ङीप्', इति ङीपि, **अन्तर्वत्नी, पतिवत्नी** ।

१-गर्भसंयोगे एव—अन्तर्वत्नीति, भर्तृसंयोगे एव-पतिवत्नीति, इष्यते भाष्यकारेणेति भावः । तेन अन्तरस्त्यस्यां शालायां घट इति वाक्यमेव । पतिमती पृथिवीत्यत्र नुक् च न । २-पतिशब्दस्य नकारोऽन्तादेशः स्याद् यज्ञेन सम्बन्धे, इत्यर्थः । यज्ञसम्बन्धः=यज्ञेन सह स्वामितया सम्बन्धः, यज्ञफलभोक्तृत्वमिति यावत् । यथा-वसिष्ठस्य **पत्नी** वसिष्ठकर्तृकयज्ञफल-भोक्त्रीत्यर्थः । नान्तादेशे 'ऋन्नेभ्यो' ङीपि पत्नीति रूपम् । ३-सपूर्वस्य विद्यमानपूर्वस्य तदेवाह-पतिशब्दान्तस्येति । ४-पूर्वविकल्पापवादः । समानः पतिर्यस्याः सा **सपत्नी**, समानस्य सभावो निपात्यते, एवम्-एकपत्नी, वीर-पत्नी । ५-पूतक्रतुशब्दात् स्त्रियां ङीप् स्यात् प्रकृतेः ऐकारादेशश्चान्तस्ये-त्यर्थः । ६-पूतः क्रतुर्येन स पूतक्रतुः तस्य स्त्रीति विग्रहे ङीपि, उकारस्य ऐकारः, **पूतक्रतायी** । ७-हरविष्णू वृषाकपी, वृषाकपायी श्रीगौर्योः, इत्यमरः । ८-अग्नेः स्त्रीति विग्रहः । इकारस्य-ऐकारः, ङीप् च । कुसित-कुसिदशब्दौ देवताविशेषस्य वाचकौ ।

**२२४१ मनोरौ वा ४ । १ । ३८ ॥**

मनुशब्दस्यौकारादेशः स्यादुदात्तैकारश्च वा ङीप् । मनौयी, मनावी, मनुः ।[1]

**२२४२ वर्णादनुदात्तात्तोपधात्तो नः ४ । १ । ३९ ॥**

वर्णवाची योऽनुदात्तान्तस्तोपधस्तदन्ताद्वा ङीप् तकारस्य नः । एता, एनी । रोहिता, रोहिणी ।[2]

**२२४३ षिद्गौरादिभ्यश्च ४ । १ । ४१ ॥**[3]

ङीष् । नर्तकी[4] । गौरी । अनडुही, अनड्वाही[5] । ( पिप्पल्यादयश्च[6] ) । आकृतिगणोऽयम् । ( मत्स्यस्य ङ्याम् ) । यलोपः—मत्सी[7] ।

**२२४४ जानपद-कुण्ड-गोण-स्थल-भाज-नाग-काल-नील-कुश-कामुक-कबराद् वृत्त्यमत्रावपनाकृत्रिमा-श्राणा-स्थौल्य-वर्णानाच्छादनाऽयोविकार-मैथुनेच्छा-केशवेशेषु ४ । १ । ४२ ॥**[8]

एकादशभ्यः क्रमाद् वृत्त्यादिष्वर्थेषु ङीष् । जानपदी वृत्तिश्चेत्[9] । अन्या जानपदी, अन्तत्वात् ङीपि आद्युदात्तः[10] । कुण्डी अमत्रं[11] चेत् । कुण्डाऽन्या ।

---

१–मनोः स्त्रीति विग्रहे ङीपि, ऐकारे–**मनायी**, औकारे–**मनावी**, ङीबभावे–**मनुः** । २–एतशब्दः चित्रवर्णवाची, ङीप्सन्नियोगशिष्टो नकारो ङीबभावे न प्रवर्तते–**एता** । ङीपि नत्वे–**एनी** । एवम्–**रोहिता, रोहिणी** । ३–षिद्भ्यो गौरादिभ्यश्च ङीष् स्यादित्यर्थः । ४–नृती गात्रविक्षेपे, 'शिल्पिनि ष्वुन्, षनावितौ, अकादेशः, लघूपधगुणः, रपरत्वम्, ङीष्—**नर्तकी** । **गौरी**, गौरादिगणोदाहरणमिदम् । ५–गौरादिगणपठितत्वात् ङीषि, 'अनुडुहः स्त्रियाम् आम् वा, इति वार्तिकेन विभाषया आम्, **अनडुही, अनड्वाही** । ६–पिप्पल्यादयश्च गौरादय इत्यर्थः । तेन पिप्पली हरीतकी इत्यादिसिद्धिः । ७–मत्स्य–शब्दात् गौरादित्वात् ङीषि, यलोपः, यस्येति चेति अलोपः, **मत्सी** । ८–कबरान्तेभ्य एकादशभ्यः क्रमाद् वृत्त्यादिष्वर्थेषु ङीष् स्यादित्यर्थः । ९–वृत्तिः=जीविका, वर्ततेऽनयेति व्युत्पत्तेः । १०–अनुदात्तौ सुप्पिताविति सूत्रेणाद्युदात्तत्वम् । ङीषि तु प्रत्ययस्वरेणान्तोदात्तत्वमिति भेदः । ११–अमत्रं=पात्रम् । 'पात्रामत्रे च भाजनम्'—इत्यमरः । १२–दहनीया, इत्यर्थः ।

गोणी आवपनं[1] चेत् । गोणा[2]ऽन्या । स्थली अकृत्रिमा चेत् । स्थला[3]ऽन्या । भाजी श्राणा[4] चेत् । भाजा[5]ऽन्या । 'यवागूरुष्णिका श्राणा विलेपी तरला च सा' इत्यमरः । नागी[6] स्थूला चेत् । नागा[7]ऽन्या । काली[8] वर्णश्चेत् । काला[9]ऽन्या । नीली अनाच्छादनं[10] चेत् । नीलाऽन्या, नीलया रक्ता शाटीत्यर्थः । कुशी[11] अयोविकारश्चेत् । कुशा[12]ऽन्या । कामुकी मैथुनेच्छावती चेत् । कामुका[13]ऽन्या । कबरी केशानां सन्निवेशविशेषश्चेत् । कबरा[14]ऽन्या ।

**२२४५ शोणात्[15]प्राचाम् ४ । १ । ४३ ॥**

शोणी, शोणा ।

**२२४६ वोतो गुणवचनात् ४ । १ । ४४ ॥**

उदन्तात् गुणवाचिनो वा ङीष् । मृद्वी, मृदुः । उतः किम्—शुचिः[16] । गुणेति किम्—आखुः[17] । ( खरु-संयोगोपधात्[18]न्न ) । खरुः[19] । पाण्डुः ।

**२२४७ बह्वादि[20]भ्यश्च ४ । १ । ४५ ॥**

वा ङीष् । बह्वी, बहुः । ( कृदिकारा[21]दक्तिनः ) । रात्री, रात्रिः ।

---

१—आवपनम्=धान्याद्याधानी, आ-उप्यते धान्याद्यत्रेति व्युत्पत्तेः । २—याहच्छिकेयं संज्ञा कस्याश्चित् । ३—कृत्रिमा—इत्यर्थः, इदानीन्तनपुरुषसंस्कृता भूमिरिति यावत् । ४—पक्वा—यवागूश्चेद् इत्यर्थः । ५—अपक्वयवागूभिन्ना । ६—गजवाचीनागशब्दः स्थौल्यगुणयोगात् कस्याश्चित् स्थूलस्त्रियां वर्तमानः, ततो ङीष् **नागी** । ७—सर्पवाची नागशब्दो दैर्घ्यगुणयोगाद् दीर्घस्त्रियां वर्तते, ततो न ङीष्—**नागा** । ८—कृष्णवर्णयुक्ता-इत्यर्थः । ९—'क्रूरा' इत्यर्थः । १०—वस्त्रभिन्नं गवादिकम् इत्यर्थः । ११—फाल इत्यर्थः । १२—यज्ञसाधनविशेषस्य संज्ञेयम् । १३—धनादीच्छावतीत्यर्थः । १४—चित्रवर्णा, इत्यर्थः । १५—शोणशब्दो वर्णवाची, 'अन्यतो ङीष्, इत्यनेन नित्यं ङीषि प्राप्ते विकल्पार्थं वचनम् । १६—वर्णवाचित्वेऽपि-उदन्तत्वाऽभावात् न ङीष् । १७—उदन्तत्वेऽपि गुणवाचित्वाऽभावात् न ङीष् । १८—गुणवाचित्वेन पूर्वेण प्राप्ते निषेधोऽयम् । १९—खरुः=पतिंवरा कन्या, पाण्डुः=श्वेता इत्यर्थः । २०—आकडारसूत्रभाष्यरीत्या सङ्ख्याशब्दानां गुणवाचित्वाऽनभ्युपगमाद् बहुशब्दग्रहणमिति बोध्यम् । २१—बह्वाद्यन्तर्गणसूत्रमिदम्, कृत्प्रत्ययस्य य इकारः तदन्तात्प्रातिपदिकात् ङीष् वा स्यात्; न तु क्तिन्नन्तादित्यर्थः । 'राशादिभ्यां

( सर्वतोऽक्तिन्नर्थादित्येके ) । शकटी, शकटिः ।

**२२४८ पुंयोगादाख्यायाम् ४ । १ । ४८ ॥**

या पुमाख्या पुंयोगात्स्त्रियां वर्तते ततो ङीष् । गोपस्य स्त्री=गोपी । ( पालकान्तान्न ) । गोपालिका । अश्वपालिका । ( सूर्याद्देवतायां चाप् ) । सूर्यस्य स्त्री देवता=सूर्या । देवतायां किम्–सूरी कुन्ती, मानुषीयम् ।

**२२४९ इन्द्र-वरुण-भव-शर्व-रुद्र-मृड-हिमारण्य-यव-यवन-मातुलाचार्याणामानुक् ४ । १ । ४९ ॥**

ङीष् च । इन्द्राणी । ( हिमारण्ययोर्महत्त्वे ) । महद्धिमं=हिमानी । (यवाद्दोषे) । दुष्टो यवो-यवानी । ( यवनाल्लिप्याम् ) । यवनानां लिपिर्यवनानी । ( मातुलोपाध्याययोरानुग्वा ) । मातुलानी, मातुली । उपाध्यायानी, उपाध्यायी । ( आचार्यादणत्वं च ) । आचार्यानी । ( अर्य-क्षत्रियाभ्यां वा स्वार्थे) । अर्याणी, अर्या । क्षत्रियाणी, क्षत्रिया । पुंयोगे तु–अर्यी । क्षत्रियी ।

**२२५० क्रीतात्करणपूर्वात् ४ । १ । ५० ॥**

क्रीतान्ताददन्तात्करणादेर्ङीष् । वस्त्रक्रीती । क्वचिन्न–धनक्रीता ।

**२२५१ बहुव्रीहेश्चान्तोदात्तात् ४ । १ । ५२ ॥**

---

त्रिप्' इति रा–धातोः औणादिकत्रिप्प्रत्ययान्तात् ङीषि–**रात्री** । पक्षे ङीषभावे–**रात्रिः** ।

१–इदमपि बह्वाद्यन्तर्गणसूत्रमेव, सर्वतः कृत्प्रत्ययेकारान्ताद् अकृत्प्रत्ययेकारान्ताच्च सर्वेभ्योऽपीकारान्तेभ्यः ङीषित्यर्थः, क्तिन्नर्थान्तात्तु नेत्येके । शकटिशब्दस्याऽव्युत्पन्नप्रातिपदिकत्वेन कृदन्तत्वाऽभावात् पूर्वेणाऽप्राप्ते वचनम् । २–गोपालकस्य स्त्री, अश्वपालकस्य स्त्रीति विग्रहौ । ३–पुंयोगादिति ङीषि, सूर्यतिष्येति यलोपः । ४–मनुष्यजातीया, इत्यर्थः । ५–एषाम् आनुगागमो ङीष् चेत्यर्थः । ६–इन्द्रस्य स्त्रीति विग्रहः, ङीष्, कित्त्वादन्त्यावयव आनुक् 'आन्' इत्यवशिष्यते, सवर्णदीर्घः, णत्वम्–**इन्द्राणी** । ७–आनुकि ङीषि च णत्वं न भवतीत्यर्थः । ८–आनुग्–ङीषाविति शेषः । **अर्याणी, अर्या**=स्वामिनी वैश्यजातीया वा । पुंयोगे तु ङीष् । ९–वस्त्रेण क्रीता इत्यर्थः । १०–बहुव्रीहेः क्तान्तादन्तोदात्तादन्तात् स्त्रियां ङीष् स्यादित्यर्थः ।

क्तान्ताद् ङीष् । ऊरुभिन्नी[1] ।

**२२५२ अस्वाङ्गपूर्वपदाद्वा[2] ४ । १ । ५३ ॥**

पूर्वेण नित्ये प्राप्ते विकल्पोऽयम् । सुरापीती[3], सुरापीता ।

**२२५३ स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ४ । १ । ५४ ॥**

असंयोगोपधमुपसर्जनं यत्स्वाङ्गं तदन्ताद् वा ङीष् । अतिकेशी[4], अतिकेशा । चन्द्रमुखी[5], चन्द्रमुखा । संयोगोपधात्तु । सुगुल्फा[6] ।

अद्रवं[7] मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम् ।
अतत्स्थं तत्र दृष्टं च तेन चेत्तत्तथा युतम् ॥

---

१-ऊरू भिन्नौ=असंयुक्तौ यस्याः सा **ऊरुभिन्नी** । 'जातिकालसुखादिभ्यः परा निष्ठा वाच्या' इति वार्तिकात् न पूर्वनिपातो निष्ठायाः । २-न स्वाङ्गम्=अस्वाङ्गम्, अस्वाङ्गं यत्पूर्वपदं तस्मात्परं यत् क्तान्तं, तदन्ताद् बहुव्रीहेः ङीप् वा स्यादिति सूत्रार्थः । ३-सुरा पीता यया सा **सुरापीती, सुरापीता** वा, निष्ठायाः 'निष्ठा' इति सूत्रेण पूर्वनिपातस्तु न, "जातिकालसुखादिभ्यः परा निष्ठा वाच्या" इति वार्तिकात् । ४-केशानतिक्रान्ता इति विग्रहः, "अत्यादयः क्रान्ताद्यर्थे" इति समासः, 'एकविभक्तिचापूर्वनिपाते, इति केशशब्दस्योपसर्जनत्वम् । ५-चन्द्र इव मुखं यस्याः, इति विग्रहः । ६-सु=शोभनौ गुल्फौ=घुटिके यस्याः सा=**सुगुल्फा**, अत्र गुल्फशब्दस्य संयोगोपधत्वात् न ङीष् । ७-भाष्ये त्रिधा निरुक्तं पारिभाषिकं स्वाङ्गमिह विवक्षितं दर्शयति-**अद्रवम्** इति, न विद्यते द्रवो यस्य तत्-अद्रवम्, मूर्त्तिः=अवयवसंयोगोऽस्यास्तीति मूर्तिमत्, मूर्त्तं द्रव्यमिति भावः । किञ्च प्राणिस्थं=प्राणधारिजन्तौ विद्यमानम्, अविकारजम्=रोगादिविकाराऽजन्यं द्रव्यं स्वाङ्गम् इति प्रथमं स्वाङ्गलक्षणम्, उदाहरणम्-अतिकेशीत्यादि । अतत्स्थम्=अप्राणिस्थं तत्र=प्राणिनि दृष्टं यत् तदपि स्वाङ्गमिति द्वितीयं स्वाङ्गलक्षणम्, उदाहरणम् यथा—**सुकेशी, सुकेशा** वा रथ्या । इह केशानां सम्प्रत्यप्राणिस्थत्वेऽपि प्राणिनि दृष्टत्वमस्तीति स्वाङ्गत्वम् । तेन=प्राणिस्थेन स्तनाद्यङ्गाकृतिकावयवविशेषेण, तत्=अप्राणिद्रव्यं प्रतिमादि, चेत्=यदि, तथा=प्राणिद्रव्यवत्, युतं=सम्बद्धं स्यात्, तदा तत्=स्तनाद्याकृतिकं वस्तु ( अप्राणिनोऽपि ) स्वाङ्गम्, इति तृतीयं स्वाङ्गलक्षणम् । उदाहरणं यथा—**सुस्त-**

सुस्वेदा, द्रवत्वात् । सुज्ञाना, अमूर्तत्वात् । सुमुखा शाला, अप्राणिस्थत्वात् । सुशोफा, विकारजत्वात् । सुकेशी, सुकेशा वा रथ्या, अप्राणिस्थस्यापि प्राणिनि दृष्टत्वात् । सुस्तनी, सुस्तना वा प्रतिमा, प्राणिवत्प्राणिसदृशे स्थितत्वात् ।

**२२५४ नासिकोदरौष्ठ-जङ्घा-दन्त-कर्ण-शृङ्गाच्च ४ । १ । ५५ ।**

वा ङीष् । तुङ्गनासिकी, तुङ्गनासिका । ( पुच्छाच्च ) । सुपुच्छी, सुपुच्छा । ( कबर-मणि-विष-शरेभ्यो नित्यम् ) । कबरपुच्छी । ( उपमानात्पक्षाच्च पुच्छाच्च ) उलूकपक्षी शाला । उलूकपुच्छी सेना ।

**२२५५ न क्रोडादिबह्वचः ४ । १ । ५६ ॥**

---

नी, **सुस्तना** वा प्रतिमा ।

१–स्वाङ्गलक्षणस्य पदकृत्यं दर्शयति—**सुस्वेदा** इति, स्वेदो हि द्रवः, इति न स्वाङ्गम् । **सुज्ञाना** ज्ञानं हि न मूर्तिमदिति न स्वाङ्गम् । **सुमुखा** शाला, इत्यत्र मुखं न प्राणिस्थम् इति न स्वाङ्गम् । **सुशोफा,** शोफस्य=शोथस्य, रोगादिविकारजन्यत्वान्न स्वाङ्गत्वम् । २–द्वितीयलक्षणम् उदाहरणप्रदर्शनपूर्वकं सङ्गमयति–**सुकेशी, सुकेशा** वेति । ३–तृतीयलक्षणम् उदाहरणे सङ्गमय्य दर्शयति—**सुस्तनी, सुस्तना** वेति । ४–आद्ययोः=नासिकोदरशब्दयोः बह्वच्कत्वात् 'न क्रोडादिबह्वचः' इति ङीष्निषेधः प्राप्तः, सोऽनेन ङीष्विकल्पेन 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानिति, न्यायाद् बाध्यते, सह नञ्–विद्यमानेति निषेधस्तु परत्वादस्य बाधकः । ओष्ठादिपञ्चानां तु, असंयोगोपधादिति पर्युदासे प्राप्तेऽत्र वचनम् । अतस्तेषामपि वा ङीष् स्यादेव । ५–तुङ्गा=उन्नता नासिका यस्या इति विग्रहः । एवं कृशोदरी, कृशोदरा । बिम्बोष्ठी, बिम्बोष्ठा । दीर्घजङ्घी, दीर्घजङ्घा–इत्यादयः । ६–वा ङीष् इति शेषः । ७–कबरादिभ्यः परो यः पुच्छशब्दः, तदन्तान्नित्यं ङीषिति वक्तव्यम् इत्यर्थः । कबरं=चित्रं पुच्छं यस्याः सा=**कबरपुच्छी,** एवं मणिपुच्छी, विषपुच्छी=वृश्चिकी, शरपुच्छी । ८–उपमानवाचकात्परौ यौ पक्षपुच्छशब्दौ तदन्तादपि ङीष् इत्यर्थः । ९–उलूकस्य पक्षाविव पक्षौ यस्याः सा **उलूकपक्षी**=शाला । एवम्–**उलूकपुच्छी** ।

क्रोडादेर्बह्वचश्च स्वाङ्गान्न ङीष्[1]। कल्याणक्रोडा[2]। आकृतिगणोऽयम्। सुजघना।

**२२५६ सह-नञ्-विद्यमानपूर्वाच्च ४।१।५७॥**

न[3] ङीष्। सकेशा। अकेशा। विद्यमाननासिका।

**२२५७ नख-मुखात् संज्ञायाम् ४।१।५८॥**

ङीष् न[4]। शूर्पणखा[5]। गौरमुखी[6]। संज्ञायां किम्—ताम्रमुखी[7] कन्या।

**२२५८ वाहः ४।१।६१॥**

वाहन्ताद् ङीष्। दित्यौही[8]।

**२२५९ सख्यशिश्वीति भाषायाम् ४।१।६२॥**

सखी[9]। अशिश्वी।

**२२६० जातेरस्त्रीविषयादयोपधात् ४।१।६३॥**

जातिवाचि यन्न च स्त्रियां नियतमयोपधं[11] ततो ङीष्।

१—क्रोडादिगणपठितादित्यर्थः। २—कल्याणी क्रोडा=उरःस्थलं यस्याः सा=**कल्याणक्रोडा** वडवा, पूर्वपदे पुंवद्भावः। **सुजघना** अत्र स्वाङ्गवाची जघनशब्दो बह्वच्कः। ३—सहेत्यादि त्रिकपूर्वान्न ङीष् इत्यर्थः। सह केशा यस्याः इति विग्रहः। "वोपसर्जनस्य" इति सह-शब्दस्य स-भावः। ४—स्वाङ्गाच्चेति प्राप्तस्य निषेधोऽयम्। ५ शूर्पाणीव नखानि यस्याः सा राक्षसी=रावणभगिनी=**शूर्पणखा**। 'पूर्वपदात्संज्ञायाम्' इति णत्वम्। ६—इदमपि कस्याश्चिन्नाम। ७—ताम्रं=रक्तं मुखं यस्याः सा=**ताम्रमुखी**, यौगिकमिदं नाम स्वाङ्गाच्चेति ङीष्। ८—दित्यं=वेदप्रसिद्धं गवां वयोविशेषं वहति, इति विग्रहे, वहश्चेति ण्विः, उपधावृद्धिः, उपपदसमासः, दित्यवह्—शब्दात् ङीष्, 'वाह ऊठ्' इत्यूठ् 'एत्येधत्यूठ्स्वि'ति वृद्धिः—**दित्यौही**। ९—सखिशब्दात् अशिशु-शब्दाच्च स्त्रियां ङीष् निपात्यते भाषायाम्, लौकिकप्रयोगो भाषा। अत्र सूत्रे 'इति' शब्दः प्रकारे, प्रकारः=सजातीयता, ततो भाषायां वेदे चेति फलितम्, भाषायाम् इति वचनं तु भाषायां सर्वत्र भवति, वेदे तु क्वचिदिति बोधनार्थम्। १०—सखिशब्दात् ङीषि, 'यस्येति च' इतीकारलोपे **सखी**। न विद्यते शिशुर्यस्याः सा=**अशिश्वी**, ङीषि-उकारस्य यण्। ११—यः=यकार उपधायां यस्य तद् योपधं न योपधम्=**अयोपधम्**।

आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक्।
सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ॥

घटी। वृषली। औपगवी। कठी। जातेः किम्—मुण्डा। अस्त्रीविषयात्किम्—बलाका। अयोपधात्किम्—क्षत्रिया। (योपधप्रतिषेधे हय-गवय-मुकय-मनुष्य-मत्स्यानामप्रतिषेधः)। हयी। गवयी। मुकयी। मनुषी। मत्सी।

---

१–भाष्याभिमतां त्रिविधां जातिं प्रकृतोपयोगिनीं लक्षयति—**आकृतिग्रहणा जातिरिति,** आकृतिः=अवयव-सन्निवेश-विशेषः, ग्रहणं=व्यञ्जकं यस्याः सा जातिरिति प्रथमं जातिलक्षणम्, उदाहरणं यथा–**घटी**। द्वितीयं जातिलक्षणमाह–**लिङ्गानां** च न सर्वभाक्=या सर्वाणि लिङ्गानि न भजते इत्यर्थः। सकृदित्यतः पूर्वम् एकस्यां व्यक्तौ इति शेषः, आख्यातः=उपदेशः, निर्ग्राह्या=सुग्रहा, असर्वलिङ्गत्वे सति एकस्यां व्यक्तौ कथनाद् व्यक्त्यन्तरे कथनं विनापि सुग्रहा जातिरित्यर्थः, यथा—**वृषली** शूद्री, वृषलत्वं हि-असर्वलिङ्गं नपुंसकत्वाऽभावात्, एकस्यां व्यक्तौ वृषलत्वे उपदिष्टे व्यक्त्यन्तरे–तदपत्यादौ तदुपदेशं विनापि तस्य सुग्रहत्वाद् जातिः। तृतीयां जातिमाह–**गोत्रं चेति,** जात्यतिदेशोऽयम्–गोत्रम्=अपत्यप्रत्ययान्तः, चरणैः=शाखाध्येतृवाचिभिः सह जातिः=जातिकार्यं लभते इत्यर्थः। गोत्रं यथा—**औपगवी,** उपगोरपत्यं स्त्रीति विग्रहेऽपत्यार्थेऽणि 'टिड्ढेति' ङीपं बाधित्वा ङीष्। ङीष् ङीपोः स्वरे विशेषः। चरणं यथा—**कठी,** कठेन प्रोक्तमधीते वेद वा, अण्, ततो जातिलक्षणो ङीष् प्रत्ययः। २–मुण्डा=मुण्डिता, नायं जातिशब्दः, किन्तु मुण्डत्वगुणयोगात्–गुणशब्दः। तेन न ङीष्। ३–पक्षिविशेषस्य संज्ञेयम्, जातित्वेऽपि नित्यस्त्रीलिङ्गत्वान्न ङीषिति भावः। ४–जातित्वेऽपि योपधत्वान्न ङीषित्यर्थः। ५–हयादीनां योपधत्वेऽपि ङीष् वाच्य इत्यर्थः। ६-हयी=वडवा, गवयी=गवयजातीया, मुकयी=चतुष्पाज्जातिविशेषः। मनुष्यशब्दात् ङीषि 'मनुष्य=ई' इति स्थिते। 'हलस्तद्धितस्ये'ति यलोपे यस्येति च इत्यलोपे **मनुषी** इति रूपम्। **मत्सी** 'मत्स्यस्य ङ्याम्' इति यलोपे साधु।

**२२६१ पाक-कर्ण-पर्ण-पुष्प-फल-मूल-वालोत्तरपदाच्च ४ । १ । ६४ ॥**

पाकाद्युत्तरपदाज्जातिवाचिनः स्त्रीविषयादपि ङीष्[1] । ओदनपाकी । शङ्कुकर्णी । शालपर्णी । शङ्खपुष्पी । दासीफली । दर्भमूली । गोवाली । ओषधिविशेषे रूढाः[2] ।

**२२६२ इतो मनुष्यजातेः[3] ४ । १ । ६५ ॥**

ङीष् । दाक्षी[4] ।

**२२६३ ऊङुतः[5] ४ । १ । ६६ ॥**

उकारान्तादयोपधान्मनुष्यजातिवाचिन ऊङ् । कुरूः[6] ।

**२२६४ पङ्गोश्च[7] ४ । १ । ६८ ॥**

पङ्गूः । ( श्वशुरस्योकाराकारलोपश्च ) । चादूङ् । पुंयोगलक्षणङीषोऽपवादः । श्वश्रूः[8] ।

**२२६५ ऊरूत्तरपदादौपम्ये[9] ४ । १ । ६९ ॥**

उपमानवाचि-पूर्वपदमूरूत्तरपदं यत्तस्मादूङ् । करभोरूः[10] ।

---

१–नियतस्त्रीलिङ्गत्वाद् 'जातेरस्त्रीविषयाद्, इत्यप्राप्तौ वचनमिति भावः । २–न सन्त्येषाम् अवयवव्युत्पत्तयः, इत्यर्थः । ३–इदन्ताद् मनुष्यजातिवाचिनो ङीष् इत्यर्थः । ४–दक्षस्याऽपत्यम् इत्यर्थे 'अत इञ्' इति 'इञ्' आदिवृद्धौ, स्त्रियां दाक्षि शब्दात् ङीषि, 'यस्येति च' इतीकारलोपे दाक्षी । ५–अयोपधादिति, 'मनुष्यजातेः' इति चानुवर्तते, उत इति तद्विशेषणम्, तदन्तविधिः । तदाह-वृत्तौ—उकारान्तादित्यादि । ६–कुरुक्षेत्रस्य राजा कुरुः, तस्याऽपत्यं स्त्रीति विग्रहेऽणं बाधित्वा 'कुरुनादिभ्यो ण्यः, इति ण्यप्रत्ययः, तस्य च 'स्त्रियामवन्ति' इत्यादिना लुक्, अपत्यप्रत्ययान्तत्वेन जातित्वम् 'ऊङ्'प्रत्यये-कुरूः । ७–भग्नपादत्वं=पङ्गुत्वं न जातिरिति 'ऊङुत' इत्यप्राप्तौ वचनम् । ८–श्वशुरस्य स्त्रीति विग्रहे पुंयोगलक्षणे ङीषि प्राप्ते तदपवाद ऊङ् तत्सन्नियोगेन रेफात्परस्याऽकारस्य, शकारात्परस्य 'उ'कारस्य लोपश्चेत्यर्थः । ९–ऊङन्तेषु 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति स्वादयो भवन्ति । १०–करभौ-इव-ऊरू यस्या इति विग्रहः । 'मणिबन्धादाकनिष्ठं करस्य करभो बहिरि' त्यमरः ।

**२२६६ संहित-शफ-लक्षण-वामादेश्च ४।१।७०॥**

संहितोरूः। (सहित-सहाभ्यां च) सहितोरूः। सहोरूः।

**२२६७ शार्ङ्गरवाद्यञो ङीन् ४।१।७३॥**

शार्ङ्गरवादेरञो योऽकारस्तदन्ताच्च जातिवाचिनो ङीन् स्यात्। शार्ङ्गरवी। बैदी। (नृनरयोर्वृद्धिश्च)। नारी।

**२२६८ यङश्चाप् ४।१।७४॥**

यङन्ताच्चाप्। आम्बष्ठ्या। कारीषगन्ध्या। (षाद्यञश्चाब्वाच्यः)। पौतिमाष्या।

**२२६९ आवट्याच्च ४।१।७५॥**

अस्माच्चाप्। यञश्चेति ङीपोऽपवादः। अवटशब्दो गर्गादिः। आवट्या।

**२२७० यूनस्तिः ४।१।७७॥**

युवन्शब्दात्तिप्रत्ययः। युवतिः। अनुपसर्जनादित्येव—बहवो युवानो

---

१-अनौपम्यार्थं वचनम्। संहितौ=संश्लिष्टौ ऊरू यस्याः सा **संहितोरूः**। एवं शफोरूः, लक्षणोरूः, वामोरूः। २-एताभ्यामुत्तरस्माद् ऊरुशब्दात् 'ऊङ्'-इत्यर्थः। हितेन सह, सहितौ ऊरू यस्याः सा **सहितोरूः**। सहेते इति सहौ, तौ-ऊरू यस्याः सा **सहोरूः**। ३-शृङ्गरु-शब्दाद् अपत्यार्थेऽणि, आदिवृद्धौ, 'ओर्गुणः' इति गुणे, शार्ङ्गरव-शब्दात् स्त्रियां ङीन्-**शार्ङ्गरवी**, नित्त्वादाद्युदात्तम्। **बैदी**—बिदाद्यञन्तात् ङीन्, आदिवृद्धिः। ४-गणसूत्रमिदम्। नृ-शब्दस्य नर-शब्दस्य च ङीन् वृद्धिश्चेत्यर्थः। द्वयोरपि **नारी** इति रूपम्। ५-अम्बष्ठस्याऽपत्यं स्त्रीति, 'वृद्धेत्कोसल' इति ञ्यङ् आदिवृद्धौ आम्बष्ठ्य-शब्दात् चाप्-**आम्बष्ठ्या**। ६-करीषं=गवादिपशुपुरीषम्, तस्येव गन्धो यस्य स करीषगन्धिः, उपमानाच्चेति गन्धस्य-इत्, तस्मादपत्यार्थेऽणि, 'अणिञोरनार्षयोः' इति-अणः ष्यङादेशः कारीषगन्ध्यशब्दात् चाप्, **कारीषगन्ध्या**। ७-षकारात् परो यो यञ् तदन्तादपि चाप् इत्यर्थः। पूतिमाषस्याऽपत्यमित्यर्थे 'गर्गादिभ्यो यञ्, इति यञन्तात् पौतिमाष्य-शब्दात् स्त्रियां चाप्, **पौतिमाष्या**। ८-अवटस्याऽपत्यं स्त्री-**आवट्या**, गर्गादित्वाद् यञि, चाप्, **आवट्या**। ९-युवन्-शब्दात् 'ऋन्नेभ्यो ङीप्, इति ङीपोऽपवादः, तिप्रत्ययः, स्वादिष्वसर्वेति पदत्वान्नकार-

यस्यां बहुयुवा । युवतीति तु यौतेः शत्रन्तात् ङीपि बोध्यम् । इति स्त्रीप्रत्ययाः ।

# अथ वैदिकप्रक्रिया ।

**२२७१ षष्ठीयुक्तश्छन्दसि वा ४ । १ । ९ ॥**

पतिशब्दो घिसंज्ञः । क्षेत्रस्य पतिना वयम् । इह वेति योगं विभज्य छन्दसीत्यनुवर्तते । तेन सर्वे विधयश्छन्दसि वैकल्पिकाः । बहुलं छन्दसीत्यादिरस्यैव प्रपञ्चः ।

**२२७२ अयस्मयादीनि च्छन्दसि १ । ४ । २० ॥**

साधूनि । भ-पदसंज्ञाधिकाराद्यथायोगं संज्ञाद्वयं बोध्यम् । तथा च वार्तिकम् । (उभयसंज्ञान्यपीति वक्तव्यमिति) । ससुष्टुभा स ऋक्वता गणेन ।

---

लोपः, **युवतिः** ।

१-अत्र हि युवन्-शब्दः उपसर्जनम् । **बहुयुवा**, नान्तलक्षणस्य ङीपो-"ऽनो बहुव्रीहे"रिति निषेधे डाबुभाभ्याम् इति डापि रूपमिदम् । २-दीर्घान्तस्तु इत्यर्थः । यु-मिश्रणे इत्यस्मात् लटः 'शतृ'-आदेशेऽदादित्वेन शपो लुकि, उवङि युवत्-शब्दात्-उगितश्चेति ङीप्प्रत्यये 'युवती' शब्दो व्युत्पन्नो बोध्यः, इत्यर्थः ।

इति श्रीप्रभाकरीविवृतौ म० कौ० टीकायां स्त्रीप्रत्ययाः सम्पूर्णाः ।

अथ वैदिकप्रकरणम् ।

३--षष्ठ्यन्तेन युक्तः पतिशब्दश्छन्दसि घिसञ्ज्ञो वा स्यादित्यर्थः, 'पतिः समास एव' इति नियमात् समासाऽभावेऽप्राप्तौ विकल्पोऽयं छन्दसि । तेन 'क्षेत्रस्य **पतिना**, घिसंज्ञात्वेन 'आङो नाऽस्त्रियाम्, 'ना' भावः । ४-इह 'षष्ठीयुक्त' इति सूत्रे 'वा' इति पृथक् सूत्रं विभज्य छन्दसीत्यनुवर्त्य 'यावदिह शास्त्रे कार्यं तत्सर्वं छन्दसि वा भवति, इत्यर्थो लभ्यते तदेवाह-**तेन सर्वे** इत्यादि । तथा च स्थाने स्थाने बहुलं छन्दसीति सूत्रमेतस्यैव वैकल्पिकत्वस्य प्रपञ्चमात्रम् । ५-लोके 'आकडारादेका संज्ञा' इति नियमाद्भ-पदसंज्ञयोर्मध्यत एकैव संज्ञा भवति, छन्दस्युभयसिद्धये निपातनमिदम् । ६-ऋच्+वता, इत्यत्र पदसंज्ञात्वेन चस्य कुत्वम्, भसंज्ञात्वेन च पदत्वबाधात् न जश्त्वम्, **ऋक्वता** ।

पदत्वात्कुत्वम्। भत्वाज्जश्त्वाभावः। नैनं हिन्वन्त्यपि वाजिनेषु[1]। अत्र पद-त्वाज्जश्त्वं भत्वात्कुत्वाभावः। 'ते प्राग्धातोः'।

**२२७३ छन्दसि परेऽपि १।४।८१॥**

**२२७४ व्यवहिताश्च १।४।८२॥**

हरिभ्यां याह्योक आ[3]। आमन्द्रैरिन्द्र हरिभिर्याहि।

**२२७५ तृतीया च होश्छन्दसि २।३।३॥**

जुहोतेः कर्मणि तृतीया स्याद् द्वितीया च। यवाग्वाग्निहोत्रं जुहोति।

**२२७६ मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ३।२।७१॥**

(श्वेतवहादीनां डस् पदस्येति वक्तव्यम्)। यत्र पदत्वं भावि तत्र ण्विनोऽपवादो डस्वक्तव्य इत्यर्थः। श्वेतवाः। श्वेतवाहौ श्वेतवाहः। उक्थानि

---

१—वाच्+इनेषु, इति छेदः, पदत्वेन 'झलां जश,' इति चस्य जत्वम्, जस्य चोः कुरिति कुत्वं तु न, भसंज्ञया पदसंज्ञाया बाधात्, वाचाम्+इनाः =वाजिनः, तेषु **वाजिनेषु**=वाग्मिषु। २—लोके गतिसंज्ञका उपसर्गाश्च 'ते प्राग्धातोः' इति धातोः प्रागेव प्रयुज्यन्ते, छन्दसि तदपवादमाह—**छन्दसि परेऽपीति, व्यवहिताश्चेति**। ३—आयाहीति प्राप्ते, याहि ओक **आ**, इति परप्रयोगः, **आ** मन्द्रैरित्यत्र व्यवहितः पूर्वप्रयोगः। ४—कर्मणि द्वितीयायां प्राप्तायां छन्दसि तृतीयाविधानार्थमिदम्। चकाराद् द्वितीयाऽपि। ५—अग्नि-होत्रशब्दोऽत्र हविषु वर्तते, अग्नौ हूयत इति व्युत्पत्तेः। 'यवाग्वाख्यं हविर्दे-वतोद्देश्येन प्रक्षिपति, इत्यर्थः। ६—श्वेतादिपूर्वेभ्यो वहादिभ्यो ण्विन् स्या-दिति सूत्रार्थः। श्वेतशब्दे कर्तृवाचिन्युपपदे वहः कर्मणि कारके ण्विन् प्रत्ययः। उक्थस्-शब्दे कर्मवाचिनि करणवाचिनि चोपपदे शस्-धातोः ण्विन् नलोपश्च, पुरःशब्दपूर्वकात् दाशृ-दाने इत्यस्मात् ण्विन् प्रत्ययः, धातोर्द-कारस्य डत्वं चेति विवेकः। डस्पदस्येति प्रत्येकमभिसम्बध्यते। ७—यत्र डसन्तस्य पदत्वम्=पदसंज्ञा भावि=भविष्यत्—तत्रेत्यर्थः। ८—श्वेता एव यं वहन्ति स—**श्वेतवाः**=इन्द्रः, 'श्वेत-वह्' इत्यस्मात् भाविपदत्वेन ण्विनोऽपवादे डसि प्रत्यये, डित्वाट्टिलोपे 'श्वेतवस्' शब्दः, अत्वसन्तस्येति दीर्घः। पदत्वा-भावे ण्विन्प्रत्ययस्य सर्वापहारे श्वेतवाह्शब्दः तथा च श्वेतवाः, श्वेतवाहौ, श्वेतवाहः, इत्यादिरूपाणि, हलादौ-पदत्वेन डसन्तत्वेन श्वेतवोभ्याम् इत्यादि,

उक्थैर्वा शंसति उक्थशाः=यजमानः । उक्थशासौ । पुरो दाश्यते=दीयते पुरोडाः ।

**२२७७ अवे[1] यजः ३ । २ । ७२ ॥**

अवयाः[2] । अवयाजौ । अवयाजः ।

**२२७८ अवयाः श्वेतवाः पुरोडाश्च[3] ८ । २ । ६७ ॥**

एते संबुद्धौ कृतदीर्घा निपात्यन्ते । चादुक्थशाः ।

**२२७९ लिङर्थे[4] लेट् ३ । ४ । ७ ॥**

**२२८० सिब्बहुलं[5] लेटि ३ । १ । ३४ ॥**

**२२८१ इतश्च लोपः[6] परस्मैपदेषु ३ । ४ । ९७ ॥**

लेटस्तिङां वा ।

**२२८२ लेटोऽडाटौ[7] ३ । ४ । ९४ ॥**

स्तो वा । तौ च पितौ । ( सिब्बहुलं णिद्वक्तव्यः ) । वृद्धिः । प्र ण आयूंषि तारिषत्[8] । सुपेशस्करति जोषिषद्धि[9] । आसाविषदर्शसानाय[10] । सिप

---

वेधोवत् । एवम्–उक्थशाः, उक्थशासौ । उक्थशोभ्याम् । पुरोडाः, पुरोडासौ । पुरोडोभ्याम् इत्यादि ।

१–अव–पूर्वकाद् यजेः ण्विन्, पदत्वे भाविनि तदपवादो ङस् इत्यर्थः । २–सौ ण्विनोऽपवादे ङसि, टिलोपे अवयस् शब्दः, अत्वसन्तस्येति दीर्घे **अवयाः**, अन्यत्र ण्विनि—उपधादीर्घे अवयाजौ अवयाजः, भ्यामादौ अवयोभ्याम्, इत्यादि । ३–सम्बुद्धौ–'अत्वसन्तस्य' इत्यप्राप्तौ दीर्घो निपात्यते । ४–विध्यादौ हेतुहेतुमद्भावादौ च धातोर्लेट् स्याच्छन्दसि, इत्यर्थः । 'लः कर्मणि, इति सूत्रे पञ्चमो लकारः ( लेट् ) छन्दोमात्रगोचर इत्युक्तं तदिदानीं प्रदर्श्यते । ५–लेटि बहुलं सिप् स्यादित्यर्थः । ६–लेट्स्थानिकानां तिङाम् इतो लोपः परस्मैपदेष्वित्यर्थः । ७–लेटः 'अट्' 'आट्' एतावागमौ स्तः, तौ च पितौ स्यातामित्यर्थः । ८–तॄ-धातोर्लेटि, तिबादेशे, इकारलोपे, सिपि, वलादिलक्षणे इटि सिपो णित्वाद् वृद्धौ, रपरत्वे, षत्वे, अटि रूपम्—**तारिषत्** । ९–जुषी–प्रीतिसेवनयोः, व्यत्ययेन परस्मैपदम्, लेटि, तिपि, इकारलोपे, सिपि, इटि, षत्वे, उपधागुणे, अटि—रूपम् **जोषिषत्** । १०–आङ्पूर्वात् षु–प्रसवैश्वर्ययोः इत्यस्य लेटि रूपम् । सिद्धिः

इलोपस्य चाभावे—पताति विद्युत्। प्रियः सूर्ये प्रियो अग्ना भवाति।

**२२८३ स उत्तमस्य ३।४।९८॥**

लेट उत्तमस्य वा लोपः। करवावः, करवाव। टेरेत्वम्।

**२२८४ आत ऐ ३।४।९५॥**

लेट ऐ स्यात्। सुतेभिः सुप्रयसा मादयैते।

**२२८५ वैतोऽन्यत्र ३।४।९६॥**

लेट एकारस्य ऐ स्याद्वा, आत ऐ इत्यस्य विषयं विना। पशूनामीशै। ग्रहा गृह्यान्तै। अन्यत्र किम्—सुप्रयसा मादयैते।

**२२८६ उपसंवादाशङ्कयोश्च ३।४।८॥**

पणबन्धे आशङ्कायां च लेट्। अहमेव पशूनामीशै। नेज्जिह्मायन्त्यो

---

पूर्ववत्, **आसाविषत्**।

१-पत्-धातोर्लेटि तिपि, इकारलोपाऽभावे सिपोऽभावे च आडागमे, **पताति**=पतेदित्यर्थः। २-भूधातोः लेट्, तिप्, इलोपाभावः, सिपोऽभावश्च, आट् गुणोऽवादेशः, **भवाति**। ३-लट्स्थानिकयोर्वस्-मसोः सस्य, इत्यर्थः। ४-कृञो लेटो वस्, 'तनादिकृञ्भ्यः' इति उः, गुणः, रपरत्वम्, 'लेटोऽडाटौ' इत्याट्, तस्य पित्वेनाऽङित्वात्-विकरणस्य गुणः, 'अत उदिति' उत्वाऽभावश्च—**करवावः**, पक्षे सलोपे-**करवाव**। ५-मदी-हर्षे इत्यस्माद् णिजन्ताद् 'मादि' इत्यस्माद् लेट्, आत्मनेपदे प्रथमपुरुषद्विवचने 'आताम्' इत्यादेशे कृते 'मादि+आताम्' इति स्थितौ आह-**टेरेत्वम्** इति, 'टित आत्मनेपदानाम्, इत्यनेन आताम् इत्यस्य टेः='आम्'-इत्यस्य एकार इत्यर्थः। प्रथमस्य च आकारस्य 'आत ऐ' इत्यनेन ऐकारादेशः 'मादि+ऐते' इत्यवस्थायां गुणाऽयादेशयोः सतोः, **मादयैते** इति। ६-**ईशै**, ईश्-ऐश्वर्ये, आत्मनेपदे उत्तमपुरुषैकवचनम्, इट्, इट इकारस्य 'इतश्च लोप' इति लोपस्तु न परस्मैपदेष्वित्युक्तेः। टेरेत्वे ईश्+ए, इति स्थिते एकारस्य-ऐकारः। ७-ग्रह् धातोः कर्मणि लेटो झि अन्तादेशः, यकि, ग्रहिज्येति सम्प्रसारणे, आडागमे, टेरेत्वे 'गृह्यान्ते' इति एकारस्य ऐकारे, **गृह्यान्तै**। पक्षे **गृह्यान्ते**। ८-अयं हि 'आत ऐ' इत्यस्य विषयः, अतो न विकल्पः। ९-**ईशै**-अत्र पणबन्धे लेट्, सिद्धिः पूर्ववत्। पणबन्धः=समयकरणम्।

नरकं पताम[1]।

**२२८७ व्यत्ययो बहुलम् ३।१।८५॥**

विकरणानां छन्दसि[2]। आण्डा शुष्मस्य भेदति[3]। भिनत्तीति प्राप्ते। जरसा मरते पतिः[4]। म्रियत इति प्राप्ते। इन्द्रो वस्तेन नेषतु[5]। नयतेर्लोट्। शप्सिपौ द्वौ विकरणौ। इन्द्रेण युजा तरुषेम वृत्रम्[6]। तरेमेत्यर्थः। तरतेर्विध्यादौ लिङ्। उः सिप् शप् चेति त्रयो विकरणाः।

सुप्तिङुपग्रह-लिङ्ग-नराणां काल-हलच्-स्वर-कर्तृ-यङां च।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन[7]॥

---

१-आशङ्कोदाहरणमिदम्। पतधातोर्लेटि उत्तमपुरुषबहुवचने आडागमे, सलोपे-**पताम** इति। २-विकरणानां=शबादीनां बहुलं व्यत्ययः स्याच्छन्दसि, इत्यर्थः। ३-रुधादित्वात् श्नमि प्राप्ते व्यत्ययेन शप्, उपधागुणः, **भेदति**। ४-मृङ्-धातोस्तुदादित्वाद्-शे प्राप्ते व्यत्ययेन शप्, गुणे रपरे-**मरते** इति। ५- नयतु' इति प्राप्ते **नेषतु**, णीञ्-प्रापणे इत्यस्माल्लोटि व्यत्ययेन शप्-सिपौ द्वौ विकरणौ गुणे रूपसिद्धिः। ६-तॄधातोः लिङि उत्तमपुरुषबहुवचने व्यत्ययेन उः-सिप्-शप् चेति त्रयो विकरणाः, गुणे षत्वे 'तरुष+मस्,इति जाते यासुट्, उटावितौ 'लिङः सलोप' इति यासः सलोपे, नित्यं ङितः, इति मसः सकारलोपे च 'अतो येयः' इति 'या' इत्यस्य 'इय्' 'लोपो व्योरि'ति यलोपे 'आद्गुणः' इति गुणे—**तरुषेम**। ७-**सुप्तिङिति**, शास्त्रकृत्=पाणिनिराचार्यः, एषां=सुप्तिङ्प्रभृतीनां व्यत्ययं=विपर्यासम् इच्छति। सोऽपि=व्यत्ययो बाहुलकेन=बहुलतया सिद्ध्यति। चशब्दो हेतौ। तथा चायमर्थः, यस्मादेवंविधो व्यत्ययो बहुलग्रहणेन सिद्ध्यति, तस्माद् बहुलग्रहणं कृतम् आचार्येणेति, तत्र क्रमेणोदाहरणानि—सुब्व्यत्ययो यथा-'धुरि' **दक्षिणायाः** ङिस्थाने व्यत्ययेन ङस्, तदुक्तं-दक्षिणायाम् इति प्राप्ते। तिङ्व्यत्ययः-'चषाल...**तक्षति**' झिस्थाने व्यत्ययेन तिप्, तदाह-तक्षन्ति, इति प्राप्ते। उपग्रहः=परस्मैपदात्मनेपदे तदुदाहरणम् यथा—ब्रह्मचारिण**मिच्छते**, परस्मैपदस्थाने व्यत्ययेनात्मनेपदम्, तदाह-इच्छतीति प्राप्ते। तथा च प्रतीप...**युध्यति**, युध्यति इत्यत्र व्यत्ययेन परस्मैपदम्। लिङ्गव्यत्ययो यथा—**मधोस्तृप्ता** इवासते, मधोरिति

धुरि दक्षिणायाः, दक्षिणस्यामिति प्राप्ते । चषालं ये अश्वयूपाय तक्षति, तक्षन्तीति प्राप्ते । उपग्रहः=परस्मैपदात्मनेपदे, ब्रह्मचारिणमिच्छते, इच्छतीति प्राप्ते । प्रतीपमन्य ऊर्मिर्युध्यति, युध्यत इति प्राप्ते । मधोस्तृप्ता इवासते, मधुन इति प्राप्ते । नरः=पुरुषः, अधा स वीरैर्दशभिर्वियूयाः, वियूयादिति प्राप्ते । कालः=कालवाची प्रत्ययः, श्वोऽग्नीनाधास्यमानेन, लुटो विषये लृट् । तमसो गा अदुक्षत्, अधुक्षदिति प्राप्ते । मित्र वयं च सूरयः, मित्रावयमिति प्राप्ते । स्वरव्यत्ययस्तु वक्ष्यते । कर्तृशब्दः कारकमात्रपरः, तथा च तद्वाचिनां कृत्तद्धितानां व्यत्ययस्तु—अन्नादाय, अणिविषये अच् । यङो यशब्दादारभ्य लिङ्याशिष्यङिति ङकारेण प्रत्याहारः । तेषां व्यत्ययो भेदतीत्यादिरुक्त एव ।

**२२८८ छन्दस्युभयथा ३ । ४ । ११७ ॥**

धात्वधिकारोक्तः प्रत्ययः सार्वधातुकार्धधातुकोभयसंज्ञः स्यात् । वर्धन्तु

---

नपुंसकस्थाने पुंल्लिङ्गम्, तदाह—मधुन इति प्राप्ते । नरः=पुरुषः, तद्व्यत्ययो यथा—अधा स वीरैर्दशभि**र्वियूयाः**, विपूर्वको यु—धातुः आशिषि लिङः—प्रथमपुरुषस्य व्यत्ययेन मध्यमपुरुषः, तदाह—'वियूयात्' इति प्राप्ते । कालः=कालवाची प्रत्ययः, तद्व्यत्ययो यथा श्वोऽग्नी**नाधास्यमानेन,** अत्र व्यत्ययेन लुटो विषये लृट्, तस्य शानचि रूपम् । हल्व्यत्ययो यथा—तमसो गा **अदुक्षत्**, व्यत्ययेन धकारस्य दकारः । तदुक्तम् "अधुक्षत्" इति प्राप्ते । अच्—व्यत्ययो यथा—**मित्र** वयं च सूरयः, अत्र दीर्घस्य ह्रस्वव्यत्ययः, तदाह मित्रा वयमिति प्राप्ते । स्वरः=उदात्तादिस्तद्व्यत्ययस्तु स्वरप्रक्रियायां स्पष्टः । कर्तृशब्दः कारकमात्रपरस्तथा च कारकवाचिनां कृतां तद्धितानां च व्यत्ययः=कर्तृव्यत्ययः, तद् यथा—**अन्नादाय**, इत्यत्राणविषयेऽच्प्रत्ययः । यद्यपि रूपसिद्धौ अणि, अचि न कश्चिद् विशेषः, तथाप्यवग्रहेऽस्ति विशेषः, अणि कृते 'अन्न आदायेति'—अवग्रहः । अचि तु 'अन्न अदाय' इति । यङ् प्रत्याहारः, तेन तदन्तर्वर्तिप्रत्ययाः गृह्यन्ते, तेषां व्यत्ययश्च भेदत्यादावुदाहृत एव इति ।

१—णिजन्ताद् वृध्—धातोर्लोटि प्रथमपुरुषबहुवचने रूपम्, आर्धधातुकत्वेन 'णेरनिटि, णिलोपे—**वर्धन्तु** ।

त्वा सुष्टुतयः, वर्धयन्त्वित्यर्थः। आर्धधातुकत्वाण्णिलोपः। विश्वशिवरे। सार्वधातुकत्वात् श्नुः श्नभावश्च। हुश्नुवोरिति यण्।

**२२८९ तुमर्थे से-सेनसे-असेन्-क्से, कसेनध्यै-अध्यैन्-कध्यै-कध्यैन्-शध्यै-शध्यैन्-तवै-तवेङ्-तवेनः ३। ४। ९॥**

से-वक्षे[2] रायः। सेन्-ता वामेषे[3]। असे-शरदो जीवसे[4] धाः। असेन् नित्वादाद्युदात्तः। क्से-प्रेषे[5]। कसेन्-गवामिव श्रियसे[6]। अध्यै, अध्यैन्-जठरं पृणध्यै[7], पक्षे-आद्युदात्तम्। कध्यै, कध्यैन्-आहुवध्यै[8]। शध्यै-राधसः सह मादयध्यै[9], शध्यैन्-वायवे पिबध्यै[10]। तवै-दातवा[11] उ। तवेङ्-सूतवे[12]। तवेन्-कर्तवे[13]।

**२२९० प्रयै रोहिष्यै अव्यथिष्यै[14] ३। ४। १०॥**

---

१-धातोरेते पञ्चदश प्रत्ययास्तुमर्थे भवन्तीत्यर्थः। २-वच् धातोः से-प्रत्यये, चोः कुरिति, कुत्वम्, सस्य षत्वम्, कषसंयोगे क्षः, **वक्षे**=वक्तुम् इत्यर्थः। ३-इण्-धातोः सेन्प्रत्यये, इणो गुणः, षत्वम्, **एषे**। ४-जीव् धातोः असे-प्रत्ययः, **जीवसे**=जीवितुमित्यर्थः। ५-प्रपूर्वकात् इण्-धातोः क्से प्रत्यये कित्वाद् गुणाभावे, षत्वे इषे, 'प्र+इषे आद्गुणः, **प्रेषे**। ६-श्रिञ् सेवायाम्, इत्यस्मात् कसेन् प्रत्ययः, 'असे' इति शिष्यते कित्वाद् गुणाभावे, इयङ्, **श्रियसे**=श्रयितुम्, इत्यर्थः। ७-क्र्यादेः पॄ-धातोः-अध्यै-अध्यैन्प्रत्ययौ, श्नाविकरणः, प्वादीनां ह्रस्वः, इति ह्रस्वे, आलोपे णत्वे-**पृणध्यै**, नित्वात् स्वरे भेदः। ८-आङ् पूर्वकाद् हुधातो कध्यैप्रत्ययः कित्वाद् गुणाभावे, उवङ् **आहुवध्यै**। ९-ण्यन्ताद् मद्धातोः शध्यै-प्रत्ययः, शपि, गुणेऽयादेशे, **मादयध्यै**। १०-पा-पाने इत्यस्मात् शध्यै-न्प्रत्ययः, शित्वात्सार्वधातुकत्वेन शप्, पिबादेशः-**पिबध्यै**। ११-दाधातोः तवैप्रत्ययः, दातवै+उ, इति संहितायाम् एकारस्य 'आय्' आदेशः, लोपः शाकल्यस्येति यलोपे, **दातवाउ**। १२-सूधातोः तवेङ्-प्रत्ययः, ङित्वाद् गुणाभावः, **सूतवे**। १३-कृञ्-धातोः तवेन्प्रत्ययः सार्वधातुकार्धधातुकेति गुणो रपरः-**कर्तवे**। १४-एते तुमर्थे निपात्यन्ते इत्यर्थः। प्रपूर्वात् या-धातोः कैप्रत्यये, आलोपे, प्रयै। रुह्-धातोः 'इष्यै-प्रत्यये, उपधागुणे

एते निपात्यन्ते । प्रयातुं रोद्धुम् अव्यथितुमित्यर्थः ।

**२२६१ दृशे विख्ये च ३ । ४ । ११ ॥**

निपातौ । द्रष्टुं विख्यातुमित्यर्थः ।

**२२६२ कृत्यार्थे तवै-केन्-केन्य-त्वनः ३ । ४ । १४ ॥**

धातोरेते स्युः । तवै-अन्वेतवै । केन्-अवगाहे । केन्य—दिदृक्षेण्यः त्वन्—कर्त्वम् ।

**२२६३ सृपितृदोः कसुन् ६ । ४ । १७ ॥**

तुमर्थे । पुरा क्रूरस्य विसृपो विरप्शिन् । पुरा जत्रुभ्य आतृदः ।

**२२६४ प्रकृत्यान्तःपादमव्यपरे ६ । १ । ११५ ॥**

ऋक्पादमध्यस्थ एङ् प्रकृत्या स्यान्न तु वकारयकारपरे अति । उपप्रयन्तो अध्वरम् । सुजाते अश्वसूनृते । अन्तःपादं किम्-एतास एतेऽर्चन्ति । अव्यपरे किम्-तेऽवदन् ।

**२२६५ अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च ६ । १ ११६ ।**

---

**रोहिष्यै** । नञ्पूर्वाद् व्यथ्धातोः 'इष्यै' प्रत्यये, **अव्यथिष्यै** ।

१-दृश्धातोः, विपूर्वात् ख्याधातोश्च के-प्रत्ययान्तौ निपातावित्यर्थः । कित्वाद् दृशेर्नोपधागुणः, **दृशे**=द्रष्टुम् । कित्वाद् आलोपः, **विख्ये**=विख्यातुम् । २-कृत्यानां=तव्यदादीनाम् अर्थे ( भावकर्मणोः ) इत्यर्थः । ३-अनुपूर्वादिण्-धातोस्तवै-प्रत्ययः, गुणः, **अन्वेतवै**=अन्वेतव्यम् । ४-गाहू-विलोडने इत्यस्मात् केन्-प्रत्यये रूपम्, **अवगाहे**=अवगाह्यम् । ५-दृशेः सन्नन्ताद् 'दिदृक्ष' इत्यस्मात् केन्यप्रत्ययः, 'अतो लोपः' इत्यलोपे, णत्वम् **दिदृक्षेण्यः**=द्रष्टव्यः । ६-कृञ्-धातोः त्वन्-प्रत्यये गुणो रपरः, **कर्त्वम्**=कार्यम् । ७-विपूर्वकात्सृप्-धातोः कसुन्-प्रत्ययः, 'अस्' इत्यवशिष्यते, कित्वान्नोपधागुणः, **विसृपः** । ८-आङ्-तृद्-धातोः कसुन्, गुणाभावे, **आतृदः** । ९-सन्धिरूपं विकारं न लभते इत्यर्थः । १०-'एङः पदान्ता' दिति प्राप्तं पूर्वरूपं न भवति । एवमग्रेऽपि । ११-अव्यात्, अवद्यात्, अवक्रमुः, अव्रत, अयम्, अवन्तु, अवस्युः, इत्येतेषु परत एङः प्रकृतिभावः स्यादित्यर्थः । एषु-व्यपरेऽति-अप्राप्तः प्रकृतिभावो निपात्यते । स्पष्टान्युदाहरणानि ।

एषु व्यपेरऽप्यति एङ् प्रकृत्या । वसुभिर्नो अव्यात् । मित्रमहो अवद्यात् । मा शिवासो अवक्रमुः । ते नो अव्रत । शतधारो अयं मणिः । ते नो अवन्तु । कुशिकासो अवस्यवः ।

**२२१६ सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः ७ । १ । ३९ ॥**[1]

ऋजवः सन्तु पन्थाः[2], पन्थान इति प्राप्ते । परमे व्योमन्[3], व्योमनीति प्राप्ते । धीती[4], मती, सुष्टुती, धीत्या, मत्या, सुष्टुत्येति प्राप्ते पूर्वसवर्णः । या सुरथा[5] रथीतमा, यौ सुरथाविति प्राप्ते आ । नताद्[6] ब्राह्मणम् , नतमिति प्राप्ते आत् । याँ[7] देव विद्म ता त्वा, यमिति प्राप्ते । न युष्मे[8] वाजबन्धवः, अस्मे इन्द्रा बृहस्पती, युष्मासु अस्मभ्यमिति प्राप्ते शे । उरुया[9], धृष्णुया, उरुणा धृष्णुनेति प्राप्ते या । नाभा[10] पृथिव्याः, नाभाविति प्राप्ते डा । ता अनुष्ठयोच्यावयतात्[11], आङो ड्या । साधुया[12], साध्विति प्राप्ते याच् । वसन्ता[13] यजेत, वसन्त इति प्राप्ते आल् ( इयाडियाजीकाराणामुपसंख्यानम्[14] ) । उर्विया, उरुणेति प्राप्ते ईया[15] । सुक्षेत्रिया[16], सुक्षेत्रिणेति प्राप्ते डियाच् । 'दृतिं न शुष्कं सरसी[17] शयानम्', सरस्यामिति प्राप्ते ई ।

**२२१७ आज्जसेरसुक्[18] ७ । १ । ५० ॥**

---

१-सुपां स्थाने सु-लुक्-पूर्वसवर्ण-आ-आत्-शे-या-डा-ड्या-याच्-आल्, इत्येते आदेशाः स्युश्छन्दसि-इत्यर्थः । २-जसः सुरादेशः । ३-ङे-र्लुक् । ४-धीति-मति-सुष्टुति-शब्देभ्यः टापि, यणि-प्राप्ते पूर्वसवर्ण-दीर्घः । ५-'औ' इत्यस्य 'आ' । ६-अमः-आत् । ७-अमः-आत् । एवं 'ता' इत्यत्रापि । ८-युष्मे-अस्मे, इति पूर्वत्र सुपः शे, उत्तरत्र भ्यमः शे । ९-उभयत्र टापः स्थाने 'या' आदेशः । १०-ङेर्डादेशः । ११-अनुष्ठानम्=अनुष्ठा, तया-अनुष्ठ्या, आङो ड्या । १२-सोर्याच् । १३-ङेः-आल् । १४-सुपां स्थाने, इया-डियाच्-ई, इत्येतेऽपि भवन्तीति वक्तव्यमित्यर्थः । १५-टापः-'इया' आदेश. । १६-आङो-डियाच्, डित्त्वाट्टिलोपः १७-'ङि' इत्यस्य 'ई' इत्यादेशः । १८-अवर्णान्तादङ्गात्परस्य जसोऽसुक् स्यादित्यर्थः ।

ब्राह्मणासः[1]। ( तन्वादीनां वेयङुवङौ[2]। ) तन्वं पुषेम, तनुवं पुषेम[3]। विष्वं पश्य, विषुवं पश्य। स्वर्गो लोकः, सुवर्गो लोकः। त्र्यम्बकम्, त्रियम्बकम्। वरेण्यम्, वरेणियम्। 'अतो भिस ऐस्'—

**२२९८ बहुलं छन्दसि[4] ७। १। १०॥**

अग्निर्देवेभिः।

**२२९९ मन्त्रेष्वाङ्यादेरात्मनः ६। ४। १४१॥**

आत्मन्शब्दस्यादेर्लोप आङि[5]। त्मना देवेषु। 'अपो भि'। ( मासश्छन्दसीति वक्तव्यम्[6] )। माद्भिः[7]। शरद्भिः।

**२३०० प्र-समुपोदः पादपूरणे ८। १। ६॥**

एषां द्वे स्तः। प्रप्रायमग्निः। संसमिद्युवसे। उपोप मे परामृश। किंनो दुदुहर्षसे।

**२३०१ षष्ठ्याः पति-पुत्र-पृष्ठ-पार-पद-पयस्पोषेषु[8] ८। ३। ५३॥**

---

१—ब्राह्मण—शब्दाज्जसोऽसुक्—आगमः, कित्त्वादन्ते, ( ब्राह्मण+जस्—असुक् ) ब्राह्मण=अस्—अस्, पूर्वसवर्णदीर्घे अन्त्यस्य सस्य विसर्गः **ब्राह्मणासः**। २—'तन्वादीनां छन्दसि बहुलम्, इति वार्तिकं संक्षिप्य पठितम्। तन्वादिगणस्थानां शब्दानाम् इयङ्—उवङौ वा स्यातां छन्दसि। पक्षे—यण् इत्यर्थः। ३—तनु+अम्, इति छेदः, उवङ्, पक्षे—यण्, **तनुवम्, तन्वम्**। एवम्, विषु+अम्, सु+अर्गः, त्रि+अम्बक ( म् ), इत्यादि छेदाः। ४—छन्दसि बहुलं भिस ऐस्, कुत्रचित् प्राप्तावपि न भवतीत्यर्थः। यथा—**देवेभिः**, ऐसादेशाभावे "बहुवचने झल्येत्" इत्येत्वम्। ५—'टा' विभक्तौ इत्यर्थः, 'आङिति टा—संज्ञा, इत्युक्तेः। त्मना देवेषु 'आत्मना' इति प्राप्ते। ६—छन्दसि मास्—शब्दावयवस्य सकारस्य तकारादेशो (भादिविभक्तौ) वक्तव्य इत्यर्थः। ७—मास—शब्दस्य 'पद्दन्नोमास्हृदि'ति सूत्रेण सकारान्तो 'मास्' इत्यादेशे, सस्य तकारे, जश्त्वम्—**माद्भिः**। ८—उपध्मानीये विसर्गे च ( विकल्पेन ) प्राप्ते वचनम्। षष्ठ्यन्तविसर्गस्य पतिपुत्रादिषु परतः सकारादेशः स्याच्छसीत्यर्थः। उदाहरणानि स्पष्टानि।

इति श्रीप्रभाकरीविवृतौ मध्यकौमुदीटीकायां वैदिकीप्रक्रिया सम्पूर्णा।

विसर्गस्य सः स्यात् । वाचस्पतिं विश्वकर्माणम् । दिवस्पुत्राय सूर्याय दिवस्पृष्ठं भन्दमानः । तमसस्पारमस्य । परिवीत इळस्पदे । दिवस्पयो दिधिषाणाः । रायस्पोषं यजमानेषु धत्तम् । ॥ इति वैदिकप्रक्रिया ॥

## अथ स्वरप्रक्रिया ।

**२३०२ धातोः ६ । १ । १६२ ॥**

अन्त उदात्तः स्यात् ।

**२३०३ अनुदात्तं पदमेकवर्जम् ६ । १ । १५८ ॥**

परिभाषेयं स्वरविषया । यस्मिन्पदे यस्योदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा शेषं तत्पदमनुदात्ताच्कं स्यात् । गोपायतं नः । अत्र 'सनाद्यन्ता धातवः' इति धातुत्वे धातुस्वरेण यकाराकार उदात्तः, शिष्टमनुदात्तम् ।

**२३०४ उदात्तादनुदात्तस्य स्वरितः ८ । ४ । ६६ ॥**

इति तकाराकारः स्वरितः ।

**२३०५ स्वरितात्संहितायामनुदात्तानाम् १ । २ । ३९ ॥**

एकश्रुतिः स्यात् । इति नकाराकारः प्रचयः ।

**२३०६ अनुदात्तस्य च यत्रोदात्तलोपः ६ । १ । १६१ ॥**

यस्मिन्ननुदात्ते उदात्तो लुप्यते तस्योदात्तः । देवीं वाचम्, अत्र ङीबुदात्तः ।

**२३०७ आद्युदात्तश्च ३ । १ । ३ ॥**

प्रत्ययस्याद्युदात्तः स्यात् । कर्तव्यम् ।

---

अथ स्वरप्रक्रिया

१–उदात्तात्परस्याऽनुदात्तस्य स्वरितः स्यादित्यर्थः । २–'गोपायतं' इत्यत्र तकारः, इत्यर्थः । ३–स्वरितात्परेषामनुदात्तानां संहितायाम् एकश्रुतिः स्यादित्यर्थः । ४–'गोपायतं नः, इत्यत्रेत्यर्थः । प्रचयः=एकश्रुतिः । ५–अत्र देव–शब्दोऽच्प्रत्ययान्तत्वात् 'चितः' इत्यन्तोदात्तः, पचादिषु 'देवट्' इति पाठात् टिड्ढेति ङीप्, तस्य अनुदात्तौ सुप्पितौ, इति–अनुदात्तत्वे, तस्मिन् परे 'यस्येति च' इति उदात्तस्याकारस्य लोपे 'ई'कार उदात्तः ।

**२३०८ अनुदात्तौ सुप्पितौ ३ । १ । ४ ॥**

पूर्वस्यापवादः । यज्ञस्य । न यो युच्छति । शिप्तिपोरनुदात्तत्वे स्वरितिप्रचयौ ।

**२३०९ चितः ६ । १ । १६३ ॥**

अन्त उदात्तः स्यात् । ( चितः सप्रकृतेर्बह्वकजर्थम् ) । चिति प्रत्यये सति प्रकृतिप्रत्ययसमुदायस्यान्त उदात्तो वाच्य इत्यर्थः । नभन्तामन्यके समे । यके सरस्वतीम् । तकत्सुते ।

**२३१० तद्धितस्य ६ । १ । १६४ ॥**

चितस्तद्धितस्यान्त उदात्तः । पूर्वेण सिद्धे ञित्स्वरबाधनार्थम् । कौञ्जायनः ।

**२३११ कितः ६ । १ । १६५ ॥**

कितस्तद्धितस्यान्त उदात्तः । यदाग्नेयः ।

**२३१२ तित्स्वरितम् ६ । १ । १८५ ॥**

क्वं नूनम् ।

**२३१३ उपोत्तमं रिति ६ । १ । २१७ ॥**

रित्प्रत्ययान्तस्योपोत्तममनुदात्तं स्यात् । यदाहवनीये ।

**२३१४ ञ्नित्यादिर्नित्यम् ६ । १ । १९७ ॥**

ञिदन्तस्य निदन्तस्य चादिरुदात्तः । यस्मिन्विश्वानि पौंस्या । पुंसः कर्मणि ब्राह्मणादित्वात्ष्यञ् । सुतेर्दधिष्व नश्चनः । चायतेरसुन् । चायतेरन्ने ह्रस्वश्चेति चकारादसुनो नुडागमः ।

**२३१५ लिति ६ । १ । १९३ ॥**

---

१–सुपः पितश्च प्रत्यया आद्यनुदात्ता इत्यर्थः । २–सुबुदाहरणमिदम् । ३–अत्र तिप्, पित् ( पिदुदाहरणमिदमिति ) । ४–अत्र 'अव्ययसर्वनाम्नामकच् प्राक्टेः' इत्यकच्, एकार उदात्तः, एवं यके–तके, इत्यत्रापि यत्तच्छब्दाभ्यामकच्, एकार उदात्तः । ५–अत्र च्फञ्–प्रत्ययः, कुञ्जस्याऽपत्यानीति विग्रहः । ६–अग्नेर्ढक्, ढस्य 'एय्' । ७–'किमोऽत्' इत्यत्–प्रत्ययः 'क्वाति' इति क्वादेशः । ८–आङ्पूर्वकाद् हुधातोरनीयर् । उपोत्तमम्=उपान्त्यम्, इत्यर्थः । ततो गतिसमासे कृदुत्तरपदप्रकृतिस्वरः ।

प्रत्ययात्पूर्वमुदात्तं स्यात्। चिकीर्षकः, अत्र ईकारस्योदात्तता। इत्यादि-प्रयोगमनुसृत्यान्वाख्यातव्यम्। ॥ इति स्वरप्रक्रिया ॥

एषा वरदराजेन बालानामुपकारिका ॥
अकारि पाणिनीयानां मध्यसिद्धान्तकौमुदी ॥ १ ॥
कृतिर्वरदराजस्य मध्यसिद्धान्तकौमुदी ॥
तस्याः संख्या तु विज्ञेया ख-बाण-कर-वह्निभिः। (३२५०) ॥२॥

# ॥ अथ लिङ्गानुशासनम् ॥

**१ लिङ्गम्[1]।**

## अथ स्त्रीलिङ्गाधिकारः।

**२ स्त्री[2]।**

अधिकारसूत्रे एते।

**३ ऋकारान्ता मातृ-दुहितृ-स्वसृ-यातृ-ननान्दरः। १।**

एते[3] पञ्चैव स्त्रीलिङ्गाः।

**४ अन्यूप्रत्ययान्तो धातुः। २।**

अनिप्रत्ययान्त ऊप्रत्ययान्तश्च धातुः स्त्रियां स्यात्। अवनिः[5]। चमूः[6]।

**५ मिन्यन्तः। ३।**

मि-निप्रत्ययान्तः स्त्रियाम्। भूमिः[7], ग्लानिः[8]।

**६ क्तिन्नन्तः। ४।**

कृतिरित्यादि[9]।

---

१-सन्नन्ताद् ण्वुलि रूपम्।

इति श्रीप्रभाकरीविवृतौ मध्यकौमुदीटीकायां स्वरप्रक्रिया सम्पूर्णा।

२-लिङ्गानुशासनसमाप्तिपर्यन्तमधिकारोऽयम्। ३-'तारा धारा' इत्यादि सूत्रपर्यन्तमधिकारः। ४-ऋकारान्तेषु एते पञ्चैव स्त्रीलिङ्गाः, तेन एतदन्ये ऋकारान्ताः सर्वेऽपि पुंसि नपुंसके वा। ५-अव्-धातोः 'अर्ति-सृधृ' इत्यादिनोणादिसूत्रेण 'अनि' प्रत्ययः। **अवनिः**=पृथिवी। ६-चम्-धातोः, 'कृषिचमि' इत्यादिना ऊप्रत्ययः औणादिकः, **चमूः**=सेना। ७-भू-धातोः, मीत्यनुवर्तमाने 'भुवः कित्' इति मिप्रत्ययः, **भूमिः**=पृथिवी। ८-'वह्निश्रिश्रु' इत्यादिना 'नि' प्रत्यये, **ग्लानिः**। ९-कृ-धातोः क्तिन्-

**७ ईप्रत्ययान्तश्च । ५ ।**

ल[1]क्ष्मीः ।

**८ ऊङाबन्तश्[2]च । ६ ।**

कुरूः । अजा ।

**९ ई[3]वन्तमेकाक्षरम् । ७ ।**

स्त्री[4]ः । भ्रू[5]ः ।

**१० विंशत्यादिरानव[6]तेः । ८ ।**

इयं विंशतिः ।

**११ तलन्[7]तः । ९ ।**

शुक्लता ।

**१२ भाःस्रुक्-स्रग्दिगुष्णिगुर्पा[8]नहः । १० ।**

इयं भाः ।

**१३ स्थूणोर्णे[9] नपुंसके च । ११ ।**

स्थूणा, स्थूणम् ।

**१४ शष्कुलि-राजि-कुट्यशनि-वर्ति-भ्रुकुटि-त्रुटि-वलि-पङ्क्तयः । १२ ।**

एते स्त्रियां स्युः । इयं शष्कुलिः ।

**१५ अप्-सुमनस्-समा-सिकता-वर्षाणां बहुत्वं च । १३ ।**

---

प्रत्यये कृतिः ।

१-'लक्षेर्मुट् च' इनि-'ई' प्रत्यये मुडागमे च, **लक्ष्मीः** । २-ऊङन्त आबन्तश्च स्त्रियां स्यादित्यर्थः । **कुरूः**, 'ऊङुतः' इत्यनेन ऊङ्प्रत्ययः । आब् ग्रहणेन टाप्-डाप्-चापां त्रयाणामपि ग्रहणम्-**अजा** टाबन्तोऽयम् । ३-ईकारोकाररूपप्रत्ययान्तम् एकाक्षरं स्त्रियां स्यादित्यर्थः । ४-स्त्यायतोऽस्यां शुक्रशोणिते-इति **स्त्री**, 'स्त्यायतेर्ड्रट्', 'लोपो व्योरि'ति यलोपः, टित्त्वात् ङीप् । ५-भ्रमतीति-**भ्रूः** 'भ्रमेश्च' इति भ्रम्धातोर्डूप्रत्ययः, डित्त्वाट्टिलोपः । ६-विंशत्यादयः='पंक्तिविंशति' इत्यादिसूत्रनिर्दिष्टाः, नवतिपर्यन्ताः स्त्रियामित्यर्थः । ७-तल् प्रत्ययान्तः, स्त्रियाम्, इत्यर्थः । ८-एते स्त्रियाम् इत्यर्थः । ९-स्थूणा-ऊर्णाशब्दौ स्त्रियां नपुंसके चेत्यर्थः ।

अबादीनां पञ्चानां स्त्रीत्वं स्याद्बहुत्वं च । आप इमाः ।[1]

**१६ तारा-धारा-ज्योत्स्नादयश्च । १४ ।**

इयं तारा । ॥ इति स्त्र्यधिकारः ॥

## अथ पुंलिङ्गाधिकारः ।

**१७ पुमान् ।**

अयमधिकारः ।

**१८ घञबन्तः । १ ।**[2]

पाकः । करः । भावार्थ एवेदम् ।

**१६ घाजन्तश्च । २ ।**[3]

विस्तरः । चयः ।

**२० भय-लिङ्ग-भग-पदानि नपुंसके । ३ ।**[4]

भयमित्यादि ।

**२१ नङन्तः । ४ ।**

पुंसि स्यात् । यज्ञ इत्यादि ।[5]

**२२ याच्ञा स्त्रियाम् । ५ ।**[6]

पूर्वस्यापवादः ।

**२३ क्यन्तो घुः । ६ ।**[7]

आधिः । प्रधिः ।

**२४ इषुधिः स्त्री च । ७ ।**

चात्पुंसि । इयमयं वा इषुधिः ।

**२५ द्यौः स्त्रियाम् । ८ ।**[8][9]

---

१–बहुवचनान्तत्वम् इति भावः । इति स्त्र्यधिकारः ।

२–भावे घञ्–प्रत्ययान्तः, अप्–प्रत्ययान्तश्च पुंसि स्यादित्यर्थः । **पाकः**, भावे घञ् । **करः**–'ऋदोरप्' इत्यप् । ३–घ–प्रत्ययान्तः, अच्–प्रत्ययान्तश्च पुमानित्यर्थः । **विस्तरः**, घप्रत्ययः । **चयः** 'एरच्' । ४–पूर्वसूत्रापवादोऽयम् । ५–यज्धातोः 'यज-याच-विच्छे'ति नङ् प्रत्ययः, **यज्ञः** । ६–नङन्तोऽयम् । ७–किप्रत्ययान्तो घुसंज्ञः पुंसि स्यादित्यर्थः । **आधिः, प्रधिः** 'उपसर्गे घोः किः, इति कि–प्रत्ययः । ८–पूर्वसूत्रस्यापवादोऽयम् । ९–अस्य स्वर्गनामत्वात् 'देवासुरात्मस्वर्गे'त्यादि, सूत्रेण पुँल्लिङ्गे प्राप्तेऽयम् आरम्भः ।

२६ क्रतु-पुरुष-कपोल-गुल्फ-मेघाभिधानानि[1]। ९।

क्रतुरध्वरः।

२७ अभ्रं नपुंसकम्। १०।

पूर्वस्यापवादः।

२८ उदन्तः। ११।

अयं पुंसि स्यात्। प्रभुः, विभुः।

२९ धेनु-रज्जु-कुहू-सरयु-तनु-रेणु-प्रियङ्गवः स्त्रियाम्।१२।

इयं धेनुः।

३० रुत्वन्तः[2]। १३।

मेरुः। सेतुः।

३१ दारु-कसेरु-जतु-वस्तु-मस्तूनि नपुंसके च। १४।

इदं दारु। अयं दारुः।

३२ सक्तुर्नपुंसके च। १५।

सक्तु। सक्तुः। अदन्त इत्यधिकृत्य—

३३ कोपधः। १६।

कोपधोऽकारान्तः पुंसि स्यात्। स्तबकः। कल्कः।

३४ चिबुकादीनि नपुंसके। १७।

चिबुकम्।

३५ टोपधः। १८।

अदन्तः पुंसि। घटः। पटः।

३६ किरीटादीनि नपुंसके[3] च। १९।

किरीटम्। किरीटः।

३७ णोपधः। २०।

अदन्तः पुंसि। गणः। पाषाणः।

३८ ऋणादीनि[4] नपुंसके। २१।

ऋणम्।

---

१—पुंसीति शेषः। २—रु-प्रत्ययान्तः, तुप्रत्ययान्तश्च पुंसीत्यर्थः। ३—पूर्वाऽपवादोऽयम्। ४—पूर्वसूत्रापवादोऽयम्।

**३९ कार्षापणादीनि नपुंसके च । २२ ।**

चात्पुंसि ।

**४० थोपधः । २३ ।**

अदन्तः पुंसि । रथः । यूथः ।

**४१ नोपधः ।२४ ।**

अदन्तः पुंसि । इनः । फेनः ।

**४२ जघना[1]दीनि नपुंसके । २५ ।**

जघनम् ।

**४३ पोपधः । २६ ।**

अदन्तः पुंसि । दीपः । पर्पः । सर्पः ।

**४४ पा[2]पादीनि नपुंसके । २७ ।**

पापम् ।

**४५ शूर्प-कुतप-कुणप-द्वीप-विटपानि नपुंसके च । २८ ।**

चात्पुंसि ।

**४६ भोपधः[3] । २९ ।**

कुम्भः । सरभः ।

**४७ तलभं नपुंसकम्[4] । ।३० ।**

**४८ जृम्भं नपुंसके च[5] । ३१ ।**

**४९ मोपधः[6] । ३२ ।**

होमः । धर्मः ।

**५० रुक्मा[7]दीनि नपुंसके । ३६ ।**

इदं रुक्मामित्यादि ।

**५१ संग्रामादीनि नपुंसके च । ३४ ।**

चात्पुंसि । संग्रामः । संग्रामम् ।

**५२ योपधः । ३५ ।**

१–'नोपधः' इत्यस्याऽपवादोऽयम् । २–'पोपधः' इत्यस्याऽपवादोऽयम् । ३–भकारोपधोऽदन्तः पुंसि । ४–पूर्वसूत्रापवादः । ५–चात् पुंस्यपि । जृम्भः । ६–मकारोपधोऽदन्तः पुंसीत्यर्थः । ७–पूर्वसूत्रापवादः ।

हयः। समयः।

५३ किसलयादीनि नपुंसके। ३६।

५४ गोमयादीनि नपुंसके च[1]। ३७।

५५ रोपधः। ३८।

क्षुरः। खुरः। अङ्कुरः।

५६ द्वारादीनि नपुंसके[2] च। ३९।

इदं द्वारम्।

५७ शुक्रमदेवतायाम्[3]। ४०।

देवतायां तु शुक्रः।

५८ षोपधः। ४१।

वृषः। वृक्षः।

५९ शिरीषादीनि नपुंसके[4]। ४२।

इदं शिरीषम्।

६० सोपधः। ४३।

वायसः। महानसः।

६१ पनस-बिस-बुस-साहसानि[5] नपुंसके। ४४।

६२ चमसादीनि नपुंसके च। ४५।

चात्पुंसि।

६३ कंसं[6] चाप्राणिनि। ४६।

कंसम्। प्राणिनि तु कंस औग्रसेनिः[7]।

६४ रश्मि[8]-दिवाभिधानानि। ४८।

अत इति निवृत्तम्।

६५ दीधितिः[9] स्त्रियाम्। ४९।

६६ दिनाहनी[10] नपुंसके। ५०।

---

१—चात् पुंस्यपि। २—पूर्वस्यापवादः। ३—शुक्रम्=वीर्यम्। शुक्रो=भार्गवः। ४—पूर्वापवादः। ५—पूर्वापवादः। ६—कंसोऽस्त्री पानभाजनम्। ७—उग्रसेनपुत्रः श्रीकृष्णमातुलः। ८—रश्मिनामानि, दिवानामानि च पुंसि। ९—पूर्वापवादोऽयम्। रश्मिनामेदम्। १०—अयमपि पूर्वापवादः।

दिनम् । अहः ।

६७ मानाभिधानानि । ५१ ।

कुडवः ।

६८ द्रोणाढकौ नपुंसके च । ५२ ।

चात्पुंसि ।

६९ खारी-मानिके स्त्रियाम् । ५३ ।

इयं खारी ।

७० दाराक्षत-लाजासूनां बहुत्वं च । ५४ ।

इमे दाराः ।

७१ मरुद्गरुत्तरदृत्विजः । ५५ ।

अयं मरुत् ।

७२ ध्वज-गज-मुञ्ज-पुञ्जाः । ५६ ।

एते पुंसि ।

७३ वंशांशपुरोडाशाः । ५७ ।

अयं वंशः ।

७४ ह्रद-कन्द-कुन्द-बुद्बुद-शब्दाः । ५८ ।

अयं ह्रदः ।

७५ अर्घ-पाथि-मथ्यृभुक्षि-स्तम्ब-नितम्ब-पूगाः । ५९ ।

अयमर्घः ।

७६ सारथ्यतिथि-कुक्षि-वस्ति-पाण्यञ्जलयः । ६० ।

७७ पल्लव-पल्वल-कफ-रेफ-कटाह-निर्व्यूह-मठ-मणि-तरङ्ग-तुरङ्ग-गन्ध-स्कन्ध-मृदङ्ग-सङ्ग-समुद्र-पुङ्खाः । ६१ ।

अयं पल्लव इत्यादि ।

७८ ऋषि-राशि-दृति-ग्रन्थि-क्रिमि-ध्वनि-वलि-कौलि-मौलि-रवि-कवि-कपि-मुनयः । ६२ ।

एते पुंसि स्युः । अयमृषिः ।

---

१-परिमाणनामानि पुंसीत्यर्थः । २-दार-अक्षत-लाज-असु-इत्येतेषां पुंस्त्वं नित्यबहुवचनान्तत्वं च बोध्यम् । ३-मरुत्-गरुत्-ऋत्विक्, इत्येते पुंसीत्यर्थः । ४-एते पुंसीत्यर्थः । ५-इमे पुंसीत्यर्थः । इति पुँल्लिङ्गाधिकारः ।

**७९ हस्त-कुन्तान्त-व्रात-वात-दूत-धूर्त-सूत-चूत-मुहूर्ताः । ६३ ।**

एते पुंसि । अयं हस्त इत्यादि । इति पुंल्लिङ्गाधिकारः ।

## अथ नपुंसकाधिकारः ।

**८० नपुंसकम् ।**

अयमधिकारः ।

**८१ भावे ल्युडन्तः[1] । १ ।**

ज्ञानम् । हसनम् । भावे किम्—पचनः[2] ।

**८२ निष्ठा च । २ ।**

भावे या निष्ठा तदन्तं क्लीबं स्यात् । गीतम् ।

**८३ त्व-ष्यञौ तद्धितौ । ३ ।**

शुक्लत्वम्, शौक्ल्यम् । षित्वसामर्थ्यात्[3] पक्षे स्त्रीत्वे ङीष् । चातुर्यम्, चातुरी ।

**८४ कर्माणि च ब्राह्मणादिगुणवचनेभ्यः[4] । ४ ।**

ब्राह्मण्यम् ।

**८५ यद्यढग्यग[5]ञणवुञ्छाश्च भावकर्माणि । ५ ।**

एतानि क्लीबानि । स्तेयम्[6] । सख्यम्[7] । कापेयम्[8] । सैनापत्यम्[9] । औष्ट्रम्[10] । द्वैहायनम्[11] । पितापुत्रकम्[12] । अच्छावाकीयम्[13] ।

---

१–नपुंसक इति शेषः । २–अत्र कर्तरि ल्युट्, बाहुलकात् । ३–ष्यञः षित्करणसामर्थ्यात्, षिद्गौरादिभ्यश्च, इति ङीष्, 'हलस्तद्धितस्येति यलोपः' **चातुरी** । ४–ब्राह्मणादिभ्यः गुणवाचिभ्यश्च कर्मण्यर्थे त्वष्यञौ नपुंसके, इत्यर्थः । चाद्भावे । ब्राह्मणस्य कर्म भावो वा=**ब्राह्मण्यम्** । ५–भावकर्मणि यत्–य-ढक्–यक्–अञ्–अण्–वुञ्–छ–प्रत्ययान्ताः क्लीबे स्युरित्यर्थः । ६–'स्तेनाद्यन्नलोपश्चे'ति यत्प्रत्यये नलोपे–**स्तेयम्** । ७–'सख्युर्यः' इति भावे यप्रत्यये–**सख्यम्** । ८–'कपिज्ञात्योर्ढक्' इति ढक्प्रत्यये, एयादेशे, आदिवृद्धौ–**कापेयम्** । ९–'पत्यन्तपुरोहितेभ्यो यक्' इति यक्प्रत्यये, आदिवृद्धौ–**सैनापत्यम्** । १०–'प्राणभृज्जाती' त्यादिनाऽञ्–**औष्ट्रम्** । ११–'हायनान्तयुवादिभ्योऽण्, इत्यण्–**द्वैहायनम्** । १२–'द्वन्द्वमनोज्ञादिभ्यो वुञ्' इति वुञ्, अकादेशः–**पिता पुत्रकम्** । १३–'होत्रादिभ्यश्छः' इति छः, तस्य 'ईय्' **अच्छावाकीयम्** ।

८६ अव्ययीभावः[1] । ६ ।

अधिहरि ।

८७ द्वन्द्वैकत्वम्[2] । ७ ।

पाणिपादम् ।

८८ अनल्पे छाया । ८ ।

शरच्छायम् ।

८९ इसुसन्तः । ९ ।

हविः । सर्पिः । धनुः ।

९० अर्चिः[3] स्त्रियां च । १० ।

इदमियं वार्चिः ।

९१ छदिः स्त्रियामेव । ११ ।

इयं छदिः ।

९२ मुख-नयन-लोह-वन-मांस-रुधिर-कार्मुक-विवर-जल-हल-धनान्नाभिधानानि । १२ ।

एषामभिधायकानि क्लीबे स्युः । मुखमाननं वक्त्रम् इत्यादि ।

९३ सीरार्थौदनाः पुंसि । १३ ।

९४ वक्त्र-नेत्रारण्य-गाण्डीवानि पुंसि च । १४ ।

चात् क्लीबे ।

९५ अटवी[5] स्त्रियाम् । १५ ।

पूर्वस्येयं त्रिसूत्री बाधिका ।

९६ लोपधः । १६ ।

कुशलम् ।

९७ शीलादीनि पुंसि च । १७ ।

चात् क्लीबे—शीलम् ।

९८ शतादि संख्या । १८ ।

---

१—नपुंसके इत्यर्थः । २—'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इति येषां द्वन्द्वानाम् एकवद्भावो भवति ते द्वन्द्वा नपुंसकत्वाऽभिधायका इत्यर्थः । ३—षकारान्तोऽयं शब्दः । ४—पूर्वापवादोऽयम् । ५—वनवाचकोऽयम् ।

शतम्। सहस्रम्।

९९ शतायुत-प्रयुताः पुंसि च[1]। १९।

१०० लक्षा-कोटिः स्त्रियाम्। २०।

इयं लक्षा। 'वा लक्षा' इत्यमरात् क्लीबेऽपि, लक्षम्।

१०१ सहस्रः पुंसि। २१।

१०२ मन् द्व्यच्कोऽकर्तरि। २२।

मन् प्रत्ययान्तो द्व्यच्कः पुंसि स्यात् चात् क्लीबे नतु कर्तरि। वर्मा। वर्म। अकर्तरि किम्—ददातीति दामा।

१०३ ब्रह्मन्पुंसि च। २३।

अयं ब्रह्मा। इदं ब्रह्म।

१०४ साम-रोमणी क्लीबे। २४।

पूर्वस्यापवादः।

१०५ असन्तो द्व्यच्कः। २५।

यशः। मनः। तपः।

१०६ अप्सराः स्त्रियाम्। २६।

एता अप्सरसः[3]।

१०७ त्रन्नन्तः। २७।

पत्त्रम्। छत्त्रम्।

१०८ यात्रा-मात्रा-भस्त्रा-दंष्ट्रा-वरत्राः[4] स्त्रियामेव। २८।

इति नपुंसकाधिकारः।

## अथ स्त्रीपुंसाधिकारः।

१०९ स्त्रीपुंसयोः। १।

अयमधिकारः।

११० गो-मणि-यष्टि-मुष्टि-पाटलि-बस्ति-शाल्मलि-त्रुटि-मसि-मरीचयः[5]। २।

---

१–चात् क्लीबे। २–'क्लीबे इति शेषः। ३–प्रायेणायं बहुवचनान्तः। ४–पूर्वापवादोऽयम्। इति नपुंसकाधिकारः।

५–एते स्त्रियां पुंसि च स्युरित्यर्थः।

इयमयं वा गौः ।

१११ अपत्यार्थंतद्धिते[1] । ३ ।

औपगवः । औपगवी । इति स्त्रीपुंसाधिकारः ।

## अथ पुंनपुंसकाधिकारः ।

११२ पुंनपुंसकयोः ।

अधिकारोऽयम् ।

११३ घृत-भूत-मुस्त-क्ष्वेलितैरावत-पुस्तक-बुस्त-लोहिताः[2] । १ ।

अयं घृतः, इदं घृतम् ।

११४ कबन्धौषधायुधान्ताः[3] । २ ।

स्पष्टम् ।

११५ दण्ड-मण्ड-खण्ड-शव-सैंधव-पार्श्व-काशाङ्कुश-कुलिशाः[4] । ३ ।

दण्डः, दण्डम् । इति पुंनपुंसकाधिकारः ।

## अथाऽविशिष्टलिङ्गाधिकारः ।

११६ अविशिष्टलिङ्गम्[5] । १ ।

११७ अव्ययं कतियुष्मदस्मदः[6] । २ ।

११८ ष्णान्ता[7] संख्या ।

११९ शिष्टा परवत्[8] ३ ।

एकः पुरुषः । एका स्त्री । एकं कुलम् ।

१२० गुणवचनम्[9] । ४ ।

---

१-स्त्रियां पुंसि चेति शेषः । २-इमे पुंसि नपुंसके चेत्यर्थः । ३-एते पुंसि नपुंसके चेत्यर्थः । ४-इमेऽपि पुंसि नपुंसके च स्युरित्यर्थः । ५-तत्तल्लिङ्गवाचकताप्रयुक्तकार्यविशेषशून्यम्=अविशिष्टलिङ्गम् । ६-अव्ययानि कति-युष्मद्-अस्मद्-शब्दाश्च-अविशिष्टलिङ्गा इत्यर्थः । ७-षान्ता नान्ताश्च सङ्ख्या-वाचकाः शब्दा अवशिष्टलिङ्गा इत्यर्थः । यथा-षट् पुमांसः षट् स्त्रियः, षट् कुलानि । एवं-पञ्च । ८-षान्तनान्तभिन्ना सङ्ख्या परवल्लिङ्गा, इत्यर्थः । ९-परवल्लिङ्गमिति शेषः ।

शुक्लः पटः। शुक्ला पटी। शुक्लं वस्त्रम्।

**१२१ कृत्याश्च। ५।**

**१२२ करणाधिकरणयोर्ल्युट् च। ६।**

**१२३ सर्वादीनि सर्वनामानि। ७।**

स्पष्टार्थेयं त्रिसूत्री।

इति श्रीवरदराजदीक्षितविरचितपाणिनीयलिङ्गानुशासन-
सारभूता लिङ्गानुशासनसूत्रवृत्तिः समाप्ता॥

॥ इति श्रीमध्यसिद्धान्तकौमुदी समाप्ता॥

## टीकाकर्त्तुः परिचयः।

पञ्चाम्बुदेश इह सुन्दरवीरभूमौ होश्यौर-पूर्वपुर–मण्डलमध्यगेयम्।
द्वीपोर्त्तमाङ्गमणिमध्यविराजमाना "जेजों"–पुरी परमसुन्दरतानिधाना॥१॥
यासीदियं बृटिशशासनतः पुरस्तात् श्रीसिक्खशासनमये समये विशाला।
जस्वालवंशनृपतेः किल राजधानी सेव्या गुणैरतिवरैः परमा प्रशस्ता॥२॥
अत्रास्ति पण्डितकुलं परमं प्रसिद्धमाचारशुद्धमतिभक्तिपरायणं च।
तत्पूर्वजः समभवत् प्रवरो महात्मा श्रीकेशवो विबुधमण्डलमण्डनोऽसौ॥३॥

---

१–परवल्लिङ्गाः, इति शेषः। यथा धार्यः पटः, धार्या शाटी, धार्यं वस्त्रम्। २–करणेऽधिकरणे चार्थे विहितो यो ल्युट् तदन्तः परवल्लिङ्गः, इत्यर्थः। ३–सर्वनामसंज्ञकानि सर्वादीनि परवल्लिङ्गानि बोध्यानीत्यर्थः। ४–**स्पष्टार्थे**ति, लोकव्युत्पत्त्यैव तत्तल्लिङ्गाभिधानस्य सिद्धत्वात्। अत एव लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य, इत्युक्तं भगवता भाष्यकृता। तेन यौगिकेषु शब्देषु लोकव्युत्पत्तिरेव लिङ्गाभिधाने प्रमाणमिति सिद्धम्।

इति श्रीप्रभाकरीविवृतौ मध्यकौमुदीटीकायां लिङ्गानुशासनम्।

५–होश्यारपुर-मण्डलमध्यगता। ६–द्वाबाप्रान्तशिरोमणिमध्यविराजमाना। ७–जस्वालजातीयानां राजपूतराजानां राजधानी, अत्र तेषामन्तिमो राजा श्रीरणसिंहाभिधान आसीत्, स च बृटिशगवर्नमिण्टेन विग्रहमाचरन्निगृहीतः, साम्प्रतं चैतद्वंश्या "अम्ब" नगरे वसन्ति। ८–विद्यासागरो भगवद्भक्त आदर्शमहात्मा श्रद्धेयचरणः पण्डितश्रीकेशवरामशर्मा प्रभाकरः (अस्य जन्मसंवत् १८०० वैक्रमः, विलयकालश्च १८६० वैक्रमः)।

काश्यां स्वधीत्य सुचिरं भवदेवमिश्राद् ग्रामे 'मदूद' वरनाम्नि विधाय शालाम्
प्राचारयत्स खलु पाणिनिशासनं यत् प्रायो विलुप्तमिह पञ्चनदे प्रदेशे ॥४॥
तस्यात्मजोऽथ रघुनाथ उदारचेता जातस्ततोऽपि हरिभक्त-मुकुन्दलालः।
श्रीरामचन्द्रबुध-धूर्जटि-शर्म-रामनारायणाः समभवँस्तनयास्ततोऽपि ५
र्रामाच्छ्रीनीलकण्ठं उपेन्द्रनाथँस्तथा विश्वमित्रः।
तुर्योऽस्मि विश्वनाथो दामोदरीगर्भजातश्च ॥ ६ ॥
रचिता विवृतिस्तेन मया छात्रोपकारिणी।
प्रभाकरीयं सरला भूयात् केशवतोषिणी ॥ ७ ॥

इति श्रीपञ्चाम्बु-प्रान्तोत्तरदिग्विभागस्थ-होशियारपुरमण्डलान्तर्गत-
'जेजों' नगरनिवासि-सुप्रसिद्धपण्डितकुलप्रसूत-पण्डितश्रीराम-
नारायणात्मज-'खन्ना' नगरस्थश्रीसरस्वतीसंस्कृतविद्याल-
याचार्य-पण्डित-श्रीविश्वनाथशास्त्रिप्रभाकरेण
स्वान्तेवासि-कविकान्तनिगमानन्दशास्त्रि-
सहकृतेन सङ्कलिता प्रभाकरी नाम मध्य-
सिद्धान्तकौमुदीविवृतिः सम्पूर्णा।
॥ ॐ तत्सत् ॥

१-वाराणस्यां तत्काले प्रथितमहिम्नो भैरव्यादिटीकाकृद्भैरवमिश्रपितुः श्रीपूज्यपादपण्डित-भवदेवमिश्रात्। २-'जेजों' नगरनिकटवर्तिनि 'मदूद' ग्रामे-इत्यर्थः। ३-पाणिनीयंव्याकरणम्। ४-पूज्यपादो भक्त्येकनिष्ठः श्री-पण्डित-मुकुन्दलालजीमहाराजः। ५-पं० रामचन्द्रशर्मणः पं० श्रीपरमानन्दशर्मा कर्मकाण्डप्रकाण्डः। ६-पं० धूर्जटिशर्मणश्च पं०रामप्रपन्नशास्त्री काव्य-व्याकरण-दर्शनतीर्थः (मम विद्यागुरुः), पं०युगलकिशोरशास्त्री व्याकरणाचार्यः, पं० जयगोपालशर्मा वैद्यपञ्चाननः, इति त्रयः (पं०अमरनाथ-परशुरामौ च)। ७-श्रीमुकुन्दलालात्। ८-रामात्=पं०रामनारायणात्। ९-वेदान्तसार्वभौमस्तार्किकचक्रचूडामणिर्भगवद्भक्तो महात्मा पं०नीलकण्ठ-शास्त्री। १०-वैयाकरणभूषणो दर्शनालङ्कारः श्री पं० उपेन्द्रनाथशास्त्री। ११-श्रीपं०विश्वमित्रशर्मा ज्योतिर्विद्यालङ्कारः।

* श्रीराधाकृष्णाभ्यान्नमः *

# अथ मध्यकौमुदीपरिशिष्टम् ।

अधरमधुरिमाणं वार्धिजाया विहाय
निरवधि विधिवन्द्यं माधवः पादपद्मम् ॥
वदनशशधरेणाऽऽस्वाद्यमानोऽस्ति यत्स्वम्
अनुभवतु भृशं तन्मानसं षट्पदो मे ॥ १ ॥

वन्दे स्वयम्प्रकाशानन्द-श्रौतमुनि-पादपद्मं तत् ।
यद् भवसागरतरणे परमालम्बनमलम्बानाम् ॥ २ ॥

विरम्यते यत्कृपयाऽत्र काक-
श्वकर्मवृत्याः पुरुषेण, भावि ।
नाभासते कष्टशतं, न शंका
थप्रश्नमास्तौमि गुरुं तमन्तः ॥ ३ ॥

एषोहं कविकान्तो निगमानन्द परमहंसः ।
विदधे बालबोधाय 'परिशिष्टं' कौतुकादेव ॥ ४ ॥

## अथ किमिदं व्याकरणम् ?

व्याक्रियन्ते=व्युत्पाद्यन्ते ( संसाध्यन्ते ) शब्दा अनेनेति व्याकरणम्=सूत्रवार्तिकभाष्यव्याख्यानादिस्वरूपं शब्दानुशासनं नाम शास्त्रम् ।

तत्र सूत्रम्—

अल्पाक्षरमसंदिग्धं सारवद्विश्वतो मुखम् ।
अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः ॥

तद्भेदाश्च—

सञ्ज्ञा च परिभाषा च विधिर्नियम एव च ।
अतिदेशोऽधिकारश्च षड्विधं सूत्रमुच्यते ॥

तत्र १—सञ्ज्ञासञ्ज्ञिसम्बन्धबोधकं सूत्रम्=सञ्ज्ञासूत्रम् । यथा—"वृद्धिरादैच्" "अदेङ्गुणः" "शेषो घ्यसखि" ।

२—अव्यवस्थायां व्यवस्थाऽऽपादकं सूत्रम्=परिभाषासूत्रम् । यथा—"तस्मादित्युत्तरस्य" "मिदचोऽन्त्यात्परः" ।

३—आदेशादिविधायकं सूत्रम्=विधिसूत्रम् ।
यथा—"इको यणचि" "ह्रस्वनद्यापो नुट्" "एरच्" ।

४—प्राप्तस्य विधेर्नियामकं सूत्रम्=नियमसूत्रम् । यथा—"रात्सस्य" ।

५—अतस्मिन् तद्धर्माऽऽपादकं सूत्रम्=अतिदेशसूत्रम् । यथा—"सख्युरसम्बुद्धौ" "गोतो णित्" "लोटो लङ्वत्" ।

६—उत्तरोत्तरस्वार्थसमर्पकं सूत्रम्=अधिकारसूत्रम् । यथा—"ङ्याप्प्रातिपदिकात्" "आर्धधातुके" "पूर्वत्रासिद्धम्" ।

वार्तिकलक्षणम्—

उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते ।
तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञा विचक्षणाः ॥

यथा—'ओतो णिदिति वाच्यम्' 'छ्त्वममीति वाच्यम्' 'यणः प्रतिषेधो वाच्यः' ।

भाष्यलक्षणम्—

सूत्रार्थो वर्ण्यते यत्र वर्णैः सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ।

तच्च प्रकृते महामुनि-पतञ्जलि-विरचितं व्याकरणमहाभाष्यं सर्वप्रसिद्धमेव ।

व्याख्यानलक्षणम्—

पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना ।
आक्षेपश्च समाधानं व्याख्यानं षड्विधं मतम् ॥

तच्च पूर्वाचार्यविरचितं काशिकाप्रक्रियाकौमुदीसिद्धान्तकौमुद्यादिरूपं प्रथितमेव ।

तदेवं सूत्रवार्तिकभाष्यव्याख्यानादिविधया सर्वविध-लौकिक-वैदिकशब्द-साधुत्वप्रतिपादनपरं पाणिनीयं व्याकरणं सर्वेष्वपि व्याकरणेषु प्रातिशाख्येषु च मूर्धन्यतममिति नाविदितं विदुषाम् । तस्येयं मध्यमशिक्षास्थानीया मध्य-सिद्धान्तकौमुदी ।

## व्याकरणस्याऽनुबन्धचतुष्टयम्—

सकलपुरुषार्थसाधनं वेदः, स च मन्त्रब्राह्मणात्मक-शब्दराशिरूपः, तदनु सर्वाण्यपि शास्त्राणि शब्दराशिरूपाण्येवेति वेदशास्त्रादिज्ञानाय प्रवृत्तमिदं शब्दशास्त्रम्=व्याकरणं सर्वेषामध्येयतामापद्यत इति सिद्धमस्यानु-बन्धचतुष्टयम्—

१–शब्दज्ञानं प्रयोजनम् ।

२–शब्दसाधनं विषयः ।

३–शब्दज्ञानार्थी–अधिकारी ।

४–प्रतिपाद्यप्रतिपादकभावादिः-सम्बन्धः ।

## पञ्च सन्धयः—

सन्धयः पञ्च, पञ्चसन्धिप्रकरणमिति च परम्पराप्रवादः । तत्र जाजायते जिज्ञासा के ते पञ्च सन्धयः ? यानाश्रित्य प्रवृत्तोऽयम्प्रवादः । लघुकौमुद्याम्–अच्सन्धिः, हल्सन्धिः, विसर्गसन्धिः, इति सन्धित्रयमेव समुपलभ्यते, मध्यकौमुदीसिद्धान्तकौमुद्युक्तस्वादिसन्धिसम्मेलनेऽपि चत्वार एव सम्पद्यन्ते । अत्र केचित्–प्रकृतिभावं चतुर्षु पञ्चमं सन्धिमाचक्षते । वर्णसन्धानं सन्धिरिति व्याकुर्वाणा अन्ये प्रकृतिभावस्य सन्धित्वे न सन्तुष्यन्ति तत्र वर्णसन्धानाभावात् । ते हि सिद्धान्तकौमुद्युक्तचतुःसन्धिषु पञ्चमम्—अनुस्वारसन्धिं परसवर्णरूपं ब्रुवते ।

अपरे[1] पुनः सञ्ज्ञाप्रकरणं प्रकृतिभावप्रकरणञ्चापि लघुकौमुद्युक्तसन्धित्रये सम्मेल्य प्रकरणपञ्चकमिदं पञ्चसन्धिप्रकरणमुच्यत इति समादधति ।

---

१–अपरे=कर्मकाण्डप्रभाकराः पं० रविदत्तशर्म्माणः 'खन्ना' स्थाः ।

सञ्ज्ञाप्रकरणस्य सन्धित्वाभावेऽपि तदुपोद्घातत्वेन तदन्तःपातः। प्रकृतिभावस्य चाऽच्सन्ध्यपवादत्वेन तत्समानदेशत्वमुत्सर्गापवादयोरिति समानदेशत्वनियमाद् विधिपूर्वको निषेध इति नियमाच्च। सन्धिसम्बन्धित्वेन सन्धित्वमेवेति छत्रिणो यान्तीतिवत् पञ्चसन्धिव्यवहारो भाक्त इति तदाशयः।

यद्वा पञ्चानां परस्परसापेक्षाणां सञ्ज्ञाद्यवयवानां सन्धिः=समुच्चयो यस्मिन्नवयविनि ( प्रकरणे ) तत्पञ्चसन्धिप्रकरणमित्युच्यते परम्परया।

## पाणिनीयव्याकरणाचार्य्यकालविचारः।

### पाणिनिः

एतद्व्याकरणमूलभूतसूत्राणां कर्त्ता 'परशुपुर' [पेशावर] प्रान्तान्तर्वर्त्ति 'शलातुर' [लाहुर] ग्रामाभिजनो दाक्षिपुत्रो भगवान् पाणिनिः कलेरष्टम्यां शताब्द्यां समभूदिति पूर्वविद्वत्समाजसिद्धान्तः।

### कात्यायनः

पाणिनीयव्याकरणे वार्त्तिककर्त्ता वररुच्यपरनामाऽयं कात्यायनो मुनिः कलेर्विंशशताब्द्यां प्रादुरभवदिति पं० श्रीरामप्रपन्नशास्त्रिकृतनिरुक्तभूमिकातोऽवगम्यते। केचित्तु पाणिनिसमकालत्वमेवास्य प्रातिपादयन्ति।

### पतञ्जलिः

गोनर्ददेशीयः [अयञ्च गोनर्ददेशः कश्मीरेष्विति प्राञ्चः, अयोध्याप्रान्ते इति पौरस्त्याः] महाभाष्यकारः शेषावतारत्वेन विख्यातो भगवान् पतञ्जलिः कलेः सप्तविंशशताब्द्यां खीष्टजन्मतश्च ४५० वर्षाणि पूर्वं समजायतेति निरुक्तभूमिकायां पं० श्रीरामप्रपन्नशास्त्रिणः। कलेश्चतुर्विंशशताब्द्यामभूदिति श्रीदाधिमथाः।

### भट्टोजिदीक्षित-वरदराजौ

वैयाकरणसिद्धान्तकौमुदीकर्त्ता श्रीभट्टोजिदीक्षितः श्री-

लक्ष्मीधरभट्टसूनुः कान्यकुब्जेश्वरस्य गोविन्दचन्द्रदेवस्य सामानकालिकस्तेन ख्रीष्टीयद्वादशताब्दीशेषभागे त्रयोदशे शतके समभूदिति महता प्रयासेन साधितं श्रीपण्डितज्वालाप्रसादमिश्रेण भाषाटीकासहितसिद्धान्तकौमुदीभूमिकायाम्।

प्रो० वेवर—डाक्टरजालिमतानुसारश्च ख्रीष्टीयसप्तदशशताब्दी श्रीभट्टोजिदीक्षितस्य समयः। मध्यसिद्धान्तकौमुदीकर्त्ता श्रीवरदराजश्च भट्टोजिदीक्षितस्य शिष्य इति तस्य सामानकालिक एवाऽतस्तस्य कालनिर्णयो न पृथक् क्रियते।

## बालानां लेखोपयोगिनो नियमाः प्रदर्श्यन्ते।

१—अक्षराणि सुवाच्यानि सुन्दराणि सन्देहरहितानि च स्युः।

२—पदं पदं पृथक्कृत्य (समुचितव्यवधानं कृत्वा) लेखो लिखितः स्यात्।

३—लेखे विरामादिचिह्ननियमाः सर्वथा पालिता भवेयुः।

४—लेखे प्रसङ्गसमाप्तौ प्रघट्टकः परिवर्त्तनीयोऽवश्यमेव।

५—प्रघट्टकस्य प्रथमा पङ्क्तिर्द्व्यङ्गुलं स्थानं रिक्तं परित्यज्य लेखनीया शिष्टाश्च पङ्क्तयः समानरेखायां सरलाः=ऋजवो विरलाश्च लेखनीयाः।

## लेखोपयोगिचिह्नानि।

| | | | | |
|---|---|---|---|---|
| अवान्तरविरामचिह्नम् | .... | .... | .... | , |
| अर्धविरामचिह्नम् | ... | ... | .... | ; |
| पूर्णविरामचिह्नम् | ... | ... | ... | । |
| प्रसङ्गसमाप्तिचिह्नम् | ... | ... | .... | ॥ |
| प्रश्नचिह्नं काकुचिह्नञ्च | ... | .... | ... | ? |
| सम्बोधनखेदाऽऽश्चर्यचिह्नम् | | ... | ... | ! |
| उद्धरणचिह्नम् | ... | ... | ... | "..." |
| पर्यायचिह्नं संयोगचिह्नञ्च | | ... | ... | = |
| सन्धिच्छेदचिह्नम् | ... | ... | ... | + |
| निर्देशचिह्नम् | ... | ... | ... | :- |

| | | | |
|---|---|---|---|
| पाठान्तरचिह्नम्, ... मध्ये भावादिप्रदर्शकचिह्नञ्च | | ... | ( ) |
| त्रुटिपूर्तिचिह्नम् ... | ... | ... | ^ |
| अपूर्णपाठचिह्नम् ... | ... | .... | — |
| समासे पदविभागसौकर्यचिह्नम् | ... | ... | ... |

## ॥ बालोपयोगि-अशुद्धिप्रदर्शनम् ॥

परीक्षायामब्धौ तरुणतरणिर्या ननु भुवि
जडानां जाड्येन प्रखरकिरणो या युवरविः ।
अशुद्धयद्रीणां या सततदलने दारुणपविः
भृशं सद्यः सेयं विशतु शिशुकर्णे कविगवी ॥

( बालानां संस्कृतानुवादे प्रायो जायमाना अशुद्धयः )

ते[1] भ्रातो[2]ऽनेन कर्मेणो[3]ऽभिलाषा[4] जायते मम ।
एकामुपाधिमद्य[5] त्वां[6] दद्यां किन्तु पतेर्भयं[7][8] ॥ १ ॥
पश्यत्वा[9] युवतीभार्यां[10] भवान्नद्य[11] गृहाद्गतः ।

---

## अशुद्धिसंशोधनम् ।

१–तव, पादादौ स्थितत्वान्न 'ते' आदेशः ।

२–भ्रातरनेन, रोरेवोत्वविधानादुत्वं न ।

३–कर्मणा, नान्तत्वेनादन्तत्वाभावादिनादेशो न ।

४–अभिलाषः "घञबन्तः" इति पुंस्त्वम् ।

५–एकम्, "क्यन्तो घुः" इति सूत्रेण, उपाधिशब्दस्य पुंस्त्वम्, तद्विशेषणत्वाद् एकशब्दस्यापि ।

६–तुभ्यम्, सम्प्रदानत्वाच्चतुर्थी ।

७–पत्युः, पतिशब्दस्य समास एव घिसंज्ञाविधानान्न गुणादिकम् ।

८–भयम्, हल्परत्वाभावादनुस्वारो न ।

९–दृष्ट्वा, इत्सञ्ज्ञकशकारादिप्रत्यये परे पिबादीनां विधानात्पश्याऽऽदेशो न

१०–युवभार्याम्, "पुंवत्कर्मधारय" इत्यादिना पुंवद्भावः ।

११–भवानद्य, ह्रस्वाभावात् ङमुण्न ।

तस्या भर्त्तु[1]र्बहिर्याते किं विहित्वा[2] त्वमागतः ॥ २ ॥
कुतस्त्वं शंकसे[3] भ्रातो[4] ! नेत्रकोणो[5]ऽस्ति तत्सुतः ।
तस्य[6] सार्धं मदीया[7]ऽस्ति सन्धिर्वै दीर्घकालतः ॥ ३ ॥
कोपं मा[8] कुरु तात ! त्वं धर्मं तव[9] ब्रवीम्यहम् ।
इमे[10]ऽतिमधुरे नीय[11] फले[12] आस्वादय प्रिय ! ॥ ४ ॥
यश्च लग्नो महत्[13]प्रेम्णा दयालोः कृष्ण[14]पादयोः ।
सो[15] जगत[16]स्य सर्वस्य सेव्यस्त[17]स्य नमस्ततः ॥ ५ ॥

---

१–भर्त्तरि, "यस्य च भावेन भावलक्षणम्" इत्यनेन 'भर्त्तरि' इति कर्त्तरि सप्तमी कर्तृपदसम्बन्धेन क्रियापदेऽपि सप्तमी तद्विशेषणत्वात् ।

२–विधाय, "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इति ल्यप् ।

३–शङ्कसे, "अनुस्वारस्य" इति नित्यपरसवर्णः ।

४, ५ —भ्रातर्नेत्रेण काणः, रोरेवोत्वविधानान्नोत्वम् । तत्कृतगुणवचनाभावान्न समासः ।

६–तेन, सहादियोगे तृतीया ।

७–मदीयः, 'क्यन्तो घुः' इति सन्धिशब्दस्य पुंस्त्वम्, तद्विशेषणत्वाद् मदीय इत्यस्यापि ।

८–माकार्षीः, "माङि लुङ्" इति लुङ् । निषेधार्थक-माशब्दयोगे तु तदपि साधु ।

९–त्वाम्, द्विकर्मकत्वात् कर्मणि द्वितीया ।

१०–इमे अति "ईदूदे" इति प्रगृह्यत्वात्प्रकृतिभावः ।

११–नीत्वा, असमस्तत्वान्न ल्यप् ।

१२–फले आस्वादय, अत्रापि "ईदूदे" इति प्रकृतिभावः ।

१३–महाप्रेम्णा, "आन्महत" इत्यात्वम् ।

१४– कृष्णस्य, सविशेषणानां वृत्तिर्न, वृत्तस्य च न विशेषणम् ।

१५–स, 'एतत्तदोः' इति सुलोपः ।

१६– जगतः, हलन्तत्वान्न 'स्यः' ।

१७–तस्मै, "नमः स्वस्ति" इति चतुर्थी ।

अस्माकं भोजनं पेक्कं[1] गृहं गच्छे[2] यथागतिः[3] ।
अहोरात्रं[4] बिनो[5] क्रीडे[6] छत्रोपानाङ्घ्रिरातुरः[7] ॥ ६ ॥
विश्वे[8] विश्वे मनुष्या ये कर्मं[9] जहन्ति[10] नो निजम् ।
नीचापि[11] ते न बिभ्येयन्ति[12] शमनात्तस्य सेवया ॥ ७ ॥
हे कृष्ण ! वनखेलाया अभिलाषोऽद्य जायते ।
तत्राऽमृतसरो[13] दीर्घं सुन्दरञ्चास्ति तन्महत् ॥ ८ ॥
वङ्गे[14] कालिङ्गे[15] विख्यातं वृत्तादीनां तमोवृतम्[16] ।

१–पक्वम् "पचो वः" इति क्तस्य वकारः ।

२–गच्छामि, गमेः परस्मैपदत्वात् ।

३–यथागति 'अव्ययीभावश्च' इत्यव्ययत्वाद् "अव्ययादाप्सुपः" इति सुपो लुक् ।

४–अहोरात्रः "रात्राह्नाहाः पुंसि" इति पुंस्त्वम् । यद्वा क्रियाविशेषणत्वात्साधु ।

५–विना ।

६–क्रीडामि, परस्मैपदत्वात् ।

७–छत्रोपानहेन, "द्वन्द्वाच्चुदषहान्ताद्" इति टच्, समाहारत्वादेकवचनम् ।

८–विश्वस्मिन्, सर्वनामत्वात्स्मिन्नादेशः ।

९–कर्म, "स्वमोर्नपुंसकात्" इत्यमो लुक् ।

१०–जहति, "अदभ्यस्ताद्" इत्यत् ।

११–नीचा अपि, यलोपस्याऽसिद्धत्वान्न दीर्घः ।

१२–बिभ्यति, अभ्यस्तत्वादत् ।

१३–अमृतसरसम्–'अनोश्मायः सरसां जातिसञ्ज्ञयोः' इति टच्, एवं 'महानसम्' 'कालायसम्' 'पिण्डाश्मः' इत्यपि बोध्यम् ।

१४–, १५– वङ्गेषु, कालिङ्गेषु, वङ्गानां कलिङ्गानां वा निवासो जनपद इत्यर्थेऽण् प्रत्ययः, तस्य च 'जनपदे लुप्' इति लुप्, तथा च "लुपि युक्तवद्व्यक्तिवचने" इति सूत्रेण बहुवचनमेव साधु ।

१६–तमसा वृतम्, 'ओजः सहोऽम्भस्तमसस्तृतीयायाः' इति तृती-

कोशप्रयन्त[1]विस्तीर्णं विधातं[2] ब्रह्मणा पुरा ॥ ९ ॥
साधूनाञ्च गृहस्थानां द्वयेषां[3] शान्तिदायकम् ।
जा[4]गृतिस्तत्र भावानां प्रणष्टानां[5]म्प्रजायते ॥ १० ॥
अवश्यं पादपद्मेन सनाथं तद्विधीयताम् ।
अहञ्चानुगृहीतव्यो[6] मद्गां[7] पालयता त्वया ॥ ११ ॥
अलङ्कर्ता[8] स वाचां स्यात् पथभ्रंष्टो[9]ऽपि जागृतः[10] ।
पुनीतं[11] खलु सप्रेम्णा[12] स्थानं सेवति[13] यः सदा ॥ १२ ॥

याया अलुक् । षष्ठीसमासाश्रयणे तु यथाकथञ्चित् समाधेयम् ।

१–**पर्यन्त**, परि+अन्त, यणि रेफस्योर्ध्वगमनम् ।

२–**विहितम्**, तादिकित्त्वाद् "दधातेर्हिः" इति हिरादेशः ।

३–**द्वयानाम्**, द्वयशब्दस्य सर्वनामसञ्ज्ञाभावान्न सुट् ।

४–**जागर्तिः**, "जाग्रोऽविचिण्णल्ङित्सु" इति गुणः । केचित्तु 'ओर्गुणः' इत्यत्र गुणस्याऽनित्यतामाश्रित्य 'जागृति' रित्येव साधु मन्यन्ते । वस्तुतस्तु उभयमपि न विचारसहम् । 'जागर्तेरकारो वा' इति क्तिन्–बाधकेऽकारप्रत्यये '**जागरा**' पक्षे शः 'जागर्या' इति रूपद्वयं सिद्ध्यति ।

५–**प्रनष्टानाम्**, "नशेः षान्तस्य" इति णत्वनिषेधः ।

६–**अनुग्रहीतव्यः**, कित्त्वाभावान्न सम्प्रसारणम् ।

७–**मद्गवीम्**, "गोरतद्धितलुकि" इति टच्, टित्त्वाद् ङीप् ।

८–**अलङ्करिष्णुः**, 'अलंकृञ् निराकृञ्...' इत्यादिना इष्णुच् प्रत्ययः । अताच्छील्यार्थे तु यथाकथञ्चित्समाधेयम् । लुटि तु–'अलङ्कर्ता' इति स्यादेव ।

९–**पथिभ्रष्टः**, पथिन् शब्दस्य समासादौ स्थितत्वाद् 'ऋक्पूरब्धूः पथामानक्षे" इति समासान्तो नाऽच् ।

१०–**जागरितः**, जागर्तेः सेट्कत्वादिड्गुणौ ।

११–**पूतम्**, पूञ्धातोः क्तप्रत्यये, तस्याऽसार्वधातुकत्वात् "क्र्यादिभ्यः श्ना" इति न भवति । लोटि मध्यमपुरुषद्विवच [illegible] सद्धयति ।

१२–**सप्रेम**, प्रेम्णा सह वर्तते यथा स्यात्तथेति क्रियाविशेषणत्वेन द्वितीयैकवचनान्तत्वमेव साधु ।

१३–**सेवते**, अनुदात्तेत्त्वादात्मनेपदम् ।

तथोपरितने[1] भागे अप्सरा[2] नृत्यति मुदा ।
सस्त्रीकास्तत्र सिद्धाश्च सन्ति विंशतयो[3] जनाः ॥१३॥
कृपालो[4] ! ते[5] दुग्धमूषि[6] वपुंषि[7] स्पृष्टुमिच्छति[8] ।
नास्मि शक्नोम्यहं पोढुं[9] किन्तु चेक्रियते[10] मया ॥ १४ ॥
एकत्रितं[11] मया भद्रं कतमच्चास्ति[12] कर्म मे ।

---

१–**उपरितन**मिति तु न कथमपि सिद्ध्यति 'सायंचिरं...' इत्यादिना सूत्रेण तु कालवाचिभ्य एव ट्युट्युलौ विधीयेते तयोस्तुट् च । तेन—इदानीन्तनमिति निष्पन्नम् ।

२–**अप्सरसः**, अप्सरःशब्दस्य बहुवचनत्वात् । एवमेव "दाराः" 'गृहाः' 'वर्षाः' इत्यादयोऽपि बोद्धव्याः ।

३–**विंशतिः**, 'विंशत्याद्याः सदैकत्वे' इति नियमेनैकवचनमेव साधु ।

४–'स्पृहिगृहि...' इति सूत्रे कृपालुशब्दस्याऽन्तःपाताभावान्नाऽऽलुच् प्रत्ययः सिद्ध्यति । अथवा—कृपां लाति–इति विगृह्य मृगय्वादित्वात्कुप्रत्यये साधु । एवं-स्पर्धालुरपि सिद्ध्यति ।

५–**तव**, 'आमन्त्रितं पूर्वमविद्यमानवत्' इत्यविद्यमानवद्भावेन पादादौ स्थितत्वान्न 'ते' आदेशः ।

६–**दुग्धमुंषि**, सान्तसंयोगाभावान्न दीर्घः । अत्र हि प्रकृतिस्थः षकारो न तु सकारः ।

७–**वपूंषि**, षत्वस्याऽसिद्धत्वात् "सान्तमहत..." इति दीर्घः ।

८–**स्प्रष्टुम्**, (**स्पर्ष्टुम्**) "अनुदात्तस्य चर्दुपधस्याऽन्यतरस्याम्" इति अमागमविकल्पेन रूपद्वयम् ।

९–**अपोढुम्**, अवाप्योरेवोपसर्गयोरल्लोपविधानात् । अपोपसर्गस्य नाऽकारलोपः ।

१०–**चेक्रीय्यते**, यङन्तात्कर्मणि यकि "रीङ् ऋतः" इति रीङ् ।

११–'इतच्' प्रत्ययो हि प्रथमान्ताद् अस्य सञ्जातमित्यर्थे विधीयते, 'एकत्र' इति तु–अधिकरणशक्तिप्रधानमव्ययम् ।

१२–**कतमत्**, "अद्ड्डतरादिभ्यः पञ्चभ्यः" इत्यद्डादेशः ।

मृण्मयञ्च शरीरं मे राधिकाजाय ! पश्यताम् ॥ १५ ॥
पश्चिमस्यां न मे वाचि कदाऽप्रकटयद् मृषा ॥
पृच्छकेन सता नाथ ! प्रोक्तुंकामेन सर्वथा ॥ १६ ॥
प्रष्टव्येयं कथा कृष्ण ! मया त्वत्तो निरोगिणा ॥
कर्णाभ्यामथ नेत्राभ्यां श्रोतुं द्रष्टुं न शक्यते ॥ १७ ॥
जायते हा ! गवां हत्या ग्रामस्य परितो विभो ! ॥

---

१–**मृन्मयम्**, पदान्तस्य नस्य णत्वन्न भवति ।

२–**राधिकाजाने !** "जायाया निङ्" इति निङ् ।

३–**दृश्यताम्**, यगादौ शित्त्वाभावान्न पश्यादेशः ।

४–**पश्चिमायाम्**, सर्वनामसञ्ज्ञाऽभावान्न स्याड् ह्रस्वश्च ।

५–**प्राकटयत्**, धातोरेव पूर्वमडागमो ( आडागमो ) भवति ।

६–**प्रच्छकेन**, कित्त्वाभावान्न सम्प्रसारणावसरः ।

७–**प्रवक्तुकामेन**, तुमुन्प्रत्ययस्याऽकित्त्वान्न सम्प्रसारणम्, कामपरत्वाद् मकारलोपः ।

लुम्पेदवश्यमः कृत्ये तुंकाममनसोरपि ।
समो वा हिततयोर्मांसस्य पचि युड्घञोः ॥ [इत्यभियुक्तोक्तेः] ।

८–**त्वम्**, "गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्" इति नियमेन गौणे कर्मणि प्रत्ययविधानात् । पञ्चमी तु भवत्येव न । कर्मणश्चोक्तत्वात् न द्वितीया, किन्तु प्रथमा । तस्मात्समस्तमेव पदमनया दिशा परिवर्त्तनीयम् [त्वं कथां प्रष्टव्यः] इति । एवं–'स प्रणामं वाच्यः' न तु ( तस्मै प्रणामो वाच्यः ) । इयं कारिका बहूपयोगिनी विद्यते । तस्माद्विद्यार्थिभिर्गुरुमुखादेव मनसिकृत्याऽग्रे गम्यताम् ।

९–**नीरोगेण**, न विद्यते रोगो यस्येति निर्+रोगः इत्यत्र "रोरी"ति रेफलोपे "ढ्लोपे" इति दीर्घः, **नीरोगः** । नात्र मतुबर्थिक इन् भवितुमर्हति 'न कर्मधारयाद् मतुबर्थिको बहुव्रीहिश्चेत्तत्प्रतिपत्तिकरः, इति नियमात् ।

१०–**गोहत्या**, असमासे सुप उपपदाभावान्न क्यप् तकारान्तादेशश्च ।

११–**ग्रामम्**, "अभितः परितः..." इति द्वितीया ।

कञ्चिन्नानुगृह्णीतारं[1] पश्यामि जगतीतले ॥ १८ ॥
कुर्वन्ती[2] न कथं पीडा कथेयं हृदयन्तुदा ॥
उक्तोऽपि न समायातः शतेन[3] पुरुषायुषा ॥ १९ ॥
सर्वे विनंष्टुमर्हन्ति[4] जगत्यां मन्दमेधसः[5] ॥
कुर्वन्ति ये प्रजानाशं दध्ना विषमयेन[6] तु ॥ २० ॥
कथं रक्ष्या इमे चेति सद्यः स्यादुत्तिरेलिमम्[7] ॥
इयमेव कथा ज्ञेया सर्वेषामार्यधर्मिणाम्[8] ॥ २१ ॥
[ रामं सीतां लक्ष्मणं जीविकार्थे-
विक्रीणीते यो नरः तञ्च धिक् धिक् ।
अस्मिन् पद्ये योऽपशब्दान्न वेत्ति-
व्यर्थप्रज्ञं पण्डितं तञ्च धिक् धिक् ॥ ]
[ कस्यचित् ]

१-**अनुग्रह्णीतारम्**, क्त्वाभावान्न सम्प्रसारणम् ।

२-**कुर्वती**, अवर्णान्ताङ्गाभावाद् 'आच्छीनद्योर्नुम्' इति सूत्रेण ङीपि नुम् न भवति ।

३-**शतं पुरुषायुषम्**, फलप्राप्त्यभावाद् "अपवर्गे तृतीया" इति न तृतीया । "अचतुरविचतुर..." इति सूत्रेण 'पुरुषायुषम्' इति निपात्यते ।

४-**विनंष्टुम्**, "मस्जिनशोर्झलि" इति नुम् ।

५-**मन्दमेधाः**, नञ्-दुः-सुभ्य एव "नित्यमसिच् प्रजामेधयोः" इति असिच् विधीयते तेनात्र न ।

६-**विषमयेण**, "अट्कुप्वाङ्नुम्व्यवायेऽपि" इति णत्वम् ।

७-**उत्तिरेलिमम्**, "ॠत इद्धातो" रिति इर् ।

८-**आर्यधर्मणाम्**, "धर्मादनिच् केवलात्" इति अनिच् । एवमेव 'सनातनधर्मी' इत्यप्यशुद्धम् । 'सनातनधर्मा' इति साधु ।

९-अत्र सर्वत्र "इवे प्रतिकृतौ" इति विहितस्य कनः "जीविकार्थे चापण्ये" इति लुपोऽभावात 'हस्तिकान् विक्रीणीते' इतिवत् रामकं-सीतिकां लक्ष्मणकमित्येव प्रयोगाः साधवः ।

अपशब्दाँश्च सङ्गृह्य व्यलेखि यत्र कुत्रतः[1] ॥
कण्ठीकुर्वन्ति बालाश्चेत् सिद्ध्येन्मे मनोकामना[2] ॥ २२ ॥

## पाण्डित्य-विडम्बनम्[3]

रे क्रोष्टः ! परुषं विरौषि बहुधा, बालोऽयमस्या वधोः,
सोऽयं सप्तदिनान्तरं निजगृहं यास्यत्यहो ! सुन्दरः, ।
पूर्वं सोऽत्र परिश्चकार सदनं, श्लोको विरच्याऽर्प्यते,
उष्णीभूत उदेति भानुरनिशं, माञ्जिष्ठवल्लोहितः, ॥१॥
शिष्यो बोधयितव्य एव गुरुणा पृच्छन् विनीतः सुधीः,
रात्रौ नाशयतस्तताऽन्धतमसं दीप्ताऽग्निसोमौ सदा, ।
श्रूयन्ते च पुरातनाः खलु चतुर्मूर्ध्नां त्रिमूर्ध्नां वधाः,
तत्त्वं नैव विदन्ति केचन चतुःकृत्वोऽष्टकृत्वोऽथवा, ॥२॥
आस्यं तस्य करश्च शोभनतरौ, भूमिस्थ एवास्म्यहम्,
वायुः कम्पयते तरूनतिलसद्भ्यां प्रेक्षि दृग्भ्यां तया ।
मामाराध्य भविष्यति प्रकटितो विद्योदयस्ते महान्,
दूये हन्त ! मृगीपदेन दलितः सिंहीपदेनाऽपि नो, ॥३॥
अद्भिर्नैव समुच्छलद्भिरपियः खिन्नोऽन्वहासीत्पुनः,
सोऽयश्चाद्य रुरोदिषत्यतितरां, बाहू महालम्बिते ।
चित्रा ते महिमा, न वा कलयसि ? प्रीतिः स्थिरा ते च मे,
लग्नं चक्षुरिदञ्च सम्प्रति भुजायां, वा ध्वजायामथ, ॥४॥
प्रतिवाक्यमिहैकैकाऽशुद्धिर्निष्टङ्किता मया ॥
पण्डितानां विडम्बाय महाकौतुकिनां कृते ॥ ५ ॥

१–कुतः, कुत्रेति सप्तम्यन्तात्त्रल् ततः पञ्चम्यन्तत्वाभावान्न तसिल् भवितुमर्हति ।

२–मनःकामना, हश्परत्वाभावाद् रोरुत्वं न भवति ।

३–अत्रत्या अशुद्धयो निजनिजाऽध्यापकानां सकाशादेव परिशोधनीयाः ।

## अनुवादोपयोगाय-उपसर्गयोगेन केषांचिद् धातूनामर्थ-विपरिणामः प्रदर्श्यते ।

उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।
प्रहाराहार-संहार-विहार-परिहारवत् ॥ १ ॥

( दिङ्मात्रमुदाह्रियते )

| धातुरूपम् | भाषार्थः |
|---|---|
| **भू–सत्तायाम्** | |
| भवति= | होता है । |
| प्रभवति= | समर्थ होता है, या उत्पन्न होता है । |
| अनुभवति= | अनुभव करता है । |
| आविर्भवति= | प्रकट होता है । |
| उद्भवति= | उत्पन्न होता है । |
| प्रादुर्भवति= | ,, |
| परिभवति= | तिरस्कार करता है । |
| पराभवति= | ,, |
| अभिभवति= | ,, |
| सम्भवति= | पैदा होता है, या सम्भव है । |
| **क्रमु–पादविक्षेपे** | |
| क्रामति= | चलता है । |
| उपक्रमते= | आरम्भ करता है । |
| प्रक्रमते= | ,, ,, |
| संक्रामति= | संक्रान्त होता है । |
| विक्रमते= | विक्रम दिखाता है । |
| आक्रमते= | आक्रमण करता है । |
| निष्क्रामति= | निकलता है । |
| अतिक्रामति= | अतिक्रमण (उल्लङ्घन) करता है । |
| परिक्रामति= | परिक्रमा करता है । |
| पराक्रमते= | पराक्रम दिखाता है । |
| अपक्रामति= | हटता है । |
| **गम्लृ–गतौ ।** | |
| गच्छति= | जाता है । |
| प्रतिगच्छति= | लौटता है । |
| अवगच्छति= | जानता है । |
| अनुगच्छति= | पीछे जाता है । |
| निर्गच्छति= | बाहर जाता है । |
| अधिगच्छति= | प्राप्त करता है । |
| आगच्छति= | आता है । |
| संगच्छते= | मिलता है । |
| उद्गच्छति= | ऊपर जाता है । |
| **अय–गतौ** | |

१–दीधी-वेवी-दरिद्राणामूर्णुञो जागरेस्तथा ।
एकाचामपि धातूनां नाऽनुबन्धोऽज् विलुप्यते ॥
तेन ·ऊकारानुबन्धलोपो न ।

| धातुरूपम् | भाषार्थः |
|---|---|

अयते=जाता है ।
पलायते=दौड़ता है ।
वृतु-वर्तने
वर्तते=है ।
प्रवर्तते=( कार्य में ) लगता है ।
निवर्तते=लौटता है ।
अनुवर्तते=अनुसरण करता है ।
परिवर्तते=घूमता है ।
हृञ्-हरणे
हरति=चुराता है ।
उपहरति=भेंट देता है ।
प्रहरति=प्रहार करता है ।
विहरति=विहार करता है ।
संहरति=संहार करता है ।
परिहरति=दूर करता है ।
उद्धरति=उद्धार करता है । निकालता है ।
उदाहरति=उदाहरण देता है
उपसंहरति=उपसंहार—( संकोच ) करता है ।
प्रत्युदाहरति=प्रत्युदाहरण देता है ।
व्यवहरति=व्यवहार करता है ।
आहरति=लाता है ।
अभ्यवहरति-खाता है ।
अपहरति=खोसता है । छीनता है ।
वह-प्रापणे

| धातुरूपम् | भाषार्थः |
|---|---|

वहति=लेजाता है । ( ढोता है )
उद्वहति=विवाहता है ।
आवहति=देता है ।
णीञ्-प्रापणे
नयति=ले जाता है ।
प्रणयति=बनाता है ।
अपनयति=हटाता है ।
आनयति=लाता है ।
परिणयति=विवाहता है ।
निर्णयति=निर्णय करता है ।
अनुनयति=मनाता है ।
उपनयति=उपनयन करता है ।
ईक्ष-दर्शने
प्रतीक्षते=उडीकता है ।
अपेक्षते=चाहता है ।
परीक्षते=परीक्षा लेता है ।
उपेक्षते=उपेक्षा ( लापरवाही ) करता है ।
अन्वीक्षते=जाँच करता है ।
रुह-बीजजन्मनि
रोहति=जमता है ।
प्ररोहति= " "
अधिरोहति=चढ़ता है ।
संरोहति=मिलता है ।
तिरोरोहति=छिपता है ।
आरोहति=चढ़ता है ।
अवरोहति=उतरता है ।

| धातुरूपम् | भाषार्थः |
| --- | --- |
| **लप**–लपने | |
| लपति= | बोलता है। |
| आलपति= | " |
| विलपति= | रोता है। |
| संलपति= | वार्तालाप करता है। |
| प्रलपति= | बकवास करता है। |
| अपलपति= | छिपाता है। |
| **वद्**–व्यक्तायां वाचि | |
| वदति= | कहता है। |
| अनुवदति= | अनुवाद करता है। |
| विवदते= | झगड़ता है। |
| प्रतिवदति= | जवाब देता है। |
| **वस**–निवासे | |
| वसति= | निवास करता है। |
| प्रवसति= | विदेश जाता है। |
| उपवसति= | उपवास (व्रत) करता है। |
| **षद्लृ**–विशरणगत्यवसादनेषु | |
| सीदति= | ठहरता है। |
| प्रसीदति= | प्रसन्न होता है। |
| पर्यवसीदति= | समाप्त होता है। |
| विषीदति= | दुःखी होता है। |
| निषीदति= | बैठता है। |
| अवसीदीत= | थकता है। |
| **ष्ठा**–गतिनिवृत्तौ | |
| तिष्ठति= | ठहरता है। |
| प्रतिष्ठते= | जाता है। |
| अनुतिष्ठति= | करता है। |
| संतिष्ठते= | मरता है। |
| उत्तिष्ठति= | उठता है। |
| उपतिष्ठते= | उपस्थित होता है। |
| **सृ**–गतौ | |
| सरति= | जाता है। |
| प्रसरति= | फैलता है। |
| अनुसरति= | पीछा करता है। |
| निःसरति= | निकलता है। |
| अभिसरति= | " |
| अपसरति= | हटता है। |
| परिसरति= | घूमता है |
| **चर**–गतौ | |
| चरति= | घूमता है। |
| दुराचरति= | दुराचरण करता है। |
| आचरति= | व्यवहार करता है। |
| उपचरति= | सेवा करता है। |
| अनुचरति= | पीछा करता है। |
| परिचरति= | सेवा करता है। |
| संचरति= | घूमता है। |
| **तृ**–प्लवनतरणयोः | |
| तरति= | तरता है। |
| अवतरति= | उतरता है। |
| वितरति= | देता है। बांटता है। |
| **द्रु**–गतौ | |
| द्रवति= | पिघलता है |
| उपद्रवति= | उपद्रव करता है। |
| विद्रवति= | भागता है। |
| **पत्लृ**–गतौ | |
| पतति= | गिरता है। |

| धातुरूपम् | भाषार्थः |
|---|---|
| प्रणिपतति=प्रणाम करता है। | |
| आपतति=आपड़ता है। | |
| उत्पतति=उड़ता है। | |
| **रमु**–क्रीडायाम् | |
| रमते=खेलता है। | |
| विरमति=हटता है। आराम लेता है। | |
| उपरमति=उपरत होता है। | |
| **असु**–क्षेपणे | |
| अस्यति=फेंकता है। | |
| अभ्यस्यति=अभ्यास ( याद ) करता है। | |
| निरस्यति=निकालता है। | |
| **आस**–उपवेशने | |
| आस्ते=बैठता है। | |
| अध्यास्ते=अधिकार करता है। | |
| उपास्ते=पूजा करता है। | |
| **इण्**–गतौ | |
| एति=जाता है। | |
| अपैति=दूर होता है। | |
| अवैति=समझता है। | |
| प्रत्येति=विश्वास करता है। | |
| व्येति=खर्च करता है। | |
| उदेति=उगता है। | |
| उपैति=प्राप्त करता है। | |
| अभ्येति=आगे आता है। | |

| धातुरूपम् | भाषार्थः |
|---|---|
| अन्वेति=पीछे आता है या सम्बद्ध होता है। | |
| **डुधाञ्**–धारणपोषणयोः | |
| दधाति=धारण करता है। | |
| संदधाति=मेल करता है। | |
| विदधाति=करता है। | |
| परिधत्ते=पहनता है। | |
| (अ) पिदधाति=ढकता है। | |
| निदधाति=रखता है। | |
| अवधत्ते=ध्यान देता है। | |
| अभिदधाति=बोलता है। | |
| **पद्**–गतौ | |
| पद्यते=जाता है। | |
| प्रपद्यते=प्राप्त करता है या भजता है। | |
| उत्पद्यते=पैदा होता है। | |
| विपद्यते=दुःखी होता है। | |
| उपपद्यते=योग्य होता है। | |
| **मन**–ज्ञाने | |
| मन्यते=मानता है। | |
| अवमन्यते=अनादर करता है। | |
| अनुमन्यते=सलाह देता है। | |
| संमन्यते=सम्मान करता है। | |
| **चिञ्**—चयने | |
| चिनोति=चुनता है। | |
| उपचिनोति=बढ़ाता है। | |
| सञ्चिनोति=इकट्ठा करता है। | |

---

१–विपूर्वो धा करोत्यर्थे ह्यभिपूर्वस्तु भाषणे।
मेलने चापि सम्पूर्वो निपूर्वः स्थापने मतः॥

| धातुरूपम् | भाषार्थः |
|---|---|
| अपचिनोति=घटाता है। | |
| **आप्लृ**—व्याप्तौ— | |
| आप्नोति=प्राप्त करता है। | |
| व्याप्नोति=फैलता है। | |
| समाप्नोति=समाप्त करता है। | |
| **क्षिप**—प्रेरणे— | |
| क्षिपति=फेंकता है। | |
| संक्षिपति=छोटा करता है। | |
| उत्क्षिपति=ऊंचा फेंकता है। | |
| आक्षिपति=दोष देता है। | |
| अवक्षिपति=नीचे फेंकता है। | |
| **दिश**—अतिसर्जने— | |
| दिशति=देता है। | |
| उपदिशति=उपदेश देता है। | |
| संदिशति=संदेश कहता है। | |
| **रुधिर्**—आवरणे— | |
| रुणद्धि=रोकता है। | |
| अनुरुणद्धि=अनुरोध (सिफारिश) करता है। | |
| विरुणद्धि=विरोध करता है। | |
| **डुकृञ्**—करणे— | |
| करोति=करता है। | |
| आविष्करोति=प्रकट करता है। | |
| अनुकरोति=नकल करता है। | |
| अलंकरोति=भूषण पहनाता है। सजाता है। | |
| प्रतिकरोति=प्रतीकार करता है। | |
| अधिकरोति=अधिकार करता है। | |

| धातुरूपम् | भाषार्थः |
|---|---|
| उपकरोति=उपकार करता है। | |
| निराकरोति=हटाता है। | |
| अपकरोति=अपकार (बुराई) करता है। | |
| परिष्करोति=शोधता है। | |
| **ग्रह**—उपादाने— | |
| गृह्णाति=लेता है। | |
| अनुगृह्णाति=कृपा करता है। | |
| प्रतिगृह्णाति=दान लेता है। | |
| विगृह्णाति=लड़ता है। | |
| निगृह्णाति=दण्ड देता है। | |
| **बन्ध**—बन्धने— | |
| बध्नाति=बांधता है। | |
| संबध्नाति= " | |
| उद्बध्नाति=फांसी देता है। | |
| निर्बध्नाति=आग्रह करता है। | |
| **मन्त्रि**—गुप्तभाषणे— | |
| मन्त्रयते=सलाह करता है। | |
| निमन्त्रयते=न्यौता देता है। | |
| आमन्त्रयते=मिलता है। | |
| अभिमन्त्रयते=संस्कार करता है। | |
| **अर्थ**—उपयाच्ञायाम्— | |
| अर्थयते=मांगता है। | |
| अभ्यर्थयते=प्रार्थना करता है। | |
| प्रार्थयते= " " | |
| **श्वस**—प्राणने— | |
| श्वसिति=श्वास लेता है। | |
| विश्वसिति=विश्वास करता है। | |

# अथ अव्ययसंग्रहो भाषार्थसहितः ।

| अव्ययानि | भाषार्थाः | अव्ययानि | भाषार्थाः |
|---|---|---|---|
| पृष्ठम् ८१ | | समया=समीप । | |
| स्वर्=स्वर्ग । | | निकषा= ” | |
| अन्तर्=बीच में । | | स्वयम्=अपने आप । | |
| प्रातर्=प्रातः काल । | | वृथा=व्यर्थ । | |
| पुनर्=फिर । | | नक्तम्=रात । | |
| सनुतर्=अन्तर्धान । | | न=नहीं । | |
| उच्चैस्=ऊँचा । | | नञ्= ” | |
| शनैस्=धीरे । | | हेतौ=निमित्त । | |
| ऋधक्=सचमुच । | | इद्धा=प्रकाश ( ज़ाहिर ) । | |
| ऋते=विना । | | अद्धा=स्फुट या निश्चय । | |
| युगपत्=एक दम । | | सामि=आधा । | |
| आरात्=दूर या समीप । | | वत्=समान । | |
| पृथक्=भिन्न ( अलहदा ) । | | ब्राह्मणवत्=ब्राह्मण के समान । | |
| ह्यस्=बीता हुआ दिन ( कल ) । | | क्षत्रियवत्=क्षत्रिय के समान । | |
| श्वस्=आगामिदिन । | | सना=नित्य (सदा रहने वाला) । | |
| दिवा=दिन । | | सनत्= ” | |
| रात्रौ=रात । | | सनात्= ” | |
| सायम्=सायंकाल । | | उपधा=भेद वा रिशवत । | |
| चिरम्=देर । | | तिरस्=टेढ़ा या तिरस्कार । | |
| मनाक्=किञ्चित् । | | अन्तरा=मध्य या विना । | |
| ईषत्= ” | | अन्तरेण=विना । | |
| जोषम्=चुप होना । | | ज्योक्=शीघ्र । | |
| तूष्णीम्= ” | | कम्=जल, सिर, सुख । | |
| बहिस्=बाहर । | | शम्=कल्याण । | |
| अवस्= ” | | सहसा=एक दम ( अकस्मात् ) । | |
| अधस्=नीचे । | | विना=विना । | |

| अव्ययानि | भाषार्थाः |
|---|---|
| नाना=अनेक । | |
| स्वस्ति=कल्याण । | |
| स्वधा=देवदान । | |
| अलम्=बस । | |
| वषट्=देवदान । | |
| श्रौषट्= ” | |
| वौषट्= ” | |
| अन्यत्=और । | |
| अस्ति=है । | |
| उपांशु=अप्रकाश । | |
| क्षमा=क्षमा ( माफ़ ) । | |
| विहायसा=आकाश । | |
| दोषा=रात्रि । | |
| मृषा=झूठ । | |
| मिथ्या= ” । | |
| मुधा=व्यर्थ । | |
| पुरा=पहिले समय में । | |
| मिथो=एकान्त में, आपस में । | |
| मिथस्= ” ” | |
| प्रायस्=प्रायः ( अक्सर ) । | |
| मुहुस्=वार वार । | |
| प्रवाहुकम्=समानकाल । | |
| ( प्रवाहिका )= ” ” | |
| आर्य्यहलम्=बलात्कार (जबरदस्ती) | |
| अभीक्ष्णम्=वार वार । | |
| साकम्=साथ । | |
| सार्धम्= ” । | |

| अव्ययानि | भाषार्थाः |
|---|---|
| नमस्=नमस्कार । | |
| हिरुक्=विना । | |
| धिक्=निन्दा, ( झिड़कना ) । | |
| अथ=अनन्तर । | |
| अम्=शीघ्र । | |
| आम्=स्वीकार । | |
| प्रताम्=ग्लानि । | |
| प्रशान्=समान । | |
| मा=नहीं । | |
| माङ्=” । | |
| च=और । | |
| वा=विकल्प । | |
| ह=प्रसिद्धि | |
| अह=स्पष्ट । | |
| एव=निश्चय ( ही ) । | |
| एवम्=ऐसे । | |
| नूनम्=निश्चय । | |
| शश्वत्=सदा । | |
| युगपत्=सहसा । | |
| भूयस्=फिर और बहुत । | |
| कूपत्=प्रश्न, प्रशंसा । | |
| सूपत्= ” | |
| कुवित्=बहुत । | |
| नेत्=शङ्का । | |
| चेत्=यदि । | |
| चण्= ” । | |
| यत्र=जिसमें । | |

| अव्ययानि | भाषार्थाः |
|---|---|
| कच्चित्=अनुकूल प्रश्न। | |
| नह=प्रत्यारम्भ। | |
| हन्त=हर्ष, विषाद। | |
| माकिः=वर्जन। | |
| माकिम्= ”। | |
| नकिः= ”। | |
| नकिम्= ”। | |
| नञ्=नहीं। | |
| यावत्=जितना। | |
| तावत्=उतना। | |
| त्वै=वितर्क। | |
| (न्वै)= ”। | |
| द्वै=वितर्क। | |
| रै=दान। | |
| स्वाहा=देवहविर्दान। | |
| स्वधा=पितृदान। | |
| वषट्=देवदान। | |
| तुम्=तू। | |
| तथाहि=जैसे किः—। | |
| खलु=निश्चय। | |
| किल=ऐतिह्य। | |
| अथो=अनन्तर। | |
| अथ= ,,। | |
| सुष्ठु=शोभन। | |
| स्म=अतीत काल। | |
| आदह=निन्दा। | |
| अवदत्तम्=दत्त=दिया। | |

| अव्ययानि | भाषार्थाः |
|---|---|
| अहंयुः=अहंकारी। | |
| अस्तिक्षीरा=विद्यमानदुग्धा। | |
| अ=सम्बोधन। | |
| आ=स्मरण। | |
| इ=सम्बोधन। | |
| ई= ” | |
| उ= ” | |
| ऊ= ” | |
| ए= ” | |
| ऐ= ” | |
| ओ= ” | |
| औ= ” | |
| पशु=सम्यक्। | |
| शुकम्=शीघ्र। | |
| यथाकथाच=अनादर। | |
| पाट्=सम्बोधन। | |
| प्याट्= ” | |
| अङ्ग= ” | |
| हे=सम्बोधन। | |
| है= ” | |
| भोः= ” | |
| अये= ” | |
| द्य=हिंसा। | |
| विषु=नाना (अनेक)। | |
| एकपदे=अकस्मात्। | |
| युत्=निन्दा। | |
| आतः=इससे भी। | |

| अव्ययानि | भाषार्थाः | अव्ययानि | भाषार्थाः |
|---|---|---|---|
| अतः=इस कारण । | | अधिहरि=हरि में । | |
| स्मारं स्मारम्=वार २ स्मरण करके । | | वाचा=वाणी । | |
| जीवसे=जीने के लिये । | | निशा=रात्री । | |
| पिबध्यै=पीने के लिये । | | दिशा=दिशा । | |
| कृत्वा=करके । | | वगाह=स्नान । | |
| उदेतोः=उदय होकर । | | पिधानम्=ढकना । | |
| विसृपः=जाकर । | | इति अव्ययसंग्रहः ॥ | |

## अथ पाणिनीयशिक्षा ॥१॥

अथ शिक्षां प्रवक्ष्यामि पाणिनीयं मतं यथा ।
शास्त्रानुपूर्वं तद्विद्याद्यथोक्तं लोकवेदयोः ॥ १ ॥
प्रसिद्धमपि शब्दार्थमविज्ञातमबुद्धिभिः ।
पुनर्व्यक्तीकरिष्यामि वाच उच्चारणे विधिम् ॥ २ ॥
त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः ।
प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयंभुवा ॥ ३ ॥
स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः ।
यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः ॥ ४ ॥
अनुस्वारो विसर्गश्च ᳲकᳲपौ चापि पराश्रितौ ।
दुःस्पृष्टश्चेति विज्ञेयो लृकारः प्लुत एव च ॥ ५ ॥
आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥ ६ ॥
मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम् ।
प्रातःसवनयोगं तं छन्दो गायत्रमाश्रितम् ॥ ७ ॥
कण्ठे माध्यन्दिनयुगं मध्यमं त्रैष्टुभानुगम् ।
तारं तार्तीयसवनं शीर्षण्यं जागतानुगम् ॥ ८ ॥
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ।
वर्णाञ्जनयते तेषां विभागः पञ्चधा स्मृतः ॥ ९ ॥

